# भूमिका ।

विदितमेवैतन्निखिलनिगमागमाद्यगाधपाथोधिनिर्मन्थनोत्थितसारसद्रत्नशोभायमानकण्ठकोविदक-
ण्ठीरवमहाशयानां स्वयशोधवलिमधवलिताखिलदिङ्मण्डलानाम्, यत्किल परमकारुणिकः परमे-
श्वरः संसारापाराकूपारादुत्थितकर्मसमीरणेरिततरंगेतस्ततश्चाल्यमानानुबोभूयमानानेकदुःखपरंपराणां
सकलमानवानां हिताय साङ्गवेददर्शनायुर्वेदाद्युपवेदपुराणादींस्तत्तदृषिद्वाराऽऽविर्भावयामासेति । तत्र स-
त्स्वपि बहुष्वन्येषु पारलौकिकैहलौकिकफलसाधकेषु दुर्लभवैदिकविधिसामग्रीकाणां स्वकार्यसिद्धिमभी-
प्सतामल्पायुषां जनानां न तथेतरदाशुकार्यसिद्धिकारकं यथेदं परमकारुणिकेनान्वर्थाभिधानेन
जगदंबयोमया पृष्टेन भगवता श्रीशंकरेण प्रतिपादितं सर्वोत्तमं मन्त्रशास्त्रम् । उक्तंच—

"विष्णुर्वरिष्ठो देवानां ह्रदानामुदधिस्तथा । नदीनाञ्च यथा गंगा पर्वतानां हिमालयः ॥ अश्वत्थः
सर्ववृक्षाणां राज्ञामिंद्रो यथा वरः ।देवीनाञ्च यथा दुर्गा वर्णानां ब्राह्मणो यथा॥तथा समस्तशास्त्राणां तन्त्र-
शास्त्रमनुत्तमम् । सर्वकामप्रदं पुण्यं तंत्रं वै वेदसंमितम् ॥ कीर्तनं देवदेवस्य हरस्य मतमेव च । पावनं
श्रद्दधानानामिहलोके परत्र च ॥" तत्र च यामलोड्डीशभूतडामरादीनि 'चतुःषष्टिश्च तंत्राणि यामलादीनि
पार्वति, इति महाविश्वसारतंत्रोक्तेश्चतुःषष्टिसंख्याकानि सन्ति । तत्रच मध्येमेदिनि मेरुरिवेदं मेरुतंत्रं
पञ्चत्रिंशत्प्रकाशात्मकं सर्वतोप्याधिकं प्रकाशते । अत्रच शिवविष्णुगणेशादित्यगौर्यादीनां गंगायमुनादि-
सरितामन्येषामपि मंत्रयंत्रन्यासध्यानपीठशक्तितत्तदावरणार्चनादिविधयो वैदिकमंत्रविधयश्च स्पष्टतया
प्रतिपादिताः संति । तदेतन्निखिलजनानां सौलभ्याय श्रीमत्पंडितरघुनाथशर्मशास्त्रिद्वारा त्रिचतुराद-
र्शपुस्तकैः संशोध्य मया स्वकीये "श्रीवेंकटेश्वर" स्टीम्मुद्रणालये शोभनसीसकाक्षरैः स्वच्छमसृणपुष्ट-
पत्रेषु संमुद्र्य प्रकाश्यते । तदत्र सन्तुतरां परःसहस्रा धन्यवादाः श्रीमच्छिवाभ्याम् याभ्यां च परोपका
रपराभ्यां स्वसंवादरूपेणावनावेतन्मेरुतंत्रं विश्वजनीनमाविर्भावितमिति । तदनुयैर्महानुभावैर्नेपालनिवा-
सिपण्डितहरिहराचार्यदीक्षितैः पुस्तकप्रदानेनैतन्मुद्रणे साहाय्यं व्यधायि तेभ्योपि परःशताः ससंमदं सन्तु
धन्यवादाः । तदनु च यैरपि परमोदाराशयैः स्वदेशोन्नतिचणैः सुप्रसिद्धैः श्रीमन्महावीरप्रसादद्विवेदिभिः
पुस्तकप्रदानेनानल्पमुपकृता वयम् तेभ्यश्चसान्तस्तोषमनेकशो धन्यवादाः ।अन्येभ्योपि पुस्तकादिप्रदान-
कृतोपकृतिमहाशयेभ्यो बहुशस्सन्तु इति । तदेतद्ग्रंथग्रहणावलोकनकर्मानुष्ठानादिभिः समनुगृह्णंतु महोदय-
मनीषिणो [illegible]मिति भूयोऽभ्यर्थयते—

**श्रीकृष्णदासात्मजः—क्षेमराजः**

**"श्रीवेङ्कटेश्वर" स्टीम्-यंत्रालयाध्यक्ष—मुंबईस्थः ।**

॥ श्रीः ॥

# ॥ अथ मेरुतंत्रस्थितविषयानुक्रमणिका प्रारभ्यते ॥


| पृष्ठांकाः | विषयाः | श्लोकांकाः |
|---|---|---|
| | **प्रकाशः १** | |
| १ | मंगलाचरणम् ... ... | १ |
| " | जलंधरविजितदेवानां हितं कथं भविष्यतीति देवानां शिवसमीपे गमनम् ... .... ... | २ |
| " | समाधिविसर्जनोत्तरं त्वया किं ध्यायते इति शिवं प्रति गौरीप्रश्नः | ४ |
| २ | महाकालवशात्सर्वे विलयं यांति ततः स एव मया ध्यात इति शिव कथनम् ... .... ... | १४ |
| " | कोऽसौ महाकालः मुक्तिः कतिधा सा कथं लभ्यते इत्यादिदेवता प्रश्नः ... ... ... | १६ |
| " | तत्प्रश्नोत्तरदानाय महाकालप्रणीत मेरुतंत्रारंभकरणम् ... ... | २६ |
| ३ | उपासनाया वामदक्षिणभेदकथनम् | ३९ |
| ४ | वाममार्गस्य कौलादिपंचभेदाः | ५९ |
| " | दक्षमार्गस्थितवैदिक्याद्युपासना भेदः ... ... ... | ६२ |
| " | गुरुशिष्यविचारः ... ... | ६७ |
| ६ | वामदक्षिणमार्गयोः संक्षेपतःपद्या० | १०४ |
| | **प्रकाशः २** | |
| ७ | तंत्रमार्गिणां बहूनां सिद्धिलाभोऽपि न भवति कुतो मोक्ष इति तद्विषये गौरीप्रश्नः... ... | १ |
| " | देहसंस्काराभावात् सिद्धिर्न भवति ततो देहस्य शुद्ध्यर्थं षोडशसंस्कारकथनम् ... ... | ४ |
| १४ | मंत्राणां षोडशसंस्काराः ... | १४६ |
| | **प्रकाशः ३** | |
| २० | वामदक्षिणमार्गे कथं दीक्षाग्रहणमिति देवीप्रश्नः .... ... ... | १ |
| " | दीक्षाविधौ कुंडमंडपादिविचारः | ५ |
| ३४ | स्वप्नपरीक्षाविधिः ... ... | २७२ |
| ३८ | सर्वतोभद्रचक्रविधिः .... | ३५४ |
| ४१ | वारुणमंडलकथनम ... ... | ३८५ |
| ४२ | देवतापूजनम् ... ... | ४१० |
| ५२ | पूर्णाभिषेकविधिः ... ... | ५९९ |
| | **प्रकाशः ४** | |
| ५३ | मंत्राणां सात्त्विकादिभेदत्रैविध्यम् | ७ |
| ५४ | तंत्रमार्गानुसारेणाष्टादशकुंडसंस्काराः | २२ |
| ५६ | अग्निस्थापनविधिः ... ... | ५४ |
| ५८ | कुंडमध्येऽष्टदलपूजापीठम् ... | ८९ |
| ६१ | तांत्रिकहोमविचारः ... | १२० |
| | **प्रकाशः ५** | |
| ६३ | आह्निकविचारः ... ... | ५ |
| ६५ | स्नानविधिः.... ... ... | ५६ |
| ६८ | तिलकधारणम् ... ... | ९४ |
| ६९ | तांत्रिकी संध्या ... .... | ११५ |
| ७० | शिवगायत्री ... ... | १२७ |
| ७४ | पूजाद्रव्यस्थापनक्रमः .... | २०४ |
| ७७ | प्राणप्रतिष्ठामंत्रः ... ... | २४८ |
| ८२ | अंतर्मातृकान्यासः ... ... | ३१२ |
| ८३ | बहिर्मातृकान्यासः ... ... | ३१२ |
| १०१ | पूजार्हशालिग्रामशिलाः ... | ५८९ |
| १०८ | पूजाविधिः ... ... ... | ७०४ |
| १२० | सामान्यतः पूजात्रैविध्यम् ... | ९१३ |

पृष्ठांकाः विषयाः श्लोकांकाः

### प्रकाशः ६

१२१ पुरश्चरणव्याख्या ... ... १
" पुरश्चरणपूर्वकृत्यम्... ... १४
१३५ जपस्थानानि ... .... २४७
१३७ जपार्हमालाविचारः ... २९०
" मालास्थितरुद्राक्षादीनां फलम् २९६
१५२ भूर्जादिषु लिखित्वा मंत्रधारणम् ५६७
१५३ शाबरमंत्राणां पुरश्चरणविधिः ५७७
" तांत्रिकमंत्रदीक्षाग्रहणविधिः ५८४
" जपस्यैव सिद्धिमोक्षसाधकत्व० ५८८

### प्रकाशः ७

१५५ निषिद्धाचारकथनम् ... ५
१५७ अवश्यकर्तव्यानि ... ... ३१
१५८ दमनकोत्सवपूजादि ... ५४
१६१ शान्त्यादिकाम्यकर्माणि ... १२२
१६३ सिद्धिस्थिरीकरणोद्यमः ... १९९

### प्रकाशः ८

१६७ दैवतप्रीतिकरमुद्रालक्षणानि ३

### प्रकाशः ९

१७५ पार्थिवशिवलिङ्गपूजनम् ... ७
१७९ काम्ये तंडुलपिष्टादिना शिवलिंगं विधाय तत्पूजनम् ... ... ६९
१८५ शिवस्तोत्रजपादिकथनम् ... १६७
१८६ लिंगार्चनोद्यापनविधिः ... १९०

### प्रकाशः १०

१८७ कालमहेशप्रणीतपञ्चाम्नायेषु ऊर्ध्वाम्नायकथनम् ... ... १४
१८९ वाममार्गिणां धर्मनिरूपणम् ५६
१९१ मद्यपाननिषेधः .. ... ७७
१९४ वामाचारमते पात्रलक्षणम् १३७
१९७ कौलिधर्मोत्पत्तिस्थानम् ... १९७
१९८ वासिनां पूजाप्रकारः ... २२८

पृष्ठांकाः विषयाः श्लोकांकाः

१९९ मंडलपूजाप्रकारः ... ... २३५
२०२ बटुपूजनबलिदानविचारः ... २८९
२०८ चक्रपूजापशुबलिदानविधी... ४००
२१४ नवरात्रव्रतविधिः ... ... ५०१
२१७ कुलाचारमार्गशास्त्रार्थनिर्णयः ५५५
२२० सर्वमार्गेषु गुरोर्महत्त्वम् ... ६२४
२२३ पूर्णाभिषेकविधिनिरूपणम् ६७७
२३१ पीठसंभवरहस्यकथनम् ... ८०१
२३७ परमाद्भुतान्यरहस्यकथनम् ९१८

### प्रकाशः ११

२३८ कलियुगान्ते त्रिशद्वेदमंत्रावस्थितितत्साधनार्थं प्राजापत्यादिचतुर्दश व्रतनिरूपणम् ... ... ९
२४० गायत्रीमंत्रविधानम् ... ४७
२४३ मृत्युंजयमंत्रविधानम् ... ९६
२४५ धनेशमंत्रविधिः ... ... १३०
२५२ अतिदुर्गामंत्रविधानम् ... २४१
२५७ त्रिशक्तिमंत्रसाधनविधिः ... ३३२
२७१ सविधानं श्रीसूक्तम् ... ५५८
२७९ विष्णुपूजाविधिः ... ... ६८३
२८१ गृहस्थानां जीवन्मुक्तिसाधनम् ७२५

### प्रकाशः १२

२८४ शतरुद्रीयस्तोत्रम् ... .... ४
२९२ शतरुद्रीयस्तोत्रेणाभिषेके फलानि १३४
३०८ देवीसूक्तकथनम् ... ... ३९६
३०९ विष्णुगणपत्योःसूक्ते ... ४०६

### प्रकाशः १३

३१२ नीचोच्चस्थानगतग्रहाणां सुखदुःखदत्वकथनम् ... ... ... १
" भास्करमंत्रकथनम्... ... ८
३१५ चंद्रमंत्रकथनम् ... .... ५६
३१६ भौमसंत्रकथनम् ... ...१३१
३२१ बुधमंत्रकथनम् ... ... १७८

| पृष्ठांकाः | विषयाः | श्लोकांकाः |
|---|---|---|
| ३२३ | बृहस्पतिमंत्रकथनम् | २०८ |
| ३२४ | शुक्रमंत्रकथनम् | २३७ |
| ३२६ | शनिमंत्रकथनम् | २५९ |
| ३२७ | राहुमंत्रकथनम् | २८३ |
| ३२८ | केतुमंत्रकथनम् | ३१६ |
| ३३० | ग्रहपूजनफलम् | ३४१ |
| | **प्रकाशः १४** | |
| ३३० | मंत्रत्यागविधिः | ५ |
| ३३१ | महाविद्याप्रत्यंगिराकथनम् | ३१ |
| ३४० | देवत्यागविधिः | २०० |
| | **प्रकाशः १५** | |
| ३४१ | गायत्र्यादियंत्रोद्धारधारणादीनां निरूपणम् | १ |
| | **प्रकाशः १६** | |
| ३६३ | विघ्नहरविघ्नराजमंत्रविधिः | ९ |
| ३६५ | लक्ष्मीगणपतिविधानम् | ५५ |
| ३६८ | शक्तिगणपमंत्रकथनम् | ९५ |
| ३७१ | हरिद्रागणपतिमंत्रविधानम् | १५६ |
| | **प्रकाशः १७** | |
| ३७२ | ऊर्ध्वाम्नायोक्तगणपतिमंत्रः | १ |
| ३७३ | गणेशपूजायंत्रम् | २५ |
| ३७४ | गणेशमंत्रकल्पाः | ४५ |
| ३७९ | गणेशतर्पणम् | १३० |
| ३८५ | काममंत्रनिरूपणम् | २४९ |
| ३९१ | प्राणाग्निहोत्रकथनम् | ३६७ |
| ३९४ | वाग्वादिनीमंत्रकथनम् | ४२० |
| ४०७ | दुर्गादेव्या बीजरूपमंत्रनिरूपणम् | ६६३ |
| ४०८ | गणेशोपासितलक्ष्मीमंत्रकथनम् | ६७८ |
| ४१२ | नित्यक्लिन्नामंत्रनिरूपणम् | ७३५ |
| ४१४ | गणेशसेवितमहाकृत्यामंत्रः | ७७८ |
| ४१६ | सर्वोपद्रवनाशनायोपयुक्ता महाशान्तिः | ८१२ |
| | **प्रकाशः १८** | |
| ४१८ | विरिविघ्नेशगणपतिमंत्रः | १ |
| ४२० | शक्तिविनायकमंत्रकथनम् | ५२ |
| ४२१ | भुवनेश्वरीशक्तिमंत्रोपासना | ६९ |
| ४२७ | वक्रतुंडमंत्रजपोपासनादि | १८२ |
| ४३० | वक्रतुंडगायत्रीकथनम् | २३४ |
| | **प्रकाशः १९** | |
| ४३० | पश्चिमाम्नायोक्तगणेशमंत्राः | १ |
| ४४१ | अष्टसीमाविनायकमंत्राः | १८९ |
| ४४३ | कूष्मांडविनायकसाधनम् | २३० |
| ४४७ | पञ्चास्यगजाननमंत्रविधिः | २९८ |
| ४४९ | विघ्नराजमंत्रः | ३३० |
| ४५० | मोदकप्रियगणेशमंत्रः | ३६० |
| ४५५ | चित्रकन्यासाधनम् | ४३५ |
| ४५६ | स्थूलदन्ताद्यष्टविनायकमंत्राः | ४६१ |
| ४५८ | एकविंशतिगणेशमंत्राः | ४९३ |
| ४५९ | राजमातंगीसाधनम् | ५०४ |
| | **प्रकाशः २०** | |
| ४७५ | उत्तराम्नायोक्तगणेशमंत्रः | १ |
| ४७६ | उच्छिष्टगणेशमंत्राः | १९ |
| ४७८ | वामदक्षिणमार्गनिर्णयः | ६५ |
| | **प्रकाशः २१** | |
| ४८५ | दक्षिणाम्नायोक्तभास्करमंत्रः | १ |
| ४८८ | भास्करमंत्रान्तरकथनम् | ४४ |
| | **प्रकाशः २२** | |
| ४९३ | चंद्रबीजजपादिविधिः | ७ |
| ४९४ | भौमबीजमंत्रजपादिविधिः | ३४ |
| ४९८ | बुधबीजमंत्रविधानम् | २०७ |
| ४९९ | गुरुबीजमंत्रजपादिविधिः | ११३ |
| ” | शुक्रबीजमंत्रविधानम् | १२० |
| ५०० | शनैश्चरबीजमंत्रविधानम् | १२९ |
| ” | राहुबीजमंत्रजपादिविधिः | १३४ |

पृष्ठांकाः विषयाः श्लोकांकाः


५०० केतुबीजमंत्रजपादिविधिः ... १३८
५०१ सूर्यमातृपिंगलासाधनम् ... १४८
५०२ चन्द्रमातुर्मंगलायाः साधनम् १६४
" भौममातृभ्रामरीसाधनम् ... १७५
५०३ बुधमातृभद्रिकासाधनम् ... १७९
" धान्याख्यगुरुमातृसाधनम्... १८३
" सिद्धाख्यशुक्रमातृकासाधनम् १८७
" उल्काख्यशनिमातृसाधनम्... १९०
५०४ संकटाख्यराहुमातृसाधनम् १९४
विकटाख्यकेतुमातृसाधनम् १९८


## प्रकाशः २३


५०४ ब्रह्मशक्तिमंत्रोपासनादिविधिः ३
५०५ चिन्तामणिसरस्वतीसाधनम् १२
५०६ ज्ञानसरस्वतीसाधनम् .... २३
५०८ वामाघटसरस्वतीसाधनम्... ५८
" अन्तरिक्षसरस्वतीसाधनम्... ६५
" महासरस्वतीसाधनम् ... ६७
५१२ त्रिकूटाख्यसरस्वतीसाधनम् १२६
५१३ विष्णुवागीश्वरीमंत्रः ... १४८
५१४ मुख्यवागीश्वरीमंत्रः ... १५१
" पद्मावतीमंत्रः ... ... १५९
५१५ बालामंत्राणां निरूपणम् ... १८२
५१८ अन्नपूर्णेश्वरीमंत्रः ... २२६
५२० गौरीमंत्राः ... ... ... २७१
५२३ वज्रेश्वरीमहामंत्रनिरूपणम् ३१४
५२५ त्वरितादेवीमंत्रसाधनम् ... ३५६
५२९ कौमारीविधिकथनम् ... ४३३
५३० वैष्णवीमंत्रविधिकथनम् ... ४४९
५३२ त्रैलोक्यविजयामंत्रविधिः ... ४८९
५३८ स्वप्नवाराहीमंत्रविधिः ... ५७३
५३९ बगलामुखीसाधनविधिः ... ५९८
५४७ छिन्नमस्तादेवतासाधनविधिः ६४०
५४९ तारामंत्रसाधनविधिः ... ७००
५५४ महातारामंत्र[illegible]धनम् ... ८४७
५६० धूमावतीमंत्रसाधनम् ... ९५७
५६६ प्रत्यंगिरामालामंत्रः ... १६०
५६७ चामुण्डायामहामंत्रकथनम् १०७०
५७२ शतचण्डीविधाननिरूपणम् ११६१
५८० सप्तविंशाक्षरलक्ष्मीमंत्रसाधनविधिः ... ... ... १३०१
५८३ ज्येष्ठालक्ष्मीमंत्रविधानम्... १३४७
" सिद्धलक्ष्मीमहामनुविधिः १३५९


## प्रकाशः २४


५८६ इन्द्रमंत्रकथनम् .... ... २
" वह्निमंत्रकथनम् ... .. १२
५८९ यममंत्रकथनम् .... ... ६६
५९० चित्रगुप्तमंत्रकथनम्... ... ७३
" नैर्ऋतमंत्रकथनम् ... ... ७९
५९१ आसुरीमंत्रविधिकथनम् ... ९१
५९२ वरुणदैवतमंत्रकथनम् ... ११४
५९३ मणिकर्णीमहामंत्रकथनम् ... १२१
" गंगाया मंत्रपंचककथनम् ... १३३
५९४ रेवामंत्रनिरूपणम् .... ... १४९
५९५ महाकृत्यामहामनुनिरूपणम् १६७
५९९ ब्रह्मणो मंत्रसाधनविधिः ... २२९


## प्रकाशः २५


६०० गणेशदीपविधिकथनम् ... २
६०१ बगलादीपविधिकथनम् ... १५
६०१ बटुकदीपविधिकथनम् ... २३
६०२ दीपमंत्रदीपयंत्रादिनिरूपणम् ४१
६०३ कार्याकार्यविनिर्णये विशेषतो दीपचिह्नानि ... ... ... ६६
६०४ शिवदीपविधिकथनम् ... ८०
" रोगहरभानुदीपविधिः ... ८५
" विष्णुदीपविधिः ... ... ८९


## प्रकाशः २६


६०५ मत्स्यावतारमंत्रविधिः ... २

| पृष्ठांका: | विषया: | श्लोकांका: |
|---|---|---|
| ६०६ | कूर्ममंत्रविधिनिरूपणम् ... | २३ |
| ६०७ | वराहमंत्रविधिकथनम् ... | ४४ |
| ६११ | नारसिंहमंत्रविधिः .... ... | ११२ |
| ६२३ | वामनमंत्राणां विधिः ... | ३३३ |
| ६२६ | परशुराममंत्रविधिः ... | ३९० |
| ६२८ | श्रीराममंत्रविधिः ... ... | ४३४ |
| ६३८ | श्रीकृष्णमंत्राणां विधिः ... | ६२७ |
| ६७५ | बौद्धमहामंत्रविधिः ... | १३१४ |
| ६७६ | कल्किमहामंत्रविधिः ... | १३२९ |

प्रकाशः २७

| पृष्ठांका: | विषया: | श्लोकांका: |
|---|---|---|
| ६७७ | केशवमूर्तिमंत्रकथनम् ... | ३ |
| " | नारायणमंत्रविधानकथनम् | १२ |
| ६८२ | माधवमंत्रविधानम्... ... | २०५ |
| ७८३ | गोविंदमंत्रकथनम्... ... | ११५ |
| " | विष्णुमंत्रकथनम् ... ... | १२७ |
| ६८४ | मधुसूदनमंत्रकथनम् ... | १३६ |
| " | त्रिविक्रममंत्रकथनम् ... | १४५ |
| ६८५ | वामनमंत्रकथनम् ... ... | १५४ |
| " | श्रीधरमंत्रकथनम् ... ... | १६२ |
| ६८६ | हृषीकेशमंत्रकथनम् | १७६ |
| ६८७ | दामोदरमंत्रकथनम् ... | १८८ |
| " | संकर्षणमंत्रकथनम् ... | १९६ |
| ६८[illegible] | वासुदेवमंत्रकथनम्... ... | २०६ |
| ६८९ | प्रद्युम्नमंत्रकथनम् ... | २३६ |
| ३९० | अनिरुद्धमंत्रकथनम् | २४५ |
| ६९४ | श्रीपुरुषोत्तममंत्रकथनम् ... | ३२२ |
| " | अधोक्षजमंत्रकथनम् | ३२९ |
| ६९५ | नृसिंहमंत्रकथनम् ... ... | ३४७ |
| ६९६ | जनार्दनमंत्रकथनम् ... | ३५२ |
| " | उपेन्द्रमंत्रकथनम् ... ... | ३५६ |
| " | हरिमंत्रकथनम् .. ... | ३५९ |
| ६९७ | कृष्णमंत्रकथनम् ... ... | ३७० |

प्रकाशः २८

| पृष्ठांका: | विषया: | श्लोकांका: |
|---|---|---|
| " | विष्णुप्रीतिकरमंत्रकथनम् ... | ३ |
| ६९८ | हयग्रीवमंत्रकथनम्... ... | १० |
| ७०० | विष्णुमंत्रनिरूपणम् ... | ५३ |
| ७०१ | गरुडमंत्रकथनम् ... ... | ८० |

प्रकाशः २९

| पृष्ठांका: | विषया: | श्लोकांका: |
|---|---|---|
| ७०३ | सुदर्शनचक्रमंत्रकथनम् ... | ४ |
| ७०७ | जयप्रदशंखमंत्रकथनम् ... | ७७ |
| ७०८ | खड्गमंत्रकथनम् ... ... | ८१ |
| " | धनुर्मंत्रकथनम् ... ... | ८४ |
| " | गदाकौमोदकीमंत्रकथनम् ... | ८६ |
| " | मुशलमंत्रनिरूपणम् ... | ९० |
| ७०९ | पाशमंत्रकथनम् ... ... | ९८ |
| " | छत्रमंत्रकथनम् ... ... | १०१ |
| " | चामरमंत्रकथनम् ... ... | १०५ |
| " | ध्वजमंत्रकथनम् ... ... | १०९ |
| " | पताकामंत्रकथनम् ... ... | ११३ |
| ७१० | शूलमंत्रकथनम् ... ... | ११५ |
| " | कटारमंत्रकथनम् ... ... | १२२ |
| " | दंडगायत्रीमंत्रकथनम् .... | १३० |

प्रकाशः ३०

| पृष्ठांका: | विषया: | श्लोकांका: |
|---|---|---|
| ७११ | कुलजाख्यविष्णुशक्तिमंत्रः... | १० |
| ७१२ | गोपालसुंदरीमंत्रविधिः ... | १८ |
| ७१७ | कृष्णप्रियैकजटामंत्रविधिः ... | १११ |
| " | एकवीराख्यकृष्णशक्तिमंत्रः | ११५ |
| ७१८ | कृष्णशक्तिमंत्रविधिः ... | १२८ |

प्रकाशः ३१

| पृष्ठांका: | विषया: | श्लोकांका: |
|---|---|---|
| ७१९ | षडक्षरशिवमंत्रविधिकथनम् | ३ |
| ७२८ | दक्षिणामूर्तिमंत्रविधिकथनम् | १६९ |
| ७३२ | शरभावतारहरमंत्रकथनम् | २४६ |
| ७३३ | अघोरास्त्रमंत्रविधिकथनम्... | २६५ |
| ७३४ | पाशुपतास्त्रमंत्रविधिकथनम् | २८४ |
| ७३५ | विषनाशननीलकंठमंत्रकथनम् | ३०२ |
| ७४२ | दक्षिणामूर्तिनिर्वाणमंत्रकथनम् | ४१३ |
| ७४५ | मृतसंजीवनीमंत्रकथनम् ... | ४७२ |
| ७४६ | दशाक्षररुद्रमंत्रकथनम् .... | ४८८ |

| पृष्ठांकाः | विषयाः | श्लोकांकाः |
|---|---|---|
| | **प्रकाशः ३२** | |
| ७४७ | बटुकमंत्रविधिकथनम् ... | १५ |
| ७५३ | भस्मसाधनकथनम् ... | ११८ |
| " | अभिषेकविधिनिरूपणम् ... | १२५ |
| ७५४ | गजोष्ट्रवाजिनां रोगादिशान्तिः | १३९ |
| " | नानाभैरवसाधननिरूपणम् | १५० |
| ७५८ | क्षेत्रपालमंत्रनिरूपणम् ... | २२४ |
| ७५९ | विषहरवह्निमंत्रकथनम् ... | २४२ |
| ७६० | चण्डमंत्रकथनम् ... ... | २४९ |
| ७६१ | कार्तिकेयमंत्रकथनम् ... | २७८ |
| ७६२ | लघुश्यामामंत्रकथनम् | २९८ |
| ७६४ | पञ्चकामेश्वरीमंत्राः | ३३७ |
| ७६५ | रुद्रशीर्षनिवासिनीमंत्रः | ४५० |
| ७६७ | वाङ्मतीमंत्रकथनम् ... | ३८७ |
| ७६८ | मणिकर्णिकामंत्रकथनम् ... | ४०१ |
| | **प्रकाशः ३३** | |
| ७६९ | यंत्रसिद्धिविधानकथनम् ... | १ |
| ७७० | हेरम्बयंत्रकथनम् ... ... | ३१ |
| ७७२ | स्तंभनयंत्रकथनम् ... ... | ५७ |
| ७७४ | आकर्षणकरहरिद्रागणपतियंत्रम् | ९५ |
| ७७५ | वश्यार्थं यंत्रसाधनम् ... | ११६ |
| ७७७ | उच्चाटनयंत्रकथनम्... ... | १५७ |
| ७७८ | विद्वेषणयंत्रकथनम् ... | १६९ |
| ७७९ | मारणयंत्रकथनम् ... ... | १८० |
| ७८० | मातृकायंत्रसाधनम्... ... | १९८ |
| ७८१ | त्रिपुरभैरवीयंत्रकथनम् ... | २३३ |
| ७८२ | पञ्चबाणेश्वरीयंत्रमंत्रकथनम् | २४९ |
| " | राजमातंगीयंत्रकथनम् ... | २५४ |
| ७८३ | भुवनेश्वरीयंत्रकथनम् ... | २७० |
| ७८४ | लक्ष्मीप्रदलक्ष्मीयंत्रकथनम् | २८२ |
| ७८५ | त्वरितायंत्रकथनम्... .... | ३०३ |
| ७८७ | बगलायंत्रकथनम् ... ... | ३४१ |
| ७८८ | वाराहीयंत्रकथनम्... ... | ३५३ |
| ७८९ | स्वप्नवाराहीयंत्रकथनम् ... | ३६४ |
| ७९० | कुरुकुल्यायंत्रकथनम् ... | ३९१ |
| ७९१ | वाराहयंत्रकथनम् ... ... | ४०४ |
| ७९२ | पृथिवीयंत्रकथनम् ... ... | ४२२ |
| " | नारसिंहयंत्रकथनम् ... | ४२८ |
| ७९४ | वामनयंत्रकथनम् ... ... | ४६६ |
| ७९५ | रामचंद्रयंत्रकथनम्... ... | ४७१ |
| ७९६ | श्रीकृष्णगोपालयंत्रकथनम्... | ५०६ |
| ७९८ | हनूमद्यंत्रकथनम् ... ... | ५२५ |
| " | दक्षिणामूर्तियंत्रकथनम् ... | ५४६ |
| ७९९ | मृत्युंजयाभिधयंत्रकथनम् ... | ५५३ |
| | बटुकभैरवयंत्रकथनम् ... | ५५९ |
| | **प्रकाशः ३४** | |
| ८०० | हनुमन्मालामंत्रकथनम् ... | ३ |
| ८०४ | चन्द्रोपासितहनूमन्मंत्रकथनम् | ९१ |
| ८०६ | गुरूपासितहनुमन्मंत्रकथनम् | ११८ |
| ८०७ | पञ्चकूटात्मकहनूमन्मंत्रकथनम् | १५५ |
| ८०९ | प्लीहादिनिवारणहनूमन्मंत्रः | १८१ |
| | **प्रकाशः ३५** | |
| ८१० | कार्तवीर्यार्जुनमंत्रकथनम् ... | २ |
| ८११ | दक्षिणमार्गेण कार्तवीर्ययंत्रस्यकाम्यपूजनविधिः .... | ३५ |
| ८१२ | वाममार्गिणां पूजनीयन्त्रयंत्रकथनम् | ४५ |
| ८१३ | कार्तवीर्यमूलध्यानकथनम् ... | ७५ |
| ८१५ | कार्तवीर्यगायत्रीकथनम् ... | १०९ |
| ८१७ | कार्तवीर्यप्रियकरदीपादिविधिः | १५३ |
| ८१८ | कार्तवीर्यदीपाधारयंत्रकथनम् | २६१ |
| ८१९ | दीपप्रबोधनसमये शुभाशुभविचारः ... ... | १९० |
| ८२१ | ग्रंथसमापनम् ... ... | २१६ |


इतिश्रीमेरुतंत्रस्थितविषयानुक्रमणिका समाप्तिं गता ।



॥ ॐ ॥

॥ श्रीगणेशाय नमः ॥ श्रीगौरीशंकराभ्यां नमः ॥

# अथ मेरुतन्त्रं प्रारभ्यते ।

यथाऽसत्सदिवाभाति न च भाति कदापि सत् ॥ यस्मिञ्ज्ञाते न सा भाति तस्यै तस्मै नमोनमः ॥ १ ॥ जलन्धरेण विजिते सुरासुरनरेऽखिले ॥ सूक्ष्मरूपेण ते सर्वे महेशं शरणं गताः ॥ २ ॥ दिव्यान्यब्दसहस्राणि समाधिस्थं विलोक्य तम् ॥ प्रार्थिता चार्चिता तैस्तु वामदक्षिणमार्गिभिः ॥ ३ ॥ अम्बा तदा बोधयुता नत्वा तं समव्यजिज्ञपत् ॥ ध्यायन्ति विधिहर्य्याद्यास्त्वां त्वं ध्यायसि कं पुनः ॥ ४ ॥ मां वदन्ति परां शक्तिं त्वां वदन्ति परं शिवम् ॥ आवयोरपि किं ध्येयं तत्त्वं मे कृपया वद ॥ ५ ॥ इति श्रुत्वा वचस्तस्याः स्मित्वा किञ्चिन्महेश्वरः ॥ [illegible] विधीन्द्रादीन्वाक्यमेतदुवाच ह ॥ ६ ॥ सदाशिव उवाच ॥ नराणां परमं वृद्धेरायुस्सौख्यं शतं समाः ॥ तदब्दं देवयोनीनां दिनमायुश्च तच्छतम् ॥ ७ ॥ वृद्धयते परमं तस्य मानं कलियुगस्य तत् ॥ धर्म्मार्धं सार्धं सम्पूर्णं धर्म्मशास्त्र प्रमाणतः ॥ ८ ॥ इदन्तु शैविविहितमैन्द्रायुर्मानवम्परम् ॥ कतिप्रमाणमब्दं तु समयः कायपूरकः ॥ ९ ॥ चतुर्दशेन्द्रसं-

स्थैव ब्रह्मणो दिनमुच्यते ॥ या ध्यायते महामाया मया तच्छ्वासनिर्गमः॥ १०॥ प्रपञ्चो ब्रह्मदिवसः कुम्भको रात्रिरस्य तु ॥ एवं तस्या घटिकया वर्षमेकं विधेस्स्मृतम् ॥ ११ ॥ घटीशतमितं तस्या ब्रह्मा जीवति कीटवत् ॥ पक्षमेकं सतीरूपं शुक्लं कृष्णं तु पार्वती ॥१२॥ ऋतुमात्रं हरिर्जीवेद्वर्षमात्रमहं शिवः॥ एवं सा शतवर्षा वै महाकालस्य गेहिनी ॥ १३ ॥ सर्पकञ्चुकवद्देहं त्यक्त्वात्यक्त्वा पुनर्युवा ॥ महाकालस्सदा तिष्ठेत्स मया विषयीकृतः ॥ १४ ॥ एवं श्रुत्वा वचस्तस्य देवी ब्रह्मा हरिः सुराः ॥ अहंकारस्य विलयं कृत्वा भीता नताः पुनः ॥ १५ ॥ देवा ऊचुः ॥ त्राहित्राहि महादेव शरणागतवत्सल ॥ साहंकारा वयं सर्वे ईश्वरा इतिवादिनः ॥ १६ ॥ निर्जिता अपि-निर्लज्जा जलन्धरवधैषिणः ॥ मशकाश्च वयन्देव न च त्वं मशकायसे ॥१७॥ यस्याग्रे सोपि यस्त्वञ्च पादार्धांशेन नो समः ॥ महाकालः कथञ्ज्ञेयः कथयस्व सदाशिव ॥ १८ ॥ मुक्तयः कतिधा देव श्रेष्ठा का किञ्च साधनम् ॥ वदास्माकं यदि कृपा देव्यां विष्णौ सुरेषु च ॥१९॥ ईश्वर उवाच ॥ ज्ञायते तत्प्रभावेण सकलं वेदवाक्यतः ॥ पुनर्मोदयते वृद्धिन्तस्य मायाकृतञ्जगत् ॥ ॥ २० ॥ मया कृतानि तन्त्राणि सङ्ख्ययाष्टोत्तरं शतम् ॥ येनयेन प्रार्थितोहं देवी सम्प्रार्थिता मया ॥ २१ ॥ देवीभिः प्रमथैर्देवैस्तत्तन्मोक्षश्चतुर्विधः ॥ येन मार्गेण भवति स स मार्गः प्रकाशितः ॥ २२ ॥ तस्माद्देवेशि ते देवा अहङ्कारेण मोहिताः ॥ अन्यान्देवान्विनिन्दन्ति षट्कर्म्मनिरतास्सदा ॥ २३ ॥ कलिना हतसौभाग्या भक्ष्ये पाने च मैथुने ॥ जायन्ते निरतास्तेन निर्धनाः प्रेतरूपिणः ॥ २४ ॥ दृश्यन्ते तु तथा देवा भवद्भिस्सम्यगीरितम् ॥ वेदसारं धर्म्मसारं तन्त्राणां हृदयं परम् ॥ २५ ॥ महाकालेन यत्प्रोक्तम्पञ्चमीमुक्तिसाधनम् ॥ सर्वेषाम्मेरुतां यातन्तत्तन्त्रं मेरुसाञ्ज्ञितम् ॥ २६ ॥ शृण्वन्तु तद् दृश्यमानम्मनोह्लादकरञ्च यत् ॥ पृच्छया निजसन्देहान्दूरीकुर्व्वन्त्वशङ्किताः ॥ २७ ॥ यथा तोयञ्जलनिधेर्गृहीत्वाब्दाः स्वधारया ॥ वर्षन्ति क्षत्रवायुस्तं बिन्दुरूपं करोति च ॥ २८ ॥ तद्वन्महाकालवान्महामाया प्रकर्षति ॥ कर्म्मभिश्चैव सम्भिन्नास्ते देवाः कोटिशोभवन् ॥ २९ ॥ यथा नैक-

ब्यगुणतो बिन्दवो यान्ति चोदताम् ॥ तथैवोपासनामार्गगुणा यान्ति च देवताम् ॥ ३० ॥ यथा सरिद्भ्यो गर्त्ताम्भः पतितं ह्रदतां व्रजेत् ॥ स च दूरतलः स्याद्वै तद्वद्देवोऽपि मोहितः ॥ ३१ ॥ पुनर्नरः पुनस्तिर्यक् शेषं यद्वज्जलाशयः ॥ पुनः सूर्यकरे न्यस्तः पुनर्वृष्टिः पुनर्जलम् ॥ ३२ ॥ तद्वद्दुष्कर्मणा जीवो नानायोनिषु जीर्यते ॥ यथा जलौघः सन्मार्गात्तटिनीतो महानदीम् ॥ ३३ ॥ प्रविष्टस्तोयधिम्पश्चादपुनर्भवतां व्रजेत् ॥ वाडवोदरसंवेशात्तद्वज्जीवोऽपि देवताम् ॥ ३४ ॥ विष्णुतां शिवतांल्लब्ध्वा महाकालोभिजायते ॥ समुद्रादाहृतः कश्चिद्दैवात्त्यक्तस्तु तत्र तु ॥ ३५ ॥ यथा समुद्रो भवति तद्वद्ब्रह्मसुता अपि ॥ ब्रह्मज्ञानाद्विनिर्मुक्ता हित्वा चोपासनाक्रमम् ॥ ३६ ॥ श्रीदेव्युवाच ॥ वामदक्षिणभेदेन पञ्चपञ्चक्रमेण च ॥ उपासना वामदक्षा तत्रतत्र प्रशस्तिका ॥ ॥ ३७ ॥ तत्र भोगक्रिया मोक्षक्रिया युग्मक्रियापि च ॥ लभ्यते देवता का च सर्वाभ्यस्तूत्तमोत्तमा ॥ ३८ ॥ शिव उवाच ॥ देवासुरैः पुरा कल्पे मथ्यमाने महोदधौ ॥ तत्र श्यामा समुत्पन्ना सुरा कलशधारिणी ॥ ३९ ॥ गौराङ्ग्यरुणचैला च भास्वद्धरितकञ्चुका ॥ श्वेतोत्तरच्छदा देवी त्रैलोक्यस्यापि मोहिनी ॥ ४० ॥ दृष्ट्वा तान्दानवास्सर्वे शुक्राचार्य्यवरात्सुरान् ॥ जित्वा ताञ्जगृहुस्तस्याः कलशाच्च पपुः सुराम् ॥ ४१ ॥ देवान्पलायितान्दृष्ट्वा शक्तयस्तत्र संस्थिताः ॥ पपुस्ता अपि तां पुण्यां सुरां दैवतमातरम् ॥ ४२ ॥ वरानपि बहून्दद्युः सुरायास्सुरमातरः ॥ अनयास्मान्तर्प्पयन्ति शेषं गृह्णन्ति ये नराः ॥ तेऽस्मद्रूपा न सन्देहो भुक्तिमुक्त्येकभाजनम् ॥ ४३ ॥ सुरा गङ्गा सुरा सिन्धुः सुरा देवी सरस्वती ॥ सुरा गोदावरी रेवा सुरैव परमम्पदम् ॥ ४४ ॥ सुरान्निन्दन्ति ये मूढास्ते मूढा जन्मजन्मनि ॥ गन्धर्वैः स्तूयमानास्ताश्शक्तयस्ते च दानवाः ॥ ४५ ॥ पुनर्ममन्थुर्जलधिं बलहीनैस्सुरैस्सह ॥ धन्वन्तरिस्समायातस्सुधाकलशहस्तवान् ॥ ४६ ॥ सुरामत्तास्तु ते प्रोचुः किमिदं पुरुषाहृतम् ॥ उवाच मधुरं विष्णुस्सान्त्वयंश्च प्रतारयन् ॥ ४७ ॥ पूर्वदेवास्सन्तु यूयम्मद्यस्यास्य च पानतः ॥ अग्रे यदिदमुत्पन्नं पीयूषन्तत्प्रकीर्तितम् ॥ अग्रेण्येतत्तु देवार्थे निस्सारम्पुरुषाहृतम् ॥ ४८ ॥ ततो हरिर्मोहिनीरूपधारी वामेन तां

पाययेत्पूर्वदेवान् ॥ शक्तीस्सर्वास्त्वरुणान्भैरवादीनेतन्मन्त्रानुद्धरेदघ्यवर्षन् ॥ ॥ ४९ ॥ दक्षेण देवानमृतं पाययंस्ते तत्तन्मन्त्राः पूर्वदेवानबाधन् ॥ हाहा भूतं समरे तत्समस्तं शुक्राचार्य्यो ज्ञातवांस्ततसमग्रम् ॥ ५० ॥ ततस्स क्रोधतास्राक्षो जलं कृत्वा करेऽशपत् ॥ धिग्धिग्ज्ञानं सुरारीणामनया सुरया हृतम् ॥ ५१ ॥ तस्मादिमां ये पिबन्ति सर्वे पातकिनस्तु ते ॥ प्रयान्तु निरयं घोरं तिष्ठन्त्विह पिशाचवत् ॥५२॥ श्रुत्वा तं दारुणं शापं प्रजज्वाल तदा सुरा ॥ निर्दहन्तीव लोकांस्त्रीन्प्राकम्पन्त सुरासुराः ॥ ५३ ॥ ततो मया स्तुता देवी बीजगर्भैस्स्तवोत्तमैः॥पादयोः पातितः शुक्रः पुत्रोऽयन्तेभियोज्यताम् ॥५४॥ मायया रमया वाचा सम्बुध्यन्ता त्रिवर्षकाः ॥ शुक्रशापं विमोचय पुनस्तद्वर्णकान्तिका ॥ ५५ ॥ यस्या उपासना तस्या बीजेन पुटितो मनुः ॥ षोडशार्णस्तवाख्यातो मन्त्रिताष्टोत्तरं शतम् ॥ ५६ ॥ निश्शापं कुरुते साध्यं भुक्तिमुक्त्येकभाजनम् ॥ इति दीक्षाक्रमो येषां वंशे देवि समागतः ॥ ५७ ॥ स कौलो दुर्लभो देवि दाता भोक्ता च पावकः ॥ यन्मिन्मार्गे प्रधानोऽयं स तु वामपथः स्मृतः ॥ ५८ ॥ मद्यं मांसं च मत्स्याश्च मुद्रा मैथुनमेव च ॥ कुलमार्गप्रविष्टेन सदा सेव्यं सुहर्षिणा ॥ ५९ ॥ कौलिकोङ्गुष्ठताम्प्राप्तो वामस्स्यात्तर्ज्जनीसमः ॥ चीनक्रमो मध्यमस्स्यात्सिद्धान्ती योऽवरो भवेत् ॥ ६० ॥ कनिष्ठः शाबरो मार्ग इति वामस्तु पञ्चधा ॥ यैः पीतममृतं ते ते सोमपा बलदर्पिताः ॥ ६१ ॥ लक्ष्म्या सह समुद्भूताः शतयत्नाश्च सोमपाः ॥ तेषामुपासना प्रोक्ता दक्षमार्गेण सा द्विजैः ॥ ६२ ॥ कर्तव्या वैदिकी श्रेष्ठा स्मार्ती स्यान्मध्यमोत्तमा ॥ पौराणी मध्यमा ख्याता तान्त्रिकी त्ववरा स्मृता ॥६३॥ देशी च कालीजातीया कनिष्ठा स्यादुपासना ॥ वाममार्गो यदा दक्षं प्रविशेत्तत्सुरैस्स तु ॥ ६४ ॥ विघ्नेन पीड्यते चापि न सिद्धिमधिगच्छति ॥ दक्षमार्गो यदा वामं प्रविशेत्तत्सुरास्तदा ॥ ६५ ॥ लोकद्वयाद्यापयन्ति तं ग्रसन्ति च वामिनम् ॥ तस्मात्स्वकुलमार्गं तु ज्ञात्वा कुर्य्यादुपासनाम् ॥६६॥ भक्तिश्रद्धान्वितौ शिष्यगुरू सम्पूर्णलक्षणौ॥सर्वोऽपि मार्गस्तत्कालं भुक्तिमुक्तिप्रदायकः॥ ॥ ६७ ॥ धनार्थिनस्तु गुरवः शिष्याः सिद्ध्यर्थिनः कलौ ॥ तस्मान्न चोभ-

योऽसिद्धिर्देवतानां विडंबनम् ॥ ६८ ॥ द्विजानामनुपेतानां स्वकर्म्माध्ययनादिषु ॥ यथाधिकारो नास्तीह स्याच्चोपनयनादिषु ॥ ६९ ॥ तथा चादीक्षितानां च मनुदेवार्च्चनादिषु ॥ नाधिकारोऽस्त्यतः कुर्य्यादात्मानं मन्त्रसंस्कृतम्॥ ॥ ७० ॥ दीयते ज्ञानविज्ञानं क्षीयन्ते पापराशयः ॥ तेन दीक्षा इति प्रोक्ता प्राप्ता चेत्सुगुरोर्मुखात्॥ ७१ ॥ असद्गुरुः स्वयंनष्टः कथं तारयते परम् ॥ विंशद्विश्वोपकगुणैर्युक्तो यः स गुरुर्भवेत् ॥ ७२ ॥ योऽत्युत्कृष्टो यथोक्ताङ्गः शुद्धवेषो मनोहरः ॥ सर्वाङ्गमार्गतत्त्वज्ञः सर्वमन्त्रविधानवित् ॥ ७३ ॥ इङ्गिताकारचेष्टाविदूरतः कृतदुर्जनः ॥ अन्तर्मुखोऽबहिर्दृष्टिस्सर्वज्ञो देशकालवित् ॥ ॥ ७४ ॥ आज्ञासिद्धो दयायुक्तः शान्तो वेदाङ्गवेदवित् ॥ नित्ये नैमित्तिके काम्ये रतः कर्म्मण्यनिन्दिते ॥ ७५ ॥ अलोलुपोऽहिंसकश्च पक्षपाती गुरुर्मतः॥ अनीदृशगुरोर्मन्त्रो मरणायासदुःखकृत् ॥ ७६ ॥ विप्र एवेदृशः कार्य्यो गुरुर्नो चेत्तदेदृशः ॥ क्षत्रविट्छूद्रजातीयः प्रतिलोमं न दीक्षयेत् ॥ ७७ ॥ दक्षमार्गे तु निर्वीर्य्यः पितुर्मातामहस्य च ॥ सोदरस्य गृहस्थस्य वाममार्गेतिवीर्य्यवान् ॥ ७८ ॥ परीक्षेत गुरुः शिष्यं विद्वद्भिर्लक्षणैर्युतम् ॥ द्वादशाब्दं तदर्धं वा तदर्धं वाथ दीक्षयेत् ॥ ७९ ॥ गुरुवाक्यप्रमाणज्ञं गुरुशुश्रूषणे रतम् ॥ लज्जाभिमानगर्वादिवर्जितं कुलनायकम् ॥ ८० ॥ निरपेक्षं गुरुद्रव्ये तत्प्रसादाभिकाङ्क्षिणम् ॥ जपध्यानाभिनिरतं मोक्षमार्गाभिगामिनम् ॥ ८१ ॥ समाधिसाधनोपेतं शुद्धदेहं च धार्म्मिकम् ॥ दृढव्रतं सदाचारं श्रद्धाभक्तिसमन्वितम् ॥ ८२ ॥ दीनसत्यमितस्निग्धभाषिणं साधुसम्मतम् ॥ अनुकूलप्रियायुक्तं धीरं सर्वोपकारकम् ॥ ८३ ॥ सदैव सुमुखं कुर्य्याच्छिष्यं दैवततुष्टये ॥ दत्त्वादीक्षां तु लोभाद्यैर्देवताशापमाप्नुयात् ॥ ८४ ॥ परशिष्ये चेष्टवंशे धूर्त्ते पण्डितमानिनि ॥ स्त्रीद्विष्टे सामये त्रस्ते व्यङ्गे दीक्षा तु निष्फला ॥ ८५ ॥ न वेदः प्रणवं त्यक्त्वा मन्त्रो वेदसमुत्थितः ॥ तस्माद्वेदपरो मन्त्रो वेदाङ्गश्चागमः स्मृतः ॥ ८६ ॥ वश्याकर्षादिकं कर्म्म दृष्टादृष्टफलप्रदम् ॥ वेदेन साध्यते सर्वं ग्रहयज्ञादिकं किल ॥ ८७ ॥ न वेदेन विना यज्ञा न वेदा यज्ञवर्ज्जिता ॥ तस्माद्वेदपरो मन्त्रो नावेदो मन्त्र ईरितः ॥ ८८ ॥ न मन्त्रे चाधिकारोऽस्ति

शूद्राणां नियमात्परः ॥ यावन्त्यर्णानि मन्त्राणां शूद्राय प्रतिपादयेत् ॥ ॥ ८९ ॥ तावन्त्यो ब्रह्महत्यास्स्युस्तस्मात्संस्कारयेच्च तम् ॥ स्वाहोंकारेण रहितं दद्यात्पश्चाच्च तान्त्रिकम् ॥ ९० ॥ स्वागमोक्तेन मार्गेण स्त्रीशूद्रैरपि पूजनम् ॥ कर्त्तव्यं संस्कृतैस्तैश्च स्वागमोक्तेन वर्त्मना ॥ ९१ ॥ विधवायाः सुतादेशात्कन्यायाः पितुराज्ञया ॥ भर्त्रैव दीक्ष्यते भार्य्या यतोऽसौ सर्वदा गुरुः ॥ ९२ ॥ तथापि पूज्यो देवस्य बुद्ध्याऽसौ सर्वसाधनैः ॥ शैवो वा वैष्णवो वापि स्त्रीशूद्राणां नमोन्तकः॥९३॥ नाममन्त्र इति ज्ञात्वा चाण्डालानपि दीक्षयेत् ॥ ९४ ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राः पौलस्त्यजातयः॥ पञ्चधा मनवः ख्याताः प्रदेयाश्चानुलोमतः ॥ ९५ ॥ माया बीजं ब्राह्मणः स्याच्छीबीजं क्षत्रियः स्मृतः ॥ कामबीजं भवेद्वैश्यो वाग्भवं शूद्र ईरितः ॥ ॥ ९६ ॥ चतुर्बीजपरित्यक्तो मनुः पौलस्त्यसञ्ज्ञकः ॥ हीनवर्णाय नोदद्यान्मन्त्रं त्वधिकवर्णकम् ॥ ९७ ॥ आनुष्टुभाश्च ये शक्तिमन्त्रा नीलसरस्वती ॥ कल्पोक्ता वैदिकी विप्रैर्देया विन्ध्यनिवासिनी ॥ ९८ ॥ ब्राह्मणैः क्षत्रियैश्चापि देया पाशुपताभिधा ॥ सौदर्शनी नारासिंही कार्तवीर्य्यस्य नान्यतः ॥ ९९ ॥ वर्णत्रयेपि दातव्यं दक्षिणामूर्त्यघोरकम् ॥१००॥ अष्टाक्षरं हयग्रीवमुमामाहेश्वरं तथा ॥ लक्ष्मीनारायणं वासुदेवताक्षं वराहकम् १०१ अग्निः सूर्य्यवृणेर्यस्तु ताराद्याश्चारुणेश्वराः ॥ सर्ववर्णेषु दातव्याः कालिका श्यामला तथा ॥ १०२ ॥ छिन्नमस्ता च मातङ्गी बगला चोग्रतारिका ॥ योगिनी यक्षपत्नीनां त्रैपुरा बटुकादयः ॥ १०३ ॥ शावराश्च पुलस्त्यानि न जप्याद्विजजन्मनि ॥ उपासना त्रिधा प्रोक्ता श्रेष्ठा तत्र तु सात्त्विकी॥१०४॥ तस्यां तु मानसी पूजा पौजे मुख्यतमा स्मृता ॥ राजसो दक्षिणो मार्गः प्रतिमायां च पूजनम् ॥ १०५ ॥ वाक्योपचारैः सकलैस्तदाद्यन्ताद्विशिष्यते ॥ तामसोपासनं प्रोक्तं पीठादौ बलिदानतः ॥ १०६ ॥ वाममार्गस्ततश्चाद्यवर्णं हित्वा प्रशस्यते ॥ एषा पद्या तु सम्प्रोक्ता वामदक्षिणयोः परा ॥ १०७ ॥ गोपिता सर्वतन्त्रेषु किमन्यच्छ्रोतुमिच्छथ ॥ १०८ ॥

इति श्रीमहामायामहाकालानुमते मेरुतन्त्रे शिवप्रणीतव्यवस्थाप्रकाशः प्रथमः॥१॥

श्रीदेव्युवाच ॥ शतशोत्र जना देव तन्त्रमार्गे व्यवस्थिताः ॥ सिद्धिर्न दृश्यते क्वापि किम्परत्र भविष्यति ॥ १ ॥ यदि कर्म्म प्रधानं च देवताराधनेन किम् ॥ देवताराधनं सत्यं साधका दुःखिताः कथम् ॥ २ ॥ एतन्मे संशयं छिन्धि किं चक्रैश्चापि मान्त्रिकैः ॥ संस्काराश्च कथं कार्य्यास्तान्त्रिकाणां वदस्व तत ॥ ३ ॥ ईश्वर उवाच ॥ गर्भे कर्म्मत्रयं कुर्य्याज्जायमाने तथा दश ॥ ततः कर्म्मत्रयं चेति संस्काराः षोडश स्मृताः ॥ ४ ॥ द्विजातीनां तथा मन्त्रे कुर्य्यात्कर्म्मत्रयं गुरुः ॥ दश शिष्यांस्ततः कुर्य्यात्सिद्धे मन्त्रे पुनस्त्रयम् ॥ ५ ॥ षडेव जन्मसंस्काराः प्रोक्ताः स्त्रीशूद्रयोरपि ॥ तथैव मन्त्रसंस्काराः षडेव परिकीर्त्तिताः ॥ ॥ ६ ॥ चाण्डालादिषु चत्वारो मन्त्रे प्रोक्तास्त एव हि ॥ त्रयो यवनकल्पोक्तास्तन्मन्त्रेष्वपि ते त्रयः ॥ ७ ॥ वामदक्षिणभेदेन तेषां कर्त्तव्यतां शृणु ॥ आज्यस्थाने सुरां वामे होमाद्यर्थं प्रकल्पयेत् ॥ ८ ॥ पाकादिषु च मांसं स्याच्छैलादौ नियमाः स्मृताः ॥ मैथुनं ब्रह्मचर्य्यं च मुद्रास्तत्कर्म्मिकास्तथा ॥ ९ ॥ गर्भाधानं स्वकल्पोक्तवर्त्मना प्रथमं भवेत् ॥ दाक्षिणानामथो वामे द्वितीयाङ्कं समाचरेत् ॥ १० ॥ सन्तर्प्पयेदङ्गदेवं मन्त्रैर्योनिं च तीर्थतः ॥ अस्या अङ्गदेवताया मन्त्रन्यासं समाचरेत् ॥ ११ ॥ सर्वान्न्यासान्स्वस्य देहे भावयेत्तां च भैरवीम् ॥ स्वयं च भैरवो भूत्वा रतिकर्म्म समाचरेत् ॥ १२ ॥ सुखासनस्थो भगगं ध्वजं कृत्वा जपेदमुम् ॥ मन्त्रं पञ्चसहस्रं च यथेष्टं लभते सुतम् ॥ १३ ॥ लक्ष्मी प्राणेश्वरी चेति मम पाहि नवाक्षरः ॥ तस्यास्सोमस्तस्य सूर्यो गर्भस्तिष्ठेद्धरातले ॥ १४ ॥ अथ द्वितीयसंस्कारः कार्य्यः पुंसवनाभिधः ॥ तृतीये मासि कुर्वीत अथ पुंसवनं बुधः ॥ १५ ॥ वेदोक्तप्रोक्तदिवसे स्वकल्पोक्तेन वर्त्मना ॥ तत्र वैदिकमुख्यस्य होमस्थाने स्वदेवताः ॥ १६ ॥ जुहुयात्कारणेनैव चतुराहुतिसंख्यया ॥ तदावरणदेवानां पुरुषाणां द्वयंद्वयम् ॥ १७ ॥ एका स्त्रीणां वाममार्गे शेषं पूर्ववदीरितम् ॥ सतीर्थं सपशुं दद्यान्निशायां भैरवं बलिम् ॥ १८ ॥ अथो तृतीयसंस्कारः सीमन्ताख्यः प्रकीर्तितः ॥ चतुर्थषष्ठाष्टमेषु मास्सु सन्मध्यमाधमः ॥ १९ ॥ ज्योतिश्शास्त्रोक्तदिवसे स्वकल्पोक्तेन वर्त्मना ॥ वामी तु देवतामन्त्रं सीमन्ते सुरुचा लिखेत् ॥ २० ॥ न्यासं कुर्य्यात्तद-

ङ्गेषु तन्मन्त्रं रोगहारिणम् ॥ ततो न गच्छेत्तां भार्य्यां देवताशापभीतितः ॥ ॥ २१ ॥ कामेन वाथ मोहेन दुष्काले वा विधानतः ॥ अन्यायेन कृतः संगः सीमन्तस्तदधोवहः ॥ २२ ॥ अथ तुर्यन्तु संस्कारं कुर्य्यात्स्त्रीशूद्रयोरपि ॥ जातकर्म्माभिधं विप्रः स्वकल्पोक्तेन वर्त्मना ॥२३॥ कन्या जन्मनि विप्राणां शूद्रस्य सुतजन्मनि ॥ तूष्णीमेव क्रियां कुर्य्याद्विष्णुस्मरणपूर्वकम् ॥ २४ ॥ वाममार्गी न कुर्वीत मेधाजननसंस्कृतिम् ॥ किन्तु स्वर्णस्य लेखन्या विलिखेत्करणाग्रया ॥ २५ ॥ तालुदेशे मूलबीजं रसनायां तथा मनुम् ॥ देवतां तर्प्पयेत्पश्चादन्यत्कर्म्म तु दक्षवत् ॥ २६ ॥ अथ पञ्चमसंस्कारो नामकर्म्माह्विको ध्रुवम् ॥ सर्वेषामेवमुद्दिष्टः सूतकान्ते शुभे दिने ॥ २७ ॥ स्वकल्पोक्तविधानेन नामकर्म्म समाचरेत् ॥ तन्त्रेषु यानि चोक्तानि मात्राचक्राणि षोडश ॥ २८ ॥ विचार्य्य तानि कुर्व्वीत नाम यत्सफलं भवेत् ॥ न कृतं चेदत्र नाम तादृशश्चेद् गुरुस्तदा ॥ २९ ॥ पूर्णाभिषेके कुर्व्वीत तत्सबीजं निरूप्यते ॥ यस्मादक्षगुणैः सिद्धिर्विप्राणां सम्प्रजायते ॥३०॥ ताराचक्रं प्रवक्ष्यामि बालानां मन्त्रसिद्धये ॥ अ आ हये इर्यमे च ई उ ऊ वह्निभे तथा ॥ ॥ ३१ ॥ ऋ ॠ ऌ ॡ च रोहिण्यां ए मृगे शिवभे च ऐ ॥ ओ औ पुनर्वसौ पुष्ये ककारः सर्प्पभे खगौ ॥ ३२ ॥ पैत्रे घङौ भगर्क्षे च आर्य्यमर्क्षे छजौ मतौ ॥ हस्ते झञौ टठौ त्वाष्ट्रे स्वात्यां डो द्वीशभे ढणौ ॥ ३३ ॥ तथदा अनुराधायां ज्येष्ठायां धोऽथ मूलभे ॥ नपफाः पूर्वाषाढायां बकारो भस्तु वैश्वभे ॥ ३४ ॥ मः कर्णेथ धनिष्ठायां यरौ लः शततारके ॥ वशौ तु पूर्वभाद्रायां षसहाः स्युरुपान्तिमे ॥ ३५॥ ळं क्षं अं अश्च रेवत्यां गण्या मन्त्राक्षरर्क्षतः ॥ साध्यनामादिवर्णर्क्षैस्त्रिरावृत्त्या फलानि तु ॥ ३६ ॥ स्थाननाशः सतां संगो बहुमैत्री मृतेः समम् ॥ आधिं वा व्याधिमाप्नोति साधकः कार्य्यसिद्धये ॥ ३७ ॥ बहुभिः शत्रुताक्षेपो विपत्तिः सम्पदात्ययः ॥ एतत्तु ताराचक्रस्य फलं ज्ञात्वाचरेदिदम् ॥ ३८ ॥ तारोक्तमातृकाभिर्भे ज्ञात्वा साधकसाध्ययोः ॥ स्त्रीपुंसोर्वा व्यस्तयोश्च गणचक्रं विचारयेत् ॥ ३९ ॥ स्थिराणि विप्रघोग्राणि रौद्रं नरगणः स्मृतः ॥ हर्य्यन्त्यमित्रादित्येन्दुवाय्विज्यकर-

घोटकाः ॥४०॥ देवाः शेषा राक्षसाः स्युः साध्यसाधकयोः फलम् ॥ नृदेवयोः फलं शीघ्रं व्यस्तयोः कष्टतः फलम् ॥ ४१ ॥ नृदैत्ययोर्मनुग्राह्यव्यस्तयोर्मरणं भवेत् ॥ देवदानवयोर्युद्धं व्यस्तयोर्निष्फलम्भवेत् ॥ ४२ ॥ ग्रहोपग्रहमन्त्रेषु शशिचक्रं विचारयेत् ॥ वेदा रामास्त्रयो युग्मं युग्मं युग्मं वदन्ति षट् ॥ ॥ ४३ ॥ षड्वर्गाश्च ततः षट्सु नामवर्णस्थलान्मनोः ॥ भवेद्यत्रादिगो वर्णः फलं तत्र भवेदिदम् ॥ ४४ ॥ इष्टो दासः पोषकश्च रोगकृत्पुत्रदः शुभः ॥ स्त्रीसौख्यकृद्घातकारी भाग्यदः कार्यसिद्धिकृत् ॥ ४५ ॥ लाभकृद्व्ययकृच्चेति प्रोक्ता यन्त्रेषु मातृकाः ॥ स्त्रीशूद्रप्रतिलोमानां नाममन्त्रैरुपासना ॥ ४६ ॥ पूर्वोक्ता राशयो ज्ञेया मीनाद्याश्च द्विजादयः ॥ वर्णोत्तमो मनुर्ग्राह्यो वैदिकोऽत्र विशेषतः ॥ ४७ ॥ वक्ष्येऽथ कौलिके मार्गे सिद्धिकृत्पाञ्चभौतिकम् ॥ वाय्वग्निभूजलाकाशपञ्चतत्त्वानि विन्यसेत् ॥ ४८ ॥ द्वौद्वौ स्वरौ तले लेख्यौ यकाराद्यास्ततः पुनः ॥ कादिकाश्चापि षड्वर्गाः शषसा हश्च क्षस्तथा ॥ ४९॥ पुनः पुनर्नाम लेख्यं मन्त्राक्षरसमो मनुः ॥ तस्मात्पुनर्मनुर्लेख्यो युगपत्स्यात्समापनम्॥५०॥ यावत्तावल्लिखित्वाथ वर्णतत्त्वं विचारयेत् ॥ स्थाप्यं रूपं त्वेकतत्त्वे मित्रतत्त्वे च तद्दलम् ॥५१॥ उदासीने पादमेकं तद्योगः पञ्चभाजितः ॥ इष्टं स्यादथ कष्टं तु शत्रौ रूपं समे दलम् ॥५२॥ पादो मित्रे तु तद्वत्तु तत्कष्टं स्यात्कलात्मकम् ॥५३॥ इष्टेधिकेऽल्पकष्टे तु मन्त्रसाधनमाचरेत् ॥ कुर्वन्ति भूतवेतालाः पिशाचाश्चान्यथा मनुम् ॥ ५४ ॥ महीसलिलयोर्मैत्रमनलानिलयोरपि ॥ सामान्यमग्निभूम्योस्तु सलिलानिलयोस्तथा ॥ ५५ ॥ शात्रवं वैपरीत्येन चक्रं स्यात्पाञ्चभौतिकम् ॥ सिद्धादिचक्रं वक्ष्येऽहं यज्ज्ञात्वा नाम कारयेत् ॥ ५६ ॥ दक्षिणोपासनामार्गे स्वमन्त्रं स्वस्य देवताम् ॥ द्वादशारे तथा चक्रे कूटषण्ढविवर्जितान् ॥ ५७ ॥ आदिक्षान्ताल्लिँखेद्वर्णान्पूर्वतो यावदीश्वरम् ॥ स्वनामाक्षरमारभ्य ज्ञेयो मन्त्राक्षरावधिः ॥ ५८ ॥ सिद्धः साध्यः सुसिद्धोऽरिर्विज्ञेयश्च पुनःपुनः ॥ सिद्धः सिध्यति कालेन साध्यः सिद्ध्यति वा न वा ॥ ५९ ॥ सुसिद्धग्रहणादेव रिपुमूलं निकृन्तति ॥ अथ वक्ष्ये महाविद्यासाधने सिद्धिमातृकाम् ॥ ६० ॥ मूलक्रमेण ज्ञेयानि तत्र कोष्ठानि षोडश॥

क्रमादेतेषु कोष्ठेषु मातृकार्णान्सुविन्यसेत् ॥ ६१ ॥ कुत्रीष्वङ्कमहीन्द्वब्धिसू-
र्य्यदिक्षण्नृपा वृषाः ॥ पञ्चाङ्गतिथिविश्वे च कोष्ठास्तत्र प्रकीर्तिताः ॥ ६२ ॥
आदौ ज्ञेयाश्चतुष्केषु सिद्धाद्या विदिशासु च ॥ तत्तत्स्थानात्तकोष्ठान्तु पूर्वा-
ङ्गुल्या गुरूक्तितः ॥ ६३ ॥ सिद्धः सिद्धो जपात्सिद्ध्येत्सिद्धसाध्यो द्विसङ्गु-
णात् ॥ सिद्धः सुसिद्धसम्प्राप्तः सिद्धारिर्हन्ति गोत्रजान् ॥ ६४ ॥ साध्यसि-
द्धोऽतिसंक्लेशात्साध्यसाध्योऽतिदुःखकृत् ॥ साध्यः सुसिद्धो भजनात्साध्यारिः
स्वाश्रयं हरेत् ॥ ६५ ॥ सुसिद्धसिद्धोऽर्धजपाद्बहुरूपाच्च तत्परः ॥ अतिद्रुतं
द्विः सुसिद्धः सुसिद्धारिः कुलापहः ॥ ६६ ॥ आरिसिद्धस्सुतं हन्यादरिसा-
ध्यस्तु कन्यकाम् । आरिः सुसिद्धः पत्नीघ्नोऽथार्य्यरिः साधकापहः ॥ ६७ ॥
अत्र प्रसिद्धं नाम स्यात्प्रयुक्तो येन जागृयात् ॥ यस्तु बीजात्मको मन्त्रस्तत्र
षड्कुलमातृकाः ॥ ६८ ॥ विज्ञेयास्तत्र पद्मं तु रचयेत्षड्कुलं शुभम् ॥ तत्र
न्यसेन्मातृकार्णान्कूटषण्ढविवर्ज्जितान् ॥ ६९ ॥ स्वनामाद्यक्षरं यत्र तदारभ्य
विचारयेत् ॥ सम्पद्दारिद्र्यधैर्य्याणि बन्धुविग्रहसंशयौ ॥ ७० ॥ सर्वनाशः क्रमादेव
नामाद्यर्णैश्च कोष्ठतः ॥ कथं मन्त्रस्य सिद्धिस्स्यादेतदर्थमहं ब्रुवे ॥ ७१ ॥ धन-
र्णमातृकां खेषुषट्त्रीन्द्वब्ध्यङ्गषड्कृताः ॥ वक्ष्येऽत्र तु यथा लेख्या अङ्का एकादश
स्वराः ॥ ७२ ॥ तत्तले काच्च ढाद्दाच्च लेख्या वर्णा हरोन्मिताः ॥ तदधोद्विकु
सप्ताब्धिखत्रिसप्तेषुसागराः ॥ ७३ ॥ षट्पञ्च साधकस्याङ्का मन्त्राङ्काः पूर्व-
मीरिताः ॥ स्वरव्यञ्जनभिन्नानां मन्त्रार्णानां पृथक्पृथक् ॥ ७४ ॥ अङ्क-
योगस्तथा कार्य्यः साधकस्य तु नामतः ॥ भागशेषावुभौ स्थाप्यौ यावन्नामाङ्कता
मनोः ॥ ७५ ॥ अधिका स्यात्साधकस्य देयं मन्त्रस्स साधितः ॥ तावत्स-
ङ्ख्यान्समायोगानसाध्यानपि साधयेत् ॥ ७६ ॥ हीनांश्च ग्रहयोगेन तथा
ऋक्षोपपत्तितः ॥ पुरश्चर्य्यां पुनः कुर्य्यान्मन्त्रसन्दीप्तये पुनः ॥ ७७ ॥
ऋणी तु साधको ज्ञेयः साधकाङ्को यदाधिकः ॥ यावत्स्यादधिकस्तावत्सङ्ख्या
ङ्कानि यदा चरेत् ॥ ७८ ॥ पुरश्चरणसञ्ज्ञानि तदास्य समता भवेत् ॥ पुरश्चर्य्यां
पुनः कृत्वा तदा स्यात्कार्य्यसाधकः ॥ ७९ ॥ एकस्मिन्साधिते कार्य्ये
पुनर्याति स कुण्ठताम् ॥ तावज्जपं पुनः कृत्वा चैककार्य्यक्षमो भवेत् ॥ तत्त्व-

मत्र प्रकटितं सर्वतंत्रेषु गोपितम् ॥ ८० ॥ योधयोर्विजयार्थं तु प्रसङ्गान्मल्लमातृकाम् ॥ वक्ष्यामि तस्याश्चक्रे तु रचयेदेवमेव हि ॥८१॥ पञ्चपञ्चाग्निरामाग्निरसर्तूग्रमुखानि खम् ॥ भूश्चाथ पञ्च सल्लेख्यास्तदधः षण्ढवर्जिताः ॥ ८२ ॥ एकादशस्वराश्चान्त्यहीना लेख्याश्च तत्तले ॥ कचटाद्याँल्लिखेद्वर्णान् ङञणाक्षरवर्जितान् ॥ ८३ ॥ नामाक्षराङ्कयोगस्तु द्वयोर्योगावशेषितः ॥ तुल्यतायां द्वयोर्योगः कार्य्यश्चाष्टावशेषितः ॥ ८४ ॥ स्वैर्वेदर्तुशरागाग्निभूशेषेष्वग्रतो जयी ॥ समयोरुभयोरत्र मन्त्रं यन्त्रं विना कलिः ॥ ८५॥ चौरमात्राम्प्रवक्ष्यामि विज्ञेयाधानचौरयोः ॥ षड्वेदत्रीषुसप्ताब्धिनगद्विरसखंधराः ॥ ८६ ॥ ऊर्द्ध्वाङ्काः पूर्ववच्छेषमङ्कयोगोष्टशेषितः ॥ हीनस्य हानिराधिक्ये जयो गोप्यमिदं भराः ॥ ८७ ॥ राजमात्रां प्रवक्ष्यामि भूपयोर्विजयप्रदाम् ॥ वर्गाष्टकाङ्का वह्नीषुषड्वेदाङ्केन्दुवह्नयः ॥ ८८ ॥ द्वयोश्च भाजयेद्वर्णान्सप्ततष्टेऽधिके जयः ॥ तुल्यशेषे वर्गबलाद्वर्गैक्यप्राणवीर्य्यतः ॥ ८९ ॥ मातृकां कलहां वक्ष्ये कलहे विजयप्रदाम् ॥ वह्नीन्दुवेदयुग्मेन्दुरङ्काः पञ्च स्वराँल्लिखेत् ॥ ९० ॥ कादीनां तदधो नामवर्णसंख्या द्वयोस्तु या ॥ पञ्चभक्तेऽधिके शेषे जयो हीने पराजयः ॥ ९१ ॥ कामे रणे वा स्त्रीपुंसोर्जयदां मातृकां शृणु ॥ भूषट्पञ्चाग्निवेदाग्निद्विभूखेषु शराः कृताः ॥ ९२ ॥ त्रिद्विभूस्तदधो वर्णाँल्लिखेत्कादीन्पुरेरितान् ॥ संगृह्य नामवर्णाङ्कान्मात्राभेदक्रमोदितान् ॥ ९३ ॥ सप्ततष्टेऽधिके शेषे जयो हीने पराजयः ॥ समशेषे विवेकस्तु कुर्य्यात्प्राणाच्च वर्गतः ॥ ९४॥ सेनापतिजयार्थन्तु मात्रां शृण्वन्तु देवताः॥रसाग्निलोचनयुगा नागषड्गोऽब्धिवह्नयः॥९५॥खं भूश्च तदधो लेख्याः स्वरा अत्र पुरेरिताः॥आद्यास्तदङ्कयोगोत्र हीनेऽष्टाङ्केऽधिके जयः॥९६॥कादिहांताँल्लिखेद्वर्णान् ङञषण्ढविवर्जितान् ॥ रसाग्निवेदयुग्माङ्गषट्कृताग्नीन्दुशून्यभूः ॥९७॥ विलिख्याङ्कानधो दूतगदिनोरङ्कसम्मितिः ॥ तष्टाष्टभिश्चेदधिका गदिनो जीवितम्भवेत् ॥ ९८ ॥ साम्ये पूर्ववदित्युक्ता एताः षोडश मातृकाः ॥ विद्यादेतद् गुरुमुखान्नामकर्म्म समाचरेत् ॥ ९९ ॥ अन्नप्राशनसंस्कारः षष्ठः सर्वजनीनकः[1] ॥ स्वकल्पोक्तवि-

---

१ सर्वजनाय हितः ।

धानेन शूद्रादीनाममन्त्रकः ॥ १०० ॥ पितरस्तत्र संयुक्ता वाममार्गे तु भैरवाः ॥ अष्ट देवाश्च चक्रस्य पूजान्तेष्ववशेषितम् ॥ १०१ ॥ सतीर्थे सपलं दद्यान्मूलमन्त्रमुदीरयन् ॥ एवं कृतविधानस्य शुद्धिपत्तिर्न जायते ॥१०२॥ अथ सप्तमसंस्कारं चौडाख्यं शृणु पार्वति ॥ सर्वेषामेवमुद्दिष्टं बाल्यपातकनाशनम् ॥ १०३ ॥ बौद्धानां यवनानां च शिखात्र स्थाप्यते न च ॥ स्त्रीणामपि च कर्त्तव्यं सौभाग्यारोग्यवृद्धये ॥ १०४ ॥ वामे चडा तु कर्त्तव्या मन्त्रबीजसमाः कचाः ॥ तीर्थे क्षिप्त्वा खनेद् भूमौ विशेषो वामिनामिति ॥ ॥ १०५ ॥ अथाष्टमं तु संस्कारं मौञ्जीबन्धमहं ब्रुवे ॥ गुरोः समीपे नयनं तच्चोपनयनं स्मृतम् ॥ १०६ ॥ स्वकल्पोक्तविधानेन तत्कुर्य्याद्ब्रह्मवर्चसम् ॥ वामाचारैर्द्विजैः पूर्वं कर्तव्यं कुलदीक्षणम् ॥१०७॥ पश्चाद्दीक्षा तु सावित्र्या व्यत्यासात्पतितो भवेत् ॥ दीक्षा तु लघुदैवत्या प्राक्पश्चान्महतस्तथा ॥ ॥ १०८ ॥ बृहद्दैवतमन्त्रे तु सिद्धे क्षुद्राः स्वयं वशाः ॥ तेषां ग्रात्वा मन्त्रदीक्षा पुरश्चर्य्यां समारभेत्॥१०९॥ प्रयोगांश्चापि कुर्व्वीत न चेष्टस्य कदाचन ॥ सच्छिष्यं वा सुपुत्रं वा विनेष्टं दापयेन्न च ॥११०॥ लोभाद्भयाद्वा यो दद्यादन्यस्मै सिद्धमन्त्रकम् ॥ शिष्यस्य जायते सिद्धिर्गुरोः शापः प्रजायते ॥ ॥ १११ ॥ यस्या यस्या देवतायाः प्रसक्तिर्यत्रयत्र च ॥ तत्तन्मार्गे प्रसक्ता सा स्वविद्या राजवद्भवेत्॥११२॥तन्त्राण्यष्टोत्तरशतं मया प्रोक्तानि पार्वति ॥ येनयेन तु यत्पृष्टं तस्याधिक्यं तु वर्णितम् ॥११३॥निष्पक्षपातं वक्ष्यामि मेरुतन्त्रे यथार्थतः ॥ सर्वेभ्यो वैदिकं श्रेष्ठं ततश्च स्मार्तमुत्तमम्॥११४॥ततस्तन्त्रं तु तत्रापि संहिता अर्णवास्ततः॥यामलास्तत्संगमाच्च मन्त्रीशानी च ताण्डवम्॥ ॥ ११५ ॥ इन्द्रजालं कक्षपुटी बौद्धं जैनं च शाबरम् ॥ क्रमादपचितं ज्ञेयं यथायोग्येन मुख्यता ॥ ११६ ॥ नीचे ह्युपास्ये पातः स्यान्नीच उच्चात्पतेद्ध्रुवम् ॥ ज्ञानं दद्याच्च सर्वस्मै स्वाचारात्कर्म्म कुर्वते ॥ ११७ ॥ संस्कारं दशमं विद्यात्प्राजापत्यव्रताभिधम् ॥ स्वकल्पोक्तेन मार्गेण वैदिकस्तान्त्रिकः पुनः ॥ ११८ ॥ एतद्व्रतस्य संस्कारे गाणपत्यो मनुः स्मृतः ॥ वक्रतुण्डा-

दिका दक्षे उच्छिष्टायास्तु वामके ॥ ११९ ॥ संस्कारं दशमं सौम्यं व्रतं वैदिकमाचरेत् ॥ स्वकल्पोक्तेन मार्गेण तत्स्थाने तान्त्रिकः पुनः ॥ १२० ॥ गृह्णीयाद्भैरवं मन्त्रं बटुकाख्यस्य वामके ॥ कालभैरवभेदस्य यस्य कस्यापि दक्षिणे ॥ १२१ ॥ पुरश्चर्य्योपासकानां नाशको भैरवो यतः ॥ दरिद्रैः साधकैर्ग्राह्यः स्वर्णाकर्षणभैरवः ॥ १२२ ॥ एकादशं तु संस्कारमाग्नेयाख्यं व्रतं द्विजः ॥ कुर्य्याद्गृह्योक्तमार्गेण तस्मिन्स्थाने तु तान्त्रिकः ॥ १२३ ॥ गृह्णीयादंगदेवानां मन्त्रानादौ गुरोर्मुखात् ॥ पूजादिमन्त्रांस्तच्छिक्षां तद्द्रव्यनियमांस्तथा ॥ १२४ ॥ द्वादशं चापि संस्कारं वैश्वदेवव्रताभिधम् ॥ तस्मिन् स्थाने भवेद्दीक्षा स्वेष्टमन्त्रे तु तान्त्रिके ॥ १२५ ॥ त्रयोदशं तु संस्कारं गोदानाख्यं प्रकीर्तितम् ॥ तत्स्थाने तान्त्रिकः कुर्य्यात्सर्वपापविमोक्षणम् ॥ १२६ ॥ सत्स्थले तु समासीन आदर्शे वा घटोदकम् ॥ संस्थाप्याग्रे सत्यवाचा ततः सम्प्रार्थयेदिति ॥ १२७ ॥ पुरश्चरणकामोऽहं पापं क्षपितुमुद्यतः ॥ आपराह्णं जपं कुर्वे देवताः सन्तु साक्षिणः ॥ १२८ ॥ पृथिव्यप्तेजआकाशवायुसूर्येन्दुभानि च ॥ यावच्छरीरे पापानि तिष्ठन्ति मम देवताः ॥ १२९ ॥ तावच्च प्रतिबिम्बो मे मलिनो भातु पातकैः ॥ शान्ते पारदमध्ये च यथा सन्दृश्यतां तथा ॥ १३० ॥ शुद्धः सच्चिन्मयो भूत्वा चिन्तयन्पापपूरुषम् ॥ दक्षकुक्षिस्थितं कृष्णमङ्गुष्ठपरिमाणकम् ॥ १३१ ॥ विप्रहत्याशिरोयुक्तं कनकस्तेयबाहुकम् ॥ मदिरापानहृदयं गुरुतल्पकटीयुतम् ॥ १३२ ॥ पापसँय्योगपद्द्वन्द्वमुपपातकरोमकम् ॥ दद्रूचर्म्मधरं दुष्टमधोवक्त्रं सुदुस्सहम् ॥ १३३ ॥ एवं सञ्चिन्तयित्वाथ जपं कुर्वन्विचिन्तयेत् ॥ क्षीयमाणं पापनरं जपान्ते प्रेक्षयेत्पुनः ॥ १३४ ॥ आदर्शादि यदा स्वच्छं सर्वच्छाया प्रदृश्यते ॥ तदा तु निर्गतं पापं पुरश्चरणयोग्यता ॥ १३५ ॥ चतुर्दशस्तु संस्कारः समावर्त्तनमुच्यते ॥ तस्य स्थाने पुरश्चर्य्या कर्तव्या तान्त्रिकैर्जनैः ॥ १३६ ॥ आदौ सङ्क्षेपपूजां तु दिने कृत्वा तु कौलिकः ॥ आसायं तु जपं कुर्य्याच्चक्रपूजां तथा निशि ॥ ॥ १३७ ॥ शक्तिभिः सहितः पञ्चमकारादिसमन्वितः ॥ एवं सिद्धिमवाप्नोति नान्यथा जपकोटिभिः ॥ १३८ ॥ विवाहः पञ्चदशमः सर्वेषां संविधीयते ॥

विधवाया विवाहन्तु पिप्पलेनैव कारयेत् ॥ १३९ ॥ सर्वपापविनिर्मुक्ता सा तु विष्णुपदं व्रजेत् ॥ अब्राह्मणी च चेत्कुर्य्यादन्यमेकं तथा पतिम् ॥ १४० ॥ षोडशः पितृमेधाख्यः स्वगृह्योक्तेन वर्त्मना ॥ वैदिकस्तान्त्रिकस्तत्र देवस्थाने स्वदेवताम् ॥ १४१ ॥ स्थापयित्वाचरेच्छ्राद्धं ब्राह्मणा मृतपन्थिनः ॥ अथवा यजमानस्य मार्गस्थस्तदभावतः ॥ १४२ ॥ आमश्राद्धं प्रकुर्व्वीत वामी तु पलपैतृकम् ॥ शक्तियुक्ता द्विजाः कौलमार्गाश्चक्रार्चने मताः ॥ १४३ ॥ वर्ज्जयेत्तुलसीन्तत्र भृङ्गराजेन पूजयेत् ॥ पाकः कौलिकवस्तूनां पिण्डाश्च रुधिरोक्षिताः ॥ १४४ ॥ एतैः षोडशसंस्कारैः संस्कृतः साधकोत्तमः ॥ जीवन्मुक्तस्तदा ज्ञेयः सामर्थ्ये देवतासमः ॥ १४५ ॥ अथ षोडश वक्ष्येहं संस्कारान्मन्त्रसंस्थितान् ॥ शापैर्मन्त्रा विमुच्यन्ते यान्कृत्वा देवनिर्मितैः ॥ ॥ १४६ ॥ अथादौ सर्वमन्त्राणां जागृतिः प्रोच्यते मया ॥ गुरुणा सा प्रकर्तव्या शिष्यस्य सिद्धिहेतवे ॥ १४७ ॥ तारा[1]ग्निर्बीजं[2] विजपेद्यस्मिन्नाग्नेय-कस्स तु ॥ अन्यः सौम्यः स्वापकाल इडायामाग्निरूपिणः ॥ १४८ ॥ सौम्यस्य पिङ्गलायां स्यात्तयोरन्यत्र जागृतिः ॥ प्रबोधकाले सञ्जतो जागृतो जायते मनुः ॥ १४९ ॥ अथवा सम्पुटीकृत्य लान्तानाद्यान्साबिन्दुकान् ॥ पुनश्च सविसर्गास्तां-स्त्रिकालं केवलं जपेत् ॥ १५० ॥ एवं जतो यदीष्टश्च प्रबुद्धः शीघ्रसिद्धिदः ॥ अथ शाबरमन्त्राणां जागृतिं शृणु पार्वति ॥ १५१ ॥ कांस्यभाजनमानीय शुद्धं भस्मादिभिः कृतम् ॥ प्रजपेद्रविरात्रौ तु यामेयामे शताष्टकम् ॥ १५२ ॥ स्वादिर्या ताडयेद्यष्ट्या कांस्यपात्रं वदेदिति ॥ जागृतो भव मन्त्र त्वं भाषयाथ तुरीयके ॥ १५३ ॥ यामे दद्याद्बलिं कांस्ये मण्डजं भैरवस्य तु ॥ कुक्कुटं चान्यदेवेषु स्फोटयेन्नारिकेलकम् ॥ १५४ ॥ सुरया सुधया पूर्वदेवा देवा विमो-हिताः ॥ यदा तदा तु भगवान्प्रोवाच मधुसूदनः ॥ १५५ ॥ कः पूज्यो भवतां मध्ये कः श्रेष्ठस्तन्निगद्यताम् ॥ उन्मत्तास्तु तदा देवाः श्रेष्ठोहमिति चा-ब्रुवन् ॥ १५६ ॥ किञ्चित्स्मित्वा तु भगवान्मोहयन्नात्ममायया ॥ इत्य-वोचद्यस्य वाक्यं शापे चानुग्रहे क्षमम् ॥ १५७ ॥ स एव देवश्रेष्ठोत्र पूर्वो

१ प्रणवम् २ रम्—इदमग्निबीजम् ।

वाप्यपरोथ वा ॥ इति श्रुत्वा वचो विष्णोः शेपुश्चैव परस्परम् ॥ १५८ ॥ मन्त्ररूपाण्यतो देवि संस्कारैः शापमोक्षणम् ॥ विना तु शापमोक्षेण कः सिद्धिं प्राप्नुयाज्जनः ॥ १५९ ॥ श्रीदेव्युवाच ॥ शापः केन कथं दत्तः शप्ते जप्ते च किं फलम् ॥ निश्शापत्वं कथं तेषु सिद्धिः स्यादिति मे वद ॥ १६० ॥ ईश्वर उवाच ॥ आदिमध्यावसानेषु वायुर्यस्य व्यवस्थितः ॥ चतुराद्यश्चैकबीजो निधायैकत्र सङ्गमः ॥ १६१ ॥ केनापि च समाक्रान्तो जप्तो मन्त्रश्च येन वै ॥ कार्त्तिकेयस्य शापात्तु च्छिद्यन्तेऽस्य मनोरथाः ॥ ॥ १६२ ॥ आदौ मध्येऽवसाने वा भूबीजयुगलं भवेत् ॥ आदौ यद्वा द्विधा वह्नी त्रिधा मध्यं ततो द्विधा ॥ १६३ ॥ रुद्धौ शुक्रस्य शापेन भुक्तिमुक्तिविवर्जितौ ॥ जातौ मन्त्रौ वामदक्षमार्गयोरपि विश्रुतौ ॥ १६४ ॥ ह्रीं सौंप्रेंश्रींष्वेकतमं यत्र बीजं न दृश्यते ॥ हुङ्कारो वा स मन्त्रस्तु शक्तिहीनः कृतः सुरैः ॥ १६५ ॥ एतादृशश्च सञ्जतः सामर्थ्यं हन्ति मन्त्रिणः ॥ शक्तिहीनस्य वामस्य मरणन्नात्र संशयः ॥ १६६ ॥ नादौ ह्लीं न च मध्ये क्लीं क्रोऽन्ते वा न प्रदृश्यते ॥ असौ पराङ्मुखो मन्त्रो जातः सूर्यस्य शापतः ॥ ॥ १६७ ॥ पराङ्मुखं भजन्मन्त्रं देवता स्यात्पराङ्मुखी ॥ दैवात्कार्य्येपि संसिद्धिर्लोकः स्याच्च पराङ्मुखः ॥ १६८ ॥ आदावन्ते तथा मध्ये हं वा सं वा न दृश्यते ॥ बधिरास्ते कृता मन्त्रा देवाचार्येण शापिताः ॥ १६९ ॥ जप्ते तु बधिरे मन्त्रे विस्मृतिस्तस्य जायते ॥ जायते बधिरो नूनं महाकालेन भाषितम् ॥ १७० ॥ सूर्य्यबीजं हकारः स्याच्चन्द्रबीजं तु सः स्मृतः ॥ रेफोऽग्निबीजमुद्दिष्टमेतन्नेत्रत्रयं मम ॥ १७१ ॥ पञ्चाक्षरे यत्र मन्त्रे यत्रैकोपि च नास्ति चेत् ॥ मम शापान्नेत्रहीनो दुःखशोकामयप्रदः ॥ १७२॥ नादौ मध्ये न चान्ते वा ह्लौं वा हंस वाथ ह्रौं ॥ ऍं वा श्रूं वाथवा हूं वा नमो वा ह्रीं मनुः स तु ॥ १७३ ॥ शापेन कीलितो मन्त्रो देवराजेन पार्वति ॥ जप्तस्तु कीलितो मन्त्रो न सिद्धिमधिगच्छति ॥ १७४ ॥ मध्य एको रकारो वा फडान्ते लद्वयं यदि ॥ फड्द्वयं वा लत्रयं वा न

---

१ यँ इदं वायुबीजम् । २ लँइदं भूमिबीजम् ।

चेत्संस्तम्भितो मनुः ॥ १७५ ॥ शापेन नो भैरवस्य सिद्धिर्भवति शोभना ॥ कदापि नैव दुःखं च प्रायशो बहुलं भवेत् ॥ १७६ ॥ आदौ तु यस्य मन्त्रस्य क्रमात्सप्ताक्षराणि चेत् ॥ रेफेण वा यकारेण सँय्युक्तानि मनुस्स तु ॥ १७७ ॥ वाय्वग्निशापसंदग्धः साधकं परितापयेत् ॥ तस्मात्संस्कारयेद्देवि सिद्धये साधकोत्तमः ॥ १७८ ॥ द्वाभ्यां त्रिभिरथो षड्भिरष्टभिर्वा प्रदृश्यते ॥ यदक्षरैरन्तरितः फट्कारः स निगद्यते ॥ १७९ ॥ नारसिंहस्य शापेन त्रस्तः सन्त्रासयेत्सदा ॥ स्वमादौ साधको नैव सिद्धः सन्दृश्यते क्वचित् ॥ १८० ॥ ॐ वा हं वा सकारो वा नाभौ भीतो मनुः स तु ॥ ब्रह्मशापाद्धीनसिद्धिर्भवेदत्यन्तकष्टदः ॥ १८१ ॥ आदिमध्यावसानेषु मिलित्वा मश्चतुष्टयम् ॥ स मन्त्रो मलिनो मायाशापान्मालिन्यकारकः ॥ १८२ ॥ हुंचादौ मन्त्रमध्ये वा वान्ते फड्युगलम्भवेत् ॥ तिरस्कृतो रुद्रशापात्साध्यं कुर्य्यात्तिरस्कृतम् ॥ १८३ ॥ आदौ तारद्वयं चान्ते वषड्वात्र वरानने ॥ कुटुम्बकलहं कुर्य्याद्बालाशापेन भेदितः ॥ १८४ ॥ हकारेण सकारेण रहितस्त्र्यक्षरस्तु यः ॥ सुषुप्तः सिंहशापेन प्रोक्तोभीष्टफलापहः॥१८५॥ अष्टादशाक्षरो योत्र पञ्चफट्कारपूर्वकः ॥ चामुण्डाशापतो जातो मदोन्मत्तो न शोभनः ॥ १८६ ॥ मध्ये चेत्पञ्च फट्काराः कालिकाशापतः स तु ॥ मूर्च्छितो मूर्च्छितं कुर्य्याद्वामिनं तु विशेषतः ॥ १८७ ॥ एवं मन्त्रे च फट्काराः पञ्चान्ते स तु रम्भया ॥ हतवीर्य्यस्तु शापेन कृतः क्षीणत्वकारकः ॥ ॥ १८८ ॥ चत्वारो यत्र फट्कारा आदिमध्यावसानिकाः॥ अष्टादशाक्षरो हीनो हानिर्भैरवशापतः ॥१८९॥ एकोनविंशद्वर्णश्चेत्क्रींकोमोङ्कारसँय्युतः ॥ प्रध्वस्तः कामशापेन ध्वंसयेत्कामकारणात् ॥ १९० ॥ सप्तवर्णो मनुर्बालः कुमारोष्टाक्षरः स्मृतः ॥ षोडशार्णस्तु तरुणः प्रौढो व्योमाब्धिवर्णकः ॥ १९१ ॥ त्रिंशत्कलाः शतं वेदकाष्ठावर्णास्तु यत्र च ॥ सक्तद्धि एते कालेन शप्ता दुःखानि कुर्वते ॥ १९२ ॥ नवार्ण ओङ्कारयुतश्चामुण्डाशापतो मनुः ॥ निर्बीज इति संशप्तो नित्यं नैराश्यकारकः ॥ ॥ १९३ ॥ निस्त्रिंशः साधकं छिन्द्यान्निस्त्रिंशेन न संशयः ॥ अन्ते नमो



वा स्वाहा वा नास्ति वा यस्य मध्यमः ॥१९४॥ वषड्वौषट् हुम्फड्वा प्रोक्तो नैवास्त्यसौ मनुः ॥ सेवां कुर्वँल्लभेद्देशनाशं वर्षत्रयादितः ॥ १९५ ॥ आदिमध्यावसानेषु फट्कारा: सन्ति यस्य तु ॥ कौमार्य्यास्तु स शापेन सिद्धिहीनो न सिद्धिकृत् ॥ १९६ ॥ दशाक्षरस्तु यो मन्त्रः स गणेशस्य शापतः ॥ मन्दो जपस्तु मूर्खत्वं कुर्य्याज्जन्मनिजन्मनि ॥ १९७ ॥ आदौ व्यञ्जनसंय्योग एक एव स्वरो भवेत् ॥ तत्कूटं कूटतो हानिर्मातंग्याः शापतः स्मृता ॥ १९८ ॥ द्विवर्णः सत्त्वहीनः स्यादाश्विनेयस्य शापतः ॥ नाशयेत्साधकबलं राज्ञः सेनां विनाशयेत् ॥ १९९ ॥ चतुर्वर्णः केकरस्तु जातः सर्प्पारिशापतः ॥ जपित्वा केकरं मन्त्रं चक्षुषा नैव पश्यति ॥ ॥ २०० ॥ षडक्षरा बीजहीना जाता रावणशापतः ॥ तज्जपाद्वंशवृद्धिर्न चान्यथा स्त्रीसुखं नहि ॥ २०१ ॥ सार्धत्रिसप्तसूर्याणां धूमावत्याः स शापतः ॥ तज्जपे व्याकुलं चित्तं जायते साधकस्य तु ॥ २०२ ॥ विंशत्तथैकविंशच्च त्रिंशद्वर्णस्तु तारया ॥ शप्त आलिङ्गितेनायं जपात्सत्वरतो मृतिः ॥ २०३ ॥ द्वाविंशत्यक्षरो मन्त्रः सरस्वत्यास्तु शापतः ॥ मोहितः साधकं कुर्य्यात्पानादिव्यसनाकुलम् ॥२०४॥ मन्त्रो वराननेयस्तु चतुर्विंशतिवर्णकः ॥ क्षुधार्त्तो राजमातङ्ग्याः शापाद्दारिद्र्यकारकः ॥२०५॥ त्रयोविंशाक्षरो रुद्रवर्णः कौलिकशापतः ॥ मन्त्रो हृतस्तु तेनैव मन्दता जायते नृणाम् ॥ २०६ ॥ षड्विंशदेकोनत्रिंशात्रिंशत्षाड्विंशदक्षरः ॥ पूष्णः शापादंगहीनः कामनापूरको नहि ॥ २०७ ॥ अष्टाविंशदेकत्रिंशद्वर्णो नन्दीशशापतः ॥ अतिक्रूरः साध्यनाशं कृत्वा नश्येच्च साधकः ॥ २०८ ॥ अष्टत्रिंशाक्षरो मन्त्रो मातृकाणां च शापतः ॥ अतिक्रुद्धस्तज्जपेन स्वकृते स्वस्य संक्षयः ॥ २०९ ॥ चत्वारिंशत्समारभ्य त्रिषष्टियावदक्षरम् ॥ सव्रीडामातृकाशापात्सव्रीडास्तस्य साधकाः ॥ २१० ॥ पञ्चषष्ट्यक्षरा येस्युर्मन्त्रास्ते शान्तमानसाः ॥ कामशापेन तज्जापादुद्योगस्य फलं नहि ॥ धात्रीधृतिद्विधृत्यङ्काङ्कांकयुग्मद्विगोकराः॥शतत्रयं यत्र वर्णाः शापिताश्छिन्नमस्तया ॥ २११ ॥ यूयं भवन्तु निःस्नेहाः साधकानां भयावहाः ॥ निष्कामैर्या

जिभिर्जप्ता संसारस्नेहनाशनाः ॥ २१२ ॥ चतुश्शतान्यथारभ्य यावद्वर्ण-सहस्रकम् ॥ अतिवृद्धा यज्ञशापात्पौष्टिकादिषु वर्जिताः ॥ २१३ ॥ सहस्रार्णाधिका मन्त्रा दण्डनेतुस्तु शापतः ॥ दण्डकाख्याः पीडिताश्च तज्जपात्कष्टमाप्नुयात् ॥ २१४ ॥ द्विसहस्राधिका मन्त्रा भार्गवस्य तु शापतः ॥ खण्डीकृतास्सतधा ते सिद्धिखण्डकराः स्मृताः ॥ २१५ ॥ अन्यच्छृण्वन्तु भो देवा मुनीनां जपतां यदा ॥ सिद्धिर्न जाता तु तदा दत्तः शापः सुदारुणः ॥२१६॥ आश्वासनं देवतानां जातं सिद्धेरकारणात् ॥ उपदेशे गुरुः कुर्य्यात्तस्मात्तन्मन्त्रशोधनम् ॥ २१७ ॥ तत्प्रकारं प्रवक्ष्यामि शृण्वन्तु सकलाः सुराः ॥ गुरुः सिद्धासनस्थश्च[1] गुदमेढ्रान्तरं दृढम् ॥ २१८ ॥ वामेन पार्ष्णिनापीडय तस्योपरि तु विन्यसेत् ॥ पादं तु दक्षिणं गुल्फग्रन्थ्योरन्योन्यमर्दनम् ॥ २१९ ॥ यथा स्यात्तत्प्रकर्त्तव्यं ततो दक्षिणपार्ष्णिना ॥ लिंगमूलं विनिष्पीडय स्थिरकाय उपाविशेत् ॥ २२० ॥ गुदमाकुञ्च्य पवनमपानाख्यं तदा गुरुः ॥ उत्थापयेत्ततः प्राणान्वायुं सम्यङ्निरोधयन् ॥ २२१ ॥ अपानप्राणयोः कुर्य्यात्संहतिं चैकदृङ्मनाः ॥ मूलाधारे चित्स्वरूपे कुण्डल्यां परमात्मनि ॥२२२॥ जातदोषं स्वस्य मन्त्रं चिन्तयेत्तत्र सद्गुरुः ॥ तस्य मन्त्रस्याक्षराणि क्रमादेकैकशस्ततः ॥ २२३ ॥ सुषुम्णायास्तु मार्गेण मूलाधारे प्रवेशयेत् ॥ स्वाधिष्ठाने ततश्चक्रे मणिपूरे त्वनाहते ॥ २२४ ॥ विशुद्ध आज्ञाचक्रे च भित्त्वाभित्त्वा प्रवेशयेत्॥ एवं नीत्वा ब्रह्मरन्ध्रं सोमस्य मण्डलामृतात्॥ ॥ २२५ ॥ संसिक्तान्मन्त्रवर्णांस्तु सुधीः सम्यग्विभावयेत् ॥ ततस्तन्मन्त्रमृष्यादिन्यासपूर्वं जपेत्ततः ॥ २२६ ॥ अष्टोत्तरसहस्रं तु तेन शुद्धो भवेन्मनुः ॥ उक्तशापाद्विनिर्मुक्तं पश्चादुपदिशेच्च तम् ॥ २२७ ॥ आशीर्वादफलं स्तोकं पूर्वपापादिजं फलम् ॥ वाचिकानां तु शापानां नाशायर्थमथोच्यते ॥२२८॥ श्रीपर्ण्यां वा चन्दनस्य पीठे चूतादिकस्य वा ॥ कस्तूरीकुंकुमाद्यैश्च विलि-

---

१ तल्लक्षणं शिवसंहितायाम् । योनिं सम्पीडय यत्नेन पादमूलेन साधकः ॥ मेढ्रोपरि पादमूलं विन्यसेद्योगवित्सदा ॥ ऊर्ध्वं निरीक्ष्य भ्रूमध्यं निश्चलः सँय्यतेन्द्रियः ॥ विशेषोऽवक्रकायश्च रहस्युद्वेगवर्जितः ॥ एतत्सिद्धासनं ज्ञेयं सिद्धानां सिद्धिदायकम् ॥

खेत्पाश्वभौतिकम् ॥ २२९ ॥ चक्रमावाहयेत्तत्र मातृकाख्यां सरस्वतीम् ॥ यथोक्तविधिना पूजां कृत्वा चाष्टोत्तरं शतम् ॥ २३० ॥ जपित्वा मातृकां तस्या मध्यात्स्वाभीष्टमन्त्रकम् ॥ स्वरव्यञ्जनबिन्दूंश्च सर्गयोग्याक्षराणि च ॥ २३१ ॥ पृथक्पृथगथोद्धृत्य चैकीकृत्य गुरुक्तितः ॥ गृहीतं जनयेन्मन्त्रं प्रोक्तं सञ्जननं त्विदम् ॥२३२॥ आद्यन्ते प्रणवं कृत्वा प्रणवान्तारितं जपेत् ॥ अष्टोत्तरशतं मन्त्रवर्णानेतत्तु जीवनम् ॥ २३३ ॥ रोचनाकुङ्कुमाभ्यां तु भूर्ज्जपत्रे लिखेन्मनुम् ॥ प्रत्यक्षरं शतावृत्या ताडयेच्चन्दनाम्भसा ॥ २३४ ॥ समुच्चरन्वायुबीजमेतत्ताडनमुच्यते ॥ कुण्ठिताः शाबरा मन्त्रास्ताडिताः सिद्धिकारकाः ॥ २३५ ॥ पूर्वोक्तपीठे सँल्लिख्य तन्मन्त्राक्षरसङ्ख्यया ॥ आदाय करवीरस्य पुष्पाण्यथ समुच्चरेत् ॥ २३६ ॥ प्रत्यक्षरं च तैः पुष्पैः शतवारं हनेदिति ॥ उच्चरन्वह्निबीजं च बोधनं त्वेतदुच्यते ॥ २३७ ॥ प्राग्वत्पीठे च तैर्द्रव्यैः पद्ममष्टदलं लिखेत् ॥ तत्कर्णिकायां मालत्या लिखेत्कलिकयैकया ॥ २३८ ॥ एकैकार्णन्तु मन्त्रस्य तन्मन्त्राक्षरसङ्ख्यया ॥ बोधिद्रुपल्लवांश्चैव गृहीत्वा मन्त्रमुच्चरेत् ॥ २३९ ॥ अभिषिञ्चाम्यमुं मन्त्रं नम इत्यभिषेचयेत् ॥ नानासुगन्धिनोपेतपल्लवैर्यावदक्षरम् ॥ २४० ॥ एकमष्टोत्तरशत माभिषेकस्त्वयं मतः ॥ अभिषेको मन्त्रशुद्धिं कुर्यान्नृणां यथा जलम् ॥२४१॥ ज्योतिर्मन्त्रश्चिन्तनीयो मूलाधारोऽग्निमण्डले ॥ संस्कर्तव्यं मनोस्तस्य दाग्ध्यमेवं विभावयेत् ॥२४२॥ आननाख्यः साहजिक आगन्तुः कार्म्मणः स्मृतः ॥ योगाख्यो मायिकः प्रोक्तस्तन्मन्त्रे तु मलत्रयम् ॥ २४३ ॥ ज्योतिर्मन्त्रेण निर्दग्धमेकमेकं विचिन्तयेत् ॥ एवं तु विमलो जातः स्वमन्त्र इति चिन्तयेत् ॥ २४४ ॥ ज्योतिर्मन्त्रस्तु वेदादिर्हौमिति द्व्यक्षरो मतः ॥ विमलीकरणं त्वेतत्प्रयोगं चापि कारयेत् ॥ २४५ ॥ प्राग्वत्पीठे कुंकुमादिद्रव्यैर्मन्त्रं विलेखयेत् ॥ ताम्रादिपात्रे कर्पूरवासितेन जलेन च ॥ २४६ ॥ शुद्धेनापूर्य्य विलिखेन्मन्त्रेणाष्टोत्तरं शतम् ॥ अभिमन्त्र्य जलं तेन मन्त्रेण कुशबिन्दुभिः ॥ २४७ ॥ प्रत्यक्षरं प्रोक्षयेत्त्रिरेतदाप्यायनं स्मृतम् ॥ पुरश्चर्य्याक्लेशि-

१ ॐकारो वेदादिरुच्यते ।

तानां समावर्त्तनवत्त्विदम् ॥ २४८ ॥ कस्तूर्य्याद्यैस्ताम्रपात्रे मध्ये मन्त्रं विलेखयेत् ॥ पात्रान्तरे च कर्पूरगुटिकावासितं जलम् ॥ २४९ ॥ गृहीत्वा चार्घ्यपात्रेण पठन्मन्त्रमिमं मनुम् ॥ तर्प्पयामि नमोन्तेन तर्प्पयेदिति तर्प्पणम् ॥ २५० ॥ ॐह्रींश्रींपूर्वकं मन्त्रं जपेदष्टोत्तरं शतम् ॥ जपेदेतद्दीपनं स्यात्सर्वमन्त्रेष्वपीष्यते ॥ २५१ ॥ जप्यमानस्य मन्त्रस्य गोपनं स्वप्रकाशनम् ॥ संस्कारा दश सम्प्रोक्ताः सर्वतन्त्रेषु गोपिताः ॥ २५२ ॥ एवमेकादश प्रोक्ताः संस्कारा दश पञ्च च ॥ प्रतिमन्त्रं वक्ष्यमाणा जपो होमश्च तर्प्पणम् ॥ २५३ ॥ मार्ज्जनं भोजनं चापि द्विजानामिति षोडश ॥ प्रोक्ता मन्त्रस्य संस्काराः किमन्यच्छ्रोतुमिच्छसि ॥ २५४ ॥

इति श्रीमहामायामहाकालानुमते मेरुतन्त्रे शिवप्रणीते
संस्कारप्रकाशो द्वितीयः ॥ २ ॥

---

श्रीदेव्युवाच ॥ वाममार्गे कथं दीक्षा दक्षिणे च कथं भवेत् ॥ किं तत्रावश्यकं कर्म्म चेति मे निर्णयं वद ॥ १ ॥ ईश्वर उवाच ॥ शृणु देवि प्रवक्ष्यामि सर्वतन्त्रेषु गोपितम् ॥ दीक्षाविधिं पञ्चविधं तत्राज्ञामुत्तमोत्तमम् ॥ २ ॥ उत्तमं महदाद्यानां सामान्यानां तु मध्यमम् ॥ ब्राह्मणानामल्पमुक्तं यतीनामपि चाल्पकम् ॥ ३ ॥ तस्मादादौ प्रवक्ष्यामि तुभ्यं यच्चोत्तमोत्तमम् ॥ यस्मिञ्ज्ञाते चोत्तमादिभेदानां विषयो भवेत् ॥ ४ ॥ तत्रादौ मण्डपं कुर्य्यादुत्तमोत्तमकर्म्मणि ॥ स्थलादर्काङ्गुलोच्छ्रायं मण्डपस्थलमीरितम् ॥ ५ ॥ भूमिस्तु खननाच्छोध्या स्वेष्टकुण्डादितस्त्वधः ॥ अस्थिकीटतुषाङ्गारमलहीनं शुभावहम् ॥ ६ ॥ अन्यथा तां मृदं त्यक्त्वा पूरयेच्छुभया मृदा ॥ ग्रामाद्बहिःस्थया तत्र विप्राद्यैश्च स्ववर्णया ॥ ७ ॥ तत्र तां सुसमां कृत्वा विस्तीर्णे भाजने जलम् ॥ अष्टाशेन सुरेख्या तत्पूरयित्वा प्रचालयेत् ॥ ८ ॥ तत्पात्रं यत्र लेख्यायां जलमूर्द्ध्वं समागतम् ॥ तत्पूरयेद्वा यत्रोनं निम्नयेत्तत्स्थलं बुधः ॥ ९ ॥ एवं समीकृतायां तु भूमौ दिक्साधनं चरेत् ॥ सूत्रकर्कटकीलानि गृहीत्वा वै निशान्तरे ॥ १० ॥ आद्यन्तरन्ध्रसम्युक्ता नलिका ध्रुववेधिका ॥ याम्योत्तराशा तन्मध्ये केन्द्राद्वृत्तं समालिखेत् ॥ ११ ॥ लेखां ततो वृत्तमध्ये

तेन कर्कटकेन तु ।। धनुष्कुर्यात्ततश्चापं धनुष्कुर्य्यात्ततः पुनः ।। १२ ।। एवं चापानि षट् तत्र पद्मं भवति षड्दलम् ॥ सौम्ये याम्ये त्रयं कृत्वा दलानां मध्यदेशतः ॥ १३ ॥ दीर्घा रेखा कृता सा तु भवेत्पूर्वापरा त्रिधा ॥ याम्यपश्चिमयोस्सौम्यपूर्वयोरुपारिस्थयोः ॥१४॥ चापयोरर्द्धगं सूत्रमीशानी राक्षसी भवेत् ॥ अन्ययोश्चापयोरेवमाग्नेयी वायवी भवेत् ॥ १५ ॥ विदिक्संस्थानि सूत्राणि समान्येव हि वृत्ततः ॥ यथेष्टं बहिरानीय निखनेत्तत्र कीलकान् ॥ १६ ॥ बद्धं चतुर्णां कीलानां मस्तके दृढसूत्रकम् ॥ समकर्णं दिगन्तं तच्छुद्धं स्याच्चतुरस्रकम् ॥ १७ ॥ गणेशं पूजयित्वादौ पुण्याहं वाचयेत्सुधीः ॥ ततः पञ्चाननादैश्च मण्डपं रचयेच्छुभम् ॥ १८ ॥ मण्डपं कुलदीक्षायां कुर्य्याद्विंशतिहस्तकम् ॥ मद्यमांसपुरन्ध्रीणां समावेशो यथा भवेत् ॥ १९ ॥ मण्डपोऽष्टादशकरः सिद्धान्ते वाममार्गके ॥ अल्पत्वात्तत्र कुण्डानामधिकेपि सपञ्चके ॥ २० ॥ वैदिके बहुसामग्र्यां नवकुण्डे तु षोडश ॥ कुण्डाल्पतायां सामग्र्यामल्पायां वेदहस्तकः ॥ २१ ॥ दक्षिणे बहुसामग्र्यां सूर्य्यहस्तस्तु मण्डपः ॥ अल्पायां दशहस्तः स्यान्नवहस्तः सदा विशाम् ॥ २२ ॥ शूद्राणां सप्तहस्तस्स्यात्सङ्कराणां च पञ्च च ॥ प्रोक्तं मानं मण्डपानां सर्वतन्त्रेषु गोपितम् ॥ ॥२३॥ प्रोक्ता नानाविधा हस्तास्तन्निर्णयमथो शृणु ॥ यस्मिन्देशे च काले च समुत्पन्ना यथा यवाः ॥२४॥ तेषामष्टोदराणां स्यादङ्गुलं तद्द्विजन्मनाम्॥ सप्तोदरैस्तु शूद्राणां सङ्करादौ तथा रसैः॥ २५॥ अवैदिकस्य विप्रादेरेतत्सङ्ख्यार्द्धशालिभिः ॥ यत्र कर्ता स्वयं तत्र मानमेतदतोन्यथा॥ २६॥ आचार्य्यदक्षिणकरे मध्यमाङ्गुलिमध्यगम् ॥ पर्वणोरन्तरन्दीर्घमात्राङ्गुलमुदाहृतम् ॥ २७ ॥ उच्छ्रायः प्रतिमायाश्च प्रासादादेश्च निर्मितः ॥ वेदिकापीठशिबिकारथाद्येतत्प्रमाणतः ॥२८॥ विनाङ्गुष्ठेन शेषाभिर्मुष्टिरङ्गुलिभिः कृतः ॥ चतुर्द्धा विभजेदेको भागो मुष्ट्यङ्गुलं तु तत् ॥ २९ ॥ होमाङ्गानि स्रुवादीनि कुण्डस्थण्डिलवेदिकाः ॥ यज्ञोपवीतमुञ्जादि कुर्य्यान्मुष्ट्यङ्गुलेन तु ॥ ३० ॥ यं कश्चित्पौरुषायामं विभज्य दशधा पुनः ॥ एकं द्वादशभागन्तु कृत्वा तेष्वे-

कमङ्गुलम् ॥ ३१ ॥ देहलब्धाङ्गुलं नाम जानीयात्तस्य तत्पुनः ॥ एभि-
श्चतुर्विंशतिभिर्हस्तः स्यादङ्गुलैः पुनः ॥३२॥ अनेन प्रतिमाङ्गानां मान-
मुन्मानमेव च ॥ नराणां चापि नारीणां कुर्य्याद्गोप्यं प्रकाशितम् ॥ ३३ ॥
चतुर्दशकरं कोटिहोमे सम्पत्तिसंयुते ॥ अन्यथा द्वादशकरं लक्षहोमेषु
दिक्करम् ॥ ३४ ॥ मण्डपं नवधा कृत्वा मध्ये भागेऽस्य वेदिका ॥
स्तम्भास्तु वेदिकाकोणे मण्डपार्धोच्छ्रिता बहिः ॥ ३५ ॥ पञ्चमांशं न्यसेद्
भूमौ पुष्टताऽऽशांशसूत्रतः ॥ मस्तके कलशाकारं तद्दशांशेन कारयेत् ॥
॥ ३६ ॥ स्वायामोच्चा भवेद्वेदी नवकोष्ठोत्थसन्धिषु ॥ मण्डपस्य तृतीयांशदी-
र्घान्स्तम्भान्सुविन्यसेत् ॥ ३७ ॥ द्वादशैवं तु पञ्चांशभूमौ कूटं दशांशतः ॥
मध्यस्तम्भस्थितं कूटं मृदङ्गाभं प्रकल्पयेत् ॥ ३८ ॥ बाह्यस्तम्भार्धतो देया
वलयो द्वादशैव हि ॥ दक्षदीक्षाविधौ पद्मनिभं कूटं तु कारयेत् ॥ ३९ ॥
त्रिधारं वामदीक्षायां शङ्खाभं वैष्णवे मुखे ॥ चतुरस्रा चतुष्कोणा वेदी सर्व-
फलप्रदा ॥ ४० ॥ तथाङ्गादिप्रतिष्ठायां पद्मिनी पद्मसन्निभा ॥ राज्ञां
स्यात्सर्वतोभद्रा चतुर्भद्राभिषेचने ॥ ४१ ॥ विवाहे श्रीधरा वेदी विंशत्य-
स्रसमन्विता ॥ वाममार्गेण दीक्षायां गुप्ता त्र्यस्रा तु वेदिका ॥ ४२ ॥
स्तम्भानामुपरि स्थाप्यान्यव्रणानि सर्जूंषि च ॥ एकजातीनि पत्राणि बद्ध्वा
स्तम्भगले न्यसेत् ॥ ४३ ॥ नारिकेलदलैर्वंशैश्छादयेत्तत्समन्ततः ॥
झञ्झामारुतवृष्ट्यादिभयं न स्याद्यथा तथा ॥ ४४ ॥ पूर्वोक्तसंसाधितदिक्षु
कुर्य्याद्द्वाराणि चत्वारि तु मण्डपस्य ॥ पञ्चांशमाना खलु देहली स्याद्द्वि-
धोच्छ्रिते तत्र कपाटशाखे ॥ ४५ ॥ वाममार्गे द्वारमिदं दक्षिणे श्रेष्ठमण्डपे ॥
कुर्य्याद्देहलिकां रम्यां साष्टाङ्गुलकरद्वयाम् ॥ ४६ ॥ मध्यमे मण्डपे कुर्य्या-
त्सार्द्धाङ्गुलकरद्वयम् ॥ ४७ ॥ हीने करद्वयं तस्य चोच्चता द्विगुणा मता ॥
पूर्वद्वाराद्बहिर्हस्तमात्रं त्यक्त्वा तु वेश्मतः ॥ ४८ ॥ श्रेष्ठे मध्ये कनिष्ठे तु सप्त-
षट्पञ्चहस्तकम् ॥ उच्छ्रितं फलकं कुर्य्याद्विस्तृतं तद्गुणाङ्गुलम् ॥ ४९ ॥
तथा पञ्चाङ्गुलं स्थूलं विषमं चतुरस्रकम् ॥ वितस्त्या चोन्नतशिखं द्वारस्यो-
भयपार्श्वयोः ॥ ५० ॥ स्थापयेत्फलकौ द्वौ तु श्रेष्ठे मध्ये कनिष्ठिके ॥

मण्डपे तौ दीर्घतायां क्रमात्सार्द्धकरद्वयम् ।। ५१ ।। सपादद्वितयं युग्महस्तं पश्चाङ्कं भुवि ॥ निखनेदग्निमीडेति गायत्र्या पार्श्वयोर्द्वयोः ॥ ५२ ॥ तत्स-जातीयकाष्ठेन तावद्विस्तारगर्भकम् ।। चतुरस्रं तु विषमं द्वयोरुपरि कीलयेत् ५३ ॥ दर्भमालाञ्च बध्नीयात्पूर्वद्वारे विधिस्त्वयम् ॥ एवं तु दक्षिणे द्वारे तद्द्वारं प्लक्षकाष्ठ-जम् ॥ ५४ ॥ इषेत्त्वेति न्यसेन्मालां बन्धयेत्पूर्ववत्ततः ॥ औदुम्बरमयं कु-र्यात्पश्चिमद्वारतस्त्विदम् ॥ ५५ ॥ अग्न आयाहि मन्त्रेण प्लक्षजं वैदिके मखे ।। प्राग्वदेवं प्रकुर्वीत वटवृक्षमयं तथा ।। ५६ ॥ शन्नो देवीति मन्त्रेण सौम्यादिग्द्वारतो न्यसेत् ।। तेषामुपरि तिर्य्यक्स्थकाष्ठानां मध्यतो बिलम् ॥ ५७ ॥ कृत्वा तोरणजातीयकाष्ठेन रचयेच्छुभम् ॥ श्रेष्ठमध्यजघन्येषु शैवयागे त्रिशूलकम् ॥ ५८ ॥ विश्वेशाङ्गाङ्गुलं दीर्घं तच्चतुर्थांशविस्तृतम् ॥ वैष्णवे द्वादशांशेन शङ्खचक्रगदाम्बुजम् ।। ५९ ॥ प्रागादिक्रमयोगेन न्यसेत्सौरोपि वैष्णवः ।। ऋजु वै मध्यमं शृङ्गं किञ्चिद्वक्रन्तु पार्श्वयोः ॥ ६० ॥ एवं शूलो गणपतिः शिवायाः शिववन्मताः ॥ ततस्तु मण्डप-स्याग्रे भूम्यूर्द्ध्वं दशहस्तकः ॥६१॥ भूमौ करद्वये वंशः स्वच्छवस्त्रावगुण्ठितः ॥ विस्तृतश्चैकहस्तेन दीर्घः पञ्चकरैर्ध्वजः ॥६२॥ मन्त्रदेवं लिखेत्तत्र सायुधञ्च सवाहनम् ॥ घण्टाचामरसंयुक्तं देवतावर्णवर्णकम् ॥६३॥ स्थापयित्वा ध्वजं पश्चाद्दशदिक्षु प्रकल्पयेत् ॥ दिगीशानां पताकाश्च ध्वजस्यार्धप्रमाणतः ॥६४॥ तत्र वेदोक्तमन्त्रेण तत्तद्वर्णाश्च तद्दिशि ॥ त्रातारमिंद्रमिति च पीतवर्णा हरेर्दिशि ॥६५॥ आग्नेय्यां पिङ्गला त्वन्नोअग्नेर्वरुणमन्त्रतः ॥ सुगन्नः पन्थामनुना कृष्णवर्णा यमे स्मृता ॥६६॥ असुन्वन्तेतिमनुना नैर्ऋत्यां धूम्रवर्णिका ॥ तत्त्वायामि ब्रह्मणेति वारुण्यां सितवर्णिका ॥६७॥ आनोनियुद्भिरिति च वायव्यां हरिता भवेत् ॥ वयं सोमव्रतइति सौम्यायां चन्द्रवर्णिका ॥ ६८ ॥ तमी-शानमितीशान्यामतिश्वेता पताकिका ॥ ईशानपूर्वयोर्मध्ये शेषं रक्तपता-किनम् ॥ ६९ ॥ तोयनैर्ऋत्ययोर्मध्ये विधिं रक्तपताकिनम् ॥ वाममार्गे वेदमन्त्रो वज्रपातसमस्स्मृतः ॥ ७० ॥ ब्राह्मणानां वाममार्गो नरकायैव जायते ॥ मन्त्राभावे नाममन्त्रान्प्रणवाद्यान्हृदन्तकान् ॥ ७१ ॥

पठेद्दक्षिणमार्गे तु वामे प्रणववर्ज्जितान् ॥ मण्डपोपरि बध्नीयादतिश्वेतं वितानकम् ॥ ७२ ॥ अलंकुर्यात्पुष्पमालादिभिरेवं तु वेष्टयेत् ॥ आम्राश्वत्थदलोत्पन्नयुक्तया दीर्घमालया ॥७३॥ स्तम्भान्दुकूलैस्संवेष्ट्य मध्ये कुर्य्याच्च वेदिकाम् ॥ इष्टिकाभिरपक्वाभिर्हस्तविस्तृतपिण्डिकाम् ॥ ७४॥ मण्डपायामरुद्रांशनवसप्तेषुरामकैः ॥ अंशैः समुन्नतां वापि तारतम्यं विलोक्य च ॥७५॥ सामग्र्यादेः समावेशो यथा स्यादिति मण्डपः ॥ अयुताहुतिहोमस्तु विधेयः स्थण्डिलोपरि ॥ ७६ ॥ एकहस्तमितं कुण्डं दशलक्षावधि स्मृतम् ॥ लक्षाणां दशकेनैकं हस्तंहस्तं विवर्द्धयेत् ॥ ७७ ॥ दशहस्तकोटिहोमे वेदिकानामितीरितम् ॥ मद्यमांसादिहोमस्तु कुण्डएव विधीयते ॥७८॥ पञ्चाशत्प्रमिते होमे प्रकोष्ठं कृतमुष्टिकम् ॥ कुण्डस्य मानं भवति शतेऽरत्निसमं भवेत् ॥ ७९ ॥ सहस्रे हस्तमात्रं स्याद्विहस्तमयुते मतम् ॥ चतुर्हस्तमितं लक्षे षट्करं दशलक्षके ॥८०॥ कोटिहोमे चाष्टहस्तं कुण्डं वामे विधीयते ॥ एककुण्डविधाने तु चतुरस्रं विधीयते ॥ ८१ ॥ ब्राह्मणानां विशेषेण स्तम्भने चापि पूर्वगम् ॥ नवकुण्डविधाने तु वह्निभागे भगाकृति ॥ ८२ ॥ भोगार्थं चापि पुत्रार्थं वामिनां चतुरस्रवत् ॥ अर्धचन्द्रनिभं याम्ये वैश्यानां सर्वकर्म्माणि ॥ ८३ ॥ अन्येषां मारणे प्रोक्तं चतुष्कुण्डेष्वपीष्यते॥ त्रिकोणकुण्डं नैर्ऋत्ये रिपुघातकरं स्मृतम् ॥ ८४ ॥ विद्वेषकारकं चैतच्छद्राणाञ्च विशिष्यते ॥ वृत्तं मुख्यं क्षत्रियाणां सर्वेषां शाक्तकर्म्माणि ॥ ८५ ॥ पश्चिमायां तु तत्कार्य्यं बौद्धादीनां च सिद्धिदम् ॥ षट्कोणमुच्चाट्यति तच्छेदेषु च विशिष्यते ॥ ८६ ॥ वायव्यां कारयेत्तच्च सङ्कराणां विशिष्यते ॥ उदीच्यां पौष्टिके कुण्डं वृत्तिदं तुष्टिदं तथा ॥ ८७ ॥ सर्वप्रयोगेष्वनया परप्रीतिकरं स्मृतम् ॥ अष्टकोणं मुक्तिकरमैशान्यां तद्विधीयते ॥ ८८ ॥ कारागृहात्तथा रोगाच्चिन्तादेर्मोक्षमाप्नुयात् ॥ अष्टकुण्डीविधाने तु क्रमोऽयं नवकुण्डके ॥ ॥ ८९ ॥ नवमं चतुरस्रं स्यात्पूर्वेशानदिगन्तरे ॥ विधाने पञ्च कुण्डीनामीशाने पञ्चमं भवेत् ॥ ९० ॥ समकुण्डविधाने तु न खातो वेदिके बहिः ॥ अन्यदेकं पञ्चकोणमभिचारविनाशनम् ॥ ९१ ॥ तथान्यत्सप्तकोणञ्च कुण्डं

भूतनिकर्त्तनम् ॥ अथादौ चतुरस्रस्य कुण्डस्य विधिरुच्यते ॥ ९२ ॥ नाभियोनिसमायुक्तं श्रेष्ठं कुण्डं त्रिमेखलम् ॥ द्विमेखलं तु शूद्राणां संकराणां कुमेखलम् ॥ ९३ ॥ यावान्कुण्डस्य विस्तारः खननं तावदेव हि ॥ यावत्कुण्डमिहेष्टं स्यात्तावद्दिक्साधने कृते ॥९४॥ चतुरस्रं समं कुर्य्यात्समकर्णश्च शिल्पवित् ॥ एकहस्तस्य यत्कर्णो भुजा तस्य करद्वयी ॥९५॥ द्विहस्तस्य तु कर्णस्य त्रिहस्ता भुजसम्मितिः ॥ चतुर्हस्तादिकेप्येवं कुण्डः सर्वत्र भूसमः ॥९६॥ जिनभागसमास्तस्य बहिः कार्य्यास्तु मेखलाः॥द्वादशाङ्गुलविस्तारा चोत्सेधा चतुरङ्गुला ॥ ९७ ॥ तदूर्ध्वमपरादीर्घाष्टांगुलाष्टाङ्गुलोच्चका ॥ चतुर्भिरङ्गुलैर्दीर्घा तावदुच्चा तदर्धतः ॥९८॥ दैर्घ्यात्सूर्याङ्गुला योनिस्त्र्यंशोना विस्तरेण तु ॥ एकाङ्गुलोच्छ्रिता सा तु प्रविष्टाभ्यन्तरे तथा ॥९९॥ कुम्भद्वयसमायुक्ता चाश्वत्थदलवन्मता ॥ अङ्गुष्ठमेखलायुक्ता मध्ये बाह्ये धृतिः क्षमा ॥ १०० ॥ योन्यास्तु पश्चिमे भागे मेखलात्रितयाद्बहिः ॥ चतुरस्रं भवेत्पीठं कुण्डमष्टांशविस्तृतम् ॥ १०१ ॥ तावद्दीर्घं तथोच्चं च नालं तन्मध्यतो भवेत् ॥ योनिमध्ये तु तद्वृत्तं कुण्डषष्ठांशमानतः ॥१०२॥ प्रागग्नियाम्यकुण्डानां प्रोक्ता योनिरुदङ्मुखी॥ शेषा पूर्वमुखा योनिः कुण्डयोनिश्च वर्ज्जयेत् ॥ १०३ ॥ कुण्डमध्यस्थकेन्द्रात्तु कुर्य्यात्कर्कटकेन तु ॥ प्रसारितेन व्यासार्कभागतुल्येन तत्परम् ॥ १०४ ॥ षष्ठांशेन तु वृत्तं स्यात्पूर्ववृत्तं तु कार्णिका ॥ कार्णिकाग्रे बाह्यवृत्ताभ्यन्तरेऽष्टदलानि तु ॥१०५॥ एवं षडङ्गुलोच्चा स्यान्नाभिर्वेदास्रमीरितम् ॥ इष्टस्य चतुरस्रस्य जिनांशो भाग उच्यते ॥ १०६ ॥ सपादैः पञ्चभिर्भागैर्मध्यसूत्रं विवर्धयेत् ॥ प्राच्यामथ प्रकुर्य्याच्च चतुर्धा चतुरस्रकम् ॥ १०७ ॥ मध्यतो भ्रामयेत्कर्कटकं पश्चिमसंस्थयोः ॥ अर्धचापाकृतिं रुद्रबहिर्दिक्षु तदग्रतः वह्न्यन्तं पातयेत्सूत्रं द्वयोरपि तदा भवेत् ॥ १०८ ॥ अश्वत्थपत्रसंकाशं योनिकुंडमुदङ्मुखे ॥ प्राग्मानाश्चात्र बोद्धव्या योनिरूपाः सुमेखलाः ॥ चतुरस्रीकृतं क्षेत्रं दशधा विभजेद्बुधः ॥ १०९ ॥ एकमेकं त्यजेदंशमध ऊर्ध्वं च तन्त्रवित् ॥ ज्यासूत्रं पातयेदग्रे तन्मानाद् भ्रामयेत्ततः ॥ अर्धचंद्रनिभं कुण्डं रमणीयमिदं

भवेत् ॥ ११० ॥ अत्र तद्याम्यपृष्ठं स्यादेवं तन्मारणाय वै ॥ सौम्यपृष्ठं ततो न्यत्र योनिः पश्चिमदिग्मता ॥ १११ ॥ अग्रे प्राक् त्रिभुजं कार्य्यं लम्बा- स्तुल्यास्त्रयोपि च ॥ सान्तरं सर्वतन्त्रेषु प्रोक्तमत्र निरन्तरम् ॥ ११२॥ एक हस्ते तु हस्ताया भुजाभूद्वादशोच्चया ॥ द्विहस्तादौ त्रयः पञ्च त्रिहस्तेत्यर्क- भूमयः ॥ ११३ ॥ चतुर्हस्ते त्रयं चन्द्रः पञ्चहस्ते त्रिगोचराः ॥ षड्स्ते त्र्यब्दरामाश्च नगे त्रिकृतिसागराः ॥ ११४ ॥ अष्टहस्ते कृतागक्ष्मादेवी- विश्वामयाग्नयः ॥ वेदाग्निधृतियुग्मानि दशहस्तभुजा स्मृता ॥ ११६ ॥ व्यासार्धे चतुरस्रस्य स्वस्याष्टादशभागयुक् ॥ तावत्कर्कटकाद् वृत्तं वृत्तकुण्डमिहोच्यते ॥ ११६ ॥ रचयेच्चतुरस्रस्य व्यासार्धं नृपभागयुक् ॥ तावत्कर्कटकेनापि कुर्य्याद् वृत्तं मनोहरम् ॥ ११७ ॥ तेन कर्कटमानेन चिह्नषट्कश्च पूर्ववत् ॥ कृत्वा तत्रिभुजां दत्त्वा कुडमेवं षडस्रवत् ॥ ११८ ॥ इष्टस्य चतुरस्रस्य चतुर्विंशांशकल्पना ॥ कृत्वा तन्मध्यतः सूर्य्यभागं कर्कटकेन तु ॥११९॥ वृत्तं कुर्य्यात्पुनः सूर्य्यातिथिभागैर्द्वितीयकम् ॥ दिग्विदिगन्तराले च सूत्राण्यष्टौ प्रपातयेत् ॥ १२० ॥ ततोन्तर्वृत्तरेखाया ईशसूत्राग्रसूत्रतः ॥ रेखां नये- द्वाह्यवृत्तपूर्वसूत्रस्य मूर्द्धनि ॥ १२१ ॥ ततो दक्षिणरेखायामन्तर्वृत्तस्य मूर्द्धनि ॥ तमानयेद्दलं तस्मादेवमष्टदलानि तु ॥ १२२ ॥ अंशव्यासार्ध- केनापि यद्वृत्तं सा तु कर्णिका ॥ ततः षडङ्गव्यासार्धवृत्तं तत्केशराणि च ॥ १२३ ॥ व्यासषष्ठांशमानोच्चा कर्णिका केशराणि च ॥ गुरूक्तयुक्त्या निखनेद्यथा पद्माकृतिर्भवेत् ॥ १२४ ॥ पद्माकृतिम्प्रकुर्वीत कण्ठं मेखलया सह ॥ कार्य्यं तथा वालुकाभिश्चतुरस्रसमं यथा ॥१२५॥ अथेष्टचतुरस्रस्य व्यासः स द्वादशांशयुक् ॥ तेनैव भ्रामयेद् वृत्तं चिह्नान्यत्र दिगष्टके॥ १२६॥ क्रमान्न्यसेत्तदुपरि भुजां दद्यात्समामिति ॥ अष्टास्रं जायते कुण्डं तद्वत्कण्ठश्च मेखलाः ॥ १२७ ॥ इष्टस्य चतुरस्रस्य व्यासार्धं स्वनगांशयुक् ॥ तद्व्यासा- र्धेन वृत्तं स्यात्तत्र चिह्नानि पञ्च तु ॥ १२८ ॥ समभागेन देयानि तेषु सूत्राणि दापयेत ॥ ज्यारूपाणि धनुर्लोपात्कुण्डं पञ्चास्रकं भवेत् ॥ १२९ ॥ इष्टस्य चतुरस्रस्य व्यासार्धः पञ्चमांशयुक् ॥ भ्रामयेत्तत्र वृत्तं तु सप्तधा सकलं तु

तत् ॥ १३० ॥ ख्यातान्यन्यानि कुण्डानि तान्त्रिकस्मार्तकर्म्मणि ॥ अनाभिकानि कुण्डानि वियोनीति श्रुतीरितम् ॥ १३१ ॥ आचर्य्यकुण्डं नवमं चतुरस्त्रन्तु वैदिकम् ॥ अष्टाशक्तौ तु चत्वारि दिक्षु कुण्डानि तान्त्रिके ॥ १३२ ॥ तदशक्तावेकमेव चतुरस्रं प्रकल्पयेत् ॥ शक्त्या उपासने वामपथ्यकं योनिकुण्डकम्॥ १३३॥ अनेकदोषदं कुण्डं मानं हि चाधिकं यदि ॥ तस्मात्सम्यक्परीक्ष्येदं कर्त्तव्यं शुभमिच्छता ॥ १३४ ॥ खाताधिके भवेद्रोगी हीने धेनुधनक्षयः ॥ वक्रकुण्डे तु सन्तापो मरणं छिन्नमेखले ॥ १३५ ॥ मेखलारहिते शोकोऽथाधिके वित्तसंक्षयः ॥ भार्य्याविनाशकं कुण्डं प्रोक्तं योन्या विना कृतम् ॥१३६॥ अपत्यध्वंसनं प्रोक्तं कुण्डं यत्कण्ठवर्जितम् ॥ शृङ्गाररहितं यच्च कुण्डं जर्जरमेखलम् ॥ १३७ ॥ यजमानविनाशाय प्रोद्घातः स्फुटिते भवेत् ॥ सूत्राधिके सुहृद्द्वेषः सूत्रहीने दरिद्रता ॥ १३८ ॥ अनाले जठरे रोगश्छिद्रे कुण्डे तु वाच्यता ॥ यथोक्तकुण्डेप्युत्पातादेवं जाते फलं त्विदम् ॥१३९॥ षड्गुणाब्धिवह्निनेत्रमितास्स्युः पञ्च मेखलाः ॥ धर्म्मभेदे जातिभेदे चाचार्य्ययजमानयोः ॥ १४० ॥ षष्ठांशेनाष्टमांशेन मेखलाद्वितयं मतम् ॥ कौलिके वाममार्गे च बौद्धे जैने च शाबरे ॥१४१॥ एवं कृते मण्डपे तु वास्तुपूजां समारभेत् ॥ नूतने तु गृहे कुर्य्यादन्यथोपद्रवो महान्॥ १४२॥ स्मार्त्ती च तान्त्रिकी पूजा द्विविधा सा निगद्यते ॥ वास्तुनामा पुरा कश्चिद्बभूव त्वसुरोत्तमः ॥ १४३ ॥ त्रैलोक्यं निर्जितं तेन त्रिपञ्चाशच्च देवताः ॥ ये रणे सम्मुखे यातास्तेन तेतिनिपीडिताः ॥ १४४ ॥ पुनःपुनर्जिता युद्धे स एवासीत्प्रजापतिः॥ दिव्यवर्षसहस्रान्ते देवाः शरणमागताः १४५॥ विष्णोर्मम च पार्वत्या दैत्येन्द्रेणापि तच्छ्रुतम् ॥ योद्धुकामः सोऽभ्यधावन्नारदेन प्रचोदितः ॥ १४६ ॥ कृतं युद्धं तेन सार्द्धमस्माभिर्वर्षपञ्चकम् ॥ ततो दैत्यो मदोत्सिक्तो विष्णुमायाविमोहितः ॥ १४७ ॥ उवाच वचनं तुष्टो व्रियतांव्रियतामिति॥ १४८॥ नेन्द्रेण च कुबेरेण मम तोषकरं कृतम् ॥ ससैन्येनापि तद्युद्धं त्वया तु जटिलेन हि ॥ १४९ ॥ कृतं विष्णुसहायेन पार्वत्यर्धाङ्गधारिणा ॥ तेनाहं तुष्टिमापन्नस्त्रैलोक्यपरमेश्वरः ॥ १५० ॥

अदेयं नास्ति मे किञ्चिद्याचयन्तु त्रयोपि च॥इत्याकर्ण्य वचस्तस्य शिवयोर्भ्रू-प्रचोदितः ॥ १५१ ॥ हरिः प्राह महाधन्यो दैत्येन्द्र त्वं ममोक्तितः ॥ सत्यं त्रिवारं कुरुष्व तदा वाच्यो वरो मया ॥ शिवेनापि च पार्वत्या देव एवापरो न हि ॥ १५२ ॥ त्रिरुवाच तथा दैत्यस्तदा विष्णुर्व्यजिज्ञपत ॥ यथा ते त्वरितो मृत्युः स उपायः प्रदर्श्यताम् ॥ विष्णोश्छलमिति ज्ञात्वा दैत्येन्द्र-स्तमभाषत ॥ १५३ ॥ अवश्यमेव गन्तव्यं सर्वैः कालमुखे हरे ॥ तथापि स्वप्रतिज्ञार्थं यो गच्छति स जीवति ॥ १५४ ॥ परं त्वेको न मे वंशो येन मत्सेवनं कृतम् ॥ तस्य मार्गं दर्शयित्वा देहोयं विनिपात्यताम् ॥ ॥ १५५ ॥ काले तस्मिंश्च भो देवा वागुवाचाशरीरिणी ॥ दैत्यन्द्रै कुरु मा शोकं भुवो जन्म तवाभवत ॥ १५६ ॥ तत्रैव त्वं लयं याहि त्वत्तो पार्थ वरं शृणु ॥ ये वर्णाः स्वस्य भोगार्थं करिष्यन्ति नवं गृहम् ॥ ॥ १५७ ॥ तत्र त्वदुत्सवमृते नानादुःखैरुपद्रुताः ॥ कालकर्ण्यादिका दास्यो विनायकमुखाश्च ते ॥ १५८ ॥ सेवकाः पीडयिष्यन्ति चेत्याज्ञा पारमेश्वरी ॥ इत्याकर्ण्य वचस्सोपि गर्तं कृत्वा महाबिलम् ॥ १५९ ॥ प्रविवेश ततो देवैर्मृत्पाषाणैः प्रपूरितम् ॥ तेन ये निर्जिता देवाः पुनरुद्गमश-ङ्कया ॥ १६० ॥ तस्योर्ध्वन्तु त्रिपञ्चाशन्निवासं चक्रुरुग्रताः ॥ तस्मादव-श्यं ते पूज्या गृहवाससुखेच्छया ॥ १६१ ॥ शृण्वन्तु तद्विधिन्देवा वाम-दक्षिणमार्गतः ॥ पाषाणे प्रतिमायां वा कुर्य्याद्वास्तोष्पते तथा ॥ १६२ ॥ प्रतिजानीति मन्त्रेण तस्यावाहनपूजनम् ॥ नाममन्त्रेण चान्येषां पूजां कृत्वा प्रपूरयेत् ॥ १६३ ॥ नैर्ऋत्यकोणे गेहस्य चतुरस्राकृतिं शुभाम् ॥ कृत्वा समतलां भूमिं वितस्त्युच्चां च वेदिकाम् ॥ १६४ ॥ विस्तारायामतो हस्त-मात्रां तत्र लिखेद् बुधः ॥ एकाशीतिपदं चक्रं वेदिक्यस्तत्र देवताः ॥ १६५ ॥ मध्यकोष्ठेषु नवसु त्वादौ ब्रह्माणमर्चयेत् ॥ आपवत्सन्तदीशाने प्रागर्य्यमणं त्रिकोष्ठके ॥ १६६ ॥ आग्नेये सवितारं च विवस्वन्तमपां त्रिषु ॥ इन्द्रं नैर्ऋत्यदिग्भागे मित्रं पश्चिमगं त्रिषु ॥ १६७ ॥ वायव्ये राजयक्ष्माण सुमेरुं चोत्तरे त्रये ॥ वेदकोष्ठेषु चैशान्यामीशं कोणाच्च दवताः ॥ १६८ ॥

शिखी पर्ज्जन्य आपश्च दितिः प्रोक्ताष्टयोर्द्वयोः ॥ क्रमादेते पञ्च देवा ज्ञातव्याः सव्यमार्गतः ॥ १६९ ॥ जयन्तेन्द्रौ सूर्य्यसत्यवृषा आग्नेयकोणके ॥ अंतरिक्षं तथा वातः पूषा सावित्र एव च ॥ १७० ॥ चतुष्क ईशतो देवास्ततो दक्षिणपञ्चके ॥ युग्मे क्रमाच्च वितथो गृहरक्षयमौ तथा॥ १७१ ॥ गंधर्वा भृङ्गराजश्च नैर्ऋतीस्थं चतुष्कके॥ईशानीतो जयमृगौ पितृदौवारिकौ तथा ॥ १७२ ॥ततः पश्चाद्दिके पञ्च सुग्रीवः पुष्पदंतकः ॥ वरुणासुरशेषाश्च वायव्ये ईशतस्त्वहिः ॥ १७३ ॥ रुद्रश्च पापयक्षाश्च रोगश्चोत्तरपञ्चसु ॥ मुख्यो भल्लाटसोमौ च भुजङ्गश्चादितिस्तथा ॥ १७४ ॥ देवा एते पञ्चचत्वारिंशदर्च्याश्च भक्तितः॥ अथ तान्त्रिकमार्गे तु चतुष्षष्टिपदे तथा॥ १७५॥ कोणयोः सूत्रयुगलं मध्ये ब्रह्माणमर्चयेत् ॥ चतुष्कोष्ठेषु तत्पूर्वोत्तत्र कोष्ठे द्विकेद्विके ॥ १७६ ॥ आर्य्यकं च विवस्वंतं मित्रमन्यं महीधरम् ॥ सावित्रः सविता शक्र इन्द्रजिद्रुद्रतज्जयौ ॥ १७७ ॥ आपवत्सुरकौ वेति शैव्याः कोणार्धकोष्ठयोः ॥ शर्वं गुहं चार्य्यमणं जम्भकं पिलिपिञ्छकम् ॥१७८॥ चरकीं च विदारीं च पूतनां पूर्वतो यजेत् ॥ ईशानश्चाथ पर्जन्यो जयन्तः शक्रभास्करौ ॥ १७९ ॥ सत्यो वृषोऽन्तकश्चैव पूर्वाशाकोष्ठगाः क्रमात् ॥ अग्निः पूषा च वितथो यमोथ गृहरक्षकः ॥ १८० ॥ गन्धर्वा भृङ्गराजश्च मृगा दक्षिणदिग्गताः ॥ निर्ऋतिश्चाथ दौवारिकश्च सुग्रीवकस्तथा ॥१८१॥ वरुणः पुष्पदन्तश्च सुरशेषाख्यरोगकाः ॥ पश्चादथोत्तरे वायुर्नागमुख्यास्ततः परम् ॥ १८२ ॥ सोमभल्लाटार्गलाख्या अदितिर्दितिरुत्तरे ॥ ब्रह्मस्थानं रक्तवर्णं दिशः पीतैर्विदिक्सितैः ॥ १८३ ॥ ततो दिशस्तु हरितैर्विदिशः कृष्णवर्णकैः ॥ अरुणः परिधिः कार्यः सुन्दरं मण्डलं भवेत्॥ १८४॥ व्रीहिमुद्गयवैः क्षौद्रघृतदुग्धप्लुतैः क्रमात् ॥ अष्टोत्तरशतंचाष्टोत्तरविंशतिमेव च ॥१८५ ॥ प्रत्येकं तैर्हुनेद्द्रव्यैरर्चयेच्च यथाविधि ॥ बलिं च तेषां कुर्वीत पायसैर्व्यञ्जनान्वितैः ॥ १८६ ॥ एवं सिंहगते भानौ पूर्णायां प्रतिवत्सरम् ॥ स्वगेहे वास्तुपूजां च मण्डपेषु समाचरेत् ॥ नाकालमरणं व्याधिर्भूतप्रेतादिभीर्न च ॥१८७॥ न सर्पपीडा नान्योन्यकलहाद्यशुभानि च ॥ पुत्र-

पौत्रधनारोग्यपशुदासीसमृद्धिभाक्॥ अरोगी विजयी ख्यातश्चिरंजीवति तद्गृहे॥ ॥ १८८ ॥ राजवेश्मसु सर्वत्र तथा च महिषीगृहे ॥ सचिवामात्यसेनानी- भवनेषु पुरे तथा ॥ विदध्यात्प्रतिवर्षं तु प्रोक्तसिद्ध्यै सुदेशिकः ॥१८९॥ न चेदुक्तान्यथारूपं फलैः क्लेशश्च सम्भवेत् ॥ भैरवक्षेत्रपालानां योगिनीनां विशेषतः ॥ १९० ॥ वामाचारैर्बलिः कार्य्यो महिषैर्वापि कुक्कुटैः ॥ आराधितास्तु वामेन जायन्तेतिबुभुक्षिताः ॥ १९१ ॥ देवता बलिमिच्छंति तद्धीनं घ्नन्ति साधकम् ॥ मद्यमांसप्रमत्तास्ते शाक्तेन प्रचोदिताः ॥१९२॥ कदाचिच्छुभमिच्छन्ति तस्मात्सद्भिर्न वामतः ॥ क्रियतेऽभ्यर्चनं तासां प्रातस्तु निकटे यतः ॥ १९३ ॥ शुभं भवति वा नो वा यथा शास्त्रे तथा जने॥ यावन्न मद्यमांसाशी जनस्तावदलोलुपः ॥ भुंक्ते तस्मिंस्तन्मनाः स्यात्क्व जपः क्व च देवताः ॥ १९४ ॥ मद्यमांसादिकत्यागात्तस्य वातिनिषेवणात् ॥ दृश्यते तुल्यरूपो यः स सिद्धोऽन्यस्तु पातकी ॥ १९५ ॥ एवं परीक्ष्य कर्तव्या सिद्धानामपि सङ्गतिः ॥ अत्र किं बहुनोक्तेन सर्वनाशस्तु वामतः ॥ १९६ ॥ इति सञ्चिन्त्य भो देवाः स्वधर्म्मः श्रेयसे भवेत् ॥ वास्तु- शान्तिं विधायैवं सदसज्ज्ञानहेतवे ॥ १९७ ॥ सप्तभिर्नवभिर्वापि दिनैर्दी- क्षादिनात्पुरा ॥ बीजारोपणकर्म्मेदं कर्तव्यं सर्वकामदम् ॥ १९८ ॥ मण्ड- पोत्तरदिग्भागे सुसंवृत्तान्तरे परे ॥ भवने मण्डपं कुर्य्याद्दक्षः प्राग्वरुणायनम् ॥ १९९ ॥ याम्योदीच्यायतं वामदीक्षायां सम्प्रशस्यते ॥ गोमयेनोपलि- प्तायां भूमौ दक्षेऽथ वामके ॥ २०० ॥ सतैलतण्डुलैनैव सतैलविजयाद्रवैः ॥ तत्र रेखाः पञ्चकरा दीर्घाः कार्य्याश्च पञ्च च ॥२०१॥ वितस्त्यन्तरिता रुद्र- रेखाः कार्य्यास्तथायताः॥ चत्वारिंशत्कोष्ठकास्स्युश्चतुर्विंशतिकोष्ठकैः॥२०२॥ वाय्वङ्गैस्तत्र वीथी स्यात्पूरयेद्रक्तचूर्णकैः ॥ पश्चात्कोष्ठचतुष्कं यद्ब्रह्मस्थानं तदीरितम् ॥ २०३ ॥ आग्नेयकोष्ठमारभ्य ईशानान्तं प्रपूरयेत्॥ पीतै रक्तैश्च कृष्णैश्च रजोभिस्सृष्टिमार्गतः ॥ २०४ ॥ कोष्ठद्वयं ततो वीथी रक्तेनैव प्रपूरयेत् ॥ विष्णुस्थानं तदग्रे तु ज्ञेयं कोष्ठचतुष्टयम् ॥२०५॥ प्राग्वद्रजोभि-

रापूर्व्यं तदग्रेऽपि च वीथिकाः ॥ कार्य्या डमरुकाकाराश्चतस्रो विष्णुदेवताः॥ ॥ २०६ ॥ दूर्वाग्रपल्लवाश्वत्थदलोपेताश्च वेष्टिताः ॥ सूत्रेण विष्णुस्थानस्य चतुष्कोष्ठे निवेशयेत् ॥ २०७ ॥ वैरिञ्च्यः पञ्च मुख्यास्ताः काष्ठजाः षोडशांगुलैः ॥ आयामोच्छ्रायदीर्घाख्यैर्युक्ताः पश्चान्निवेशयेत् ॥२०८॥ ब्रह्मस्थाने पल्लवादिसूत्रैः प्राग्वच्च योजिताः ॥ शैवाः शरावाश्चत्वारो भान्वङ्गुलसमुच्छ्रयाः ॥ २०९ ॥ प्रक्षाल्य सूत्रैः संवेष्ट्य प्राग्वदग्न्यादिषु न्यसेत् ॥ शालिपुञ्जेषु गन्धादिदर्भकूर्चासनेषु च ॥ २१० ॥ पूरयेत्तानि पात्राणि वालुकामृत्करीषकैः ॥ शंखस्वनेन नादैश्च पञ्चभिर्ब्राह्मणाशिषा ॥ २११ ॥ ततः स्वर्णादिके पात्रे दश बीजानि वापयेत् ॥ वंबीजं प्रजपेन्मंत्री दुग्धेन क्षालयेत्पुनः ॥२१२॥ तानि प्रियंगुश्यामाकतिलसर्षपशालयः ॥ मुद्गाढक्यस्तुनिष्पावा खल्वा माषाः प्रकीर्तिताः ॥ २१३ ॥ ब्रह्मपात्रे तु विकिरेत्प्रथमं वैष्णवे ततः ॥ ततः शैवे पञ्चवाद्यब्रह्मघोषपुरस्सरम् ॥ २१४ ॥ हरिद्राद्यैश्च संसिच्य वस्त्रैराच्छादयेत्ततः ॥ संध्ययोरुयोश्चैव रात्रौ चापि बलिं हरेत् ॥ २१५ ॥ गुरूपदिष्टमार्गेण सम्यक्पात्रत्रयाग्रतः ॥ नवाहं तु बलिं दद्यात्तत्तदुद्दिश्य दैवतम् ॥ २१६ ॥ शाल्योदनं तिला लाजाः सक्तवः प्रथमे दिने ॥ हरिद्राचूर्णसंयुक्तो भूतेभ्योऽयं बलिर्मतः ॥ २१७ ॥ एवं द्वितीयदिवसे पितृभ्यस्तिलमण्डलैः॥तृतीये सक्तवो लाजा यक्षेभ्यो दधिसंयुताः ॥ २१८ ॥ नागेभ्यः सक्तवस्तुर्य्ये नारिकेलजलप्लुताः ॥ दद्यात्पद्माक्षतबलिं पंचमे ब्रह्मणे मुदा ॥२१९॥ षष्ठे शिवाय चापूपयुक्तं भक्तं प्रशस्यते॥तत्रौदनं सप्तमेऽह्नि विष्णवे विनिवेदयेत्॥२२०॥ ब्रह्मस्थाने तु वेतालो मेषस्तस्य बलिः सुराः ॥ विष्णुस्थाने भैरवी स्यादजस्तस्या बलिर्मतः ॥ २२१ ॥ भैरवस्तु शिवस्थाने महिषं बलिमिच्छति ॥ गौडी माध्वी च पैष्टी च सुरास्तत्र क्रमान्मताः ॥ २२२ ॥ मत्स्यमांसं मद्ययुक्तं भूतेभ्यो बलिरिष्यते ॥ पितृभ्यः शशमांसं च यक्षेभ्यः कुक्कुटं मधु ॥ २२३ ॥ भेकोन्दुरबलिर्नागान्वाममार्गबलिस्त्वयम् ॥ एवं गतेषु नवसु दिनेषु च विलोकयेत् ॥ २२४ ॥ सम्यक्त्स्योद्गमो जातः किं नष्टं मध्यमं च किम् ॥ सम्यगभ्युद्गमे सिद्धिः कुण्ठिते

विघ्नमानुयात् ॥ २२५ ॥ कीटभुक्तेनास्य फलं स्फुटिते सर्वनाशनम् ॥ सिद्धिः प्रियङ्गुभिर्ज्ञेया श्यामाकैःस्त्रीसुखं भवेत् ॥२२६॥ तिलैः पूज्यजनोल्लासः सर्षपैर्नाभिचारके॥ शालिभिः सर्वसम्मानो मुद्गैर्देवकृपा भवेत्॥२२७॥ चतुष्पादास्तथाढक्यां निष्पावैः क्षेत्रमन्दिरे ॥ खल्वैः सत्कर्मसिद्धिः स्यान्माषैः शान्ती रणे भवेत् ॥ २२८ ॥ सर्वैस्समुद्गतैर्वामे सिद्धिः पातस्ततोन्यथा ॥ चैत्रादीक्षाफलं दुःखं प्रतिष्ठारत्नसिद्धये ॥ २२९ ॥ हीनता मरणं बन्धुनाशो दुःखं ततः क्रमात् ॥ आनन्दो वृद्धिदुःखेथाक्षेपा निन्दा इति क्रमात् ॥ २३० ॥ दारिद्र्यं सर्वज्ञानं च शुभोत्कृष्टत्वसौख्यता ॥ ज्ञानं मेधाविनाशश्च स्वर्णाप्तिर्ज्ञानवर्द्धनम् ॥ २३१ ॥ समृद्धिसिद्धिः श्रेष्ठत्वं मलमासक्षयं त्यजेत् ॥ मनस्तापः श्रियः सौख्यं सौख्यं मन्त्रस्य सिद्धयः ॥ ॥ २३२ ॥ क्षुद्रदैवतसंसिद्धिः शीघ्रं सिद्धिः शुभा मतिः ॥ देवमैत्री सर्वहानिः कलहश्च महाभयम् ॥ २३३ ॥ सम्पद्रोगो जपात्सिद्धिः सन्तापस्ताप ईशिता॥ सर्वसिद्धिः फलं भानां क्रमादक्षे थ वामके ॥ २३४ ॥ तिथेः फलं बुद्धिनाशः क्रमाज्ज्ञेयाः सुसिद्धयः ॥ अगौरीमान्त्रिका भ्रष्टा विगणेशाश्च दुःखिताः॥ ॥ २३५ ॥ सिद्ध्यन्ति मन्त्राः सर्वेपि न सिद्ध्यन्ति कदाचन ॥ समृद्धिर्दुःखसिद्धिश्च मूर्खता गुरुनाशनम् ॥ २३६ ॥ जडतारिष्टनाशश्च सर्वं पूर्णं भवेत्फलम् ॥ शुक्ला श्रेष्ठा नैव कृष्णा शुभ्रा शुभतरा हरेः ॥ २३७ ॥ सिद्धिः स्यात्सर्वमन्त्राणां प्रोक्तं चैव महाभयम् ॥ सिद्धिर्धातुर्विशेषेण पुत्रहानिः पितृमृते ॥ २३८ ॥ क्रमाद्वारफलं बुद्धिर्जडता मरणं तथा ॥ नियोगहीनता पुत्रा धनाप्तिर्मृत्युरीरिता ॥ २३९ ॥ विष्कुम्भादिकयोगानां नामतुल्यं फलं भवेत् ॥ आनन्दादिकयोगानां सर्वत्राविकलं फलम् ॥२४०॥ विष्टिं विहाय करणे चरेत्सिद्धिर्द्रुतं भवेत् ॥ सर्वसिद्धिर्विष्टिपुच्छे स्थिरे तु स्थिरता भवेत् ॥ ॥ २४१ ॥ अथ लग्नफलं देवा धनं धान्यं समृद्धयः ॥ राज्यं वा देवतासिद्धिर्हानिर्मेधाविनाशनम् ॥ २४२ ॥ रत्नादिलक्ष्मीलाभश्च धनं धान्यं च सिद्धयः ॥ पूर्णसिद्धिः प्रतापश्च हानिर्विज्ञाननाशनम् ॥ २४३ ॥ पूर्वप्राप्तिर्मन्त्रसिद्धिः पशवो विपुलं धनम् ॥ सदा दुःखं तथा हानिर्वामिनां मिथुनं

शुभम् ॥ २४४ ॥ वामिनां यवनानां च विरुद्धं बहुधा शुभम् ॥ त्रिषडाय-गताः पापाः शुभाः केन्द्रत्रिकोणगाः ॥ २४५ ॥ रन्ध्रे मृत्युप्रदाः सर्वे व्यये खेटे रिपौ च रुक् ॥ मन्त्रश्चन्द्रबले ग्राह्योऽन्यथा स्यादघसम्भवः ॥ २४६ ॥ ताराबलानुरूपेण देवतायाः कृपा भवेत् ॥ धर्म्मदो राज्यदः सिद्धिप्रदो मध्योस्ति नाशकृत् ॥ २४७ ॥ प्रातःसङ्गवमध्याह्नापराह्णं साय-मेव च ॥ चन्द्रग्रहे तु दारिद्र्यं सौरे सर्वसमृद्धयः ॥ २४८ ॥ गुरावशुभदृष्टे च सिद्धक्षेत्रे सुशोभने ॥ आगच्छति गुरुर्दैवाद्यदा दीक्षा तदा भवेत् ॥ दीक्षा-दिनात्पूर्वदिने प्रातःकृत्यं निवर्त्य च ॥ २४९ ॥ समलंकृत्य देहं स्वं स्वगृहे पूजनं चरेत् ॥ गणेशस्य विधानेन पुण्याहं वाचयेत्ततः ॥ २५० ॥ नान्दी-मुखांस्तर्प्पयित्वा पञ्चवाद्यपुरःसरम् ॥ यथोक्तकृतसम्भारो गच्छेद् गुरुगृहं प्रति ॥ आचार्य्यर्त्विग्वरणसम्भारो दशधा मतः ॥ २५१ ॥ श्रीपर्णीवृक्ष-पीठानि हस्तमानानि मानतः ॥ अष्टाङ्गुलसमुच्छ्रायसहितानि समानि च ॥ २५२ ॥ सप्तविंशतिदर्भाणां वेण्यग्रे ग्रन्थिभूषिताः ॥ विष्टराः सर्वयज्ञेषु लक्षणं परिकीर्तितम् ॥ २५३ ॥ सुखोष्णोदकसम्भूताः पाद्यार्थे ताम्रगण्डकाः ॥ शङ्खा अर्घ्यप्रदानाय गन्धपुष्पजलान्विताः ॥ सुताम्रस्य कमण्डल्व आचा मोदकपूरिताः ॥ २५४ ॥ ते द्विधा मधुपर्कार्थे कांस्या दध्यादिपूरिताः ॥ महदर्घ्याणि वस्त्राणि मुद्रिकाद्यं सुभूषणम् ॥ मधूकपत्रच्छत्राणि सोष्णीषाणि समाचरेत् ॥ २५५ ॥ पादुकाश्चाहरेत्तत्र वर्म्माभरणभूषिताः ॥ कृत्वैतत्फ-लमाप्नोति महायज्ञार्हणोपमम् ॥ २५६ ॥ अन्येभ्यो मधुपर्केण विप्रेभ्यः पूजनं स्मृतम् ॥ भक्त्या तद्द्विगुणं दद्यादाचार्य्याय सुभक्तिमान् ॥ २५७ ॥ अन्यैर्द्विजैः समं यत्र देशिकस्य प्रपूजनम् ॥ तस्मिन्यज्ञफलं स्वल्पमनावृष्टौ यथा क्षितेः ॥ २५८ ॥ एवं गुरुगृहं गत्वा प्रणम्य गुरुपादुके ॥ दत्त्वा वरणसामग्रीं सङ्कल्प्य वृणुयाद्गुरुम् ॥ २५९ ॥ उच्चार्य्यमुक्तमन्त्रस्य ग्रहणाय द्विजोत्तम ॥ गुरुत्वे नेति सम्भाष्य त्वामहं च ततो वृणे ॥ २६० ॥ इत्युक्त्वा वृणुयाच्छिष्यो वृतोस्मीति ततो गुरुः ॥ यथोचितं गुरो कर्म्म कुरुष्वेति वदेच्छिशुः ॥ २६१ ॥ करवाणीति चा-चार्य्यो गुरोरेवाज्ञया ततः ॥ ब्राह्मणान्वृणुयादष्टौ वेदवेदाङ्गपारगान् ॥ २६२ ॥

तद्देवतोपासकांश्च ऋत्विक्केनाथवा यदा ॥ चत्वारि कुण्डानि तदा चत्वार ऋत्विजो मताः ॥ २६३ ॥ ततः शिष्येण सहितो यायाद्यागगृहं गुरुः ॥ उपविश्य च तद्द्वारे परीक्षामारभेत्ततः ॥ २६४ ॥ शिष्याय मूलमन्त्रं प्रदद्याद्दन्तधावनम् ॥ दन्तान्विशोध्य पुरतः स्थण्डिले हस्तमात्रके ॥ २६५ ॥ चतस्रोऽभ्यानयेत्तत्तु परीक्षेत ततो गुरुः ॥ तदग्रं यद्दिशासंस्थं तत्रेदं पूर्वतः फलम् ॥ २६६ ॥ भूतिर्हृदयसन्तापो बन्धुनाशस्तथा मतिः ॥ शोकश्च व्यग्रता सौख्यं ज्ञानलाभः क्रमात्फलम् ॥ २६७ ॥ अमङ्गलस्थानयानप्रायश्चित्तं समाचरेत् ॥ अष्टाधिकं सहस्रं वा शतं विंशतिरेव वा ॥ २६८ ॥ अस्त्रसम्पुटितेनैषां नाम्ना स्वाहान्वितेन च ॥ दोषाञ्जहिजहीत्येवं पदं चैव नमोऽन्तकम् ॥ २६९ ॥ केवलाज्येन जुहुयाद्दुःस्वप्ने चैवमेव हि ॥ दन्तकाष्ठं पुनर्देयं पुनर्दुष्टं च चेत्फलम् ॥ २७० ॥ तृतीयमपि दुष्टं चेन्न ग्राह्या सा तु देवता ॥ वाममार्गे सकृदपि गुरुं शिष्यो विनाशयेत् ॥ २७१ ॥ ततः स्वप्नपरीक्षां च कुर्यात्तद्विधिरुच्यते ॥ वैदिकानां दक्षिणानां वैष्णवानां च वामिनाम् ॥ २७२ ॥ यज्जाग्रतो दूरमुदैति दैवमावृत्य मन्त्रान्प्रयतस्त्रिदेवान् ॥ हविष्यभुग्दक्षिणपार्श्वशायी स्वप्नं परीक्षेत यथोपदेशम् ॥ २७३ ॥ भगवन्देवदेवेश शूलभृद् वृषवाहन ॥ इष्टानिष्टे समाचक्ष्व स्वप्ने सुप्तस्य यत्फलम् ॥ २७४ ॥ एवं सुप्ते कुशाकीर्णे चैकभुग्यतमानसः ॥ निशान्ते पश्यति स्वप्नं शुभं वा यदि वाशुभम्॥ २७५॥ ॐ[१] हत्सकललोकाय विष्णवे प्रभविष्णवे॥ विश्वेशाविश्वरूपाय स्वप्नाधिपतये नमः ॥ २७६ ॥ स्वप्नमानय मन्त्रोऽयमुपवासी जितेन्द्रियः ॥ दर्भशय्यागतो रात्रौ स्वप्नं पश्येद्यथा तथा ॥ २७७ ॥ भुक्त्वा शयीत शयने सुशुद्धे वसुधातले ॥ अर्धरात्रे समुत्थाय पादशौचं विधाय च ॥ २७८ ॥ आचम्य देवं सम्पूज्य तं संस्मृत्य स्वपञ्चके[२] ॥ शिवदैवतयोरैक्यं भावयेत्तु जपेदिदम् ॥ २७९ ॥ नमोऽजाय त्रिनेत्राय पिङ्गलाय महात्मने ॥ वामाय विश्वरूपाय स्वप्नाधिपतये नमः ॥ २८० ॥ स्वप्ने कथय मे

---

१ नमः ॥ अर्थात् ॥ ॐनमः सकललोकाय विष्णवे प्रभविष्णवे विश्वेशाविश्वरूपाय स्वप्नाधिपतये नमः स्वप्नमानयेतीमं पठेत् । २ स्वमस्तके—इत्यर्थः ।

नित्यं सर्वकार्य्यमशेषतः ॥ क्रियासिद्धिं विधास्यामि त्वत्प्रसादान्महेश्वर ॥ ॥ २८१ ॥ दीक्षितो दीक्षितानां च यथास्वप्ने प्रजायते ॥ शृण्वन्तु देवा भोः सर्वे सावधानास्तु तद्विधिम् ॥ २८२ ॥ पार्थिवेश्वरपूजान्ते रविवर्णं जपेन्मनुम् ॥ जुहुयात्तद्दशांशेन बिल्वपत्रैर्घृतप्लुतैः ॥ २८३ ॥ तर्प्पणं मार्जनं कृत्वा कुर्याद्ब्राह्मणभोजनम् ॥ सिद्धस्तस्य भवेन्मन्त्रः स्वप्ने वक्ति हृदि स्थितम्॥ २८४ ॥तारो हलिद्वयं शूलपाणये द्विठ ईरितः॥स्वप्नमानय मन्त्रोयं द्वादशाक्षर ईरितः ॥ २८५ ॥ स्वप्ने तु प्रथमे यामे वत्सरे तत्फलं भवेत् ॥ षड्भिर्मासैर्द्वियामे तु त्रिभिर्मासैस्त्रियामके ॥ २८६ ॥ चतुर्थे मासमात्रेण प्रातःकाले तु सत्वरम् ॥ स्वप्ने निद्रा फलघ्नी स्यात्स्वप्नो वाच्यो न चान्यथा ॥ ॥ २८७ ॥ चिन्ता दृष्टा तदीयं यत्तत्फलं नैव विद्यते ॥ वाताधिक्याद्भवे-त्स्वप्नस्सहसोड्डानपूर्वकः ॥ २८८ ॥ पित्तात्तेजोग्निपीतादि रक्तं क्रोधादिकं तथा ॥ श्लेष्मणः श्वेतशीतादि शयनाद्यं बलासनम् ॥ २८९ ॥ वातैः प्रात-स्त्वङ्गमर्दः पित्तैर्दाहस्तु नेत्रयोः ॥ कफात्प्रवेपते नित्यं हृद्द्वे द्वन्द्वे त्रयं त्रिषु ॥ २९० ॥ सिद्धं वा स्वगुरुं देवं प्रसन्नां च कुमारिकाम् ॥ गङ्गां भागी-रथीं भानुं लिङ्गिनं लिङ्गमैश्वरम् ॥ २९१ ॥ बालं छत्रं रथं दीपं प्रासादं कमलं नदीम् ॥ कुञ्जरं वृषभं माल्यं समुद्रं फलितद्रुमम् ॥ २९२ ॥ पर्वतं प्रज्वलद्वह्निमाममांसं सुरासवम्॥ग्रहान् भानि विधुं सूर्य्यं रत्नान्याभरणानि च ॥२९३॥सिंहासनं विमानं च ध्वजं वाद्याभिषेचनम् ॥ श्वेतचन्दनवस्त्राणि शालयः कुङ्कुमं मधु॥२९४॥राजा सिद्धार्थकं नार्यो नवभाण्डं च पायसम्॥ अश्वं फलानि सिद्धान्नं दधि बालं विलासिनम् ॥ २९५ ॥ दुग्धं वाद्यानि चाषं च मयूरं नकुलं मृगम् ॥ बद्धमेकपरं पुष्पं सद्वाक्यं चक्षुरञ्जनम् ॥२९६॥ पूर्णकुम्भं दर्प्पणं च मीनं मद्यं च भोजनम् ॥ शवं रोदनहीनं च पुण्ड्राणि च पताकिका ॥२९७॥ भारद्वाजनृपाणां च वेदशब्दं च गायनम् ॥ कशां मा-ङ्गल्यगीतानि चाङ्कुशं युद्धदं प्रियम् ॥२९८॥ स्वप्ने दृष्ट्वा तु चैतानि साधकः सिद्धिमाप्नुयात॥व्याध्याद्यार्त्तो नास्ति दुःखं सामान्यः सुखमाप्नुयात् ॥२९९॥ यदा कर्म्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ॥ कामयन्तीं नदीं सिन्धुं द्विजं

श्वेताम्बरं तथा ॥ ३०० ॥ भास्करोदयनं चैव ग्रहणं चन्द्रसूर्य्ययोः ॥ हर्म्यप्रासादनागाश्ववृषशैलाभिरोहणम् ॥ ३०१ ॥ भोजनं दधिभक्तस्य पक्वमांसस्य भक्षणम् ॥ कृमिविष्ठानुलेपश्च रुधिरेणाभिषेचनम् ॥ ३०२ ॥ ताम्बूलभक्षणं मद्यपानं दध्यभिवन्दनम्॥ प्रचन्द्रकिरणं स्वप्ने कार्य्यसिद्धेः सुलक्षणम् ॥ ३०३ ॥ कृष्णाम्बरधरा नारी कृष्णगन्धानुलेपना ॥ उपगूहति यं स्वप्ने सा रात्रिस्तस्य पश्चिमा ॥ ३०४ ॥ एवन्तु रक्तया व्याधिः शोकोऽरुणसमानया॥ नीलया कलहो हत्या पीतया करदो भवेत् ॥ ३०५ ॥ श्वेताम्बरधरा नारी श्वेतमाल्यानुलेपना ॥ उपगूहति यं स्वप्ने तस्य श्रीः सर्वतोमुखी ॥ ३०६ ॥ अशने शयने पाने शरीरे वाहने गृहे ॥ ज्वलमाने विबुध्येत तस्य श्रीः सर्वतोमुखी ॥ ३०७ ॥ सितोरगस्य दंशश्चेज्जायते दक्षिणे करे ॥ दशाहात्स भवेद्भोगी रोगी रोगाद्विमुच्यते ॥ ३०८ ॥ निगडैर्बहुपाशैश्च बध्यते वा युतो भवेत् ॥ प्रतिष्ठा वर्धते तस्य दुग्धपानधनात्ययः ॥ ३०९ ॥ सुरां रक्तम्पिबन्विद्यां लभेद्विप्रो धनं परम्॥ दध्नि दृष्टे भवेत्प्रीतिर्गोधूमैश्च धनागमः॥ ३१०॥ सिद्ध्या विद्यागमं विद्याल्लाभः सिद्धार्थकैस्तथा ॥ दधिलाभो ददेदर्थान्घृतलाभाद् ध्रुवञ्जयः ॥ ३११ ॥ घृताशनाद्धनक्लेशो जयस्तु दधिभक्षणात् ॥ लिङ्गानामर्चनन्दृष्ट्वा व्यवहारोऽत्र जायते ॥ ३१२ ॥ यस्तु मध्ये तडागादेर्भुञ्जीत घृतपायसम् ॥ निष्कम्पे पुष्करे पत्रे तं विद्यात्पृथिवीपतिम् ॥ ३१३ ॥ देवता लिङ्गिनो गावः पितरो ब्राह्मणो नृपः ॥ यद्वदन्ति नरं स्वप्ने तत्तथैव भविष्यति ॥ ३१४ ॥ अन्त्रैः संवेष्टयेद्यस्तु ग्रामं वा नगरन्तथा ॥ ग्रामे मण्डलराज्यं स्यान्नगरे पार्थिवो भवेत् ॥ ३१५ ॥ चन्द्रताराग्रहणं परिमार्गणमेव च ॥ भूम्यम्बुधीनां ग्रसनं शत्रूणां वा वधक्रिया ॥ ३१६ ॥ जयो विवादे द्यूते च शत्रूणाञ्च तथा जयः ॥ वडवामहिषीसिंहीगोहस्तिन्यादिदोहनम् ॥ ३१७ ॥ प्रसादो गुरुविप्रेषु देवसिद्धादिकाच्छुभम् ॥ स्नानं राज्याभिषेकश्च स्वशिरश्छेदनं मृतिः ॥ ३१८ ॥ तीर्थोदकानान्तरणन्तथा विषमलङ्घनम् ॥ गोहस्तिवडवासूतिर्[1]वह्निलाभस्तथैव च॥परस्त्र्यालिङ्गनं तस्या लाभो

---

१ हयीप्रसूतिः ।

रोदनमेव च ॥३१९॥ विष्ठालेपः कुन्दजातीबकुलानाञ्च दर्शनम् ॥ रणद्यूत-विमर्द्देषु जयो निगडबन्धनम् ॥ ३२० ॥ पशुमर्त्यमृगाणाञ्च लब्धिरध्यासन-न्तथा ॥ शिखि[1]लाभः श्वेतवस्त्रं पुष्पचन्दनधारणम् ॥ ३२१ ॥ मणितार[2]सु-वर्णादिपात्रे भोजनकन्तथा ॥ पश्येत्तदा साधकस्य ज्ञेया सिद्धिरितस्ततः३२२॥ कार्य्यार्त्तानां कार्य्यसिद्धिरितरेषां धनागमः॥ वन्ध्याचर्म्मतुषाग्न्यादिलवणाङ्गा-रमिन्धनम् ॥ ३२३ ॥ विट्क्लीबोन्मत्ततैलादिजटिलादिवसौषधम् ॥ रोगी नृणान्तु संन्यासी नग्नस्त्यक्तः क्षुधातुरः ॥ ३२४ ॥ विमुक्तकेशः पतितोभ्य-क्तासृक्शरविक्षतः ॥ भार्जारयुद्धं कार्प्पासो गर्भिणी च रजस्वला ॥३२५॥ गुडस्तक्रञ्च काषायी पंक एरण्डका गृहे ॥ वज्रादिकस्य स्खलनं सुरा पशुमल-न्तथा ॥ अन्धः कुब्जो दुर्वचनो बधिरः खञ्जकुब्जकौ ॥ ३२६ ॥ वमनं च घटो रिक्तो रजको मलिनाम्बरः ॥ एतैर्दृष्टैर्न कार्य्यं स्याद्रोगी मृत्युमवाप्नुयात् ॥३२७॥अशोकं करवीरञ्च पलाशञ्चापि पुष्पितम् ॥ स्वप्नेपि सलिलन्दृष्ट्वा नरः शोकमवाप्नुयात् ॥ ३२८ ॥ रूपान्तरे प्रवेशश्च दक्षिणाशागतिस्तथा ॥ पंके निमज्जनं स्नानं पुत्रभार्य्याविनाशनम् ॥ ३२९ ॥ गोहस्तिद्विजविप्रादौ दृष्टे कृष्णे च शोभनम् ॥ रक्तगन्धाम्बरः स्रग्वी कृष्णो वा दक्षिणामुखः ॥ ॥ ३३० ॥ खरोष्ट्रमहिषारूढस्त्रिमासं न स जीवति ॥ स्वप्ने वापि मठे गेहे द्वारं यस्य पिधीयते॥ ३३१॥ न चोत्तिष्ठति यत्तस्य मासान्तं किल जीवितम् ॥ वांतिमूत्रपुरीषञ्च सन्तानजननं च्युतिः ॥ शुक्रस्य यस्य च स्वप्ने तस्यायुर्दशमासकम् ॥ ३३२ ॥ बाध्यते विकृतैः कृष्णैः पुरुषैरुद्य-तायुधैः ॥ पाषाणैस्ताडयते वापि तस्य मृत्युर्न संशयः ॥३३३॥ महिषो-ष्ट्रखरारूढस्तैलाभ्यक्तश्च मुण्डितः ॥ दक्षिणाशाम्प्रस्थितो यस्तस्य मृत्युर्न संशयः ॥ ३३४ ॥ पश्येत्प्रासादपतनं ग्रहस्य शशिसूर्य्ययोः ॥ पर्वतानाञ्च वृक्षाणामधिकाराच्च्युतिर्भवेत् ॥३३५॥ हानिश्चैव स्वगात्राणां व्याधितोभि-भवस्तथा ॥ गृहसम्मार्ज्जनं लेपो गोमयेन मृदापि वा ॥ ३३६ ॥ तीर्त्वा नदीं समायातस्तीरेऽन्यद्वसनन्धृतम् ॥ रोगी रोगाद्विमुच्येत हानिः स्वस्थस्य

---

१ मयूरलाभः ॥ २ रजतम् ॥

जायते ॥ ३३७ ॥ पुन्नामानो मृगगणाः पोतकी सूकरी तथा ॥ पिङ्गला छुच्छुंका पल्ली वामाङ्गे कोकिलाः शिवाः॥ ३३८ ॥ स्त्रीनामानो मृगगणाः श्रीकण्ठो वानरो रुरुः ॥ छिकरः प्रियको भासो दक्षे काकर्क्षकुक्कुराः ॥ ॥३३९॥ दृष्टाश्चेद्रोगिणो रोगनाशः साधकसिद्धये॥ स्वस्थस्य धनलाभादि बहुव्यापारशोभनम् ॥ ३४० ॥ त्रिरात्रोपोषितो भूत्वा हविष्याशी पुरोहितः॥ सक्षीराणां घृताक्तानां समिधां चां शतं हुनेत् ॥ ३४१ ॥ पालाशानान्तु गायत्र्या शूद्रः स्नात्वा हविष्यभुक् ॥ दीपन्दद्याद्विप्रगेहे विष्णोर्गेहे शिवालये ॥ ३४२ ॥ एवन्दृष्ट्वा शुभं स्वप्नं गृह्णीयान्मनुमन्यथा ॥ गृहीते हानिरेव स्याच्चान्यदेवं विचिन्तयेत् ॥ ३४३ ॥ एवं विचार्य्य सततं गुरुपूजां समारभेत् ॥ विधायाचमनन्तत्र सामान्यार्घ्यं विधाय च ॥ ३४४ ॥ अर्घ्योदकेन सम्प्रोक्ष्य द्वारपूजां समाचरेत् ॥ ततश्च देशिको विघ्नान्दिव्यानास्फोटनेन च ॥ ३४५ ॥ अन्तरिक्षगतानन्तर्मन्त्रैरुत्सारयेत्क्रमात् ॥ पार्थिवान्पार्ष्णिघातैश्च त्रिभिरुत्सारयेत्ततः ॥ ३४६ ॥ अङ्गं सङ्कोच्य किञ्चित्तु शाखां वामगतां स्पृशेत् ॥ उत्सारयेत विघ्नानां दद्न्मार्गं तु दक्षिणे॥ ३४७॥ पादेन दक्षिणेनाथ प्रविशेद्योगमण्डपम् ॥ वाममार्गेऽथवा शाक्ते वामपादपुरःसरम् ॥ ३४८ ॥ ब्रह्माणं वास्त्वधीशञ्च नैर्ऋत्यां दिशि पूजयेत्॥ अर्घ्याम्बुना च गव्येन यागस्थाने सुसेचयेत् ॥ ३४९ ॥ वीक्षणाद्यैस्ततः शुद्धिं चतुर्धा वा समाचरेत् ॥ संवीक्ष्य मूलमनुना त्वस्त्रेण प्रोक्षयेत्ततः ॥ ३५० ॥ कुर्य्यात्ताडनमस्त्रेण कवचेनावसेचयेत् ॥ श्रीखण्डागुरुमन्त्रैश्च धूपितेस्त्रेण सप्तधा ॥ ॥ ३५१ ॥ जयाचन्दनसिद्धार्थदूर्वाभस्माक्षतान्कुशान् ॥ सलाजान्विकिरेन्मन्त्री प्रत्यूहघ्नान्हि मण्डपे ॥ ३५२ ॥ मार्ज्जयेदस्त्रमन्त्रेण तान्मन्त्री दर्भमुष्टिना ॥ आसनाय तु वर्धन्या ईशाने स्थापयेच्च तान् ॥ ३५३ ॥ पुण्याहं वाचयित्वाथ विप्रान्सन्तोष्य यत्नतः ॥ वेदिकायां लिखेत्पश्चात्सर्वतोभद्रमण्डलम् ॥ ३५४ ॥ शृणु तस्य विधिं श्रौते स्मार्ते यद्भद्रमिष्यते ॥ धृतिवर्गसमाः कार्य्याः कोष्ठकाश्चतुरस्रकाः ॥ ३५५ ॥ खण्डेन्दुस्त्रिपदैः कोणे श्वेतवर्णेन पूरयेत् ॥ कोणस्थैः पञ्चभिः कोष्ठैः शृङ्खला कृष्णवर्णिका ॥ ३५६ ॥

१पक्षिविशेषः २ वेश्या ३ छच्छुंदरी ४ नलिकण्ठः ५ मृगविशेषः ६ हरिणभेदः ।

श्रृङ्खलोभयतो नीला वल्ली शङ्करकोष्ठका ॥ श्रृङ्खलोभयतो भद्रमरुणं नवभिः पदैः ॥ ३५७ ॥ वापी जिनपदा श्वेता पीतान्तःपरिधिर्भवेत् ॥ मध्ये षोडशपद्मं तु रुचिरं वेष्टयेद्बहिः ॥ ३५८ ॥ श्वेतारुणासितैरेवं सर्वतोभद्रमण्डलम् ॥ अथान्यत्सम्प्रवक्ष्यामि कुर्यात्तान्त्रिककर्मणि ॥ ३५९ ॥ नृपवर्गसमाः कार्याः कोष्ठकाश्चतुरस्रकाः ॥ मध्ये षड्वर्गकोष्ठानि मार्जयेत्तत्र संलिखेत् ॥ ३६० ॥ आयामद्वादशांशं च बहिस्त्यक्त्वाथ मध्यतः ॥ ततो वृत्तत्रयं मध्ये समं कुर्याद्यथाविधि ॥ ३६१ ॥ कर्णिकामध्यवृत्तेन द्वितीयेन तु केशरान् ॥ अन्तवृत्तेन पत्राणि पत्राग्रं त्यक्तभागतः ॥ ३६२ ॥ किञ्जल्काग्रेषु संस्थाप्य पार्श्वतस्त्वर्धचन्द्रकान् ॥ तदग्रे तु त्रिभिः कोष्ठैः पादान्कोणेषु विन्यसेत् ॥ ३६३ ॥ शेषाणि पीतगात्राणि परतः पङ्क्तियुग्मकम् ॥ वीथीं कुर्यान्मार्जयित्वा चतुर्दिक्षु च मध्यतः ॥ ३६४ ॥

## सर्वतोभद्रचक्रम् ।

| त. | त. | मु. | म. | म. | म. | म. | म. | त. | त. | म. | म. | म. | म. | म. | मु. | त. | त. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| त. | ति. | मु. | मु. | म. | म. | म. | त. | त. | त. | त. | म. | म. | म. | मु. | मु. | ति. | त. |
| मु. | मु. | ति. | म. | मु. | म. | त. | त. | त. | त. | त. | त. | म. | मु. | मु. | ति. | मु. | मु. |
| म. | मु. | मु. | ति. | मु. | मु. | त. | त. | त. | त. | त. | त. | मु. | मु. | ति. | मु. | मु. | म. |
| म. | म. | मु. | मु. | ति. | मु. | मु. | त. | त. | त. | त. | मु. | मु. | ति. | मु. | मु. | म. | म. |
| म. | म. | म. | मु. | म. | ति. | मु. | मु. | त. | त. | मु. | मु. | ति. | मु. | मु. | म. | म. | म. |
| म. | म. | त. | त. | मु. | मु. | च. | च. | च. | च. | च. | च. | मु. | मु. | त. | त. | म. | म. |
| म. | त. | त. | त. | त. | मु. | च. | त. | त. | त. | त. | च. | मु. | त. | त. | त. | त. | म. |
| त. | त. | त. | त. | त. | त. | च. | त. | त. | त. | त. | च. | त. | त. | त. | त. | त. | त. |
| त. | त. | त. | त. | त. | त. | च. | त. | त. | त. | त. | च. | त. | त. | त. | च. | त. | त. |
| म. | त. | त. | त. | त. | मु. | च. | त. | त. | त. | त. | च. | मु. | त. | त. | च. | त. | म. |
| म. | म. | त. | त. | मु. | मु. | च. | च. | च. | च. | च. | च. | मु. | मु. | त. | ति. | म. | म. |
| म. | म. | म. | मु. | मु. | ति. | मु. | मु. | त. | त. | मु. | मु. | ति. | मु. | मु. | म. | म. | म. |
| म. | म. | मु. | मु. | ति. | मु. | मु. | त. | त. | त. | त. | मु. | मु. | ति. | मु. | मु. | म. | म. |
| म. | मु. | मु. | ति. | मु. | मु. | त. | त. | त. | त. | त. | त. | मु. | मु. | ति. | मु. | मु. | म. |
| मु. | मु. | ति. | मु. | मु. | म. | त. | त. | त. | त. | त. | त. | म. | मु. | मु. | ति. | मु. | मु. |
| त. | ति. | ह. | ह. | र. | र. | र. | त. | त. | त. | त. | म. | म. | म. | मु. | मु. | ति. | त. |
| त. | त. | मु. | म. | म. | म. | म. | म. | त. | त. | म. | म. | म. | म. | म. | मु. | त. | त. |

१ श्वेतकृष्णारुणहरितपीतवर्णेषु तण्डुलतिलमसूरमुद्गचणकानामाद्यक्षरैः कोष्ठगतैस्तत्तद्धान्यैः कोष्ठपूरणं ज्ञेयम् ॥

क्रमादाभ्यां चतुर्भिश्च कोष्ठैर्द्वारचतुष्टयम् ॥ कोष्ठत्रयेण चैकेन प्रत्येकं द्वार-पार्श्वयोः ॥ ३६५ ॥ शोभा भवन्त्वतः कोष्ठैरेकतस्त्रिभिरेव च ॥ उपशो-भास्ततः कोष्ठैः षड्भिः कोशानि कल्पयेत् ॥ ३६६ ॥ शुक्लं तण्डुलचूर्णं स्यादुत्सेधायामतस्तथा ॥ अङ्गुलेन समाः कार्य्याः सीमरेखा दलानि च ॥ ॥ ३६७ ॥ पीठगात्राणि च द्वारे चतुष्कं तेन पूजयेत् ॥ अविप्रैः पूरणी-यानि रक्तेनैव दलान्यपि ॥ ३६८ ॥ कुसुम्भचूर्णमारक्तं पूरणीयास्तु तेन तु ॥ द्वारशोभाः पीतपादाः सर्ववर्णैर्विनिश्चयात्॥ ३६९ ॥पीतं हरिद्राचूर्णं स्यात्पीठगर्भे च कर्णिका ॥ उपशोभाश्च विप्रेण पीतगर्भाश्च कृष्णतः॥ ३७० ॥ बिल्वपत्रस्य चूर्णोत्थो हरितस्तेन पूरयेत्॥पत्रमूलफलाकारामण्डिता हृदयङ्गमाः ॥ ३७१ ॥ वीथी चतुष्कमध्ये तु कल्पवल्लीः प्रपूरयेत् ॥ सन्धींश्च कल्पवल्लीश्च पीतरक्तेन केशरान् ॥ ३७२ ॥ नानावर्णरजोभिस्तान्पूरयेत्कुशलो गुरुः ॥ कृष्णवर्णेन कोणानि बही रेखात्रयं ततः ॥ ३७३ ॥ शुक्लारुणाख्यकृष्णैस्तु रजोभिर्भूषयेत्क्रमात् ॥ सर्वतन्त्रेष्विदं प्रोक्तं सर्वतोभद्रमण्डलम् ॥ ३७४ ॥ वक्ष्येथ देवयोनीनां सर्वतोभद्रमण्डलम् ॥ मार्गेथ दक्षिणे तत्र कोष्ठकारविव-र्गकाः ॥ ३७५ ॥ प्राग्वदेव तु तन्मध्ये पद्मं षड्भिः पदैः शुभम् ॥ एक पंक्त्या भवेत्पीठं द्वारशोभास्तु पूर्ववत् ॥ ३७६ ॥ षड्भिः कोष्ठैस्तु कोशानि रञ्जितव्यं च पूर्ववत् ॥ पीठपादाः परिधयः पद्माद्यं पूर्ववन्मतम् ॥ ३७७ ॥ वाममार्गे मण्डलं स्यात्कोष्ठैरष्टकवर्गकैः ॥ चतुर्भिः पङ्कजं मध्ये तद्बाह्ये वीथिका तु वा ॥ ३७८ ॥ कल्पवल्ली समायुक्ता तत्पद्मं सर्वदैव हि ॥ दिक् चतुष्के तु पद्मानि चतुर्भिः कोष्ठकैश्चरेत् ॥ ३७९ ॥ विदिशासु चतुर्भिस्स्युश्च-तुष्का वेदसंख्यकाः ॥ चतुष्कपद्मवीथीनां मध्ये स्वस्तिकसन्निभम् ॥ ३८० ॥ जायते तच्चतुष्कोष्ठैर्विदिशासु चतुर्ष्वपि ॥ रजोभिः शुक्लहारिद्ररक्तनीलैः प्रपूरयेत् ॥ ३८१ ॥ स्वस्तिकानीशतश्चान्यत्पूर्ववत्परिकीर्तितम् ॥ उदितं मण्डलं ह्येतन्नवनागं सुशोभनम् ॥ ३८२ ॥ एतदेवोक्तमार्गेण मध्यद्वारं विदि-क्त्यजम् ॥ एककोष्ठचतुष्कायं पञ्चपद्मं प्रवक्ष्यते ॥ ३८३ ॥ पद्मं प्राग्वाकृतं द्वारं स्वस्तिवच्च चतुष्ककाः॥वर्णैः पूर्व्या वीथिका तु पीठे तु सुरयोनिषु ॥ ३८४ ॥

अथ मन्त्रप्रतिष्ठार्थं वक्ष्ये वारुणमण्डलम् ॥ चतुरस्रं चतुष्षष्टिकोष्ठकं यो निवेशयेत् ॥ ३८५ ॥ अन्त्यजान्तिमयातासु दिक्षुकोष्ठानि मार्ज्जयेत् ॥ मध्यस्थचतुरस्राणि द्वास्स्थाख्यानि तु पूर्वतः ॥ ३८६ ॥ पीतैः श्यामैश्च तान् हरिद्रजोभिः परिपूरयेत् ॥ कोणकोष्ठं विहायैकं पञ्च ते पादसञ्ज्ञिताः ॥ ३८७ ॥ पीता स्यात्पाण्डुरा रक्ता पीतैः कृष्णैश्च पूरयेत् ॥ आग्नेयीतः कोणकोष्ठान्यारक्तहरितासितैः ॥ ३८८ ॥ पूरयेदथ तस्यार्धं वितानं बन्धयेद्यथा ॥ श्वेतवर्णेन चत्वारि मध्ये वृत्तानि कारयेत् ॥ ३८९ ॥ षड्ङ्गीशादिव्यासार्धवृत्तमाद्यन्तु पीठतः ॥ तत्पीतं कर्णिकाकारं सितरेखावृतं ततः ॥ ३९० ॥ द्वितीयं द्विगुणव्यासरूपकेशरसंयुतम् ॥ पीतरक्तश्वेतवर्ण-मूलमध्याग्रकेसरम् ॥ ३९१ ॥ द्विसप्तत्यंशिकां श्वेतां तस्याग्रे कुरुते सिताम् ॥ तृतीयं तु तृतीयांशतुल्यव्यासं च वर्त्तुलम् ॥ ३९२ ॥ श्वेतमष्ट-दलं तत्र रक्ताग्रं तद्दलैस्तले ॥ श्वेतं बहिः कृष्णवर्णं प्राग्वद्रेखां सितां कुरु ॥ ॥ ३९३ ॥ तद्बहिर्वृत्तसंलग्नान्षोडशास्रान्प्रकल्पयेत् ॥ श्यामपीतारुणश्वेतै-स्तदन्तस्तूपबाह्यतः ॥ ३९४ ॥ सितपीतारुणश्यामहरिताः पञ्च रेखिकाः ॥ कार्य्याः सुरुचिराः पीठस्यान्तरेवं प्रपूरयेत् ॥ वज्रं शक्तिं दण्डखड्गपाशाङ्-कुशगदा लिखेत् ॥ ३९५॥ पूर्वतस्तु तथैशान्यां शूलं चक्राम्बुजान्वितम् ॥ वेदिकायामासनन्तु प्राङ्मुखं संविशेदथ ॥ बद्धपद्मासनो मौनी ऋजुकायो जितेन्द्रियः ॥ ३९६ ॥ देशिकेन्द्रस्तु संस्थाप्य पूजोपस्क-रणानि तु ॥ दक्षिणे वामभागे तु स्थापयेत्कलशं शुभम् ॥३९७॥ सुगन्धि जलसंपूर्णं हस्तप्रक्षालनायच ॥ पश्चात्पात्रं निधायाथ दीपान्प्रज्वालयेच्छुभान् ॥ ३९८ ॥ व्यजनं मुकुरं छत्रं चामरं दिक्षु मन्त्रवित् ॥ संस्कुर्य्यात्तानि सर्वाणि वक्ष्यमाणविधानतः ॥ ३९९ ॥ करशुद्धिं विधायाथ ब्रूयात्तारत्रय-न्तथा ॥ शरमन्त्रेण दिग्बन्धं कुर्य्यान्मंत्री समाहितः ॥ ४०० ॥ महतस्तु समुत्पन्नं वक्ष्ये यत्तद्धि सर्वतः ॥ भूतशुद्धिन्ततः कृत्वा प्राणस्थापनमाचरेत् ॥ ४०१ ॥ न्यासादिकन्ततः कुर्य्याद्देशिको यतमानसः ॥ ऋषिं न्यसेत्ततो

१ तारः प्रणवः शरो हुं फट्तेन ॐ ॐ ॐ हुंफट् इति पठित्वा दिग्बन्धं कुर्यात् ॥

मूर्ध्नि च्छन्दो वक्त्रगतं न्यसेत् ॥ ४०२ ॥ देवतां हृदये न्यस्य मूलमन्त्रस्य देशिकः ॥ षडङ्गं विन्यसेन्मन्त्री पंचाङ्गं वा यथाविधि ॥४०३॥ यस्य मन्त्रस्य पंचाङ्गं नेत्रं तस्य विधीयते ॥ अङ्गैर्विहीनस्य मनोरङ्गं तेनैव कल्पयेत् ॥४०४॥ ततो मन्त्रोक्तमार्गेण न्यासानन्यान्समाचरेत् ॥ शरीरे स्वस्य मन्त्रज्ञो योगपीठं प्रकल्पयेत् ॥ ४०५ ॥ देहात्मके ततः पीठे ध्यायेन्मन्त्रस्य देवताम् ॥ दर्शयित्वा ततो मुद्राः स्थापयेदर्घ्यमुत्तमम् ॥ ४०६ ॥ जलप्रपूरितां दक्षे प्रोक्षणीं स्थापयेत्ततः ॥ तत्राल्पमल्पं शङ्खाम्बु तत्तद्देवरतो न्यसेत् ॥ ॥ ४०७ ॥ पाद्यमाचमनीयञ्च मधुपर्कञ्च मन्त्रवित् ॥ ततो मूलाम्बुना मन्त्री प्रोक्षण्यद्भिः समाहितः ॥ ४०८ ॥ स्वात्मानं मण्डलञ्चान्यत्पूजोपकरणादिकम् ॥ प्रोक्षयेद्गन्धपुष्पाद्यैर्देशे स्वे देशिकोत्तमः ॥ ४०९ ॥ योगपीठं समभ्यर्च्य न्यासमार्गेण मन्त्रवित् ॥ पीठान्तञ्च ततस्तत्र पूजयेदिष्टदेवताम् ॥ ४१० ॥ देवतात्मा ततः पञ्च कुर्य्याच्च सुमनोञ्जलीन् ॥ शीर्षे हृदि तथाधारे चरणे सर्वगात्रके ॥ ४११ ॥ पूजयेच्च निवेद्येन विहितैश्चन्दनादिभिः ॥ सर्वोपचारैस्तश्चेष्टं गुर्व्वादिष्टेन वर्त्मना ॥ ४१२ ॥ समापयेदिदं सर्वं प्रोक्षण्यद्भिः समाचरेत् ॥ पानीयम्प्रोक्षणीसंस्थं त्यक्त्वा संसिच्य पूर्ववत् ॥ ४१३ ॥ उपचारैश्चन्दनाद्यैर्मण्डलम्पूजयेद् गुरुः ॥ पूरयेत्कर्णिकां पूर्वं शालिभिस्तण्डुलैस्ततः ॥ ४१४ ॥ दर्भान्न्यसेदुपर्य्येषां साक्षात्तं पूर्वकन्ततः ॥ छिन्नमूलाः कुशा दीर्घाः सप्तविंशतिसङ्ख्यकाः ॥ ४१५ ॥ ब्रह्मग्रन्थियुतास्त्वग्रदेशे कूर्चं इहोच्यते ॥ यजेदाधारशक्त्यादिपीठमन्त्रावसानकम् ॥ ४१६॥ स्वर्णादिरचितन्तत्र कलशं छिद्रवर्ज्जितम् ॥ त्रिगुणात्मकसूत्रेण वेष्टितं सर्वतो बहिः ॥ ४१७ ॥ चन्दनागुरुकर्पूरैर्मध्ये सम्यक् प्रपूरितम् ॥ ध्रुवं जपं विना चात्र स्थापयेद्देशिकोत्तमः ॥ ४१८ ॥ नवरत्नानि निक्षिप्य कुम्भे कूर्चमथोपरि ॥ दूर्वाचन्दनसंयुक्तं विन्यसेद्दक्षिणान्वितम् ॥ ॥ ४१९ ॥ पुष्पं नीलञ्च वैडूर्य्यं विद्रुमं मौक्तिकन्तथा ॥ मूलमन्त्रञ्जपन्ते चिन्तयन्नैक्यमात्मनः॥ ४२० ॥ घटस्य पीठाभेदं च चिन्तयेत्साधकोत्तमः ॥ पञ्चाशदोषधीक्वाथैः पूरयेत्तदनन्तरम् ॥ ४२१ ॥ एकेन सहिता-

स्ताश्च वर्णौषध्यश्च ता इमाः ॥ चन्दनश्चापि रक्ताख्यं चन्दनश्चागुरुस्तथा ॥ ४२२ ॥ कर्पूरोशीरकुष्ठानि वालकञ्चापि केशरम् ॥ कङ्कोलकं जातिफलं जटामांसी मुरा तथा ॥४२३॥ ग्रन्थिकं रोचना जातिपत्रं पिप्पलबिल्वकौ ॥ पृष्ठिपर्णी चित्रकञ्च मुद्गपर्णी कुशाः पुनः ॥ ४२४ ॥ कट्फलं चापि गुञ्जा स्यादुदुम्बरककाश्मरी ॥ पद्मकोषा शङ्खपुष्पी मयूरस्य शिखा तथा ॥ ४२५ ॥ प्लक्षोग्निमन्थश्च तथा शालपर्णी कुशाः पुनः ॥ पाषाणभेदकः कृष्णा शशिपुष्पी च रोहिणी ॥ ४२६ ॥ स्योना च्छिन्नरुहा चैव पाटली मुखकर्णिका ॥ तुलसी शिखरी इन्द्रवल्ली भृङ्गीमिरानृपाः॥ ॥ ४२७ ॥ ततो राजितपातालमूली चापि कृताञ्जलिः ॥ दूर्वा श्रीदेवकन्याख्याभागथो भद्रमुस्तकम् ॥ ४२८ ॥ लवङ्गसहिताश्चैताः पञ्चाशत्सङ्ख्यका इति ॥ दुग्धवृक्षत्वचां क्वाथैर्ब्रह्मभूरुक्तगुग्द्रवैः ॥ ४२९ ॥ गन्धपङ्कप्रसूनादिवासितैर्वा शुभैर्जलैः ॥ क्वाथादितोयैरापूर्य्य शङ्खन्तस्मिन्विलोडयेत् ॥ ४३० ॥ गन्धाष्टकं तस्यतस्य देवस्याथ प्रकीर्तितम् ॥ चन्दनागुरुकर्पूररोचनाकुङ्कुमं मदः ॥ ४३१ ॥ रक्तचन्दनजं वारि गाणपत्यमुदाहृतम् ॥ ह्रीवेरश्चन्दनङ्कुष्ठमगुरुः कुङ्कुमं मुरा ॥ ॥ सिह्लकश्च जटामांसी वैष्णवं तदुदीरितम् ॥४३२॥ चन्दनागुरुकर्पूरचौरकुङ्कुमरोचनाः ॥ जटामांसी कपियुता शाक्तं गन्धाष्टकं विदुः ॥ ४३३ ॥ जलकाश्मीरकुष्ठैश्च रक्तचन्दनचन्दनैः ॥ तगरागुरुकर्पूरैः शाम्भवं चाष्टगन्धकम् ॥ ४३४ ॥ जलकाश्मीरकुष्ठैस्तु रक्तचन्दनचन्दनैः॥तगरागुरुकर्पूरैः सौरं गन्धाष्टकं विदुः ॥ ॥४३५॥ गोरोचना च कांस्यञ्च कर्पूरागुरुकुङ्कुमैः ॥ चन्दनेन मदाभ्याञ्च वारिदेन च पत्रजम् ॥४३६॥ गन्धाष्टकस्य संयोगात्सामर्थ्याद्देशिकस्य च ॥ सशक्तिकजलं कुम्भे भवेदेवं विदुर्बुधाः ॥ ४३७ ॥ आदौ कृशानुसम्बान्धिकला दश समर्चयेत् ॥ धूम्रार्चिरुष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी ॥ सुश्रीः सुरूपा कपिला हव्यकव्यवहे उभे ॥ ४३८ ॥ कलाद्वादशकं सौरम्पूजयेत्तदनन्तरम् ॥ तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः ॥ ४३९ ॥ सुषुम्णा भोगदा विश्वा बोधिनी धारिणी क्षमा ॥ कलाषोडशकञ्चान्द्रं यजे-

त्पश्चाद् गुरूत्तमः ॥ ३४० ॥ अमृता मानदा पुष्टा पुष्टिस्तुष्टी रतिर्धृतिः ॥ शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीःप्रीतिरंगदा ॥ ४४१ ॥ पूर्णा पूर्णामृता कान्तिर्दीपिनाश्वरजाः कलाः ॥ वेदादिभेदे सञ्जाताः कलाः पञ्चाशबिन्दुयुक् ॥ ४४२ ॥ सन्निधाप्य प्रतिष्ठाप्याभ्यर्चयेत्क्रमशस्तु ताः ॥ निवृत्तिः प्रतिष्ठा विद्या शान्तिर्क्रद्धिश्च दीपिका ॥ ४४३ ॥ रेचिका मोचिका पारा सूक्ष्मासूक्ष्मामृता तथा॥ज्ञानामृताप्यायनी च व्यापिनी व्योमरूपिका ॥ ४४४ ॥ अनन्ता सृष्टिर्क्रद्धिश्च स्मृतिर्मेधा च कान्तिका ॥ लक्ष्मीर्द्युतिः स्थिराच्छिन्तिस्सिद्धिर्जरा च पालिनी ॥ ४४५ ॥ क्षान्तीश्वर्य्यौ रतिः कामा वरदाह्लादिनी तथा॥दीर्घा तीक्ष्णा च रौद्री च भया निद्रा च तन्द्रिका॥ ४४६॥ क्षुत्क्रोधिनी क्रियोत्कारी मृत्युः पीता सितारुणा ॥ असिता च तथानन्ता मध्येमध्ये प्रपूजयेत् ॥ ४४७ ॥ हंसः शुचिषदित्यादि प्रतद्विष्णुस्तवेति च ॥ त्र्यम्बकं चैव गायत्रीं विष्णोर्योनिं तथैव च ॥ ४४८ ॥ तारस्य पंचभेदोत्थ कलानां पूजने सुधीः ॥ कलादशकमावाह्य सृष्टयाद्यं सन्निधाप्य च ॥ ४४९॥ हंसः शुचिषदित्यादि ऋचं सञ्जप्य पूजयेत् ॥ प्राणसंस्थापनं कृत्वा कलानां पूजयेच्च ताः ॥ ४५० ॥ एवं जरायास्तीक्ष्णायाः पीताद्याश्च विधानवित् ॥ निवृत्त्याद्याश्चापि यजेदुक्तयुक्त्या विचक्षणः ॥४५१॥ अकारोकारकौ प्रोक्तौ-मकारो बिन्दुनादकौ ॥ शक्तिः शान्तिस्त्विमे सप्त ध्रुवं भेदाः प्रकीर्त्तिताः ॥४५२ ॥ अन्तिमौ द्वाविमौ भेदौ पृथगेव समीरितौ ॥ अथ त्वश्वत्थपनसचूतानां पल्लवान्दृढम् ॥ ४५३॥ बन्धयेदिन्द्रवारुण्या लतयास्ये घटस्य च॥ कल्पवृक्षधिया तं च भावयेत्कलशोपरि ॥ ४५४ ॥ पात्रं तण्डुलसम्पूर्णं नारिकेलफलान्वितम् ॥ कल्पवृक्षफलं ह्येतत्स्थापयेदनया धिया ॥ ४५५ ॥ पट्टवस्त्रयुगेनाथ वेष्टयेत्कलशं ततः॥एतत्प्रधानकुम्भस्य स्थापनं परिकीर्त्तितम् ॥ ४५६ ॥ अथ पूर्वादिकाष्ठासु तोरणानां समीपतः ॥ यथेच्छया मण्डलानि कुर्य्यादष्टदलानि च ॥ ४५७ ॥ तदूर्ध्वं शालिपुञ्जं तु प्रतिद्वारं समाचरेत् ॥ तदूर्ध्वं पूर्णकलशं तत्र चैतान्प्रपूजयेत् ॥४५८॥ प्राग्बुधं च वरां दक्षे पश्चाद्वाक्पतिमुत्तरे ॥ विघ्नेशमथ चाग्नेय्यां दिक्षु कुम्भांस्तु विन्यसेत्॥ ४५९॥

अमूर्तं दुर्जयं सिद्धार्थकं मङ्गलमर्चयेत् ॥ पुना रुद्रादिकाष्ठासुक्रमादुद्रादिकान्यजेत् ॥ ४६० ॥ लोकपालान्मण्डलेषु कुम्भोपरि तथैव च ॥ ऐरावतं पुण्डरीकं वामनं कुमुदाञ्जनौ ॥ ४६१ ॥ पुष्पदन्तं सार्वभौमं सुप्रतीकं तदग्रतः ॥ ततो गुरुः स्ववेद्यां तु गत्वा स्वस्यासने विशेत् ॥ ॥४६२॥ सञ्चिन्त्य मूलमन्त्रेण मूर्तिं तस्मिन्गुरूत्तमः ॥ तस्यां मूर्त्तौ समावाह्य पूजयेदिष्टदेवताम् ॥ ४६३ ॥ स्मृत्वा मूलमनुं मन्त्री मातृकासु यथा ततः ॥ निर्गमय्य च चैतन्यं नासिकाग्रविनिर्गतम् ॥ ४६४ ॥ अञ्जलौ मातृकापद्मं महापुष्पान्विते गुरुः ॥ मस्तकान्तं समुत्थाप्य तस्यामावाहयेत्ततः ॥ ४६५ ॥ संस्थापनं सान्निधानं सान्निरोधं ततश्चरेत् ॥ सम्मुखकिरणं चापि शकलीकरणं ततः ॥ ४६६ ॥ ततोवगुण्ठनं कार्य्यममृतीकरणं ततः ॥ परमीकरणं कुर्य्यात्क्रमशस्तस्य मुद्रिकाः ॥ ४६७ ॥ विदध्याच्च क्रमात्तत्तदुपचारान्प्रकल्पयेत् ॥ आसनादिप्रसूनान्तानुपचारान्प्रकल्प्य च ॥ ४६८ ॥ ततो मन्त्रविधानेषु प्रोक्ताङ्गावरणान्यपि ॥ सर्वान्ते लोकपालानां[1] तदस्त्राणां च पूजनम् ॥ ४६९ ॥ विधाय पूजामेवं हि धूप दीपनिवेद्यकैः॥ कृते निवेद्ये च ततो मण्डलम्परितः क्रमात् ॥ ४७० ॥ प्रवालांकुरपत्राणि स्थापनीयानि मन्त्रिणा ॥ वेदिकाया दक्षभागे कृत्वा स्थाण्डिलमुत्तमम् ॥ ४७१ ॥ संस्थाप्य वह्निं संस्कृत्य वैश्वदेवं समारभेत् ॥ यथाविधि ततस्तत्र गन्धाद्यैर्देवतां यजेत् ॥ ४७२ ॥ तत्र प्रणवपूर्वाभिर्हुत्वा व्याहृतिभिः क्रमात् ॥ जुहुयान्मूलमन्त्रेण पायसेन घृतेन च ॥ ४७३ ॥ पञ्चविंशतिभिः पश्चाद्धुत्वा व्याहृतिभिः[2] क्रमात् ॥ सम्पूज्य तां चन्दनाद्यैः पीठमूर्त्तौ निधापयेत् ॥ ४७४ ॥ अग्निं विसृज्य इष्टेन पायसेन बलिं हरेत् ॥ पार्षदेभ्यश्चन्दनादिपुष्पाक्षतसमन्वितम् ॥४७५॥ तत उत्थाप्य नैवेद्यं तत्स्थलं शोधयेत्सुधीः ॥ पुनर्यजेच्चोपचारैः पञ्चभिर्दर्शयेत्ततः ॥ ४७६ ॥ दर्पणं व्यजनं

---

१ लोकपाला इन्द्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानानन्तब्रह्माणः एतेषां क्रमतोऽस्त्राणि वज्रशक्तिदण्डखड्गपाशांकुशगदात्रिशूलचक्रपद्मानि यथा॥ वं वज्रायनमः इत्यादि ।

२ ॐॐस्वाहा ॐभूःस्वाहा ॐभुवः स्वाहा ॐस्वःस्वाहा ॐभूर्भुवस्स्वःस्वाहा अयं व्याहृतिहोमः।

दिव्यया ॥ ५१५ ॥ तच्चैतन्यं स्थितं स्वास्मिंस्तस्मिंस्तच्चैव योजयेत् ॥ हुनेन्महाव्याहृतिभिस्ततो देशिकसत्तमः ॥ ५१६ ॥ अंगप्रवृत्त्या वृत्तीनां हुनेद्भूयो घृतेन वै ॥ ब्रह्मार्पणाख्यमन्त्रेण सर्वकर्म्मच्छिदे सुधीः ॥५१७॥ जुहुयादाहुतीरष्टौ केवलाज्येन मन्त्रवित् ॥ हुत्वा पूर्णाहुतिं मन्त्री स्तुत्वा मूलाणुना ततः ॥ ५१८ ॥ अग्निं सम्प्रार्थ्याग्निसाङ्गमन्त्रेणैकाहुतिं हुनेत् ॥ सर्पिषा स्रुवमापूर्य्य पुष्पञ्चोपर्य्यधोमुखम् ॥ स्रुवोपरि स्रुवन्दत्त्वा पुष्पन्तत्र प्रपातयेत् ॥ ५१९ ॥ सव्योत्तरकराभ्यां च सम्पुटाभ्याञ्च शङ्खवत् ॥ होमन्तु मांसमाषाभ्यां तीर्थाह्वाभ्यां च पूर्णताम् ॥ ५२० ॥ कुर्य्यात्स्वाहान्तमूलेन फलान्येन तु वैदिकः ॥ दक्षपादम्पुरस्कृत्य दक्षः पूर्णाहुतिञ्चरेत् ॥ ५२१ ॥ शक्तिहोमे वाममार्गी वामपादञ्च सर्वतः ॥ पुनः सम्पूज्य गन्धाद्यैर्मूलमन्त्रेण मन्त्रवित् ॥ ५२२ ॥ कुण्डादुद्वास्य चाचार्य्यो देवतां कलशे न्यसेत् ॥ साङ्गां सावरणां तत्र पूजयेच्च यथाविधि ॥ ५२३ ॥ सप्त व्याहृत्यग्निजिह्वाङ्गमूर्तीनामथैक्यकम् ॥ दुग्धेन परिषिच्याग्निं प्रार्थयीत ततो गुरुः ॥ ५२४ ॥ भोभो वह्ने महाशक्ते सर्वकामप्रदायक ॥ कर्म्मान्तरेपि सम्प्राप्ते सान्निध्यं कुरु सादरम् ॥ ५२५ ॥ इति मन्त्रेण सम्प्रार्थ्य चाग्निमुद्वासयेदपि ॥ ततो ब्रह्माणमुद्वास्य ब्राह्मणाय प्रपादयेत् ॥ ५२६ ॥ द्वात्रिंशत्पलमात्रेण निर्मितं ताम्रपात्रकम् ॥ तण्डुलैस्तत्समापूर्य्य सहिरण्यं सदक्षिणम् ॥ ५२७ ॥ दद्याद्विप्राय तत्तुष्ट्यै पूर्णपात्रमितीरितम् ॥ ततः परिस्तरानग्नौ परिधीन्निक्षिपेन्न तु ॥ ५२८ ॥ नित्ये नैमित्तिके तांस्तु क्षिपेद्देशिकसत्तमः ॥ वस्त्रेण नेत्रमन्त्रेण शिष्यनेत्रं निबध्यते ॥ ५२९ ॥ कुण्डाद्धस्तं समाधाय नयेन्मण्डलसन्निधौ ॥ सुमनोभिः प्रपूर्यास्य ह्यञ्जलीन्क्षेपयेद्धरे ॥ ५३० ॥ मूलमन्त्रोच्चारपूर्वं देवताप्रीतये गुरुः ॥ नेत्रबन्धमपास्योपवेशयेत्कुशसंस्तरे ॥ ५३१ ॥ ततश्च पाठयेच्छिष्यं मन्त्रमेनं गुरूत्तमः ॥ गुरुभक्तियुतो ब्रूयाच्छिष्यः श्लोकञ्च तत्र वै ॥ ५३२ ॥ अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ॥ चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ ५३३ ॥ अन्ते पूजाविधानेन स हरेज्जनयेच्च तम् ॥ शिष्यो

इत्तस्य मन्त्रस्य न्यासान्देहे परिन्यसेत्॥ ५३४ ॥पञ्चोपचारैरभ्यर्च्य कलशे स्वेष्टदेवताम् ॥ तन्त्रोक्तवर्त्मना तत्र सकलाकृतिमाचरेत् ॥ ५३५ ॥ अथो-पवेशयेच्छिष्यं भूषितं मण्डलान्तरे ॥ कुम्भास्यस्थसुरद्रूंश्च मूर्द्धन्यस्य शिशो-र्गुरुः ॥ ५३६ ॥ अथ पञ्चनिनादैश्च विप्राशीर्वचनैस्सह ॥ सुस्थितं नियता-त्मानं सिञ्चेत्कलशपुष्पकैः ॥ ५३७॥ येन प्रकारेण सुरा योजिताश्च सुधा-मयैः ॥ तोयैरक्षरसंयुक्तैर्घटैस्तेनैव वर्त्मना ॥५३८ ॥ अथ शिष्यश्चाभिषिञ्चे-दाशु तं सम्प्रदायये ॥ गृहीत्वाभ्यर्चितं पूर्वं करकं मन्त्ररूपिणम् ॥५३९ ॥ तत्तोयैरभिषिञ्चेत्तं सुशिष्यं देशिकोत्तमः॥जलेन शिष्टेन शिशुं गुरुराचामयेत्ततः ॥ ५४० ॥ तद्देवतास्वरूपञ्च विदध्यात्सकलीकृतम् ॥ वाससी विमले रम्ये परिधायाज्ञया गुरोः॥५४१॥आचम्य निकटे तस्या गच्छेत्सम्यङ्मनुं ततः ॥ दक्षकर्णे वदेद्विद्वान्विप्रस्योङ्कारपूर्वकम् ॥५४२॥ अन्येषान्तु वदेदेवमेव मन्त्रं विचक्षणः ॥ स्वयं ज्योतिर्मयीं विद्याङ्गच्छन्तीं भावयेद् गुरुः ॥ ५४३ ॥ आगताम्भावयेच्छिष्यो देवोस्मीति विशेषतः ॥ अष्टोत्तरशतं शिष्यः प्रजपेद् गुरुणोदितम् ॥ ५४४ ॥ अष्टाविंशतिवारं वा चाष्टकृत्वोथ वा जपेत् ॥ गुरु-देवात्ममन्त्राणामैक्यं शिष्यो विभावयेत् ॥ ५४५ ॥ प्रणामं गुरवे कुर्य्यात्सा धको भक्तिमान्मुहुः ॥ साष्टाङ्गश्चाथ पञ्चाङ्गः पूजाकर्म्मसु सम्मतः॥५४६॥ हस्ताभ्याञ्चैव जानुभ्यां प्रणामो वक्षसा तथा ॥ मूर्ध्ना दृष्ट्या तथा चैव चित्ते-नाष्टाङ्ग ईरितः ॥ ५४७ ॥ हस्तजानुशिरोवाक्यदृष्ट्यः पञ्चाङ्ग ईरितः ॥ आचार्य्याज्ञां सदा कुर्य्यात्ततः शिष्यो विचार्य्य च ॥ ५४८॥ अलङ्कारांश्च वासांसि दद्यादृत्विग्भ्य आदरात्॥ईश्वरार्पणबुद्ध्या च द्विजाशीर्भिश्च नन्दितः ॥ ५४९ ॥ प्रदद्याद्गुरवे शिष्यः स्वधनार्धं तदर्धकम् ॥ दशांशं वा प्रदद्याच्च वित्तशाठ्यविवर्ज्जितः॥५५०॥गोभूहिरण्यविपिनगृहक्षेत्रादिकं पुनः॥अक्लेशाद न्नवस्त्रादि दद्याद्वित्तानुसारतः ॥५५१॥ प्रकारान्तरमालम्ब्य गुरुं यत्नेन तोष-येत् ॥ तदधीनमना नित्यं तच्चिन्तनपरायणः ॥ ५५२ ॥ तत्पादाब्ज भूषो भवेत्साधकसत्तमः ॥ ततो नानाविधैर्भक्ष्यैर्लेह्यैश्चोष्यैस्तथापरैः ॥५५३॥ ब्राह्मणान्भोजयेत्सम्यक् प्रदद्याद्भूरिदक्षिणाम् ॥ एवं क्रियामयी दीक्षा सम्प-

द्वात्री निरूपिता ॥५५४॥ राज्ञां धनाढ्यवैश्यानां विप्राणां व्यवसायिनाम् ॥ अयन्दीक्षाक्रमः प्रोक्तो भोगयुक् सिद्धिमिच्छताम् ॥ ५५५ ॥ अथ वर्णमयीं दीक्षां शृण्वनुज्ञानदायिनीम् ॥ यत्प्रकृत्यात्मतत्त्वञ्च वर्णानां समुदीरितम् ॥ ॥ ५५६ ॥ तादृक्तत्त्वं शरीरस्य प्रोक्तमेवास्ति देशिकैः ॥ ततस्तनौ शिशोर्न्यस्येद्वर्णान्देशिकसत्तमः॥५५७॥ संहरेद्वैपरीत्येन वर्णान्स्वस्थानसंस्थितान् ॥ देशिकेन्द्रः स्वसामर्थ्याद्वापयेद्देवतात्मताम् ॥ ५५८ ॥ देवतात्मा भवेच्छिष्यस्तदा संलीनतत्त्वतः॥ अथ वक्ष्ये कलादीक्षामणिमाद्यष्टसिद्धिदाम्॥५५९॥ वेदे पञ्चकला दीक्षा दक्षेष्टत्रिकला मता ॥ कुपञ्चाशत्कला वामे सिद्धमन्त्रगुरोस्तु सा ॥ ५६० ॥ ग्राह्या द्रुतं सिद्धिकर्त्री विपरीता विपर्य्ययात् ॥ कला निवृत्तिप्रमुखा भूतानां पञ्च चेरिताः ॥ ५६१ ॥ शिष्यकाये भूतमये वेधयेत्ताः क्रमात्सुधीः॥पादादिजानुपर्य्यन्तं निवृत्तिस्संस्थिता कला ॥ ५६२ ॥ जान्वोः सकाशादानाभि प्रतिष्ठाख्या कला स्मृता ॥ नाभितः कण्ठपर्य्यन्तं विद्याख्या संस्थिता कला ॥ ५६३ ॥ कण्ठतो ह्याललाटन्तु शान्त्याख्या संस्थिता कला ॥ भालाच्छिरोवधि प्रोक्ता शान्त्यतीता कला तथा॥५६४॥संहृतिक्रमतो विद्वान्वेधयेत्स्थानतोन्यतः॥स्थाने स्वीयाज्ञयाचैव दीक्षा पञ्चकला स्मृता ॥ ५६५ ॥ अष्टात्रिंशत्कला दीक्षा युक्तिं शृण्वन्तु देवताः ॥ क्रमेण कादिका वर्णा यत्र द्वादश संस्थिताः ॥ ५६६ ॥ विलोमा भादिका यत्र तत्र स्थानद्वये कलाः ॥ भावनीयास्तु सूर्य्यस्य षोडशाशु विधोस्तथा ॥ ५६७ ॥ यकारादिस्थले वह्नेर्भावनीयाः कला दश ॥ ततो वर्णकलानान्तु वर्णस्थानाच्च संहृतिः ॥ ५६८ ॥ पुनश्च जनयेच्छिष्यः कलादीक्षाविधिस्त्वयम्॥कौलिके वाममार्गे चावेददीक्षा फलप्रदा ॥ ५६९॥ अन्यास्ता दक्षिणे मार्गेऽन्यथा तु पातितो भवेत् ॥ दीक्षां वेदमयीं वक्ष्ये यां लब्ध्वा सुखदाञ्जनः ॥ ५७० ॥ तत्काल एव संसारे जीवन्मुक्तोभिजायते ॥ मूलाधारे तु शिष्यस्य ध्यायेत्कञ्जं चतुर्दलम् ॥ ५७१ ॥ तस्य मध्ये त्रिकोणन्तु तन्मध्ये चापि कुण्डलीम् ॥ त्रिरावर्णमयीं देवीं विद्युत्पुञ्जस्वरूपिणीम् ॥ ५७२ ॥ महादेवमयीं साक्षाज्ज्ञानमात्रेण रूपिणीम् ॥ अणोरणीयसीं देवीं चक्रषट्कप्रभेदिनीम् ॥५७३॥

सुषुम्णावर्त्मना दिव्यां यान्तीं शिवगृहम्प्रति ॥ सान्तवादिदलस्थार्णान्पद्मस्थाने समाहरेत् ॥५७४॥ षड्दले कमले तन्तु लान्तबाद्यर्णयुग्दले ॥ स्वाधिष्ठाने गुरुस्सम्यग्योजयित्वा तु वेधयेत् ॥ ५७५ ॥ तदर्णानानयेद्बिन्दौ बिन्दुन्तन्नाभिपङ्कजे ॥ फान्तडाद्यर्णसंयुक्ते दिग्दले वेधयेत्स्वयम् ॥ ५७६ ॥ वर्णास्तान्योजयेद्रुद्रे रुद्रं तं हृत्सरोरुहे ॥ ठान्तकाद्यर्णपत्राब्जे वेधयेदीश्वरे स्वयम् ॥ ५७७ ॥ वर्णास्तानाहरेत्तस्मिन्कण्ठपद्मे च तं तथा ॥ कलादलमये पद्मे स्वरान्संयोज्य यत्नतः ॥ ५७८ ॥ सदाशिवेथ संयोज्य तं तु भ्रूमध्यपद्मके ॥ द्विदले लक्षसंयुक्ते वेधयित्वा तु देशिकः ॥ ५७९ ॥ शक्त्या सहैवमात्मानं नयेत्परशिवावधि ॥ देशिकाज्ञावशः शिष्यो दग्धाज्ञानस्तदा क्षितौ ॥५८०॥ पतेदवाप्तविज्ञानः सर्वज्ञो जायते ततः ॥ सदाशिवः स्वयंभूयात्सत्यमेव न संशयः ॥ ५८१ ॥ इयं ज्ञानप्रदा प्रोक्ता दीक्षा वेदात्मिका शिवा ॥ गुरुः स्वयं गुरुं ध्यायेत् स्वहस्ते शिवरूपिणम् ॥ ५८२ ॥ मूलविद्यां षडङ्गं च मातृकादिमनुं जपेत् ॥ शिष्यस्य मस्तके दत्त्वा कृपया दक्षिणं करम् ॥ ५८३ ॥ पश्चादुपदिशेत् प्रोक्ता स्पर्शदीक्षातिसिद्धिदा ॥ सदाशिवे तु चिद्रूपे गुरुश्चित्तं निधापयेत् ॥ ५८४ ॥ मन्त्रान्समस्तांस्तज्जातान्स्वयं ध्यायेत्तदात्मकः ॥ जातो गुरोस्तु कृपया केवलोहं सदाशिवः ॥ ५८५ ॥ इति ध्यायन्नुपदिशेद्वाग्दीक्षा त्वियमीरिता ॥ निमील्य नयने ध्यात्वा परमात्मनि देवताम् ॥ ५८६ ॥ तद्दर्शनानन्दपूर्णनेत्राभ्यां दर्शयेद् गुरुः ॥ शिष्यं प्रसन्नचित्तः सन्पश्चादुपदिशेदिति ॥५८७॥ मन्त्रसिद्धस्य सिद्ध्यै स्याद्दग्दीक्षेयं फलप्रदा॥ गुरोरालोकमात्रेण भाषणात्स्पर्शनादपि ॥ ५८८ ॥ सद्यः सञ्जायते ज्ञानं सा दीक्षा शाम्भवी स्मृता॥ भुक्तिमुक्तिप्रसिध्यर्थम्परीक्ष्य विधिवद् ग[illegible] ॥५८९॥ पश्चादुपदिशेन्मन्त्रमन्यथा निष्फलो भवेत् ॥ अन्यायेन च य[illegible]द्गृह्णात्य-

---

लिंगदेशे षड्दलं कमलं तत्स्वाधिष्ठानं नाम तद्दलेषु ( बं भं मं यं रं लं ) पुनर्नाभौ दशदलं कमलमस्ति तत्र ( डं ढं णं तं थं दं धं नं पं फं ) हृदये द्वादश दलं कमलं तद्दलेषु ( कं खं गं घं ङं चं छं जं झं ञं टं ठं) पुनः कण्ठे षोडशदलं कमलं तद्दलेषु अँ आँ इँ ईँ उं ऊं ऋं ॠं लृँ लॄँ एंऐं ओं औं अंअः पुनर्भ्रुवोर्मध्ये द्विदलंकमलमास्ति तद्दलयोर्लक्षं क्रमेण न्यस्यौ ।

न्यायतश्च यः ॥ ५९० ॥ ददतो गृह्णतो वापि कुलशापो भविष्यति ॥ गुरु-
शिष्यावुभौ मोहादपरीक्ष्य परस्परम् ॥ ५९१ ॥ उपदेशं ददद्गृह्णन्त्रानुयातां
पिशाचताम् ॥ अशास्त्रीयोपदेशन्तु यो गृह्णाति ददाति यः ॥ ५९२ ॥
भुञ्जाते तावुभौ घोरान्नरकानेकविंशतिम् ॥ असंस्कृत्योपदेशं तु यः करोति
विमूढधीः ॥ ५९३ ॥ विनश्यन्ति च तन्मन्त्राः सैकते शालिबीजवत् ॥
अनर्हे मन्त्रविज्ञानं न तिष्ठति कदाचन ॥ ५९४ ॥ तस्मात्परीक्ष्य कर्त्तव्यं
चान्यथा निष्फलं भवेत्॥ सच्छिष्यायातिभक्ताय विज्ञानमुपदिश्यते॥५९५॥
तत्प्राप्नोति ब्रवीमि त्वाङ्गोक्षीरान्ते यथा घृतम् ॥ धनेच्छाभयलोभाद्यैरयोग्यं
यदि दीक्षयेत ॥ ५९६ ॥ देवताशापमाप्नोति कृतञ्च विकृतं भवेत् ॥ एवं
दत्त्वा गुरुर्दीक्षां कुर्य्यात्पूर्णाभिषेचनम् ॥ ५९७ ॥ विनयेनाभिषेकेण
साधकः पूर्णबोधताम् ॥ आचार्य्यत्वं च नाप्नोति सद्गतिञ्च सनीहिताम्
॥ ५९८ ॥ तस्माद् गुरुः प्रियं शिष्यं बोधयित्वाभिषेचयेत् ॥ विरच्य विपु-
लांश्चक्रान्मण्डपेतिमनोहरे॥५९९॥ क्षारतोयभृतं कुम्भं स्थापयेच्चक्रमध्यतः॥
अन्येषु कलशांस्तत्र वस्त्रहेमसमन्वितान्॥६००॥ दलेषु विविधाः स्थाप्यास्तत्र
वै चेष्टदेवताम् ॥ अभ्यर्च्य मध्ये चान्तेषु साङ्गावरणदेवताः॥६०१॥स्पृशंश्च
मध्ये कलशमाचार्य्यः प्रपठेदिति॥ साङ्गांश्च चतुरो वेदांस्ततस्तेन जलेन तु
॥ ६०२ ॥ अभिषिञ्चेद्गुरुः शिष्यमिति पूर्णाभिषेचनम् ॥ देवेभ्यः सर्वत-
न्त्राणि तन्त्रेभ्यो मुनयस्तथा ॥ ६०३ ॥ यतो जातास्ततः शिष्यः सर्व-
तन्त्रैकभाजनम् ॥ भवेदाचार्यनामा च कुर्य्यान्नामान्तरं गुरुः ॥ ६०४ ॥
एतादृशस्य यो दीक्षां गृह्णीयात्स तु सिद्धिभाक् ॥ सर्वमन्त्रप्रधानेषु समर्थः स
तु जायते ॥ ६०५ ॥ सर्वे देवा वशास्तस्य वेदे पन्थास्तु सात्त्विकः ॥ एष
एव विधिस्तस्य मार्गः स्याद्दक्षिणाभिधः ॥ ६०६ ॥ विशेषस्तत्र तोयानि
तीर्थानामाहरेत्सुधीः ॥ गङ्गाया यमुनायाश्च सरस्वत्या महोदधेः ॥ ६०७ ॥
सिन्धुगोदावरीरेवाकावेरीभ्यः पृथूदकात् ॥ महेन्द्रजायाः सरयूचर्म्मण्वत्योश्च
पुष्करात्॥६०८॥महानद्या वेदिकायाः क्षिप्रावेत्रवतीजलम्॥ कुरुक्षेत्रस्यगण्ड-
क्याः पूर्णाया मानसस्य च॥६०९॥घटे दत्त्वा जपेन्मन्त्रान्नानातन्त्रगतानपि॥

अभिषिक्तस्तु तैस्तोयैः सिद्धो वै मानवोत्र तु ॥ ६१० ॥ प्रयोगार्थन्तथा-न्यस्य दानार्थमथ वामके ॥ मध्ये तीर्थघटं स्थाप्य शेषास्तोयघटा मताः ॥ ॥ ६११ ॥ ये य आवाहिता देवा गुरुणा तु शुभे घटे ॥ तेते कुर्व्वन्तु सान्निध्यं मन्त्ररूपाश्च तन्मुखे ॥ ६१२ ॥ स्वयं सिद्धो हि कस्मैचिन्मूर्द्धानं नैव नामयेत् ॥ यदर्थं नामितो मूर्द्धा तस्य मृत्युर्न संशयः ॥ ६१३ ॥ वाममार्गे गुरुर्यस्य चेदृक्सिद्धो भवेद्यदा ॥ शिष्यश्च निरहङ्कारः सदा देव-तत्परः ॥ ६१४ ॥ देवतार्थं यस्य नात्र त्रयाभोगे मनो न च ॥ स एव सिद्धो वामे स्यादन्यो निरयभाजनम् ॥ ६१५ ॥ दारिद्रो दुःखितो मूर्खं इहलोके परत्र च ॥ क्रियादीक्षाविधिं कुर्य्याद्यथाशक्त्या गुरूक्तितः ॥ ६१६ ॥ एतत्तत्त्वं समाख्यातं किमन्यच्छ्रोतुमिच्छथ ॥ ६१७ ॥

इति श्रीमहामायामहाकालानुमते मेरुतन्त्रे शिवप्रणीते
दीक्षाप्रकाशस्तृतीयः ॥ ३ ॥

---

संज्ञया प्रार्थिता देवी मुनिभिः श्रोतुकामिभिः ॥ तदिष्टसिद्धये तत्र देवं सैवं व्यजिज्ञपत् ॥१॥ देव्युवाच ॥ श्रौतस्मार्तरता एते पृच्छन्ति मुनयः शिव ॥ एतेषां संशयं छिन्धि त्वदृतेन्यः पुमान्न हि ॥२॥ ईश्वर उवाच ॥ पृच्छन्तु ऋषयस्तावद्देवा अपि मनोगतम् ॥ यावत्कालः समायाति जलन्धरवधस्य तु ॥ ३ ॥ मुनय ऊचुः ॥ अग्निः क्व कच देवाश्च हूयन्तेग्नौ सुराः कथम् ॥ तत्प्राप्नुवन्ति तद्भेदा भिन्नाः कस्माद्वदस्व नः ॥ ४ ॥ ईश्वर उवाच ॥ न स्वर्गे न च तीर्थेषु नौषधीषु न भेषु च ॥ ऋषयो देवताः सन्ति मन्त्रा एव तु दे-वताः ॥ ५॥ साधकानां फलं दातुं तत्तद्रूपं धृतं सुरैः ॥ मुख्यं स्वरूपं तेषां तु मन्त्रा एव न चेतरत् ॥ ६ ॥ संस्कृताः सात्त्विका मन्त्राः परत्रेह च शर्म्मदाः ॥ जन्मान्तरे भवेयुश्च बीजरूपा न संशयः ॥ ७ ॥ तत्रापि वैदिका मन्त्राः सुवर्णाः परिकीर्तिताः ॥ न दुर्गतिमवाप्नोति तेषां संसेवनान्नरः ॥ ॥ ८ ॥ द्विजत्वं प्राप्य ये लोके सेवन्ते तान्त्रिकान्मनून् ॥ त्यक्त्वा सुवर्णं दुर्बुद्ध्या ग्राम्यवत्तारचारिणः ॥ ९ ॥ ताररूपास्तारकत्वान्मनवस्तान्त्रिका

अपि ॥ फलप्रदा इहामुत्र न सद्बीजा भवान्तरे ॥ १० ॥ किञ्चिद्राजससत्त्वा ये यातनान्ते पुनस्तु ते ॥ भवन्ति फलदा यद्वद्वटोदुम्बरपिप्पलाः ॥ ॥ ११ ॥ तामसाः प्राकृता मन्त्रा इह लोके महाफलाः ॥ न परत्र यथा द्राक्षाखर्ज्जूरपनसादयः ॥ १२ ॥ तन्मन्त्रैर्यद्धुतं वह्नौ कीदृग्दहति पावकः ॥ ग्रहश्चिनोति तच्छ्रेयो यथा नाड्योऽन्नजं रसम् ॥ १३ ॥ निर्दोषा तु यदा नाडी वहेदन्नरसं लघु ॥ देवयोग्यो ग्रहस्तद्वच्छ्रेयस्संवहते सुरः ॥ १४ ॥ सूर्य्यभात्त्रिषु भेष्वर्कनाड्यां श्रेयोभिवर्द्धते ॥ पोषयेद्दैविकान्मन्त्रानितरान्हन्ति वामवत् ॥ १५ ॥ ततस्त्रिभेषु सौरस्य नाडी बुद्धिविलासकृत् ॥ तस्मात्त्रिषु सितस्यापि वामानामपि पुष्टिदा ॥ १६ ॥ ततस्त्रिभेषु सौरस्य कुर्य्यान्मन्त्रे तु संशयम् ॥ चन्द्रस्य सर्वमन्त्राणां पुष्टिकृच्च ततस्त्रिषु ॥ १७ ॥ ततस्त्रिष्वारनाडी स्यात्फलानान्तु विनाशकृत् ॥ तस्मात्त्रिषु गुरोर्नाडी सत्वरं मन्त्रसिद्धिदा ॥ १८ ॥ राहुनाडी त्रिषु ततो न सत्यैह्यकरे नरे ॥ त्रिष्वतः केतुनाडी तु सद्भूते मन्त्रदेवकृत् ॥ १९ ॥ तिथिवासरसंयोगे गुणशेषे हुताशनः ॥ कौ स्वर्गे कुतले तन्त्रे प्रत्यक्षाग्निस्वरूपकम् ॥ २० ॥ मारयेत्साधकं स्वर्गे हरते भूतले धनम् ॥ प्रत्यक्षाग्निः फलं धत्ते भूमौ वै विश्वरूपकः ॥ २१ ॥ वह्नेस्तु स्थापनं कुर्य्याद्वैदिकः कल्पमार्गतः ॥ तान्त्रिकः कुण्डसंस्कारानष्टादश समाचरेत् ॥ २२ ॥ मूलमन्त्रेण सम्पश्येत्प्रोक्षयेदस्त्रमन्त्रतः ॥ कुशैस्सन्ताडयेत्कुण्डमस्त्रमन्त्रं पठंस्त्रिधा ॥ २३ ॥ ततः कवचमन्त्रेण कुण्डस्याभ्युक्षणं मतम् ॥ अस्त्रमन्त्रेण खननं कुण्डस्याङ्गुलमात्रतः ॥२४॥ अङ्गुष्ठानामिकाभ्यां तां मृदमस्त्रेण चोद्धरेत् ॥ पुनः शुद्धमृदा तं च पूरयेद्धृदयाणुना ॥ २५ ॥ समीकुर्य्यात्ततोऽस्त्रेण सेचयेत्कवचेन तु ॥ काष्ठादिना कुट्टयेत्तन्मन्त्रेण स्यात्तथा दृढम् ॥ २६ ॥ कुशैस्सम्मार्ज्जयेत्कुण्डं ततस्तु कवचाणुना ॥ विलेपनं गोमयाद्यैः कवचेनैव कारयेत् ॥ २७ ॥ कवचे नाभिसूर्य्येन्दुकलाः कुण्डे विचिन्तयेत् ॥ त्रिसूत्रीकृतसूत्रेण वेष्टयेत्प्रतिमेखलम् ॥ २८ ॥ त्रिवारं वर्म्ममन्त्रेण कुण्डपूजां समा-

चरेत् ॥ तारश्चामुककुण्डाय आसनाय नमस्त्विति ॥ २९॥ एषोर्घ्यं इत्यागृहैश्च सकलं पूजनं चरेत् ॥ नाभेश्च मेखलानां च कुर्य्यादेवं प्रपूजनम् ॥ ॥ ३० ॥ सञ्चिन्तयेत्ततोऽस्त्रेण तत्कुण्डं वज्रवद् दृढम् ॥ वह्नेर्ज्वालानिरासाय हृन्मन्त्रेण कुशैस्ततः ॥ ३१ ॥ कुण्डस्य तु चतुर्दिक्षु कुर्य्यान्मार्गचतुष्टयम्॥ अच्छिन्नाग्रैः कुशैरस्त्रमन्त्रितैः कुण्डभित्तिषु ॥ ३२ ॥ भूतप्रेतादिदुष्टानामस्त्रादीनां समाचरेत् ॥ उच्चानन इमे प्रोक्ताः संस्कारा धृतिसम्मिताः ॥ ॥ ३३ ॥ भवेदनेन विधिना कुण्डस्याप्यक्षपाटनम् ॥ वामहोमे तु संस्कारा आद्याश्चत्वार एव हि ॥ ३४॥ त्र्यस्रात्र्यस्रा भवेद्रेखा प्रागुदक् च हृदाणुना ॥ स्मृताश्च प्राङ्मुखाग्राणां देवा विष्ण्वीशवासवाः ॥ ३५ ॥ उदङ्मुखाग्ररेखाणां ब्रह्मसूर्य्येन्दवः क्रमात्!! विलिखेद्दर्भकाण्डेन वाममार्गेस्त्रमन्त्रतः ॥ ३६॥ त्रिकोणे परिषट्कोणंत्रिकोणद्वितयस्य तु ॥ विष्ण्वीशवासवादीनां षण्णां तत्र तु पूजनम् ॥ ३७ ॥ वाममार्गे त्विष्टदेव्यास्त्रिकोणे पूजनं भवेत् ॥ सम्प्रोक्ष्य प्रणवेनाथ योगपीठं समर्चयेत् ॥ ३८ ॥ तद्विधिं सम्प्रवक्ष्यामि मण्डलं चिन्तयेत्तले ॥ कालाग्निरुद्रं तस्योर्ध्वं शक्तियुक्तं विचिन्तयेत् ॥ ३९ ॥ तदूर्ध्वं चिन्तयेत्कूर्म्मं तस्य पृष्ठे वसुन्धराम् ॥ श्वेतद्वीपं तत्र चिन्त्यं सुधासिन्धुसुवेष्टितम् ॥ ४० ॥ मन्दारान्पारिजातांश्च सन्तानान्हरिचन्दनान् ॥ कल्पवृक्षांश्च तत्रैव चिंतयेत्पूजयेदपि ॥ ४१ ॥ एतादृशगृहे चिन्त्यं रम्यं मणिमयं गृहम् ॥ स्वर्णपीठन्तु तन्मध्ये तस्य पादान्विचिन्तयेत् ॥ ४२ ॥ पुरुषार्थास्तु धर्म्मादीन्धर्मो ज्ञानं विरागता ॥ ऐश्वर्य्यमपि चाङ्गानि पीठस्योक्तानि तत्र तु ॥ ४३ ॥ मध्ये विचिंतयेत्पद्ममानन्दमयकन्दकम् ॥ संविन्नालं च तस्योक्ता विकारमयकेसराः ॥ ४४ ॥ प्रकृत्यात्मकपत्राणि पञ्चाशद्वर्णकर्णिका ॥ सूर्य्यस्येन्दोः पावकस्य मण्डलत्रितयं ततः ॥ ४५ ॥ ततः पूर्वादिकाष्ठासु सत्त्वं रजस्तमस्ततः ॥ अन्तरात्मयुतश्चात्मा परमात्मा ततः परम् ॥ ४६ ॥ मायातत्त्वेथ ज्ञानात्मा कलातत्त्वे प्रतिष्ठितः ॥ विद्या-




तत्त्वं परं तत्त्वं योगपीठमितीरितम् ॥ ४७ ॥ स्वाग्रादिप्रादक्षिण्येन तत्पद्म केसरेषु तु ॥ मध्यांतं पूजयेद्देता जयाञ्च विजयां तथा ॥ ४८ ॥ अजिताख्यां चापराञ्च जितां नित्यां विलासिनीम् ॥ दोग्ध्रीमघोराञ्च तथा मङ्गलामथ तत्र तु ॥ ४९ ॥ ह्रींसर्वशक्तिकमलासनाय नम उच्यते ॥ दत्त्वा पुष्पांजलिं कुण्डे पूजयेद्भुवनेश्वरीम् ॥ ५० ॥ आवाहनादिपरमीकरणांतञ्च पूजयेत् ॥ कामोन्मत्तां शिवां तत्र देवीमृतुमतीं तथा ॥ ५१ ॥ गाणेशशैवशाक्तेषु ध्याये-त्सम्पूजयेदिति ॥ वैष्णवे च तथा सौरे लक्ष्मीमृतुमतीं स्मरेत् ॥ ५२ ॥ नारायणस्य संयोगाज्जातमग्निं विचिंतयेत् ॥ आरण्यं विप्रगेहाद्वा दद्यादग्निं कुमारिका ॥ ५३ ॥ सुवासिनी वामहस्तात्कृतशौचा समाहरेत् ॥ पात्रांतरे चापिहिते ताम्रपात्रादिके शुभे ॥ ५४ ॥ अग्निप्रणयनं कुर्य्याच्छरावेणथा नूतने ॥ दद्यादस्त्रेण पात्रेग्निं कवचेन विधाय च ॥ ५५ ॥ जीर्णे शरावे कापाले भिन्नपात्रे तथोल्मुके ॥ नाग्निप्रणयनं कुर्य्याद्व्याधिहानिभयावहम् ॥ ॥ ५६ ॥ क्रव्यादांशञ्च नैर्ऋत्ये त्यजेदस्त्रेण वह्नितः ॥ देवांशं मूलमन्त्रेण स्थापये-द्यतः सुधीः ॥ ५७ ॥ पश्चात्तमग्निं संस्कारैः संस्कुर्य्याद्वीक्षणा-दिभिः ॥ प्रदीपकलिकाकारं तेज आवाहयेत्ततः ॥ ५८ ॥ ऐक्यं चाथ

स्वेष्टदेववह्निभ्यां पार्थिवस्य च ॥ स्मृत्वाग्निबीजन्तेनाथ चैतन्यं योजये ततः ॥ ५९ ॥ ओङ्कारेणाभिमन्त्र्याथ धेनुमुद्रामृतीकृतम् ॥ संरक्ष्य च शरेणाथ कवचेनावगुण्ठयेत् ॥ ६० ॥ ततः सम्पूज्य कुण्डस्य भ्रामयेत्रिः प्रदक्षिणम् ॥ प्रणवेन ततः स्वस्य संमुखं स्वीयकुण्डले ॥ ६१ ॥ देव्या योनौ तत्र जानन्स्पृष्टभूमिश्च देशिकः ॥ शिवबीजमिति ज्ञात्वा निक्षिपेदाशुशुक्षणिम् ॥ ६२ ॥ देवदेव्योराचमनं मैथुनान्ते धिया चरेत् ॥ चिंत्पिङ्गल हनहन पचपच दहदह ॥ ६३ ॥ सर्वं ज्ञापय स्वाहेति तारादिर्जिनवर्णकः ॥ अमुं मनुं प्रभाष्यैव कृशानुं ज्वालयेत्ततः ॥ ६४ ॥ अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ॥ सुवर्णवर्णममलं समिद्धं सर्वतोमुखम् ॥ ६५ ॥ अनेन ज्वलितं मन्त्रेणोपतिष्ठेद्धुताशनम् ॥ मुखेनव धमेदग्निम्मुखादेष व्यजायत ॥ ॥ ६६ ॥ कुशैः पलाशादिपर्णैर्नापवित्रेण केनचित् ॥ ततः सुविन्यसेज्जिह्वा देहे मन्त्रैर्विभावसोः ॥ ६७ ॥ भाललिङ्गोरुमूर्द्धास्यनासानेत्रेषु च क्रमात् ॥ सर्वाङ्गेषु च जिह्वास्ता वक्ष्यन्ते त्रिविधात्मिकाः ॥ ६८ ॥ हिरण्या कनका रक्ता कृष्णा चैव तु सुप्रभा ॥ बहुरूपा चातिरक्ता जिह्वाः सप्तेति सात्त्विकाः ॥ ६९ ॥ अनलादिसबिन्द्वन्तयादिसान्ताक्षरान्विताः ॥ मन्त्री प्रविन्यसेद्भूयो वह्नेरङ्गानि वै क्रमात् ॥ ७० ॥ सहस्रार्चिस्स्वस्तिपूर्ण उत्तिष्ठपुरुषस्तथा ॥ धूमव्यापी सप्तजिह्वो धनुर्धर इतीरिताः ॥ ७१ ॥ न्यसेत्प्रदक्षिणे देहे वह्निमूर्त्यष्टकं क्रमात् ॥ मूर्द्धास्यपार्श्वकट्यंघ्रिकटिपार्श्वांसकेषु च ॥ ७२ ॥ प्रणवादिनमोन्तास्तु अग्नेयपदपूर्वकाः ॥ जातवेदास्सप्तजिह्वो हव्यवाहस्तृतीयकः ॥ ७३ ॥ अश्वोदरजवैश्वानराख्यकोमारतेजसः ॥ विश्वमुखो देवमुखो मूर्त्तयोष्टौ प्रकीर्त्तिताः ॥ ७४ ॥ प्रदक्षिणक्रमेणैव सञ्चिन्त्य च ततो जलैः ॥ मेखलोपरिसंशुद्धैः पुनर्दर्भचतुष्टयैः ॥ ७५ ॥ प्रागग्रैरुदग-

---

१ चित्पिङ्गल हनहन पचपच दहदह सर्वं ज्ञापय स्वाहा अयं चतुर्विंशत्यक्षरोऽग्निमन्त्रः । नालमेखलयोरित्यपि पाठः ।

ग्रैश्च हित्वा पूर्वाः परिस्तरेत् ॥ एकमेखलके कुण्डे मेखलाधः परिस्तरेत ॥ ॥ ७६ ॥ द्विमेखले द्वितीयायां मध्यमायां त्रिमेखले ॥ स्थण्डिले सिकतानां तु बाह्यभूमौ परिस्तरेत् ॥ ७७ ॥ आत्ममेखलयोर्मध्ये परिधिस्थापनस्य च ॥ रन्ध्रं कुर्य्यात्तथा विद्वान्मध्यमामेखलोपरि ॥ ७८ ॥ पलाशकाश्मरी बिल्वविकङ्कतसमुद्भवान् ॥ एकवृक्षोद्भवानार्द्रान्परिधीन्बाहुमात्रकान् ॥ ॥ ७९ ॥ प्राणानायम्य विधिवत्परिस्तार्य्य कुशान्तरैः ॥ स्वगृह्योक्तविधानेन वायुदेशाच्च पूर्वतः ॥ ८० ॥ स्रुक्स्रुवौ च प्रणीता च प्रोक्षणीपात्रयुग्मकम् ॥ आज्यस्थालीञ्च परिधींस्तथैव कुशमुष्टयः ॥ ८१ ॥ अधोमुखानि पात्राणि होमद्रव्यं बलिं तथा ॥ गन्धपुष्पाक्षतादीनि सर्वाण्यासादयेत्ततः ॥ ८२ ॥ तान्यभ्युक्ष्य पवित्रेण चासनानि विधाय च ॥ प्रोक्षणीपात्रयुगलं परिपूर्य्य शुभाम्बुना ॥ ८३ ॥ दत्त्वा तत्र पवित्रांश्च परिपूर्य्य निधापयेत् ॥ दिश्युत्तरस्यां तत्पात्रं प्रणीतेत्युच्यते बुधैः ॥ ८४ ॥ ततः किञ्चित्प्रणीताम्बु प्रोक्षण्याधाय तज्जलैः ॥ यज्ञसाधनसम्भारान् प्रोक्षयेन्मूलमन्त्रतः ॥ ८५ ॥ वृणुयाद्ब्राह्मणं शाक्तं देवतामन्त्रदीक्षितम् ॥ कुण्डस्य दक्षिणे भागे वेशयेत्तं कुशासने ॥ ८६ ॥ अमुकामुकगोत्रोहममुकामुकगोत्रिणम् ॥ दीक्षाङ्गभूतहोमेस्मिन्ब्राह्मणं त्वां वृणे त्विति ॥ ८७ ॥ वस्त्रालङ्कारादिकेन वृत्वा तं परिपूजयेत् ॥ कुर्य्यात्कुशबटुं चापि लभ्यते ब्राह्मणो न चेत् ॥ ८८ ॥ कुण्डमध्ये तु षट्कोणे वर्णितं स्वर्णकर्णिकम् ॥ नानाकेशरसंयुक्तं चतुर्द्वारसमावृतम् ॥ ८९ ॥ चिन्तयेदष्टदलकं चतुरस्रतयावृतम् ॥ पूजापीठन्तु तद्वह्नेस्तत्र मण्डलकादिना ॥ ९० ॥ ज्ञानात्मानं योगपीठं सम्पूज्याष्टदलेषु च ॥ प्रादक्षिण्येन मध्यान्तं पीतां श्वेतां तथारुणाम् ॥ ९१ ॥ कृष्णां धूम्रां च तीव्रां च पूजयेद्विस्फुलिङ्गिनीम् ॥ रुचिरां ज्वालिनीञ्चेति सर्वपीठम्प्रपूजयेत् ॥ ९२ ॥ सर्वशक्तिकमलासनाय हृद्द्वादशाक्षरः ॥ समस्तपीठपूजायां वह्निमन्त्र उदाहृतः ॥ ॥ ९३ ॥ ततो हुताशनन्ध्यायेद्वरस्वास्तिकशक्तितः ॥ अभयेन च संयुक्तै-

भुजैः सम्यग्विराजितम् ॥ ९४ ॥ सिन्दूरवर्णं पद्मस्थं स्वर्णालङ्कारभूषितम् ॥ त्रिनेत्रञ्च जटामौलिम्पीतवस्त्रारुणस्रजम् ॥ ९५ ॥ ध्यात्वैवं मनुनानेन पूज-

---

चक्रे त्रिकोणं वह्नियन्त्रं लिखितमस्ति पुनरग्निपूजासमये न्यासानपि कुर्य्यात् स यथा । ॐ सहस्रार्चिषे अङ्गुष्ठाभ्यां नमः ॥ ॐस्वस्तिपूर्णाय तर्जनीभ्यां नमः ॥ ॐउत्तिष्ठपुरुषाय मध्यमाभ्यां नमः ॥ ॐधूमव्यापिने अनामिकाभ्यां नमः ॥ ॐसप्तजिह्वाय कनिष्ठिकाभ्यां नमः ॥ ॐ धनुर्धराय करतलकरपृष्ठाभ्यां नमः ॥ इति करन्यासः ॥ ॐसहस्रार्चिषे हृदयाय नमः ॥ ॐ स्वस्तिपूर्णाय शिरसे स्वाहा ॥ ॐ उत्तिष्ठपुरुषाय शिखायै वषट् ॥ ॐ धूमव्यापिने कवचाय हुम् ॥ ॐ धनुर्धराय अस्त्राय फट् ॥ इति हृदयादिन्यासः ॥ एतन्न्यासद्वयकरणान्ते यन्त्रपूजनम् ॥

**बं ब्रह्मणे नमः पं पद्माय नमः ।**

इं इन्द्राय नमः
वं वज्राय नमः

ॐ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधयस्वा ॥ हिं हिरण्यायै नमः
ज्वां ज्वालिन्यै नमः

**अं अनन्ताय नमः चं चक्राय नमः ॥**

येदुपचारकैः ॥ वैश्वानर जातवेद इहावह लोहिताक्ष ॥ ९६ ॥ सर्वकर्म्माणि साधय स्वाहान्तः प्रणवादितः ॥ सप्तविंशत्यक्षरोयं मन्त्रः स्याद्वह्निपूजने ॥ ॥ ९७ ॥ ततः षट्कोणमध्ये च जिह्वाध्यानं च पूजनम् ॥ जिह्वाज्वालारुचः सर्वा वराभयकरास्तथा ॥ ९८ ॥ ऐश्यां हिरण्या स्वर्णाभा शान्तिपौष्टिककर्म्मणि ॥ वैडूर्य्यवर्णा कनका प्राच्यां स्तम्भनकार्य्यवृत् ॥ ॥ ९९ ॥ विद्वेषे तरुणादित्यनिभा रक्ताग्निकोणके ॥ कृष्णाञ्जनचयप्रख्या नैर्ऋत्यां मारणक्षमा ॥ १०० ॥ सुप्रभा पद्मरागाभा वारुण्यां धनदायिका ॥ अतिरक्ता जयाभासा वश्ये वायुदिशङ्गता ॥ १०१ ॥ बहुरूपा तु षट्कोणमध्ये षड्वर्णसंयुता ॥ अनेककार्य्यसंसिद्धिर्नाशकर्त्री च सा मता ॥ १०२॥ यथाकार्य्यं तथा जिह्वा दृश्यते चेत्स्वदिग्गता ॥ज्वालारूपा तथा सिद्धिर्विपरीते विपर्य्ययः ॥ १०३ ॥ प्रभा दीप्तिः प्रकाशा च मरीचिस्तापिनी तथा॥कराला लेलिहा चेति जिह्वा वैष्णवकर्म्मणि ॥ १०४ ॥ ईशप्राग्वह्निनैर्ऋत्यपश्चाद्वायव्यमध्यतः ॥संस्थिताः सकला जिह्वा वरदाभयसत्कराः ॥१०५॥ एवं पूजां विधायाशु देवाग्रे चापि दिक्षु च ॥ पूजयेच्च षडङ्गानि पत्रेष्वावृत्तिदेवताः ॥ १०६ ॥ इन्द्रादीन्सायुधान्पश्चात्सम्पूर्णाग्निं पुनर्यजेत् ॥ ततश्चाधोमुखौ कृत्वास्रुक्स्रुवौ च प्रतापयेत् ॥ १०७ ॥ कुशाग्रैस्तु तयोरग्रं मध्यं मध्यैश्च-मार्ज्जयेत् ॥ मले मूलैस्त्रिधा चैव मार्ज्जयित्वा प्रतापयेत् ॥ १०८ ॥ धृत्वा तौ वामहस्तेन प्रोक्षयेत्प्रोक्षणीजलैः ॥ दक्षिणेन कराग्रेण पुनः सन्तापयेच्चतौ ॥ १०९ ॥ कुशान् क्षिप्त्वा ततो वह्नौ स्वदक्षे तु कुशास्तरे ॥ संस्थाप्य स्रुक्[illegible] पश्चाद्धृतसंस्कारमाचरेत् ॥ ११० ॥ समादाय घृतस्थालीं मन्त्रेण से[illegible] ततः ॥ घृतं तत्र समापूर्य्य वीक्षणादिसुसंस्कृतम् ॥ १११ ॥ वायव्ये बाह्यतोङ्गारान्कृत्वा तेषु हृदा न्यसेत् ॥ तापनं तु समुद्दिष्टं कुशद्वयमत क्षिपेत् ॥ ११२ ॥ अभिद्योतनमेतत्स्यादुद्योतनमथोच्यते ॥ कुशं प्रज्वलितं चोह्य दर्शयेत्तं हृदा क्षिपेत् ॥ ११३ ॥ वह्नावुद्वास्य च घृतमङ्गाराग्निषु निक्षिपेत् ॥ अपसंस्पृश्य मन्त्रज्ञः कुर्य्यादुत्प्लवनं ततः ॥ ११४ ॥ अस्त्रमन्त्रं जपेन्मंत्री कुशौ प्रादेशमात्रकौ ॥ अङ्गुष्ठानामिकाभ्यां च गृहीत्वा घृतमुत्प्लु-वेत् ॥ ११५ ॥ ततो दृढं कुशाभ्यान्तु स्वाभिमुख्येन सम्प्लवेत्॥ घृतं तत्स्या-

सम्प्लवनं षट् संस्कारा इतीरिताः॥ ११६॥उत्तमं गोघृतं प्रोक्तं मध्यमं महिषी-भवम् ॥ अधमं छागलीजातं निषिद्धं त्वेडकादिजम् ॥ ११७ ॥ क्रीतं यदापणे चाज्यं स्वादु चेद्धव्यवच्च तत् ॥ कुशद्वयं घृते न्यस्य ततः प्रादेशसम्मितम् ॥ ११८ ॥ ग्रन्थिं कृत्वा कुशाग्रौ द्वौ शुक्लकृष्णौ विचिन्तयेत् ॥ पक्षौ वाम इडां दक्षे पिङ्गलां मध्यतस्ततः ॥ ११९ ॥ सुषुम्णां संस्मरेन्मन्त्री ततो होमं समाचरेत् ॥ दक्षभागात्स्रुवेणाज्यं प्रगृह्णीयाद्धृदाणुना ॥ १२० ॥ दक्षे नेत्रे हुताशस्याग्नये स्वाहेति होमयेत् ॥ गृहीत्वाज्यं वामभागात्तद्वद्वामेऽग्निलोचने ॥ १२१ ॥ हुनेत्सोमाय स्वाहेति त्यागः सर्वत्रतो मम ॥ हृन्मंत्रेण गृहीत्वाज्यं मध्यतो मध्यलोचने ॥१२२॥ हुनेत्तस्याग्नीषोमाभ्यां स्वाहेति च तृतीयिकाम् ॥ दक्षभागात्पुनस्त्वाज्यं हृन्मंत्रेण समाहरेत् ॥ १२३ ॥ अग्निवक्त्रेऽग्नये स्विष्टकृते स्वाहेति होमयेत् ॥ सताराभिर्व्याहृतिभिराज्येन जुहुयात्पुनः ॥ १२४ ॥ जुहुयादग्निमंत्रेण त्रिवारं देशिकोत्तमः ॥ गर्भाधानादिकां वह्नेस्समुद्वाहावसानिकाः ॥ १२५ ॥ शुभे कर्म्मणि कर्त्तव्या आज्याहुत्यष्टकैः प्रियाः ॥ प्रणवं पूर्वमुच्चार्य्य कर्म्मनाम समुच्चरेत् ॥ १२६ ॥ सम्पादयामि स्वाहेति सर्वकर्म्मस्वयं विधिः ॥ गर्भाधानं पुंसवनं सीमंतं जातकर्म्म च ॥ १२७ ॥ निष्कासनञ्च कथितं प्राशनञ्च तथा बुधैः॥चौलोपनयनं वह्नेर्महानामव्रतं तथा॥१२८॥महाव्रतञ्चोपनिषद्व्रतङ्गोदानमेव च ॥ समावर्त्तसमुद्वाहौ शाक्ते वाग्भवपूर्वकाः॥ १२९ ॥ ततश्च वह्नेः पितरौ देवदेव्यादिकौ तथा ॥ पूजयित्वा विसृज्याथ मूलाग्रेषु घृतप्लुताः ॥ १३० ॥ समिधोऽष्टौ क्षिपेत्पञ्च वह्नावथ च पूर्ववत् ॥ सबीजस्वस्वनाम्ना वै चैकैकामाहुतिं हुनेत् ॥ १३१ ॥ ततश्चाङ्गानि जुहुयाद्वह्नेर्मूर्त्यष्टकं तथा ॥१३२॥ इन्द्रादिलोकपालांश्च आयुधानि ततः परम् ॥ पूर्वो-

१ ॐ सहस्रार्चिषे, स्वाहा ॐ स्वस्तिपूर्णाय स्वाहा, ॐ उत्तिष्ठपुरुषाय स्वाहा, ॐ धूमव्यापिने स्वाहा, ॐ सप्तजिह्वाय स्वाहा, ॐ धनुर्धराय स्वाहा, ॐ अग्नये जातवेदसे स्वाहा, ॐ अग्नये सप्तजिह्वाय स्वाहा, ॐ अग्नये हव्यवाहाय स्वाहा, ॐ अग्नये अश्वोदरजाय स्वाहा, ॐ अग्नये वैश्वानराय स्वाहा, ॐ अग्नये कौमारतेजसे स्वाहा, ॐ अग्नये विश्वमुखाय स्वाहा, ॐ अग्नये देवमुखाय स्वाहा ॥ २ इन्द्रादीनां तदायुधानां च चक्रभूपुरे मन्त्रा लिखिताः ॥

केनाग्निमन्त्रेण वौषडन्तेन वै ततः ॥ १३३ ॥ ताराद्यैर्दशभिर्भेदैः पूर्वपूर्वस-मन्वितैः ॥ मनुना गाणपत्येन हुनेत्पूर्वं दशाहुतीः ॥ १३४ ॥ जुहुयाच्च चतुर्वारं समस्तेनैव तेन तु ॥ संपूज्य देवतापीठं वह्नौ सम्यक् ततो गुरुः ॥ ॥ १३५ ॥ अग्निरूपधरां तत्र पूजयेदिष्टदेवताम् ॥ आज्येन चाग्निमनुना पञ्चविंशतिसङ्ख्यकम् ॥ १३६ ॥ हुनेन्मन्त्री चाग्निमुखे वक्त्रैकीकरणं त्वि-दम् ॥ आत्माग्निदेवतानां च चिन्तयन्नैक्यमात्मवित् ॥ १३७ ॥ एकाद-शाथ मूलेन हुनेदाज्येन चाहुतीः ॥ नाडीसन्धानमेतद्धि प्रोक्तं देशिकसत्तमैः ॥ १३८ ॥ अङ्गप्रभृत्यावृत्तीनामेकैकामाहुतिं हुनेत् ॥ पूर्वादिदिक्षु सर्वासु-कुण्डेषु च यथाविधि ॥ १३९ ॥ गुरुर्वह्निं प्रविहरेत्संस्कृतं तूक्तवर्त्मना ॥ सर्वर्त्विजश्चन्दनाद्यैस्सम्पूज्य प्रोक्तदेवताम् ॥ १४० ॥ सर्वावरणसंयुक्तां मू-लेन जुहुयुस्ततः ॥ पञ्चविंशतिधा सर्पिस्संयुतेन प्रियान्धसा ॥ १४१ ॥ स्रुवेणाज्यं समित्पाण्या स्रुचा शेषं करेण तु ॥ तत्र दिव्येन होतव्यं तीर्थेनार्षेण वा तथा ॥ १४२ ॥ यो नार्चिषि जुहोत्यग्नौ व्यङ्गाग्नौ-चैव मानवः ॥ मन्दाग्न्यामयसंयुक्तो दरिद्रश्चापि जायते ॥ १४३ ॥ दद्याद्बलिं गन्धपुष्पधूपपूर्वकमादरात् ॥ नक्षत्राणां च वाराणां राशीनां च पृथक् पृथक् ॥ १४४ ॥ देवताभ्यः पदं प्रोक्त्वा दिवा नक्तं वदेत्ततः ॥ वारेभ्यश्चाथ सर्वेभ्यो भूतेभ्यश्च नमो वदेत्॥ १४५॥इत्येष तान्त्रिको होमविधिः प्रोक्तो मया सुराः ॥ पृच्छन्त्वन्यद् गूढमपि वक्ष्यामि शरणागतान् ॥१४६॥

इति श्रीमहामायामहाकालानुमते मेरुतन्त्रे शिवप्रणीते होमविधि प्रकाशश्चतुर्थः ॥ ४ ॥

---

१ ॐ ॐ स्वाहा १ ॐ श्रींस्वाहा २ ॐ श्रींह्रीं स्वाहा ३ ॐ श्रींह्रींक्रीं स्वाहा ४ ॐ श्रींह्रीं क्रीं ग्लौं स्वाहा ५ ॐ श्रींह्रींक्रींग्लौंगं स्वाहा ६ ॐ श्रींह्रींक्रींग्लौंगंगणपतये स्वाहा ७ ॐ श्रींह्रीं क्रींग्लौंगं गणपतयेवरवरद स्वाहा ८ ॐ श्रींह्रींक्रींग्लौंगंगणपतये वरवरद सर्वजनं मे वशं स्वाहा ९ ॐ श्रींह्रींक्रींग्लौंगं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा १० ॥ २ पुनः समस्तेन गणेशम-न्त्रेण चतुरो वाराञ्जुहुयात् ॥ ३ अग्नौ देवपीठभावनया देवतामग्निरूपं विज्ञाय मानसीं पूजां विद-धीत ॥ ४ पूर्वमुक्तोऽग्निमन्त्रः ॐ विश्वानर जातवेद इहावहेत्यादि ॥

श्रीदेव्युवाच ॥ धनिनां मध्यमानां च दरिद्राणां हासिनाम्॥परदेशस्थितानां च कारागेहादिवासिनाम् ॥ १ ॥ कायादौ व्याहतानां च युक्तानां सतकादिभिः ॥ कार्य्याङ्गवस्त्वभावे वा वामिकानां कृपानिधे ॥ २ ॥ षडाम्नायरहस्येन कथं नित्याह्निकं भवेत् ॥ लोकलज्जावतां चापि दिनचर्य्यां वद प्रभो ॥३॥ ईश्वर उवाच ॥ महाकालेन यत्प्रोक्तं यन्महामायया श्रुतम् ॥ रहस्यातिरहस्यं यत्सर्वतन्त्रेषु गोपितम् ॥ ४ ॥ आम्नायानां रहस्यं यदाह्निकं प्रोच्यते मया ॥ शृण्वन्तु सर्वे भो देवाः साधकानां प्रसिद्धिदम् ॥ ५ ॥ तत्र नित्यं त्रिधा प्रोक्तं गुणत्रयविभेदतः ॥ अधिकारिविभेदेन तदपि त्रिविधं भवेत् ॥ ६ ॥ शुद्धं मिश्रं च गलितं तत्तथत्र फलप्रदम् ॥ अकृते प्रत्यवायो न गलिते सफलञ्जनैः ॥ ७ ॥ अहङ्कारविहीनं चेन्मानसज्ज्ञानपूर्वकम् ॥ स्वस्थचित्तेन यतिना कृतं तच्छुद्धमिष्यते ॥ ८ ॥ तादृशं चेद् गृहस्थेन निर्द्रव्येण च वा कृतम् ॥ रुग्णेन पथिकेनापि कारागृहगतेन वा ॥ ९ ॥ भक्तितो वापि तन्मिश्रं बाह्यपूजाधिकारतः ॥ शीतादिभीत्या वा वित्तसंक्षयादन्यकार्य्यतः ॥ १० ॥ स्त्र्यादेर्नियोगाद्गलितं गृहिणो मानसम्मतम् ॥ बाह्यपूजादिकं यच्च एकान्ते नियमेन च ॥ ११ ॥ भक्त्या कृतं गृहस्थेन तच्छुद्धं राजसम्मतम् ॥ पूजार्थं यद्याचयित्वा श्रद्धाभक्तिं विधाय च ॥ १२ ॥ लोकभीत्या देवभीत्या यत्तदायासमिश्रितम् ॥ प्रतारणार्थं लोकानां याचितं देवनामतः ॥ १३ ॥ द्रव्यं कृतं तदुद्देशो गलितं तत्तु राजसम् ॥ वाममार्गं समाश्रित्य कौलं धर्म्मं विचार्य्य च ॥ १४ ॥ अन्यधर्म्मस्य चाद्वेषात्कृतं शुद्धं तु तामसम् ॥ कृतं यत्कामतः कर्म्म चैहिकं पारलौकिकम् ॥ १५ ॥ वाममार्गं समाश्रित्य मिश्रितं तत्तु तामसम् ॥ जिह्वालोभेन यत्पानं भक्षणं कामतो रतम् ॥ १६ ॥ अथवा मारणाद्यर्थं गलितं तत्तु तामसम् ॥ शुद्धसत्त्वेन मोक्षः स्यात्स्वर्गः स्यान्मिश्रसत्त्वतः ॥ १७ ॥ सिद्धिर्गलितसत्त्वात्स्यादाहिकी च मनुष्यता ॥ स्वर्गः स्याद्राजसाच्छुद्धात्कामः स्यान्मिश्रराजसात् ॥ ॥ १८ ॥ गलिताद्राजसात्तिर्य्यग्योनावपि सुखं भवेत् ॥सात्त्विकात्तामसाद्देवयोनित्वं प्राप्नुयान्नरः ॥ १९ ॥ मिश्रतामसतो दुःखी नारकी चान्यतामसात्॥

कर्म पञ्चविधं प्रोक्तं पञ्चधा मुक्तिदायकम् ॥ २० ॥ प्रसर्पणमुपादानमि- ज्याध्यायस्तथा युतिः ॥ सम्मार्ज्जनोपलेपादिसंस्कारा देवमन्दिरे ॥ २१ ॥ भक्तार्ज्जवं सर्प्पणं स्यादेवमारोग्यकारकम् ॥ पूजासाधनसामग्र्या मेलनं भक्तसेवनम् ॥ २२ ॥ तत्प्रीतिः स्यादुपादानं देवतारूपदायकम् ॥ पीठपूर्वा- ङ्गपूर्वैश्च षोडशाद्युपचारकैः ॥ २३ ॥ मूर्त्तौ यन्त्रेथवा पूजा सेज्या स्यादि- ष्टकारिका ॥ तच्छास्त्राध्ययनं सम्यक्कृत्वा मन्त्रार्थभाजनम् ॥ २४ ॥ कृत्वा जपन्तु वाध्यायो देवसायुज्यकारकः ॥ गुरुदेवात्मकालानां सम्यगैक्यविभाव- नम् ॥ २५ ॥ संयोगो लिङ्गदेहस्य नाशकः कालयागकृत् ॥ निशायां पश्चिमे यामे स्मरेदिष्टां च देवताम् ॥ २६ ॥ उत्थाय दक्षिणाङ्गेन वामपादं न्यसेद्भुवि ॥ ततो गृहाद्बहिर्गत्वा कृत्वावश्यकमादरात् ॥ २७ ॥ रात्रिवासः परित्यज्य वाससी परिवीयं[१] च ॥ आचम्य शुद्धदेहः स्याद्देवतायोगमन्दिरे ॥ ॥ २८ ॥ निर्माल्यमपकृष्याथ दद्यात्पुष्पाञ्जलिन्तथा ॥ अर्घ्यपात्रे निवेद्याथ दद्याद्वै दन्तधावनम् ॥ २९ ॥ मुखप्रक्षालनं कृत्वा दद्यादाचमनीयकम् ॥ करस्य प्रोंछनायाथ दद्याद्वासोऽमलं शुभम् ॥ ३० ॥ ततस्तु मस्तके चिंत्यं सहस्रदलपद्मकम् ॥ कर्पूराभं स्मरेत्तत्र श्रीगुरुं निजरूपिणम् ॥ ३१ ॥ सुप्रसन्नं लसद्भूषामण्डितं श्वेतचंदनम् ॥ वराभयज्ञानमुद्रापुस्तकैर्व्यावृतैः करैः ॥ ३२ ॥ युक्तं श्वेताम्बरं शान्तं श्वेतपुष्पविभूषितम् ॥ वामाङ्कगतया शक्त्यालिङ्गितं रक्तवर्णया ॥ ३३ ॥ रक्तवस्त्राभरणया रक्तचन्दनमालया ॥ वामलीलाकमलयालिङ्गंत्या दक्षिणेन च ॥ ३४ ॥ ध्यायेदन्तर्मुखं शाक्तं योगिनं शिवरूपिणम् ॥ तत्पादपद्मयुगलच्युतपीयूषधारया ॥ ३५ ॥ अभिषिक्तं स्वस्य देहमेवं शिष्यो विचिन्तयेत् ॥ अर्चयेद्गन्धपुष्पाद्यैर्बाह्यस्थै- र्मानसैस्तु वा ॥ ३६ ॥ नामभिस्तस्य विविधैस्संसिद्धैर्गुरुकीर्त्तनैः ॥ प्रण- म्येत्थं हृन्मनुना भावयेत्तल्लयं हृदि ॥ ३७ ॥ ततस्तु मूलाधारादि ब्रह्मरंध्रान्तमुद्यताम् ॥ तेजोदण्डं सुषुम्णांतं सहस्रबिससन्निभम् ॥ ३८ ॥ तदा- त्मकं मूलमन्त्रं ध्यात्वा तत्तेजसावृतम् ॥ स्वशरीरं विचिंत्याथ प्राणायामत्र-

१ परिधाय चेत्यपि पाठः ।

यं चरेत् ॥ ३९ ॥ मूलमन्त्रेण मन्त्रस्य ऋष्यादिन्यासमाचरेत् ॥ अंगन्यासं विधायाऽथ हृदि देवं विचिन्तयेत् ॥ ४० ॥ त्रैलोक्यचैतन्यमयादिदेव श्रीशंकर त्वच्चरणाज्ञया च ॥ प्रातः समुत्थाय तव प्रियार्थं संसारयात्रामनुवर्त्तयिष्ये ॥ ॥ ४१ ॥ संसारयात्रामनुवर्त्तमानं त्वदाज्ञया शंकर देवदेव ॥ स्पर्द्धातिरस्कारकलिप्रमादभयानि मां माऽभि भवन्तु नाथ ॥ ४२ ॥ इति सम्प्रार्थ्य देवेशमाज्ञामादाय तस्य तु ॥ प्रार्थयित्वा धरां श्वासयुक्तं पादं निधापयेत् ॥ ४३ ॥ समुद्रमेखले देवि पर्वतस्तनमण्डले ॥ विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्वमे ॥ ४४ ॥ ततो गृहाद् बहिर्याम्यां नैर्ऋतीं वा दिशं व्रजेत् ॥ पदेपदे स्मरे-द्[1]स्त्रन्दूरे यायाद् द्विजालयात् ॥ ४५ ॥ अतीत्य बाणमात्रन्तु भुवं ग्रामाद्विलोक्य च ॥ ॥ कीटयोषादिरहितं शौचस्थानमिदम्पठेत् ॥ ४६ ॥ उत्तिष्ठन्त्वृषयो देवा गन्धर्वा यक्षराक्षसाः ॥ परितस्त्यज्यतां स्थानं विण्मूत्रोत्सर्ज्जनाय मे ॥ ४७ ॥ ॥ अनेन मनुना लोष्टानृणैरुद्धास्य देवताः ॥ कुर्य्यान्मलच्युतिं तत्र वाससा कं[2] प्रविश्य च ॥ ४८ ॥ तां दिशां च न पश्येत्तु शौचमुद्धृत्य वारिभिः ॥ एका लिङ्गे गुदे सप्त दश वामकरे तथा ॥ ४९ ॥ उभयोस्सप्त दातव्यास्तिस्रोऽङ्घ्र्[3]योश्चापि मृत्तिकाः ॥ मूत्रोत्सर्गे वामहस्ते लिङ्गे पञ्चैव मृत्तिकाः ॥ तिस्रः करद्वये चैका पादयोरथवा चरेत् ॥ ५० ॥ गन्धलेपक्षयकरं मनोग्लानिहरं परम् ॥ कुर्य्याद्द्वादश गण्डूषान्[4]पुरीषोत्सर्ज्जनान्तरे ॥ ५१ ॥ प्रक्षाल्याग्रे तु चरणावाचमेत्त्रिस्ततः परम् ॥ आम्रन्य[5]ग्रोधखादिरकरञ्ज[6]ककुभादिजम् ॥ ५२ ॥ कनीन्यग्रसमस्थूलं प्रमितं द्वादशाङ्गुलैः ॥ दन्तधावनकाष्ठं तु प्रोक्तं तन्त्रविचक्षणैः ॥ ५३ ॥ क्लीं[7]मुक्ता कामदेवाय सर्वजनप्रियाय च [illegible] नमोन्तस्तिथिवर्णोयं मन्त्रो दन्तविशोधने ॥ ५४ ॥ प्रक्षाल्य दन्त[illegible] च मूर्द्धदेशे पुरस्त्यजेत् ॥ वक्तुं मूलानुनो नित्यं लक्षयेत्सिद्धिहेतवे ॥ ॥ ५५ ॥ अथ पूजाहोमकर्म्मसिद्धये स्नानमुच्यते ॥ शङ्कुनास्त्रा[8]भिजप्तेन शुचिस्थानात्तु मृत्तिकाम् ॥ गृहीत्वास्त्रेण संसिच्य यायाज्जलनिकेतनम्

१ फट् इति मन्त्रम् । २ जलम् । ३ चरणयोः । ४ विष्ठात्यागे । ५ वटः । ६ अर्जुनवृक्षः । ७ क्लीं कामदेवाय सर्वप्रियाय नमः । ८ फट् ।

॥ ५६ ॥ तत्रादौ जलकूलं स्यात्क्षालयेदस्त्रवारिणा ॥ मृद्गं कृत्वा तटं तत्र चैकभागे विचक्षणः ॥५७॥ निधाय गोमयं दर्भास्तिलांश्चाप्यभिमन्त्रितान् ॥ मृत्तिकागोमयाभ्यांश्च कटचन्तं स्नानमाचरेत् ॥ ५८ ॥ बहिरुद्धृत्य तोयेन मलस्नानं ततः परम् ॥ विधाय वैदिकस्नानं तदङ्गं तर्प्पणं तथा ॥ ५९ ॥ ततस्तान्त्रिकस्नानस्य विधिरस्त्रेण मृत्तिकाम् ॥ समादायास्त्रमन्त्रेण मन्त्रयित्वा तृणादिकम् ॥ ६० ॥ शिखामन्त्रेणापहृत्य त्रिमूलेनाभिमन्त्रयेत् ॥ मूर्द्धादि-पादपर्य्यन्तं विलिप्य प्रणमेज्जलम् ॥ ६१ ॥ आधाराः सर्वभूतानां विष्णोर-तुलतेजसः ॥ तद्रूपाश्च ततो जातास्ता आपः प्रणमाम्यहम् ॥ ६२ ॥ सम्मु-खीकरणीं मुद्रां बद्ध्वा प्राणान्नियम्य च ॥ निमज्य तूष्णीमुत्थाय नाभिमात्रे जले नरः ॥ ६३ ॥ तान्त्रिकस्नानसङ्कल्पं मासोल्लेखादिपूर्वकम् ॥ कृत्वा यं मूलमन्त्रेण प्राणायामत्रयं चरेत् ॥ ६४ ॥ विन्यस्य च षडङ्गानि कल्पयेत्ती-र्थमग्रतः ॥ चतुरस्त्रे हस्तमात्रे तज्जले परिकल्पिते ॥ ६५ ॥ ब्रह्माण्डोदरती-र्थानि करैः स्पृष्टानि ते रवे ॥ तेन सत्येन देवेश तीर्थं देहि दिवाकर ॥६६॥ इति सूर्य्यं प्रार्थयित्वा क्रोमित्यङ्कुशमुद्रया ॥ भित्वार्कमण्डलं तस्मात्तीर्थान्या-वाहयेदिह ॥६७॥ गङ्गे च यमुने चैव गोदावरि सरस्वति॥नर्मदे सिन्धुकावेरि जलेऽस्मिन्सन्निधिं कुरु॥६८॥एवमुक्त्वा तु तीर्थानि तस्मिंस्तोये नियोजयेत् ॥ मूलमन्त्रेणाथ तीर्थशक्तिं तत्र समाह्वयेत् ॥ अर्कस्य मण्डलं ध्यात्वा तन्मन्त्रेण च पूजयेत् ॥ ६९ ॥ सर्वानन्दमयीमशेषदुरितध्वंसां मृगाङ्कप्रभां त्र्यक्षामूर्ध्व-करद्वयेन दधतीं पाशं शृणिं वामतः ॥ अन्तश्चामृतपूर्णहस्तकलशां मुक्ताक्षमा-लावतीं गङ्गासिन्धुसरिद्वरादिसहितां श्रीतीर्थशक्तिं भजे ॥ ७० ॥ अथ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः सर्वानन्दमये पदम् ॥ तीर्थशक्तिं तथा हिलियुगलं वह्निगे-हिनी ॥ ७१ ॥ द्वाविंशत्यक्षरः प्रोक्तस्तीर्थशक्तेर्महामनुः ॥ तज्जलं गाङ्गम-न्त्रेण मन्त्रयेदष्टवारकम् ॥ ७२ ॥ तांरो नमो भगवति ब्रूयादम्ब ततोऽम्बिके॥

१ वषण्मन्त्रेण । २ अङ्कुशः । ३ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः सर्वानन्दमये तीर्थशक्ते हिलि हिलि स्वाहा । ४ ॐ नमो भगवति अम्बे अम्बिके अम्बालिके महामालिनि एह्येहि भगवति अशेषती-र्थालवाले ह्रींश्रींशिवजटाधिरूढे गंगे गंगाम्बिके स्वाहा ।

अम्बालिके महामालिन्येह्येहि भगवत्यथ॥ ७३ ॥ अशेषतीर्थालवाले मायाश्रीबी-
जमुच्चरेत्॥ शिवजटाधिरूढेच गङ्गे गङ्गाम्बिके द्विठः॥ ७४ ॥ गङ्गामन्त्रोयमाख्या-
तस्त्रिपञ्चाशद्भिरक्षरैः भुवनेश्याः समालोड्यामृतीकृत्य सुधाणुना ॥ ७५ ॥
कवचेनावगुण्ठ्याथ संरक्ष्यास्त्रेण मन्त्रवित् ॥ मूलेन देवतां तत्र साङ्गां सावर-
णान्तथा॥ ७६ ॥ समावाह्य जले ध्यात्वा तत्पादद्वयनिर्गतम्॥ ध्यात्वा तीर्थं स्मरे-
न्मूलमन्त्रंस्नायाज्जले त्रिशः॥ ७७॥ हृदि देवं स्मरेत्पश्चात्सिञ्चेत्कं कुम्भमुद्रया॥
त्रिभिर्लोकैर्मूलमन्त्रैस्तारकं बीजपूर्वकैः ॥ ७८ ॥ सिसृक्षोर्निखिलं विश्वं मुहुः
शुक्रं प्रजायते ॥ मातरः सर्वभूतानामापो देव्यः पुनन्तु माम् ॥ ७९ ॥
अलक्ष्मीर्मलरूपा या सर्वभूतेषु संस्थिता ॥ क्षालयन्तु निजस्पर्शादापो देव्यः
पुनन्तु माम् ॥ ८० ॥ यन्मे केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि ॥ ललाटे
कर्णयोरक्ष्णोरापस्तद् घ्नन्तु वो नमः ॥ ८१ ॥ नमःस्वाहान्तमूलेन त्रिराचम-
नमाचरेत् ॥ त्रिधा देवं च सन्तर्प्य तोयमध्यात्तटं व्रजेत् ॥ ८२ ॥ धौतव-
स्त्रयुगं धृत्वा प्रक्षाल्य च करौ तथा ॥ मृदाद्भिस्तत आचम्य देवस्नानविधि-
स्स्मृतः ॥ ८३ ॥ मन्त्रस्नानं प्रकर्तव्यं शीतयोर्देशकालयोः ॥ तोयाभावे गते
दुर्गे कायास्वास्थ्ये च वार्द्धके ॥ ८४ ॥ प्रक्षाल्य पादावाचम्य प्रोद्धृतेन
तु वारिणा ॥ स्थानं दश दिशः प्राग्वत्संशोध्योपाविशेत्ततः ॥ ८५ ॥ जलं
हस्ततले न्यस्य कुम्भन्यासांस्ततश्चरेत् ॥ मातृकादींस्तथा मूलमन्त्रन्यासान-
शेषतः ॥ ८६ ॥ न्यासान्ते संस्पृशेत्तोयं मन्त्रस्नानमिदं वरम्॥ केवलादुदक-
स्नानात्संस्कारपरिवर्जितात् ॥ ८७ ॥ सुस्थितं पुण्डरीकाक्षं मन्त्रमूर्तिम्प्रभुं
स्मरेत् ॥ तत्पादोदकजां धारां निपतन्तीं स्वमूर्द्धनि ॥ ८८ ॥ चिन्तयेत्सू-
क्ष्मरन्ध्रेण प्रविशन्तीं स्वकान्तनुम् ॥ तस्मात्संक्षालयेत्सर्वमेतद्देहगतं मलम् ॥
॥ ८९ ॥ तत्क्षणाद्विरजा मन्त्री जायते स्फटिकोपमः॥ इदं स्नानवरं मन्त्र-
स्नानादष्टगुणं मतम् ॥ ९० ॥ सदा शुद्धमना यस्तु स शुद्धः सर्वकर्म्मसु ॥
अथ मानसिकस्नानं मनसा मूलमन्त्रतः ॥ ९१ ॥ प्राणानायम्य कुर्वीत

१ ॐ वं भूर्भुवः स्वः इत्यादि मन्त्रैःह्रीं मन्त्रेण सुधाणुना वंबीजेन ॥ २ पाणिभ्यां कलशाकार-
निर्माणं कुंभमुद्रोच्यते ॥

दृष्टतीर्थेषु भावतः ॥ यद्वा शिवात्मकैर्मन्त्रैः कृत्वा तीर्थं शिवात्मकम् ॥ ९२ ॥ मार्ज्जनं संहितामन्त्रैः शिवस्नानमितीरितम् ॥ स्नानपूर्वाः क्रियाः शुद्धाः सर्वाः सिद्धिं प्रयान्ति च ॥ ९३ ॥ तस्मात्स्नानं पुरा कुर्य्याद्दिव्यैकं देहशक्तितः ॥ ततस्तु तिलकं कुर्य्याज्जातेर्वा दैवतस्य च ॥ ९४ ॥ यथाच्छुभफलं तीर्थमृद्भिर्वा भक्तिभावतः ॥ ब्राह्मणस्योर्ध्वपुण्ड्रं स्यात्क्षत्रियस्य त्रिपुण्ड्रकम् ॥ ॥ ९५ ॥ अर्धचन्द्रन्तु वैश्यस्य शूद्राणां वर्त्तुलाकृति ॥ ऊर्ध्वपुण्ड्रं मृदा कुर्य्यात्त्रिपुण्ड्रं चैव भस्मना ॥ ९६ ॥ केशरेण च कस्तूर्य्या शेषं शीतं यथारुचि ॥ वैष्णवस्योर्ध्वपुण्ड्रं स्यात्त्रिपुण्ड्रं शिवसेवने ॥ ९७ ॥ अर्धचन्द्रं गणेशस्य देवीभक्तस्य वर्त्तुलम् ॥ नारायणपरो यस्तु चन्द्रं तस्य त्रिशूलकम् ॥ ॥ ९८ ॥ भाले विभूतिमान्योऽसौ ब्रह्मविष्णुशिवात्मकः ॥ भूतिदा तु विभूतिः स्याद्विधिना विधृता यदि ॥ ९९ ॥ यथाकथञ्चिद्विधृता भस्मसारकुरुते जनम् ॥ शिवाग्नेर्भस्म सङ्ग्राह्यमग्नीषोमो द्भवन्तु वा ॥१००॥ वैवाह्याग्न्युद्भवं वापि पक्वं शुचि सुगन्धि च ॥ कपिलायाः शकृद्वस्त्रगृहीतं गगने पतत ॥ ॥ १०१ ॥ न क्लिन्नं नापि कथितं न दुर्गन्धि न वोषितम् ॥ उपर्य्यधः परित्यज्य गृह्णीयात्पतितं हृदा ॥ पिण्डीकृत्य शिवाग्नौ तु तत्क्षिपेन्मूलमन्त्रतः ॥ १०२ ॥ अपक्वमपि पक्वं च सन्त्यज्य भासितं सितम् ॥ आदाय वाससाऽऽलोड्य भस्माधारे विनिःक्षिपेत् ॥ १०३ ॥ भस्मसङ्ग्रहणं कुर्य्याद्देवेनुद्वासने सति ॥ उद्वासने कृते यस्माच्चण्डभस्म प्रजायते ॥ १०४ यद्वा द्विजातिभस्मेत्थं संघेनानीय गोमयम् ॥ वामेन पात्रे संयोज्याघोरमन्त्रेण निर्दहेत् ॥ ॥ १०५ ॥ पुरुषेण समुद्धृत्य ईशानेन विशोधयेत् ॥ इत्थन्तु संस्कृतं भस्म

---

१ नमोमन्त्रेण ॥ २ ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमः भवेभवेनातिभवे भवस्व मां भवोद्भवाय नमः ॥ ३ ॐवामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कालविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमो नमस्सर्वभूतदमनाय नमो मनोन्मथनाय नमः॥ ४ ॐ अघोरेभ्योथघोरेभ्यो घोरघोरतरेभ्यः सर्वतस्सर्वसर्वेभ्यो नमस्तेस्तु रुद्ररूपेभ्यः॥ ५ ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ॥ ६ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्॥ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्॥

अग्निरित्यादिमन्त्रतः॥ १०६॥यातेरुद्रेति यजुषा मन्त्रयेदुद्रसञ्ज्ञया॥प्रणवाद्यै-श्चतुर्थीहृदन्तैर्नामभिरंशकैः १०७॥पञ्चवर्णाद्यक्षराद्यैर्मालांशैर्हरहृद्युतैः॥त्रिपुण्ड्र-धारणं कुर्य्यान्मूर्ध्नि पञ्चाक्षरेण तु ॥ १०८ ॥ एभिश्च नामभिर्धार्यं पुनर्भ-स्म द्विजातिभिः ॥ ब्रह्मा ललाटे विज्ञेयो हृदये हव्यवाहनः ॥ १०९ ॥ नाभौ स्कन्दो गले पूषा रुद्रा दक्षिणबाहुके ॥ आदित्यो बाहुमध्ये च शशी च मणिबन्धने ॥ ११० ॥ वामदेवो वामबाहौ बाहुमध्ये प्रभञ्जनः ॥ मणि-बन्धे च वसवः पृष्ठदेशे हरिः स्मृतः ॥ १११ ॥ शम्भुः ककुदि सम्प्रोक्तः परमात्मा शिवः स्मृतः॥ कस्तूर्य्यादिकसंयुक्तं भस्म स्यात्तत्तु धारयेत्॥ ११२॥ अद्भिर्जैर्मूलमन्त्रेण शिवपञ्चाक्षरेण वा ॥ त्रिपुण्ड्रं कारयेद्भाले ब्रह्मविष्णुशिवा-त्मकम् ॥ ११३ ॥ मध्याङ्गुलिभिरादाय तिसृभिर्मूलमन्त्रितम् ॥ अनामाम-ध्यमाङ्गुष्ठैरथवास्यात्रिपुण्ड्रकम् ॥ ११४॥वक्ष्येथ तान्त्रिकीं सन्ध्यां मूलेनाच-मनत्रयम् ॥ शिखां बद्ध्वा तु मूलेन प्राणायामत्रयं चरेत् ॥ ११५ ॥ अङ्गानि विन्यसेद्देहे करन्यासपुरस्सरम् ॥ अमृतीकृत्य पुरतो जलं वै धेनुमुद्रया ॥अभि मन्त्र्य च मूलेन सप्तवारन्ततः परम् ॥ ११६ ॥ अंकारादिक्षकारा-न्तैर्मातृकार्णैस्सबिन्दुभिः ॥ प्रत्यर्णं प्रोक्षयेन्मूर्ध्नि कुशैर्मूलेन च त्रिधा ॥ ११७ ॥ देवं ध्यात्वा च मनुना ज्ञानमण्डलसंस्थितम् ॥ आदाय तोयमा-मन्त्रैर्बीजैर्भूतात्मकैस्तथा ॥ ११८ ॥ लं वं रं हं इति च तन्मन्त्रैः सप्तधा जलम् ॥ मन्त्रयित्वा पुनः सप्तवारं मूलेन मन्त्रयेत् ॥ ११९ ॥ तज्जलं वामहस्तेन धार्य्यं तत्प्लुतबिन्दुभिः॥ दक्षहस्तेन सम्प्रोक्ष्य कम्पठेन्मूलमन्त्रकम् ॥ १२० ॥ हस्तव्यत्यासतो वामाचारी सेचनमाचरेत् ॥ नासामाश्रित्य

---

१ ॐ अग्निरिति भस्म, ॐ जलमिति भस्म, २ ॐ स्थलमिति भस्म, ३ ॐ वायुरिति भस्म, ४ ॐ व्योमेति भस्म, ५ ॐ सर्वं ह वाइदं भस्म ६ ॥ २ ॐ या ते रुद्रशिवा तनूरघोरां पापकाशिनी । तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि ॥ ३ ॐ भवाय नमः, ॐ शर्वाय नमः, ॐ पशुपतये नमः, ॐ उग्राय नमः, ॐ महादेवाय नमः ॐ भीमाय नमः, ॐ ईशानाय नमः, ४ ॐ नमः शिवाय इत्यादिमन्त्रैः ॥ ५ अँआँ इँईँ उँऊँ ऋँॠँ ऌँॡँएँऐँ ओँऔँ अंअः कंखं गंघंङं चंछंजंझंञं टंठंडंढंणं तंथं दंधंनं पंफंबंभंमं यंरंलंवं शंषंसंहं ळंक्षमिति मातृकार्णाः ॥ ६ कं जलम् ।

शिष्टेन तेजोरूपेण तेन तु ॥ १२१ ॥ प्रविश्यान्तर्गतो देवो मलं संशोध्य निर्गतः ॥ दक्षनासापुटेनैतत्स्मृत्वा दक्षिणहस्तकम् ॥ १२२ ॥ वामभागे वज्रशिलां ध्यात्वास्त्रेण च तान्क्षिपेत् ॥ प्रक्षाल्य हस्तावाचम्य मूलमन्त्रेण मन्त्रवित् ॥ १२३ ॥ गायत्र्या वाथ मूलेन दद्यादर्घ्यत्रयन्ततः ॥ रविमण्डल-संस्थाय स्वेष्टदेवाय तर्प्पयेत् ॥ १२४ ॥ जलेन मूलमन्त्रेण ह्यमुकं तर्प्पयामि च ॥ उक्त्वा त्रिधा तर्प्पणीयं वामकैः कारणेन तु ॥ १२५ ॥ इष्टदेवस्य गायत्रीमष्टाविंशतिसङ्ख्यकाम् ॥ जपेदभावे ब्राह्मीं तु वैदिकं मतमाश्रितः ॥ १२६ ॥ तान्त्रिकः शिवगायत्रीं जपेत्साथ निरूप्यते ॥ ॐ तन्महेशाय विद्महे वाग्विशुद्धाय धीमहि ॥ तन्नः शिवः प्रचोदयात् ॥ १२७ ॥ ततः शुद्धमना मौनी मूलमष्टोत्तरं शतम् ॥ जपित्वा चार्प्पयेदेवं स्तुत्वा नत्वेष्टदेवताम् ॥ १२८ ॥ सूर्य्यमण्डलतो देवं विन्यसेद्धृदये स्वके ॥ ततो गुरूंश्च प्रणमेदिति सन्ध्या तु तान्त्रिकी ॥ १२९ ॥ त्रिकालमेवं कर्त्तव्या सन्ध्यालोपात्फलं नहि ॥ दैवतो यदि लोपश्च तदा मूलं शतं जपेत् ॥ १३० ॥ प्रायश्चित्तार्थं तं कृत्वा कुर्वीत समयागताम् ॥ वैदिकं तर्प्पणं कृत्वा ततस्तान्त्रिकमाचरेत् ॥ १३१ ॥ प्राणायाममयं कृत्वा मूलेन न्यासमाचरेत् ॥ ऋष्यादित्रितयस्याथ पुरतो धेनुमुद्रया ॥ १३२ ॥ वं जपन्नमृतीकृत्य जलं तत्र सचक्रकम् ॥ साङ्गावरणकं देवं ध्यात्वा मूलं समुच्चरेत् ॥ १३३ ॥ अमुकं तर्प्पयामीति चोक्त्वा चाष्टोत्तरं शतम् ॥ तदर्धमथवा विंशत्यष्टयुक्तमुखाब्जके ॥ १३४ ॥ देवस्यामृतबुद्ध्या तत्तीर्थतोयैः प्रतर्प्पयेत् ॥ तदावरणदेवांश्च तद्वदेकैकवारकम् ॥ १३५ ॥ सन्तर्प्य देवं स्वहृदि तीर्थे सूर्य्यं विसर्जयेत् ॥ गुरुं दिगीशांश्च खगान्नत्वा भाण्डं करे दधत् ॥ १३६ ॥ एकान्तं निर्जनं यायान्मनोज्ञं दोषवर्जितम् ॥ दिगन्तरं न वीक्षेत यावत्प्राप्नोति वै गृहम् ॥ १३७ ॥ प्रदक्षिणं यज्ञवाटं कृत्वा पादौ च हस्तकौ ॥ प्रक्षाल्याचम्य पूजाया गृहद्वारान्तरे स्थितः ॥ १३८ ॥ गेहे च द्वारदेशस्थः प्रणम्य मनसा गुरुम् ॥ प्रणमेदिष्टदेवं स्वं दिक्पालानपि चेतसा ॥ १३९ ॥ यत्पूर्वमु-

१ तं मूलमन्त्रं संध्याकरणप्रायश्चित्ताय जपेत् ।

र्जितं पापं तद्दिनेऽन्यदिनेपि वा ॥ तत्पापस्यापनोदार्थं मन्त्रद्वयमुदीरयेत् ॥१४०॥ हे देव प्राकृतं चित्तं पापाक्रांतमिदम्मनः ॥ तन्निस्सारय चित्तान्मे पापं फट् हुं च ते नमः ॥ १४१ ॥ सूर्य्यः सोमो यमः कालो महाभूतानि पञ्च च ॥ एते शुभाशुभस्येह कर्म्मणो नृषु साक्षिकाः॥ १४२॥ हुंफडिति बूयात्क्रोधदृष्ट्या पश्येच्च पार्श्वयोः ॥ एवंकृते प्रथमतः पापोत्सादनकर्म्मणि॥ १४३॥ यत्स्याद्दृढतरं पापं तद् दूरे चात्र तिष्ठतु॥अतीते पूजनं स्थानं स्वं प्रयातु पुनश्चतत ॥१४४॥यत्स्यादल्पतरं पापं तन्नाशमुपगच्छतु ॥पूजां त्यक्त्वास्य पापास्यकामभिष्टं क्षणाद्भवेत ॥ १४५ ॥ ततः प्रक्षाल्य पादौ च हस्तावाचम्य यत्नतः॥ दद्यादर्घ्यं दिनेशाय तत्प्रकार इहोच्यते ॥ १४६ ॥ गोमयेनोपलिप्तायां भूमौ कृत्वा तु मण्डलम् ॥ सिन्दूरेण ततः पश्चादुपविश्य निजासने ॥१४७॥ प्राङ्मुखः प्रणमेदिष्टदेवतां भक्तितत्परः ॥ प्राणायामत्रयं कृत्वा सूर्य्यमन्त्रेण मन्त्रवित् ॥ १४८ ॥ ह्रीं ह्रीं स इतिसूर्य्यस्य त्र्यक्षरो मन्त्र ईरितः ॥ विन्यस्य च तथेन्द्रादीन्ध्यात्वा सूर्य्यमनन्यधीः ॥ १४९ ॥ पद्मद्वयाभयवरान्दधतं कराब्जैर्माणिक्यमौलिमरुणाङ्गरुचिं त्रिनेत्रम् ॥ रक्ताम्बुजासनमशेषगुणैकसिन्धुं भानुं समस्तजगतामधिपं भजामि ॥ १५० ॥ तत्कल्पोक्तविधानेन पूजयेदुपचारकैः ॥ पुरतो मण्डलं कृत्वा जलेन चतुरस्रकम् ॥ ॥ १५१ ॥ निधाय तत्र साधारं सजलं ताम्रपात्रकम ॥ गन्धपुष्पाक्षतान्दर्भदूर्वासर्षपसंयुतान् ॥ १५२ ॥ सतिलान्युक्तपुष्पाणि यवांश्चापि प्रविन्यसेत् ॥ सूर्य्यं मन्त्रेण तत्पात्रं स्पृशन्नष्टोत्तरं शतम् ॥ १५३॥ अभिमन्त्र्य च तत्पात्रं समुत्थाय करद्वयात् ॥ मूर्द्धान्तं सूर्य्यमन्त्रेण दद्यादर्घ्यं विचक्षणः ॥ १५४ ॥ ह्रीं[1] ह्रीं सः सग्रहराशिनक्षत्रपदमुच्चरेत् ॥ ततश्चयोगकरणे परिवृत्तासनेति च ॥ १५५ ॥ संस्थितः श्रीसूर्य्यायैष तेर्घ्यः स्वाहा मनुस्स्मृतः ॥ चतुस्त्रिंशदक्षरोयं सूर्य्यस्यार्घ्यनिवेदने ॥ १५६ ॥ जपेत्तत्तु यथाशक्ति सूर्य्यमन्त्रमनन्यधीः ॥ तदर्घ्यावृतं सूर्य्यं ध्यायेद्देशिकसत्तमः ॥ ॥ १५७ ॥ स्तुत्वा प्रणम्य विसृजेन्मण्डलात्तं दिवाकरम् ॥ तत उत्थाय

---

१ ह्रीं ह्रीं सः सग्रहराशिनक्षत्रयोगकरणपरिवृत्तासनसंस्थितश्रीसूर्य्यायैष तेर्घ्यः स्वाहा ।

विधिवद्द्वारपूजां समाचरेत् ॥ १५८ ॥ द्वारमर्घ्याम्बुना प्रोक्ष्य तन्मध्ये विघ्नपं यजेत् ॥ तद्दक्षिणे महालक्ष्मीं वामे चापि सरस्वतीम् ॥ १५९ ॥ द्वारश्रियं च तन्मध्ये शाखयोर्दक्षिणान्ययोः ॥ ऊर्ध्वभागोत्तरं यावत्पञ्चपञ्च-विभागके ॥ १६० ॥ नाम्नश्चाद्याक्षरं बिन्दुनामयुक्तं च ङेन्तकम् ॥ समुच्चार्य्य हृदन्तं च देवानेतान्प्रपूजयेत् ॥ १६१ ॥ गणपतिं क्षेत्रपालं ततश्च वसुधारया ॥ युक्तं शङ्खनिधिं दक्षे वामे वसुमतीयुतम् ॥ १६२ ॥ पूजयित्वा पद्मनिधिं तदधो दक्षवामतः ॥ मायाशक्तिं च हृच्छक्तिं गङ्गां च यमुनां तथा ॥ १६३ ॥ धातारं च विधातारं दं देहल्यै नमोनमः ॥ आदौ तु पश्चिमद्वारपूजा चेयम्प्रकाशिता ॥ १६४ ॥ नन्दी चापि महाकालो द्वारयोर्दक्षवामयोः ॥ सम्पूज्यैवमुदग्द्वारं प्राग्याम्ये च प्रपूजयेत् ॥ १६५ ॥ द्वारपालौ क्रमात्तेषु गणेशवृषभावपि ॥ भृङ्गिरीटी तथा स्कन्द उमाचण्डेश्वरौ तथा ॥ १६६ ॥ विष्णोर्नन्दः सुनन्दश्च चण्डश्चापि प्रचण्डकः ॥ बलश्च प्रबलश्चैव भद्रश्चापि सुभद्रकः ॥ १६७ ॥ वक्रतुण्डश्चैकदंतो महोदरगजाननौ ॥ लम्बोदरश्च विकटो गाणेशा द्वारपालकाः ॥ १६८ ॥ विघ्नराजो धूम्रवर्णः क्रमात्पश्चिमद्वारतः॥ देव्याश्चैव तु योगिन्योष्टावेता द्वारपालिकाः ॥ ॥ १६९ ॥ ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥ वाराही च तथेन्द्राणी चामुण्डा च श्रिया सह ॥ १७० ॥ अथ वक्ष्ये द्वारदेवध्यानं तन्त्रेषु गोपितम् ॥ देवद्वारं द्वारदेवाः स्वयमुद्घाटयन्ति यत् ॥ १७१ ॥ पाशा-ङ्कुशफलाम्भोजपर्णपाणिञ्च तुन्दिलम् ॥ वीरं विघ्नेश्वरं वन्दे गजवक्त्रं त्रिलो-चनम् ॥ १७२ ॥ पद्मद्वयवराभीतिलसत्पाणिचतुष्टयाम् ॥ निर्दग्धहेमगौ-राङ्गीं महालक्ष्मीं त्रिलोचनाम् ॥ १७३ ॥ अक्षस्रक्पुस्तकाभीतिवरहस्तां त्रिलोचनाम् ॥ श्वेतपद्मासनां शुक्लां श्वेतवस्त्रां सरस्वतीम् ॥ १७४ ॥ कपा-

---

१ नाम्नः प्रथमाक्षरेषु सानुस्वारेषु चतुर्थ्यंतेषु नमोन्तेषु तत्तद्देवतापूजामन्त्रः स्यात् यथा गंगणपतये नमः ॥ क्षें क्षेत्रपालाय नमः ॥ वसुंधरासंयुताय शंशङ्खनिधये नमः ॥ वसुमत्यासंयुताय पं पद्मनि-धये नमः ॥ मां मायाशक्त्यै नमः ॥ ह्वं हृच्छक्त्यै नमः ॥ गं गङ्गायै नमः ॥ यं यमुनायै नमः ॥ धां धात्रे नमः॥ विं विधात्रे नमः । २ वक्रतुंडादयः षड्गणेशद्वारपास्तेषां नामानि मूले स्पष्टानि

लशूलविलसत्करपाणं कृष्णविग्रहम् ॥ त्र्यक्षं तीक्ष्णं भावयामि क्षेत्रेऽस्मिन्क्षेत्रनायकम् ॥ १७५ ॥ वसुन्धरान्दक्षभुजेनालिङ्ग्य तु सुभाण्डिनम् ॥ वामे शङ्खधरं मुक्तानिभं शङ्खनिधिम्भजे १७६ ॥ आलिङ्गन्तं वसुमतीं ललाटे पद्मचिह्नितम् ॥ भजे पद्मनिधिं नित्यं वामेनोत्पलधारिणम् ॥१७७॥ वराङ्कुशाभीतिपाशहस्तां संसारमूलिकाम् ॥ त्रिनेत्रां श्यामवर्णान्तां श्यामां मायामहं भजे ॥ १७८॥ पाशाङ्कुशवराभीतिं दधानामरुणप्रभाम् ॥ ग्राहारूढामहं वन्दे गङ्गां सर्वसारिद्वराम् ॥ १७९ ॥ कृष्णकच्छपमारूढां कण्ठे नीलोत्पलस्रजम् ॥ वराभयकरां वन्दे कालिन्दीं कालविग्रहाम् ॥ १८० ॥ कर्त्तारं जगतां वन्दे शङ्खचक्रगदाम्बुजम् ॥ बिभ्राणं गरुडारूढं धातारं कृष्णविग्रहम् ॥ १८१ ॥ रक्तं रक्तारविन्दाक्षं वराभयकमण्डलुम् ॥ हंसारूढं विधातारं वन्दे त्र्यक्षसमन्वितम् ॥ १८२ ॥ सिंहारूढां श्यामवर्णां खड्गखेटकधारिणीम् ॥ अधःस्थां देहलिं वन्दे पश्चिमास्यां सुदक्षिणाम् ॥ १८३ ॥ पश्चिमद्वारमासाद्य तालत्रितयपूर्वकम् ॥ द्वारमुद्घाट्य चास्त्रेण मन्त्रितान्सर्षपाक्षतान् ॥ १८४ ॥ पुष्पयुक्तांस्तु विकिरेन्मण्डपाभ्यन्तरे बुधः ॥ नाराचमुद्रया[1] सम्यगस्त्रमन्त्रेण देशिकः ॥ १८५ ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम् ॥ याश्चात्रनिवसन्त्यन्यदेवता भुवि संस्थिताः ॥१८६॥ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ॥ ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥१८७॥श्लोकयोरन्ततश्चास्त्रं पठन्नाराचमुद्रया ॥ जह्यात्तान्मण्डपस्यान्तस्ततो विघ्नांस्तु निर्गतान् ॥ १८८ ॥ स्ववामाङ्गस्य सङ्कोचान्मार्गन्दत्त्वापसारयेत् ॥ अस्त्रमन्त्रं स्मरन्वामपार्ष्णिघातत्रयेण च ॥ १८९ ॥ भौमानुत्सादयेत्तालत्रितयेनान्तरिक्षगान् ॥ तिर्य्यग्दृष्टयवलोकेन दिव्यान्विघ्नान्निवारयेत् ॥ १९० ॥ दक्षपादम्पुरस्कृत्य प्रविशेद्देवमन्दिरम् ॥ शाक्तस्तु वामपादेन द्वारमाच्छाद्य वाससा ॥ १९१ ॥ पञ्चगव्यार्घ्यतोयाभ्यां प्रोक्षयन्मण्डपान्तरम् ॥ सम्मार्जनोपलेपाद्यैर्दर्पणोदरवत्कृतम् ॥ ॥ १९२ ॥ विमलं धूपदीपादिपुष्पदामाभिशोभितम्[2] ॥ पञ्चवर्णरजश्चित्रं

---

१ वाणमुद्रया ॥ वाणमुद्रा दक्षमुष्टेस्तर्जन्या दीर्घया भवेत् ॥ २ प्रसूनमालाभिराजितम् ॥

स्थानशुद्धिरियं मता ॥ १९३ ॥ नैर्ऋत्यामर्चयेद्वास्तुपुरुषं चन्दनादिभिः॥ तत्रैव वास्त्वधीशं च ब्रह्मणे नम इत्यपि ॥ १९४ ॥ रक्तवर्णं रक्तवर्णशक्तिद्वादशसंयुतम् ॥ पूजयित्वा दीपनाथं भैरवं प्रार्थयेदिति ॥ १९५ ॥ अतितीक्ष्ण महाकाय कल्पान्तदहनोपम ॥ भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥ ॥ १९६ ॥ ॐफडिति च मन्त्रेण पूजावेदीं ततो विशेत् ॥ संस्कुर्य्यादासनस्थानं चतुर्भिर्वीक्षणादिभिः ॥ १९७ ॥ संस्कारे तत्र सम्पूज्या वेद्यंताः पीठदेवताः ॥ आधारशक्तिमारभ्य स्वासनं तत्र विन्यसेत् ॥ १९८ ॥ पूजासनमथात्मीयं चैलाजिनकुशोत्तरम् ॥ तत्रोपविश्य विधिवत्स्मरेद्विष्णुं गुरुं तथा ॥ १९९ ॥ मेरुपृष्ठ ऋषिः प्रोक्तः सावित्रीछिन्द ईरितम् ॥ पृथिवी देवता प्रोक्ता विनियोगो निजासने ॥ २०० ॥ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ॥ त्वं च धारय मां देवि पवित्रं कुरु चासनम्॥ २०१॥ आसनस्य चतुष्कोणे गणेशं च सरस्वतीम् ॥ दुर्गां क्षेत्रपतिश्चापि वह्न्यादिषु[1] समर्चयेत् ॥ २०२ ॥ उदङ्मुखः प्राङ्मुखो वा स्वस्तिकासनमास्थितः[2] ॥ पद्मासनगतो[3] वापि ऋजुकायो मनस्स्थिरः ॥ २०३ ॥ स्थापयेद्दक्षिणे भागे पूजाद्रव्याणि चात्मनः॥ सुवासिताम्बुसम्पूर्णं सव्ये कुम्भं सुशोभनम्॥ २०४॥ प्रक्षालनाय करयोः पात्रे पृष्ठे निवेशयेत् ॥ घृतादिज्वलितान्दीपान्स्थापयेत्परितः शुभान् ॥ २०५ ॥ दर्पणं चामरं छत्रं तालवृंतश्च पादुके ॥ यथायथन्तु संस्थाप्य संस्कुर्य्यात्तानि चात्मवान् ॥ २०६ ॥ पुष्पनैवेद्यगन्धादीन् ह्रीं हूं फडिति मन्त्रतः ॥ नाराचमुद्रया दृष्ट्वा समयांश्च विलोकयन् ॥ २०७ ॥ दृष्टं वाचात्मविज्ञातं सम्यक् पुष्पादिदूषणम् ॥ अस्पृश्यस्पर्शनं वापि यदन्यार्जितञ्च वा ॥ २०८ ॥ तथा निर्माल्यसंस्पृष्टं कीटाद्यारोहणञ्च यत् ॥ तत्पूर्वन्नाशमायाति नैवेद्याद्यवलोकनात ॥ २०९ ॥ ततो रमिति मन्त्रेण

---

१ आग्नेये गं गणेशाय नमः, नैर्ऋत्यकोणे, सं सरस्वत्यै नमः, वायव्ये, दुं दुर्गायैनमः, ईशाने, क्षं क्षेत्रपतये नमः । २ जानूर्वोरन्तरे सम्यग्धृत्वा पादतले उभे । समकायं सुखासीनं स्वास्तिकं तम्प्रचक्षते । ३ वामोरूपरि दक्षिणं हि चरणं संस्थाप्य वामं तथा दक्षोरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढम् ॥ अंगुष्ठं हृदये निधाय चिबुकं नासाग्रमालोकयेदेतद्व्याधिकलापनाशनकरं पद्मासनं चोच्यते ।

शिखां दीपस्य संस्पृशेत् ॥ स तु स्याच्छुभदो दीपो निष्क्रव्यादः सुखप्रदः ॥ ॥ २१० ॥ पतङ्गकीटकेशादिदाहात्क्रव्यादसञ्ज्ञितः ॥ वसामज्जादिसम्भूतैर्घृताद्यैरुपयोजितम् ॥ २११ ॥ अज्ञानरूपं तत्सर्वं दोषं स्पर्शाद्विनश्यति ॥ क्षौंबीजमुच्चरेन्मन्त्री देवतीर्थेन[1] संस्पृशेत् ॥ २१२ ॥ पानीयं घटमध्यस्थं दृष्ट्वा सम्यक् च साधकः ॥ वामेन पाणिना धृत्वा वामपार्श्वस्थितं घटम् ॥ २१३ ॥ पात्राधारे न्यसेन्न्यूनं यदत्राज्ञानतो भवेत् ॥ जलाशयशवस्पर्शाज्जलं स्थाने च सङ्गतम् ॥ २१४ ॥ इत्यादि दूषणं नश्येत्तत्प्रियं देवपूजने ॥ ततः कृताञ्जलिः पूतो वामदक्षिणपार्श्वयोः ॥ २१५ ॥ गुरुं गणपतिं नत्वा पुरतः स्वेष्टदेवताम् ॥ सुगन्धपुष्पाण्यादाय चन्दनाक्तानि मन्त्रवित् ॥ २१६ ॥ ह्रौं मन्त्रेणाथ करयोरस्त्रमन्त्रेण मर्दयेत् ॥ तत्पुष्पं वामहस्तेन समादाय च मस्तकम् ॥ २१७ ॥ भ्रामयेत्परितस्तारं[2] जपन्नाघ्राय तत्पुनः ॥ ह्रौंॐ[3] पूर्वम्पठेच्छ्लोकमिमं साधकसत्तमः ॥ २१८ ॥ सर्वत्र विलयं यान्तु ये मां हिंसन्ति हिंसकाः ॥ मृत्युरोगभयक्लेशाः पतन्तु रिपुमस्तके ॥ २१९ ॥ अस्त्रमन्त्रेण[4] नाराचमुद्रयेशदिशि त्यजेत् ॥ करशुद्धिं ततोऽस्त्रेण कुर्य्यात्तालत्रयं ततः ॥ ॥ २२० ॥ ऊर्ध्वोर्ध्वमस्त्रमन्त्रेण दिग्बन्धमपि तेन च ॥ तेन सम्पतितं तेजो वह्निप्राकारमुद्रया[5] ॥ २२१ ॥ रक्षेदात्मनि शूलेन प्राणायामत्रयं चरेत् ॥ भूतशुद्धिं ततः कुर्य्यात्तत्प्रकारमथ ब्रुवे ॥ २२२ ॥ पादतो जानुपर्य्यन्तं चतुरस्रं सचक्रकम् ॥ लंयुतं पीतवर्णं च भूस्थानं ब्रह्मदैवतम् ॥ २२३ ॥ अधिष्ठितं निवृत्त्याख्यकलया स्थानमुच्यते ॥ समुत्पत्तेस्तु जीवानामेवं रूपं

---

१ अंगुल्यग्रे तीर्थं दैवं स्वल्पांगुल्योर्मूले कायम । मध्येंगुष्ठांगुल्योः पैत्रं मूले ह्यंगुष्ठस्य ब्राह्मम् । बाणमुद्रा दक्षमुष्टेस्तर्जन्या दीर्घया भवेत् ॥ २ तत्पूर्वमस्तकोपरि परितो भ्रामयन् ॥ ३ ॐमन्त्रं जपन् ॥ ४ ह्रौं ॐ सर्वत्र विलयं यान्तु इति श्लोकं पठेत् फट्मन्त्रेण बाणमुद्रां विधाय तत्पुष्पमीशानकोणे क्षिपेत् ५ वह्निप्रकारमुद्रा तु त्रिशूलाग्रावुभौ करौ । व्यत्यस्तावभितो वह्नेर्नयेदस्त्राह्वयापि च ॥ द्विपाण्योस्तिर्यक्कुलीकृत्थाय व्यत्यासेन भ्रामणाद्वह्निप्राकारमुद्रा भवति ॥ अस्या एवास्त्रमुद्रानाम ॥ त्रिशूलाख्या भवेन्मुद्रा अंगुष्ठेन कनिष्ठिकाम् । बद्ध्वा प्रसादयेच्छेषमंगुलीनां त्रयं तदा ॥ अंगुष्ठाभ्यां कनिष्ठांगुल्यौ परिपीड्य शेषांगुलीस्तिस्रः प्रसारयेत्तस्मात्रिशूलमुद्रा भवति ॥

विचिन्तयेत् ॥२२४॥ जान्वोरानाभिपर्य्यन्तमपां स्थानं मितप्रभम् ॥ अर्धचन्द्रनिभं शृङ्गद्वयं तत्पद्मलाञ्छितम् ॥ २२५ ॥ षट्कोणं विन्दुभिः षड्भिर्युतं वंबीजसंयुतम् ॥ प्रतिष्ठाकलया युक्तं ध्यायेत्तद्विष्णुदैवतम् ॥ २२६ ॥ नाभ्यादिकण्ठपर्य्यन्तमारक्तं रुद्रदैवतम् ॥ रंबीजयुक्तं कलया युतं विद्याख्यया तथा ॥ २२७ ॥ दीप्तिमत्स्वस्तिकोपेतं त्रिकोणाकारतां गतम् ॥ महाप्रलयवत्स्थानं वह्नितत्त्वं विचिन्तयेत् ॥ २२८ ॥ कण्ठाद्भ्रूमध्यपर्य्यन्तं षट्कोणाकारतां गतम् ॥ षड्विन्दुलाञ्छितं वृत्तं वेष्टितं कृष्णवर्णकम् ॥ २२९ ॥ वायुस्थानं शान्तिकलाधिष्ठितं शिवदैवतम् ॥ यंबीजरूपं ध्यात्वेत्थं प्राणरूपं विचिन्तयेत् ॥ ॥ २३० ॥ भ्रूमध्याद्ब्रह्मरन्ध्रान्तमाकाशस्थानमुच्यते ॥ वृत्ताकारन्धूम्रवर्णं महोच्चध्वजलाञ्छितम् ॥२३१॥ शान्त्यतीताख्यकलयाधिष्ठितं शिवदैवतम् ॥ हंबीजयुक्तं ध्यात्वेत्थं देहे भूतानि विन्यसेत् ॥ २३२ ॥ धर्म्मकन्दसमुद्भूतं ज्ञाननालसुशोभितम् ॥ कृत्वा तत्कर्णिकासंस्थं प्रदीपकलिकानिभम् ॥ २३३ ॥ सुषुम्णावर्त्मना जीवं परमात्मनि योजयेत् ॥ योगयुक्तेन विधिना सोहंमन्त्रेण साधकः ॥ २३४ ॥ तेनैव सर्वभूतानि विलीनानि विचिन्तयेत् ॥ शरीरे वामकुक्षौ तु चिन्तयेत्पापपूरुषम् ॥ २३५ ॥ वामकुक्षिस्थितं पापपूरुषं कज्जलप्रभम् ॥ ब्रह्महत्याशिरस्कन्धं स्वर्णस्तेयभुजद्वयम् ॥ २३६ ॥ सुरापानहृदायुक्तं गुरुतल्पकटिद्वयम् ॥ तत्संसर्गपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ॥ २३७ ॥ उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ॥ खड्गचर्म्मधरं क्रूरं रुष्टं पापं विचिन्तयेत् ॥ २३८ ॥ तथा संशोषयेदेनं पूरकादिक्रमेण वै ॥ विधाय प्राणसंरोधं वायुबीजेन वायुना ॥ ॥ २३९ ॥ मूलाधारोत्थितेनैव वह्निना निर्दहेच्च तत् ॥ एवं सन्दह्य पापिनो द्वात्रिंशन्मात्रया ततः ॥ २४० ॥ भस्मना सहितं मन्त्री रेचयेदिडया पुनः ॥ वामनाड्यां चन्द्रबीजं कुन्देन्दुयुतसुप्रभम् ॥ २४१ ॥ भालेन्दुराजे संयोज्य ततः षोडशमात्रया ॥ सुषुम्णया चतुष्षष्टिमात्रया तोयबीजकम् ॥ २४२ ॥ ध्यात्वामृतमयीं सृष्टिं पञ्चाशद्वर्णरूपिणीम् ॥ तया देहं विचिन्त्यैवं मनसा पिङ्गलाध्वना ॥ २४३ ॥ द्वात्रिंशन्मात्रया मन्त्री लंबीजेन दृढं नयेत् ॥

सञ्जाते सकले देहे देवतोपासनक्षमे ॥ २४४ आत्मलीनानि तत्त्वानि स्वस्थानं प्रापयेत्ततः ॥ आत्मानं हृदयाम्भोजादानयेत्परमात्मनः ॥ २४५॥ हंसमन्त्रेण विधिवत्तेजोरूपं कलेवरम् ॥ देवताराधने योग्यमुत्पन्नमिति भावयेत् ॥ २४६ ॥ भूतशुद्धिविहीनेन कृता पूजाभिचारवत् ॥ विपरीतफलं दद्याद-भक्त्या पूजनं यथा ॥ २४७ ॥ भूतशुद्धिं विधायेत्थं प्राणस्थापनमाचरेत् ॥ प्राणप्रतिष्ठामन्त्रस्य मुनयोजेशपद्मजाः ॥ २४८ ॥ ऋग्यजुस्सामच्छन्दांसि प्राणशक्तिस्तु देवता ॥ ऋषींञ्छिरसि वक्त्रे तुच्छन्दांसि हृदि देवताम्

---

१ ॐ अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुस्सामानिच्छन्दांसि चैतन्यरूपा प्राणशक्तिर्देवता प्राणस्थापने विनियोगः ॥ ब्रह्मविष्णुमहेश्वरेभ्यः ऋषिभ्यो नमः शिरसि, ऋग्यजुस्सामच्छन्दोभ्यो नमो मुखे, प्राणशक्त्यै देवतायै नमो हृदि ॥ २९० ॥ आं बीजाय नमो गुह्ये, ह्रीं शक्तये नमः पादयोः क्रों कीलकाय नमः सर्वाङ्गे ॥ २९१ ॥ अथ हृदयादिन्यासः ॥ आं ह्रीं क्रों अं कं खं गं घं ङं आकाशवायुवह्निजलपृथिव्यात्मने आं हृदयाय नमः ॥ ओं आं ह्रीं क्रों इं चं छं जं झं ञं शब्दस्पर्शरूपरसगन्धात्मने ईं शिरसे स्वाहा ॥ ओं आं ह्रीं क्रों उं टं ठं डं ढं णं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं शिखायै वषट् ॥ ओं आं ह्रीं क्रों एं तं थं दं धं नं वाक् पाणिपादपायूपस्थात्मने ऐं कवचाय हुम् ॥ ओं आं ह्रीं क्रों ओं पं फं बं भं मं वक्तव्यादानगमनविसर्गानन्दात्मने औं नेत्रत्रयाय वौषट् ॥ ओं आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं क्षं मनोबुद्ध्यहङ्कारचित्तात्मने अः अस्त्राय फट् ॥ अथ करन्यासः ॥ ओं आं ह्रीं क्रों अं कं खं गं घं ङं आकाशवायुवह्निजलात्मने आं अंगुष्ठाभ्यां नमः ॥ ओं आं ह्रीं क्रों इं चं छं जं झं ञं शब्दस्पर्शरूपरसगन्धात्मने आं तर्ज्जनीभ्यां स्वाहा ॥ ओं आं ह्रीं क्रों उं टं ठं डं ढं णं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं मध्यमाभ्यां वषट् ॥ ओं आं ह्रीं क्रों एं तं थं दं धं नं वाक्पाणिपादपायूपस्थात्मने ऐं अनामिकाभ्यां हुम् ॥ ओं आं ह्रीं क्रों ओं पं फं बं भं मं वक्तव्यादानगमनविसर्गानन्दात्मने औं कनिष्ठिकाभ्यां वौषट् ॥ ओं आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं क्षं मनोबुद्ध्यहङ्कारचित्तात्मने अः करतलकरपृष्ठाभ्यां फट् ॥ ॥ २९७ ॥ आं नमो नाभेरारभ्य पादान्तम् ॥ ह्रीं नमो नाभितः हृदयपर्य्यन्तम् ॥ क्रों नमो हृदयान्मस्तकान्तम् ॥ २९८ ॥ अधुनाङ्गन्यासविधिरन्यतो गृहीत्वोच्यते ॥ यथा ॥ यं त्वगात्मने नमो हृदि, रं असृगात्मने नमो दक्षिणांसे, लं मांसात्मने नमः ककुदि ॥ वं मेदआत्मने नमो वामस्कन्धे, शं अस्थ्यात्मने नमो हृदयाद्दक्षिणभुजाग्रान्तम् ॥ षं मज्जात्मने नमो हृदयाद्वामभुजाग्रान्तम् ॥ सं शुक्रात्मने नमो हृदयाद्दक्षिणपादाग्रान्तम् ॥ हौं ओजआत्मने नमो हृदयाद्वामपादाग्रान्तम् ॥ हं प्राणात्मने नमो हृदयान्नाभ्यन्तम् ॥ संजीवात्मने नमो हृदयान्मस्तकान्तम् ॥ इत्थमुक्तन्यासान्विधाय हृत्कमलस्य अष्टदलेषु कर्णिकायां च पूर्वादिक्रमेण लं, रं, हं, षं, वं, सं, शं छं क्षं इमान्वर्णान्विन्यस्य तदनन्तरं ध्यानं विदधीत ॥

॥ २४९ ॥ आम्बीजाय नमो गुह्ये पादे ह्रीं शक्तये नमः ॥ नाभौ नमः क्रों कीलाय नियोगोऽसुस्थितावित ॥ २५० ॥ ॐ आंह्रींक्रोंअङ्कवर्गं सानुस्वारं नमो हृदि ॥ पञ्चतत्त्वं समुच्चार्य्य दीर्घाकारं तथैव च ॥ २५१ ॥ इञ्चवर्गञ्च शब्दादिशिरसे वह्निगेहिनी ॥ तानि बीजानि उं ताट्टक्टवर्गं श्रोत्रकादि च ॥ २५२ ॥ प्रोक्ता तदात्मनेत्रैव शिखायै च वषड्वदेत् ॥ तानि बीजानि एं तुं च वागादीनि तदात्मने ॥ २५३ ॥ ऐमुक्त्वा कवचायेति हुं वदेत्तदनन्तरम् ॥ चतुर्बीजं च पूर्वोक्तमों पवर्गं च तादृशम् ॥ २५४ ॥ वाण्याद्यात्मन औंनेत्राय वौषट् च तथा वदेत् ॥ चतुर्बीजं च अन्ताद्द्यवर्गं मनआदि च ॥ ॥ २५५ ॥ तदात्मने स्वरश्चान्त्योऽस्त्राय फट् चेति संवदेत ॥ अङ्गुष्ठादौ हस्ततलान्ते न्यसेदेवमेव हि ॥ २५६ ॥ नाभ्यधश्चापि कण्ठाधो मूर्द्धाद्येथ तदन्तकम् ॥ आं ह्रीं क्रों क्रमतो न्यस्य हृत्पद्माष्टदलेषु च ॥ २५७ ॥ पूर्वतः क्रमतो वर्णान् कर्णिकायां हदन्तकान् ॥ लं रं हं षं यं च वं च सं शं क्षं इति वर्गतः ॥ २५८ ॥ दिक्षु न्यसेत्ततो ध्यायेत्प्राणशक्तिं हृदि स्थिताम् ॥ तस्या ध्यानं यदत्रैव तद्ब्रवीमि शृणु प्रिये ॥ २५९ ॥ रक्ताब्धिपोतारुणपद्मसंस्थां पाशाङ्कुशेष्वासवरासिबाणान् ॥ शूलं कपालं दधतीं कराब्जै रक्तां त्रिनेत्राम्प्रणमामि देवीम् ॥ २६० ॥ इति प्राणशक्तिध्यानम् ॥ हस्तं निधाय हृदये प्राग्बीजं यादिकाष्टकम् ॥ हंसः सोहं मम प्राणा वदेदिह द्विरुक्तितः

१ आंक्रींक्रोंयंरंलंवंशंषंहं हंसः सोहं मम प्राणा इह प्राणा मम जीव इह स्थितः मम वाङ्मनश्चक्षुः श्रोत्रं घ्राणः प्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ओम् । त्रिभिर्मूलोक्तश्लोकैरयं मन्त्र उद्धृतो भवति परन्तु मन्त्रमहोदध्युक्तःप्राणप्रतिष्ठामन्त्रोऽस्माच्छ्रेष्ठतरोऽस्तीति ज्ञेयम् । यथा पाशं माया शृणि प्रोच्य यादीन्सप्तेन्दुसंयुतान् । तारान्वितं नभस्सप्तवर्णमन्त्रं ततो जपन् ॥ मम प्राणा इह प्राणा मम जीव इह स्थितः । मम सर्वेन्द्रियाण्युक्त्वा मम वाङ्म न ईरयेत् ॥ चक्षुः श्रोत्रं घ्राणपदं प्राणा इह समीर्य्य च ॥ आगत्य सुखमुच्चार्य्य चिरं तिष्ठन्त्विदं पठेत् ॥ वह्निजायां च सप्तार्णम्मन्त्रमेतं पुनर्वदेत् । प्राणप्रतिष्ठामन्त्रोयं स्मृतः प्राणनिधापने । सबिन्दवो मेरुहंसाकाशाः सर्गी भृगुः पुनः । मायेतितारुद्धोयं मन्त्रः सप्ताक्षरो मतः । एवं प्राणान्प्रतिष्ठाप्य मातृकान्यासमाचरेत् । एतेभ्यः श्लोकेभ्यः उद्धृतः यथा—आंह्रींक्रोंयंरंलंवंशंषंसंहोंओंक्षंसंहंसः ह्रीं ओं सोहं मम प्राणा इह प्राणा मम जीव इह स्थितः । मम सर्वेंद्रियाणि वाङ्मनश्चक्षुः श्रोत्रं घ्राणं प्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ओंक्षं संहंसः ह्रीं ओम् ।

॥ २६२ ॥ उक्त्वा तथैव च पुनर्मम जीव इह स्थितः ॥ पुनस्तदुक्त्वाऽमम तु वाङ्मनश्चक्षुरुच्चरेत्॥२६३॥श्रोत्रं घ्राणः प्राण इहागत्य सुखं चिरन्ततः॥ तिष्ठन्तु वह्निजायान्तमुक्त्वा तारं ततो जपेत् ॥ २६४ ॥ वपुर्ज्योतिर्म्मयं ध्यायेदिति स्यात्प्राणसंस्थितिः ॥ प्राणायामत्रयं कृत्वा मातृकान्यासमाचरेत् ॥ २६५ ॥ प्राणायामास्त्रिधा प्रोक्तास्तान्त्रवैदिकयौक्तिकाः ॥ संसिद्धिः पापनाशाय योगसिद्धिः फलं क्रमात् ॥ २६६ ॥ मातृकाख्यश्च मन्त्राख्यस्तान्त्रिको द्विविधो मतः ॥ मातृकाख्यो जपस्यादौ जपस्यान्ते कृतो यदि ॥ २६७ ॥ वर्णव्यत्यासादिदोषानशेषान्हन्ति तं शृणु ॥ वामया पूरयेद्वायुं स्वरैः कादैश्च कुम्भके ॥ २६८ ॥ रेचयेद्यादिभिर्दक्षनासायां मातृकादिभिः यावच्छक्तोनियम्यासुं मनसैव मनुं जपेत् ॥ २६९ ॥ कनिष्ठानामिकाङ्गुष्ठैर्नासां धृत्वा तु मान्त्रिकः ॥ प्राणायाममत्रयं प्रोक्तं यदन्यन्मनसा कृतम् ॥ २७० ॥ जपपूजादिकं तस्य दोषमेष व्यपोहति ॥ गायत्रीं शिरसा सार्द्धं सप्तव्याहृतिपूर्विकाम् ॥ २७१ ॥ प्रतिप्रणवसंयुक्तां त्रिर्जपेत्स इहोत्तमः ॥ मध्यमूलाद्यावदग्रमङ्गुष्ठेन निपीड्यते ॥२७२ ॥ मात्रा सा प्रोच्यते सद्भिर्योगेभीष्टं प्रयच्छति ॥ जानुप्रदक्षिणीं कुर्य्याद्यावत्कालेन हस्तकः ॥ २७३ ॥ तावत्कालमिता मात्रा स्वनिश्वाससमापि च ॥ जघन्यो रविमात्रः स्याज्जिनमात्रस्तु मध्यमः ॥ २७४ ॥ श्रेष्ठः षड्वर्गमात्रः स्याद्योगत्रयसुसाधकः ॥ केवले कुम्भके सिद्धे सिद्धिस्स्याद्राजयोगजा ॥२७५ ॥ वीर्य्यस्तम्भश्च बह्वायुर्वलीपलितनाशनम्॥पूरके कुम्भके सिद्धे क्रियायोगस्य सिद्धयः ॥ २७६ ॥ पूर्वोक्तान च न शीतोष्णबाधाक्षुत्तृड्भवापि च ॥ पूरकः कुम्भको रेचो यदा तुल्यः प्रजायते॥ २७७ ॥ हठयोगस्तदा सिद्धो ह्यणिमाद्यष्टसिद्धये ॥ ईषत्फलं जघन्ये तु मध्यं मध्ये परेखिलम् ॥ २७८ ॥ निरन्तराब्दत्रितयाभ्यासात्सर्वं भवेत्फलम्॥ प्राणायामविधिः प्रोक्तो मया तुभ्यं

---

१ शेषःनाशयेति ॥

वरानने ॥२७९॥ ऋषिर्गुरुत्वाच्छिरसि वर्णत्वाच्छन्द आनने ॥ चिन्तना-देवतायास्तु हृदये धारणं मतम् ॥ २८० ॥ ऋगताविति धातुस्तु ऋवर्णः प्रापको मतः ॥ षिः षणार्थस्तु विज्ञानमतस्तत्प्रापकस्तु सः ॥ २८१ ॥ छदिर्धातुरितीच्छायामत्र यस्मात्प्रवर्तते ॥ मुखमिच्छाप्रदं छन्दो मन्त्रार्थ-च्छादनात्तु वा ॥ २८२ ॥ क्रीडार्थको दिविर्धातुः सम्पूर्णं देवतापदम् ॥ साधकेष्टं ददातीति देवता परिकीर्त्तिता ॥ २८३ ॥ रक्षमाणो यदात्मीय हृदयेस्ति चिदात्मकः ॥ तस्मात्तं च नमस्कुर्य्यान्मुख्याङ्गुष्ठेन संस्पृशेत् ॥ ॥ २८४ ॥ स्वाहया क्रियते सम्यग्विष्टपाहरणं यतः ॥ अनामातर्ज्जनीभ्यां सा चाङ्गुष्ठाभ्यामिहेष्यते ॥ २८५ ॥ शिखा वषट्पदं यच्च शिखयात्मतनु-ग्रहः ॥ यस्मात्तस्माद्वषडिति क्रियतेंगुलिमध्यया ॥ २८६ ॥ ग्रहणार्थः कवचधातुर्हुंहस्तेन गृह्यते ॥ शरीरतस्तु कवचं तर्ज्जन्या-नामयाऽपि तत् ॥ २८७ ॥ यथार्थज्ञानकृद्वौषट् तन्नेत्राभ्यां प्रजा-यते ॥ तस्मात्तदुक्तं तत्र वौषट् तर्ज्जन्याद्यैस्तु तत्स्मृतम् ॥ ॥ २८८ ॥ एकाक्षत्वात्कुबेरादिदेवेष्वेकं तमुच्चरेत् ॥ त्र्यान्तं विष्ण्वादिके रुद्रादौ तु नेत्रत्रयात्मकम् ॥ ॥ २८९ ॥ आध्यात्मिकादिरूपं यत्साधकस्य विनी-यते॥ अविद्याजातमस्त्रं तत्फट् कराभ्यां प्रपंच्यते॥ २९०॥ प्राणायामं मातृकायाः कृत्वा न्यासान्समाचरेत्॥ ते चैकविंशतिः प्रोक्ताः कामनाभेदतोपि च॥ २९१॥ अधिकारिविभेदेन नित्यत्वेनापि केनचित् ॥ देवताभेदतो वापि तद्रहस्यान्निरू-प्यते॥ २९२॥ पुरुषे दैवते नित्या केवलं स्वरमातृका॥ यन्न्यासादुपचर्य्याद्या धर्माः सिद्धान्तिसाधके ॥ २९३ ॥ ऋषिर्ब्रह्मा देवता तु मातृकाख्या सरस्वती ॥ हलो बीजानि गायत्री छन्दः शक्तिः स्वरास्स्मृताः ॥ २९४ ॥

---

१ ॐ अस्य श्रीमातृकान्यासस्य ब्रह्मा ऋषिर्गायत्री छन्दः मातृकाख्या सरस्वती देवता हलो बीजानि स्वराः शक्तयः अव्यक्तं कीलकम्, अभीष्टसिद्धये विनियोगः । ब्रह्मर्षये नमः शिरसि, गायत्रीछन्दसे नमो मुखे, मातृकासरस्वत्यै देवतायै नमो हृदि, हल्भ्यो बीजेभ्यो नमो गुह्ये, स्वरेभ्यः शक्तिभ्यो नमः पादयोः । अव्यक्ताय कीलकाय नमो नाभौ ॥

अव्यक्तं कलिमुद्दिष्टं नियोगोभीष्टसिद्धये ॥ दक्षे[1] करतले तस्य पृष्ठे च करभे तथा ॥ २९५ ॥ अंगुष्ठादिष्वथो वामे विपर्य्यासेन विन्यसेत् ॥ बिन्दुयुक्ता-न्क्रमेणैव स्वरान्न्यासोऽयमादिमः ॥ २९६ ॥ अयं[2] चेन्न्यासतो वामः संहारन्यास उच्यते ॥ पापशत्रुक्षयाद्यर्थं क्रमेणादौ समाचरेत् ॥ २९७ ॥ सविसर्गैः स्वरैर्यस्तु केवलं न्यासवत्कृतः ॥ सृष्टिन्यासः प्रयोगादौ कर्त्तव्यस्तस्य सिद्धये ॥ २९८ ॥ वामात्करतलात्तत्तु कनिष्ठांतं तु विन्यसेत् ॥ अष्टौ स्वराँल्लकारादींस्तथा दक्षतलादपि ॥ २९९ ॥ अकाराद्यान्बिन्दुसर्गयु-क्तान्न्यासोयमीरितः ॥ स्थित्यादौ मुनिदेवादिप्राग्वत्कायस्थितावयम् ॥ ॥ ३०० ॥ ककारादिणकारान्तान्[3]वर्णान्पञ्च दशैव हि ॥ अङ्गुष्ठादिक-निष्ठान्तं दक्षहस्तस्य पर्व ॥ ३०१ ॥ न्यसेद्बिन्दुयुतान्सर्वान्वामेप्येवं तु

---

१ दक्षिणहस्तस्य करतलकरपृष्ठयोः पुनः करभ अर्थान्मणिबन्धात्कनिष्ठिकामूलपर्यन्तं हस्त-बहिर्भागः पुनरंगुष्ठाद्यंगुलीषु अं आं इं ईं उं ऊं ऋं ॠं, एता अष्टमातृकाः पुनः वामहस्तस्य कनिष्ठा-नामिकामध्यमातर्जन्यंगुष्ठकरभकरतलेषु न्यसेत् ॥ लृं ॡं एं ऐं ओं औं अं अः, एता अष्टमातृकाः क्रमतो न्यसेत् ॥ अं नमो दक्षिणहस्तस्य करतले, आं नमो दक्षिणकरपृष्ठे, इं नमो दक्षिणकरभे, ईं नमो दक्षिणांगुष्ठे, उं नमो दक्षिणतर्जन्याम्, ऊं नमो दक्षिणमध्यमांगुल्याम्, ऋं नमो दक्षिणानामि-कायाम्, ॠं नमो दक्षिणकनिष्ठिकांगुल्याम्, लृं नमो वामहस्तस्य कनिष्ठिकांगुल्याम्, ॡं नमो वामा-नामिकायाम्, एं नमो वाममध्यमायाम्, ऐं नमो वामतर्जन्याम्, ओं नमो वामांगुष्ठे, औं नमो वाम-करभे, अं नमो वामकरपृष्ठे, अः नमो वामकरतले ॥ इति स्थितिन्यासः । २ पुनः एतस्येवविप-र्यये न्यासस्य करणं संहारन्यासं ब्रुवते । पुनर्यः स्थितिन्यासस्यैव क्रममातृकासु विसर्गं मेलयित्वान्यासः क्रियते स सृष्टिन्यासःप्रोच्यते ॥ यथा-अः नमो दक्षिणकरतले, आः नमो दक्षिणकरपृष्ठे, इः नमो दक्षिणकरभे एतद्रीत्या ज्ञेयम् । ३ ककाराण्णपर्यन्तं पञ्चदशाक्षराणि दक्षिणहस्तपञ्चदशपर्वसु पुनः तकाराच्छकारपर्यंतं तान्येवाक्षराणि वामपाणिपर्वसु न्यसेत् ॥ यथा- कं नमः दक्षांगुष्ठमूले, खं नमः अंगुष्ठमध्ये, गं नमः अंगुष्ठाग्रे, घं नमः तर्जनीमूले, ङं नमः तर्जनीमध्ये, चं नमः तर्जन्यग्रे, छं नमः मध्यमामूले, जं नमः मध्यमामध्ये झं नमः मध्यमाग्रे, ञं नमः अनामिकामूले, टं नमः अनामि-कामध्ये, ठं नमः अनामिकाग्रे, डं नमः कनिष्ठामूले, ढं नमः कनिष्ठामध्ये, णं नमः कनिष्ठाग्रे, ॥ इत्थमेव वामपाणिपर्वसु ताद्यक्षराणि न्यसेत् ॥ यथा-तं नमः वामांगुष्ठमूले, थं नमः वामांगुष्ठमध्ये, द नमः वामांगुष्ठाग्रे, इत्यादि न्यासं विधाय ॥

तादिकान् ॥ अङ्गुष्ठादिकनिष्ठान्तं हस्तयुग्मेपि विन्यसेत् ॥ ३०२ ॥ युगपत्पादिकान्वर्णान्ब्रूयात्तश्च नमोन्तकान् ॥ तत्तत्स्थाने करं दत्त्वा करशुद्धिकरस्त्वयम् ॥ ३०३ ॥ अंआंमध्ये कवर्गः स्यादिंईंमध्ये चवर्गकः ॥ उंऊंमध्ये टवर्गस्तु एंऐंमध्ये तवर्गकः ॥ ३०४ ॥ ओंऔंमध्ये पवर्गः स्यादं अः मध्ये तु यादिकाः ॥ एभिः सबिन्दुकैरङ्गुल्यादिन्यासो हृदादिकः ॥ ३०५ ॥ कर्त्तव्योऽस्यापि ऋष्यादिविनियोगस्य सिद्धये ॥ षडङ्गशुद्ध्यै क्रोधादिजातपापनिवृत्तये ॥ ३०६ ॥ तालत्रयेण दिग्बन्धं प्रकुर्य्यादस्त्रमन्त्रतः ॥ ततो ध्यायेत्पद्मवर्णं श्वेतं शिरसि संस्थितम् ॥ ३०७ ॥ कर्णिकाया निजं मन्त्रं संस्मरेत्केशराष्टके ॥ स्वरयुग्मं तथा पत्रेष्वपि सप्तसु कादिकान् ॥ ३०८ ॥ सप्तवर्गानष्टमेऽत्र लंक्षमेवं विचिन्तयेत् ॥ एवं चिन्तयतो रोगो ह्यपमृत्युर्विनश्यति ॥ ३०९ ॥ अथान्तर्मातृकान्यासं वक्ष्येऽन्तःसिद्धिकारकम् ॥ यं कृत्वा योगिनां

---

१ पुनः षं सं हं लं क्षं नमो दक्षहस्ते, षं सं हं लं क्षं नमो वामहस्ते । २ यथा— अं कं खं गं घं ङं आं अंगुष्ठाभ्यां नमः, इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः, उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः, एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः, ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः अं यं रं लं वं शं षं सं हं लं क्षं अः करतलकरपृष्ठाभ्यां नमः ॥ इत्थमेव हृदयादिन्यासानामपि करणमुचितम् । ३ जैसे यथा अस्य श्रीमातृकान्यासस्य ब्रह्मा ऋषिर्गायत्री छन्दः मातृकाख्या सरस्वती देवता हलो बीजानि इत्यादि सर्वं प्रथममेव लिखितं तद्वीस्यैव न्यासः क्रियेत । ४ पुनरेतन्न्यासष्यादिस्मरणप्रथमं कृत्वान्यन्यासकरणं योग्यम् । शिरसि अष्टदलकमलस्य ध्यानं विधाय तत्कर्णिकामध्ये यत्फलं भवति तत्र (हंसः) पुनः केशरादर्वागर्थादिकदलादुत्तरं यद्द्वितीयमस्ति तयोर्द्वयोर्मध्ये द्विद्विस्वराणां पुनः सप्तमदले कादिसप्तवर्गाणां त्वष्टमे दले (लंक्षं) अस्य मन्त्रस्य ध्यानं क्रियेत । अस्य चक्रं लिख्यते ॥ ५ पुनर्यन्मूले अथान्तर्मातृकान्यासं वक्ष्येऽन्तःसिद्धिकारकम् ॥ इदमुक्तं परन्तु एतन्मातृकान्यासप्रकारो न प्रकटीकृतः । तद्विधिस्तन्त्रान्तरादाहृत्य लिख्यते ॥ अं इं उं ऋं ऌं एं ऐं ओं औं नमः इति कण्ठदेशस्थे धूम्राभे षोडशदले विशुद्धचक्रे ॥ कं खं गं घं ङं चं छं जं झं ञं टं ठं नमः इति हृदयस्थे प्रवालवर्णे द्वादशदले अनागतचक्रे ॥ डं ढं णं तं थं दं धं नं पं फं नमः इति नाभ्युपरिस्थे नीलवर्णे-दशमदले मणिपूरकचक्रे ॥ बं भं मं यं रं लं नमः इति नाभ्यधोभागस्थे विद्युद्वर्णे षड्दले स्वाधिष्ठानचक्रे ॥ वं शं षं सं नमः इति सुवर्णाभे चतुर्थदले मूलाधारचक्रे ॥ हं क्षं नमः इति भ्रूमध्यदेशस्थे चन्द्राभे द्विदले आज्ञाचक्रे ॥ सहस्रारे हिमानिभे सर्ववर्णविभूषिते ॥ अकखादित्रिरेखासु आलक्षत्रयभूषिते ॥ परबिन्दुभ्यो नमः ॥

चित्तं पातके न प्रवर्त्तते ॥ ३१० ॥ मूलाधारे ध्वनिं श्रुत्वा प्रबुद्धा शक्तिकुण्डली ॥ क्वचित्पावकसङ्काशा सूक्ष्मतेजस्स्वरूपिणी ॥ ३११ ॥ बहिर्न्यासमथो वक्ष्ये पूर्वोक्तब्रह्मरन्ध्रके ॥ वर्णारविन्दे सन्ध्यायेन्मातृकाख्य-सरस्वतीम् ॥ ३१२ ॥ पञ्चाशद्वर्णभेदैर्निजसुवदनदोःपादयुक्कुक्षिवक्षोदेशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम् ॥ अक्षस्रक्कुम्भचिन्तालिखि-तवरकरां त्रीक्षणां पद्मसंस्थामक्षाकल्पामतुच्छस्तनजघनभरां भारतीं

गुणशतनागसंख्याकश्लोकाद्रामशतदशसंख्यापूरकपर्यंतमेतच्चक्रवर्णान् । मूलादि-ब्रह्मरंध्रांतं बिंदुं चिदात्मकं ध्यात्वा तत्स्रुतसुधासारैर्मातृकां तर्पयेत् । तन्त्रान्तरेषु हंसःइत्येतन्मनुस्थाने हसौं लिखेत् ॥ भूपूरे पूर्वोक्तदि-क्पालानां चायुधानां पूजा । एवं विभाव्यम् ॥



तां नमामि ॥ ३१३ ॥ ललाटे मुखवृत्तेक्षिश्रवोनासासु गण्डयोः ॥

---

१ त्रिशतभूतपरिच्छेदपूरकश्लोकात्त्रिशताष्टादशश्लोकपर्यन्तम्मातृकान्यासविधिर्मूलमनो वर्त्तते । यथा—अं ललाटे, आं नमो मुखे, इं नमो दक्षनेत्रे, ईं नमो वामनेत्रे, उं नमो दक्षकर्णे, ऊं नमो वामकर्णे, ऋं नमो दक्षनासायाम्, ॠं नमो वामनासायाम्, लृं नमो दक्षकपोले, लॄं नमो वामकपोले, एं नमः ओष्ठे, ऐं नमः अधरे, ओं नमः ऊर्ध्वदन्तपङ्क्तौ औंनमः अधोदन्तपङ्क्तौ, अं नमः मूर्ध्नि, अः नमो मुखे, अं पुनः अः एतद्द्वयमातृकान्यासस्थानमत्र ग्रन्थे शिरः मुखञ्च कथितम् । परन्तु वीरचूडामण्यादिष्वन्यतन्त्रेषु अः नमो जिह्वाग्रे एवं न्यासदर्शनं तदप्युचितम् । कं नमो दक्षिणबाहुमूले, खं नमः कर्पूरे, गं नमो मणिबन्धे, घं नमः अंगुलिमूले, ङं नमः अंगुल्यग्रे, चं नमो वामबाहुमूले, छं नमः कर्पूरे, जं नमः मणिबन्धे, झं नमः अंगुलिमूले, ञं नमः अंगुल्यग्रे, टं नमः दक्षपादमूले, ठं नमः जानुनि, डं नमो गुल्फे, ढं नमो दक्षपादांगुलिमूले, णं नमः अंगुल्यग्रे, तं नमः वामपादमूले, थं नमः जानुनि, दं नमः गुल्फे, धं नमः वामपादांगुलिमूले, नं नमः वामपादांगुल्यग्रे, पं नमः दक्षपार्श्वे, फं नमः वामपार्श्वे, बं नमः पृष्ठे, भं नमो नाभौ, मं नमो जठरे, यं त्वगात्मने नमो हृदये रं असृगात्मने नमः दक्षांसे, लं मांसात्मने नमः ककुदि, वं मेद आत्मने नमः वामांसे, शं अस्थ्यात्मने नमः हृदयादक्षभुजाग्रान्तम्, षं मज्जात्मने नमो हृदयाद्वामभुजाग्रान्तम् सं शुक्रात्मने नमः हृदयाद्दक्षिणपादाग्रान्तम्॥ हं आत्मने नमः हृदयाद्वामपादाग्रान्तम् ॥ ळं अन्तरात्मने नमः हृदयान्मस्तकान्तम्, पुनः अन्यत्र ग्रन्थान्तरे दृश्यते ळं नमः हृदयादुदरपर्य्यन्तम्, इति सृष्टिक्रममातृकान्यासः॥ क्षं परमात्मने नमः हृदयान्मुखपर्य्यन्तम् ॥ एभिरेव मातृकावर्णैर्विन्दुरहितैस्सविसर्गैर्मातृकान्यास उक्तस्थानेषु जायते । यथा—अः नमः ललाटे, आः नमः मुखे, इः नमः, दक्षनेत्रे ईः नमः वामनेत्रे इत्यादि ॥ पुनर्विन्दुप्रयुक्तोयमेव न्यासो विपरीतः संहारन्यासः प्रचक्ष्यते । अयं क्षकारमारभ्याकारपर्यन्तं पूर्णो भवति यथा—क्षं परमात्मने नमः हृदयान्मुखपर्य्यन्तम्, ळं अन्तरात्मने नमः हृदयादुदरपर्य्यन्तम्, हं आत्मने नमः हृदादिवामपादपर्य्यन्तम्, सं शुक्रात्मने नमः हृदादिदक्षपादपर्य्यन्तम्, षं मज्जात्मने नमः हृदयाद्वामबाहुपर्य्यन्तम्, शं अस्थ्यात्मने नमः हृदयादक्षबाहुपर्य्यन्तम्, वं मेदात्मने नमः वामस्कन्धे, लं मांसात्मने नमः ककुदि, रं असृगात्मने नमः दक्षांसे, यं त्वगात्मने नमः हृदये, मं नमः उदरे, भं नमो नाभौ, बं नमः पृष्ठे, फं नमो वामपादे, पं नमः दक्षपादे, नं नमः वामपादांगुल्यग्रे, धं नमः वामपादांगुलिमूले, दं नमः वामपादगुल्फे, थं नमः वामपादजानुनि, तं नमः वामपादमूले, णं नमः दक्षपादांगुल्यग्रे, ढं नमः दक्षपादांगुलिमूले, डंनमः दक्षपादगुल्फे, ठं नमः दक्षपादजानुनि, टं नमः दक्षपादमूले, ञं नमो वामकरांगुल्यग्रे,झं नमो वामकरांगुलिमूले, जं नमः वामकरमणिबन्धे, छं नमः वामबाहुकूर्परे, चं नमः वामबाहुमूले, ङं नमो दक्षकरांगुल्यग्रे, घं नमः दक्षकरांगुलिमूले, गं नमः दक्षकरमणिबन्धे, खं नमः दक्षबाहुकूर्परे, कं नमः दक्षबाहुमूले, अः नमः मुखे, अं नमः मूर्ध्नि, औं नमः अधोदन्तपंक्तौ, ओं नमः ऊर्ध्वदन्तपंक्तौ, ऐं नमः अधरे, एं नमः ऊर्ध्वोष्ठे, लॄं नमः वामकपोले,लृं नमः दक्षकपोले, ॠं नमः वामना-

ओष्ठयोर्दन्त पङ्क्त्योश्च मूर्ध्नि वक्त्रे न्यसेत्स्वरान् ॥ ३१४ ॥ बाहुसन्धिषु साग्रेषु कचवर्गौ न्यसेत्सुधीः ॥ टतवर्गौ पदोदस्त द्वत्पार्श्वयोः पृष्ठदेशतः ॥ ३१५ ॥ नाभौ कुक्षौ पवर्गं च हृदं सककुततः ॥ न्यस्य यादि चतुर्वर्णाञ्छादिषट्कं ततो न्यसेत् ॥ ३१६ ॥ हृदादिकरयोरंध्र्योर्जठरे वदने तथा ॥ न्यासस्त्वयं वर्णमात्राहीनपाठप्रपूरकः ॥ ॥ ३१७ ॥ क्षमारभ्य अकारान्तो न्यासश्चेत्क्रियते तदा ॥ संहारन्यासनामासौ बिन्दुन्यास इतीरितः ॥ ३१८ ॥ वाममार्गे प्रवृत्तानां शक्तिसेवनकारिणाम् ॥ अन्तर्न्यासात्परं बिन्दुन्यासे स्याच्छुक्रधारणम् ॥ ३१९ ॥ यावत्क्लिन्ना भवेच्छक्तिस्तावद्भोगो विधीयते॥ वामदक्षिणमार्गेण देवताध्यानमुच्यते ॥ ३२० ॥ अक्षस्रजं हरिणपोतमुदग्रटङ्कं विद्यां करैरविरतं दधतीं त्रिनेत्राम्॥ अर्धेन्दुमौलिमरुणामरविन्दवासां वर्णेश्वरीं प्रणमत स्तनभारनम्राम् ॥३२१॥ शाक्तो मनोरथः पूर्णो विसर्गन्यासमाचरेत्॥ततो बिन्दुः पतेत्तस्मादतो बिन्दु-

---

सापुटे, ऊं नमः वामकर्णे, उं नमः दक्षकर्णे ईं नमः वाम नेत्रे. इं नमः दक्षनेत्रे. आं नमः मुखवृत्ते. अं नमः ललाटे. इति संहारमातृकान्यासः ॥ पुनर्डकारमारभ्य ठकारपर्यन्तं स्थितिमातृकान्यासो विधातुमुचितः । तथाहि डं नमः दक्षपादगुल्फे, ढं नमः दक्षपादांगुलिमूले, णं नमः दक्षपादांगुल्यग्रे. तं नमः वामपादमूले. थं नमः जानुनि. दं नमः गुल्फे. धं नमः वामपादांगुलिमूले. नं नमः वामपादांगुल्यग्रे. पं नमः दक्षपार्श्वे, फं नमः वामपार्श्वे. बं नमः पृष्ठे, भं नमः नाभौ. मं नमः जठरे, यं त्वगात्मने नमः हृदि. रं असृगात्मने नमः दक्षांसे लं मांसात्मने नमः ककुदि वं मेदात्मने नमः वामांसे, शं अस्थ्यात्मने नमः हृदयाद्दक्षिणबाहुपर्य्यन्तम् षं मज्जात्मने नमः हृदयाद्वामबाहुपर्य्यन्तम् ॥ सं शुक्रात्मने नमः हृदयाद्दक्षिणपादपर्य्यन्तम् हं आत्मने नमः हृदयाद्वामपादपर्य्यन्तम् ळं अन्तरात्मने नमः हृदयादुदरपर्य्यन्तम् क्षं परमात्मने नमः हृदयान्मुखपर्य्यन्तम् अं नमः शिरसि, आं नमः मुखवृत्ते इं नमः दक्षनेत्रे ईं नमः वामनेत्रे उं नमः दक्षकर्णे ऋं नमः दक्षनासापुटे ॠं नमः वामनासापुटेः ऌं नमः दक्षकपोले ॡं नमः वामकपोले एं नमः ऊर्ध्वोष्ठे. ऐं नमः अधरोष्टे ओं नमः ऊर्ध्वदन्तपंक्तौ, औं नमः अधोदन्तपंक्तौ, अं नमः मूर्ध्नि अः नमः मुखे कं नमः दक्षबाहुमूले, खं नमः कूर्परे, गं नमः मणिबन्धे, घं नमः अंगुलिमूले, ङं नमः अंगुल्यग्रे, चं नमः वामबाहुमूले, छं नमः कूर्य्यरे, जं नमः मणिबन्धे, झं नमः अंगुल्यग्रे, टं नमः दक्षपादमूले, ठं नमः दक्षपादजानुनि इति स्थितिन्यासः ॥ सृष्टिस्थितिन्यासौ सेन्दुभिर्वा साविसर्गैर्मातृकावर्णैर्जायेते संहारन्यासस्तु केवलं बिन्दुयुङ्मातृकावर्णैर्भवतीति ज्ञेयम् ।

विसर्गकौ ॥ ३२२ ॥ न्यासौ प्रोक्तौ यदा शाक्तवामिनः कौलिकस्य वा ॥ शाक्तैस्तृप्तिं विना सर्वं न्यासेनापि विमुच्यते ॥ ३२३ ॥ तदासौ निरयं याति यावच्चन्द्रदिवाकरौ॥ इह लोकेऽप्ययंशस्स्याद्विहीनो ब्रह्मतेजसा॥ ३२४॥ भोगमोक्षधिया वामे पतितुं ये समुद्यताः ॥ विना मन्त्रं सर्प्पमणिं ते ग्रहीतुं समुद्यताः ॥ ३२५ ॥ विसर्गमातृकान्यासो भवेत्केवलमातृवत् ॥ विशेषस्तु विसर्गान्तो वर्णोच्चारो भवेदिति ॥ ३२६ ॥ बिन्दुसर्गयुताण्डादि ठान्तान्वर्णान्स्थितौ न्यसेत् ॥ पूर्वोक्ता एव मन्त्राद्याः षडंगध्यानमुच्यते ॥ ३२७ ॥ सिन्दूरकान्तिममिताभरणान्त्रिनेत्रां विद्याक्षसूत्रमृगपोतवरान्दधानाम् ॥ पार्श्वस्थितां भगवतीमपि काञ्चनाभा ध्यायेत्कराब्जधृतपुस्तकवर्णमालाम् ॥ ३२८॥ न्यासाः कार्य्यास्तु वटुभिस्स्थितिसंहारसृष्टयः ॥ संहारसृष्टिस्थितयो न्यस्यन्ते गृहसेविभिः ॥ ३२९ ॥ वानप्रस्थाश्च यतयो सृष्टिस्थितिलयान्त्रमात् ॥ ३३० ॥ न्यासान्कुर्य्युरिति प्रोक्तो मातृकान्यासविस्तरः ॥ वक्ष्ये कलामातृकाया न्यासं तस्य ऋषिः स्मृतः ॥ ३३१ ॥ प्रजापतिश्च गायत्री छन्दः स्यादत्र देवता ॥ सरस्वती मातृकाख्या नियोगोभीष्टसिद्धये ॥ ॥ ३३२ ॥ तारैः[1] षडंगं कुर्वीत ह्रस्वदीर्घान्तरस्थितैः ॥ ध्यानं कलामातृकाया न्यासे वक्ष्ये शृणु प्रिये ॥ ३३३ ॥ हस्तैः पद्मं रथांगं गुणमथ हरिणं पुस्तकं वर्णमालां टंकं शुभ्रं कपालं स्रवदमृतलसद्धेमकुम्भं वहन्तीम् ॥ मुक्ताविद्युत्पयोदस्फटिकमणिजपाबन्धुरैः पञ्चवक्त्रैस्त्र्यक्षैर्वक्षोजनम्रां सकलशशिनिभां शारदां तां नमामि ॥ ३३४ ॥ ध्यात्वैवं तारपूर्वान्तामकाराद्यां च मातृकाम् ॥ बिन्दुयुक्तां ङेन्तकलानामाढ्यां नमसान्विताम् ॥ ३३५ ॥ पूर्वोक्तशुद्धमात्राणां न्यासस्थानेषु विन्यसेत् ॥ निवृत्तिश्च प्रतिष्ठा च विद्या-

---

१ अं ॐ आं अंगुष्ठाभ्यां नमः, इं ॐ ईं तर्जनीभ्यां नमः, उं ॐ ऊं मध्यमाभ्यां नमः, एं ॐ ऐं अनामिकाभ्यां नमः ओं ॐ औं कनिष्ठिकाभ्यां नमः, अं ओं अः करतलकरपृष्ठाभ्यां नम इति करन्यासः एवं हृदयादिन्यासः उक्तरीत्या हृदयादिन्यासः करणीयः २ ॐकार ॐकारबिन्दुभ्यां चाकारादिमातृकार्णैः सहितनिवृत्त्यादिकलानां चतुर्थ्यन्तानां नामान्ते नमः पदं संयोज्य सूर्वोक्तललाटादिस्थानेषु न्यासो विधेयः। यथा ॐ अं निवृत्त्यै नमः ललाटे, ॐ आं प्रतिष्ठायै नमः मुखवृत्ते, ॐ इं विद्यायै नमः दक्षनेत्रे, ॐ ईं शान्त्यै नमः वामनेत्रे, ॐ उं ऋद्धिकायै नमः दक्षकर्णे, ॐ ऊं दीपिकायै नमः वामकर्णे ॥ इत्यादि ।

शांतिस्तथर्द्धिका ॥ ३३६ ॥ दीपिका रेचिका चापि मोचिका चापराभि-धा ॥ सूक्ष्मा सूक्ष्मामृता ज्ञानामृता चाप्यायिनी ततः ॥३३७॥ व्यापिनी व्योमरूपा चानन्ता सृष्टिः समृद्धिका ॥ स्मृतिर्मेधा ततः कान्तिर्द्युति-र्लक्ष्मीः स्थिरा स्थितिः ॥ ३३८ ॥ सिद्धिर्जरा पालिनी च क्षान्तिरीश्व-रिका रतिः ॥ कामिका वरदा चान्या ह्लादिनी प्रीतिसंयुता ॥ ३३९ ॥ दीर्घा तीक्ष्णा तथा रौद्री माया निद्रा च तन्द्रिका ॥ क्षुधा स्यात्क्रोधिनी पश्चात्क्रियोत्कारी समृत्युका ॥ ३४० ॥ पीता श्वेताऽरुणा पश्चादसिता नतयाऽन्विता ॥ उक्ता कलामातृकेयं स्थानेऽकारादिके न्यसेत् ॥ ३४१ ॥ तत्र नादात्मनो जाताः स्वरजास्तु सदाशिवात्॥ अक्षमालाम्पुस्तकं च पाशश्चा-पिकपालकम्॥ ३४२॥ हस्तैर्दधत्यो ध्येयास्ताः पीतगन्धानुलेपनाः ॥ विष्णो-रुकारात्सञ्जाताः कचवर्गकला दश ॥ ३४३ ॥ पद्महस्तास्तथा रक्ता अक्ष-मालाधरा वराः ॥ विष्णोरुकारात्सञ्जाताष्टतवर्गकला दश ॥ ३४४ ॥ श्यामा अभयशङ्खाब्जवरहस्तास्समीरिताः ॥ मकारा रुद्रतो जाताः पयवर्गकला नव ॥ ३४५ ॥ शरच्चन्द्रनिभा हस्तैरभयं शूलमेव च ॥ कपालं च वरन्ध्येया दधत्य इति साधकैः ॥ ३४६ ॥ शकारादिकपञ्चानामीश्वरो बिन्दुतो भवेत् ॥ अभयं हरिणं टङ्कं वरं च करपल्लवैः ॥ ३४७ ॥ दधत्यो रक्तवर्णाश्च ध्येया न्यासे कलात्मके ॥ केशवादिमातृकायाः साध्यो नारायणो मुनिः ॥ ३४८ ॥ अमृताद्या तु गायत्रीच्छन्दोलक्ष्मीर्हरिः सुरः ॥ ह्रिरुक्तैः शक्तिश्रीकामैः षड-ङ्गानि समाचरेत् ॥ ३४९ ॥ शङ्खचक्रगदापद्मकुम्भादर्शाब्जपुस्तकम् ॥ बिभ्रतं मेघचपलावर्णं लक्ष्मीहरिं भजे ॥३५०॥ शक्तयस्तु प्रियांकेषु निषण्णाः सस्मिताननाः ॥ एवं ध्यात्वा न्यसेच्छँक्तिश्रीकामपुटिताक्षराम् ॥ ३५१ ॥

---

१ मया इति पाठान्तरम्। २ ह्रीं हृदयाय नमः श्रीं शिरसे स्वाहा क्लीं शिखायै वषट् ह्रीं कवचाय हुम् श्रीं नेत्राभ्यां वाषैट् क्लीं अस्त्राय फट् । ३ ॐ ह्रीं श्रीं क्लीं अं क्लीं श्रीं ह्रीं केशवकीर्तिभ्यां नमः ललाटे ॐ ह्रीं श्रीं क्लीं आं क्लीं श्रीं ह्रीं नारायणकान्तिभ्यां नमः मुखवृत्ते ॐ ह्रीं श्रीं क्लीं इं क्लीं श्रीं ह्रीं माधवतुष्टिभ्यां नमः दक्षनेत्रे ॐ ह्रीं श्रीं ईं क्लीं श्रीं ह्रीं गोविन्दपुष्टिभ्यां नमः वामनेत्रे ।

तारादिहृदयान्ताश्च केशवाद्याश्च शक्तयः॥ ङ्यान्ता नमोन्ता उच्चार्य्याः स्थानेऽकारादिके न्यसेत् ॥ ३५२ ॥ कलामात्रा तु शाक्तानां नित्योयं विष्णुसेवने॥ केशवः कीर्तिसंयुक्तः कान्तिर्नारायणान्विता ॥ ३५३ ॥ माधवस्तुष्टिसंयुक्तो गोविन्दः पुष्टिसंयुतः ॥ विष्णुश्च धृतिसंयुक्तः शान्तियुङ्मधुसूदनः ॥ ३५४॥ त्रिविक्रमः क्रियायुक्तो वामनो दययान्वितः ॥ श्रीधरो मेधया युक्तो हृषीकेशश्च हर्षया॥ ३५५॥पद्मनाभयुता श्रद्धा लज्जा दामोदरान्विता ॥ वासुदेवश्च लक्ष्मी युङ्म धुसूऽनसरस्वती ॥ ३५६ ॥ प्रद्युम्नः प्रीतिसंयुक्तोऽनिरुद्धो रतिसंयुतः ॥ चक्री जया गदी दुर्गा शार्ङ्गी तु प्रभयान्वितः ॥ ३५७ ॥ खड्गी तु समया युक्तः शङ्खी चण्डासमन्वितः ॥ हली वाणीसमायुक्तो मुशली च विलासिनी ॥ ३५८ ॥ शूली विजयया युक्तः पाशी विरजयान्वितः ॥ अंकुशी विश्वया युक्तो मुकुन्दो विनयान्वितः ॥ ३५९ ॥ नन्दजः सुनदायुक्तो नन्दी सत्यासमन्वितः ॥ नर ऋद्ध्या नरकजित्समद्ध्या शुद्धियुग्घरिः ॥ ॥ ३६० ॥ कृष्णो बुद्ध्या भूत्या सत्यो मत्या युक् सात्वतस्स्मृतः ॥ भूधरः क्लेदिनीयुक्तो विश्वमूर्तिश्च क्लिन्नया ॥ ३६१ ॥ वैकुण्ठो वसुधायुक्तो वसुदापुरुषोत्तमौ ॥ बली तु परया युक्तो बलानुजपरायणे ॥ ३६२ ॥ बालसूक्ष्मे वृषघ्नस्तु सन्ध्यायुक्प्रज्ञया वृषः ॥ हंसः प्रभासमायुक्तो वराहो निशयान्वितः ॥ ३६३ ॥ विमलो मेधया युक्तो नृसिंहो विद्युतान्वितः ॥ केशवाद्या मातृकोक्ता यादियोगश्च पूर्ववत् ॥ ३६४ ॥ वक्ष्येथ शिवभक्तानां श्रीकण्ठादिकमातृकाम् ॥ मुनिः स्याद्दक्षिणामूर्तिर्गायत्रं छन्द ईरितम् ॥ ३६५ ॥ अर्धाद्रिजो हरो देवो नियोगः सर्वसिद्धये ॥ हलो बीजानि गुह्ये तु स्वराञ्छक्तीः पदोर्न्यसेत् ॥ ३६६ ॥ ह्रस्वदीर्घान्तरे कृत्वा प्राग्वद्वर्गान्हसौं तथा ॥ षड्दीर्घसंयुतं कृत्वा षडङ्गानि न्यसेत्तनौ ॥ ३६७ ॥ बन्धूककाञ्चननिभं रुधिराक्षमालाः पाशांकुशौ च वरदं निजबाहुदण्डैः ॥ बिभ्राणमिन्दुशकलाभरणं त्रिनेत्रमर्धाम्बिकेशमनिशं[1] वपुराश्रयामः ॥ ३६८ ॥ हसौं

१ विनोदया इति पाठान्तरम् ॥

ते मातृकामुक्ता देवान्ते च समुच्चरेत् ॥ ङेन्तफेन्तकतच्छक्तिं नमोन्ता मातृकास्थले ॥ ३६९ ॥ त्वगसृङ्मांसमेदोस्थिमज्जशुक्राण्यसून्वदेत् ॥ शक्तिं क्रोधन्तथात्मानं ङेन्तं यादिदशस्वपि ॥ ३७० ॥ श्रीकण्ठपूर्णोदर्य्यौ चानन्तो विरजयान्वितः ॥ सूक्ष्मेशः शाल्मली युक्तो लोलाक्षी युक् त्रिमूर्तिकः ॥ ॥ ३७१ ॥ अमरेशो वर्त्तुलाक्ष्या वर्षीशो दीर्घघोणया ॥ भारभूतिर्दीर्घमुख्या तिथीशो गोमुखीयुतः ॥ ३७२ ॥ स्थाण्वीशो दीर्घजिह्वायुग्हरः कुण्डोदरीयुतः ॥ झिण्टीशश्चोर्ध्वकेशी च भौतिको विकृतास्यया ॥ ॥ ३७३ ॥ सद्यो ज्वालामुखी चानुग्रहश्चोल्कामुखीयुतः ॥ अक्रूरः श्रीमुखी महासेनो विद्यामुखीयुतः ॥ ३७४ ॥ क्रोधनश्च महाकाल्या चण्डेशश्च सरस्वती ॥ पञ्चान्तकः सर्वसिद्धिगौरीयुक्तः प्रकीर्तितः ॥ ३७५ ॥ शिवोत्तमेशो विन्यस्यो युक्तस्त्रैलोक्यविद्यया ॥ एकरुद्रो मन्त्रशक्त्या कूर्मेशश्चाष्टशक्तियुक् ॥ ३७६ ॥ एकनेत्रो भूतमात्रायुक्तः स्याच्चतुराननः ॥ लम्बोदर्य्या युतः प्रोक्तस्त्वजेशो द्राविणीयुतः ॥ ३७७ ॥ सर्वेशो नागरीयुक्तः सोमेशः खेचरीयुतः ॥ लांगलीशश्च मञ्जर्य्या दारुकेशश्च रूपिणी ॥ ३७८ ॥ वारिण्या चार्धनारीशो ह्युमाकान्तः पुनर्युतः ॥ काकोदर्य्या तथाषाढी पूतनायुक्त ईरितः ॥ ३७९ ॥ चण्डीशो भद्रकालीयुगत्रीशो योगिनीयुतः ॥ मीनेशः शङ्खिनीयुक्तो मेषेशस्तर्जनीयुतः ॥ ३८० ॥ लोहितः कालरात्र्या च शिखीशः कुब्जिनीयुतः ॥ छगलण्डः कपर्दिन्या द्विदण्डीशश्च वज्रया ॥ ॥ ३८१ ॥ महाकालो जयायुक्तो बालीशः सुमुखेश्वरी ॥ भुजङ्गो रेचनीयुक्तः पिनाकी माधवीयुतः ॥ ३८२ ॥ खड्गीशो वारुणीयुक्तो बकेशो वायवीयुतः ॥ श्वेतो रक्षोविदारिण्या भृगुः सहजया युतः ॥ ३८३ ॥ नकुलीशश्च लक्ष्मीयुक् शिवेशो व्यापिनीयुतः ॥ संवर्त्तको महामायायुक्त एतास्तु मातृकाः ॥ ३८४ ॥ श्रीकण्ठाख्यादिमहेशान्तं पदं ङेन्तं प्रयोजयेत् ॥ सर्वे रुद्राः स्मृता रक्ता धृतशूलकपालकाः ॥ ३८५ ॥ शक्तयो रुद्रपीठस्थाः सिन्दूरारुणविग्रहाः ॥ रक्तोत्पलकपालाभ्यामलंकृतकराम्बुजाः ॥ ३८६ ॥ येनोपास्या महाविद्या दश तस्याधिकारिता ॥ भुवनेशी बीजपूर्वमातृकान्य-

सने सुराः ॥ ३८७ ॥ ऋषिः शक्तिस्तु गायत्री छन्दस्स्यान्मातृकामयी ॥ भुवनेशी देवताथ नियोगोभीष्टसिद्धये ॥ ३८८ ह्रस्वदीर्घान्तरगतैः षड्भिर्दीर्घ संयुतैः ॥ प्राग्वद्धरे षडङ्गं स्यादंगुष्ठादि तथैव च ॥ ३८९ ॥ उद्यत्कोटि-दिवाकरप्रतिनिभोत्तुङ्गोरुपीनस्तनी बद्धार्धेन्दुकिरीटहाररशनामञ्जीरसंशोभिता ॥ बिभ्राणा करपङ्कजैर्जपवटीं पाशांकुशौ पुस्तकं दिश्यान्नो जगदीश्वरी त्रिनयना पद्मे निषण्णा सुखम् ॥ ३९० ॥ लज्जाबीजं पूर्वमुक्त्वा मातृकान्यास एव हि ॥ भुवनेशी मातृकाणां न्यासो नार्पत्यसाधने ॥ ३९१ ॥ श्रीबीजपूर्वकः कार्य्यो लक्ष्मीकामैर्गृहस्थितैः ॥ ऋषिर्भृगुश्च गायत्रीछन्दो मातृस्वरूपिणी ॥ ३९२ ॥ लक्ष्मीस्तु देवता प्रोक्ता हरस्थाने शरौ कुरु ॥ न्यासार्थं तु षडङ्गादि शेषं श्रीबीजपूर्वकम् ॥३९३॥ विद्युद्दामसमप्रभां हिमगिरिप्रख्यैश्चतुर्भिर्भुजैः शुण्डादण्डसमुद्धृतामृतघटैरासिच्यमानामिमाम् ॥ बिभ्राणां करपङ्कजैर्जपवटीं पद्मद्वयं पुस्तकं भास्वद्रत्नसमुज्ज्वलां कुचनतां ध्यायेज्जगत्स्वामिनीम् ॥३९४ ॥ कामिनीमात्रसिद्ध्यर्थं कामबीजादिपूर्वकम् ॥ कुर्य्याच्च मातृकान्यासं मुनिः सम्मोहनः स्मृतः ॥ ३९५ ॥ गायत्रीच्छन्द उद्दिष्टं देवता मातृकामयी ॥ सम्मोहनी महादेवी पूर्वयुक्त्या षडङ्गकम् ॥ ३९६ ॥ बालार्ककोटिरुचिरां स्फटिकाक्षमालां कोदण्डमिक्षुजनितं स्मर, पञ्चबाणान् ॥ विद्यां च हस्तकमलैर्दधतीं त्रिनेत्रां ध्यायेत्समस्तजननीं नवचन्द्रचूडाम् ॥ ३९७ ॥ शक्तिश्रीकामबीजानां मातृकान्यासतो नृणाम् ॥ शत्रुत्वाद्या मन्त्रदोषा नश्यन्ति बहुवर्णिताः ॥ ३९८ ॥ महासम्मोहन ऋषिर्गायत्रीछन्द ईरितम् ॥ सम्मोहनीनाम देवी न्यासः प्राङ्मातृकासमः ॥९९॥ ध्यायेयमक्षवलयेक्षुशरासपाशपद्मद्वयांकुशवरान्नव पुस्तकं च ॥ आबिभ्रतीं नवभजैररुणां कुचार्त्तां सम्मोहनीं त्रिनयनां नवचन्द्रचूडाम् ॥ ४०० ॥ सर्वविघ्ननिरासार्थमवश्यं न्यासमाचरेत्॥ गणेशमातृकायास्तु मुनिर्गणक ईरितः ४०१ ॥ निवृद्गायत्रिकाछन्दो देवः शक्तिविनायकः॥ स्मृत्या दीर्घाद्यया चाङ्गं कृत्वा ध्यायेद्गजाननम् ॥ ४०२ ॥ शूलांकुशवराभीतिपाणिं रक्ताब्जहस्तया ॥ प्रियया लिङ्गितं रक्तं त्रिनेत्रं गणपं भजे ॥ ४०३ ॥ विघ्नेशो ह्रीसमायुक्तो विघ्न

राजः श्रियायुतः ॥ विनायकः पुष्टियुतः शान्तियुक्तः शिवोत्तमः ॥ ४०४॥ विघ्नकृत्स्वास्तिसंयुक्तो विघ्नहर्ता सरस्वती ॥ गणस्तु स्वाहया युक्त एकदन्तः सुमेधया ॥ ४०५ ॥ द्विदन्तः कान्तिसंयुक्तो गजवक्त्रश्च कामिनी ॥ निरञ्जनो मोहिनीयुक्कपर्दी तु नटीयुतः ॥ ४०६ ॥ दीर्घजिह्वः पार्वतीयुक्छंकुकर्णश्च ज्वालिनी ॥ वृषध्वजो नन्दयायुक्सुयशोगणनायकौ ॥ ४०७॥ गजेन्द्रः कामरूपिण्या शूर्प्पकर्णस्तथोमया ॥ त्रिलोचनस्तेजोवत्या लम्बोदरस्तु सत्यया ॥ ४०८ ॥ महानन्दश्च विघ्नेश्या चतुर्मूर्तिः स्वरूपया ॥ सदाशिवः कामदायुगामोदो मदजिह्वया ॥ ४०९ ॥ दुर्मुखो भूतिसंयुक्तः सुमुखो भौतिकायुतः ॥ प्रमोदः सितया युक्त एकपादो रमायुतः ॥४१०॥ द्विजिह्वो महिषीयुक्तः शूरश्चापि तु जम्भिनी ॥ वीरो विकर्णया युक्तःषण्मुखो भ्रुकुटीयुतः ॥ ४११ ॥ वरदो लज्जया वामदेवः स्याद्दीर्घघोणया ॥ धनुर्धरो वक्रतुण्डो द्विरदो यामिनीयुतः ॥ ४१२ ॥ सिर्नीशो रात्रिसंयुक्तः कामान्धो ग्रामणीयुतः ॥ मत्तः शशिप्रभायुक्तो विमत्तो लोललोचनः ॥ ४१३ ॥ मत्तवाहनचञ्चलो जटी दीप्तिसमन्वितः ॥ मुण्डी सुभगया युक्तः खड्गी दुर्भगया तथा ॥ ४१४ ॥ वरेण्यश्च शिवायुक्तो भगायुग्वृषकेतनः ॥ भक्तप्रियश्च भगिनी गणेशो भोगिनीयुतः ॥ ४१५ ॥ मेघनादस्सुभगया व्यापी स्यात्कालरात्रियुक् ॥ गणेश्वरः कालिकेति प्रोक्ता विघ्नेशमातृका ॥ ४१६ ॥ त्वगादियोगो यादीनां पूर्ववत्परिकीर्तितः ॥ प्रपञ्चयागन्यासोयं वक्ष्यते भुक्तिमुक्तिदः ॥४१७॥ महागणेशमन्त्रेण प्राणायामत्रयं चरेत् ॥ ऋषिः प्रपञ्चयागस्य गणकश्छन्द ईरितम् ॥ ४१८ ॥ गायत्री तु निवृत्पूर्वा महागणपतिः सुरः ॥ शीर्षादिषु न्यसेत्तांश्च गंबीजं चापि गुह्यके ॥ ४१९ ॥ स्वाहाशक्तिं पादयोस्तु नियोगोभीष्टसिद्धये ॥ ॐ श्रीं ह्रीं क्लीं ग्लौं गमिति पूर्वषड्दीर्घयुग्मकम् ॥ ४२० ॥ उच्चार्य्य कुर्य्यादङ्गो-

१ सुरेशा इति पाठान्तरम् । २ ॐ गां हृदयाय नमः, श्रीं गीं शिरसे स्वाहा, ह्रीं गूं शिखायै वषट्, क्लीं गैं कवचाय हुम्, ग्लौं गौं नेत्रत्रयाय वौषट्, गंगः अस्त्राय । फट् एवमङ्गन्यासादिन्यासानपि विदध्यात् ॥

नि तथांगुष्ठादिषु न्यसेत् ॥ तलद्वयं तथास्त्रेण कृत्वा दिग्बन्धमाचरेत ॥ ४२१ ॥ तर्जन्यङ्गुष्ठशब्देन दशदिक्ष्वथ चिन्तयेत ॥ ततो ध्यानं प्रकुर्वीत गणपस्येष्टसिद्धये ॥ ४२२ ॥ हस्तीन्द्राननमिन्दुचूडमरुणच्छायं त्रिनेत्रं रसादाश्लिष्टं प्रियया सपद्मकरया स्वाङ्कस्थया सन्तम् ॥ बीजापूरगदाधरं त्रिशिरयुक्चक्राब्जपाशोत्पलब्रीह्यग्रस्वविषाणरत्नकलशान्हस्तैर्वहन्तं भजे ४२३ महागणपतेर्मन्त्रमष्टवारं जपेत्ततः ॥ गमित्येकाक्षरं बीजं गणकोऽस्य मुनिर्मतः ॥ ४२४ ॥ देवो विघ्नेश्वरश्छन्दो निवृद्गायत्रिकाभिधा ॥ प्रपञ्चाख्यस्य यागस्य साङ्गतासिद्धिहेतवे ॥ ४२५ ॥ चतुश्चत्वारिंशत्सङ्ख्यजपार्थं विनियोजनम् ॥ अथ षड्दीर्घयुक्तेन कुर्य्यादङ्गानि गेन तु ॥ ४२६ ॥ गदापाशाङ्कुशकरं त्र्यक्षं च तुन्दिलं वरम् ॥ सिन्दूराभं चन्द्रमौलिं सर्पभूषं गलन्मदम् ॥४२७॥ एकवारं जपेत्पश्चाद्गणानान्त्वेति वैदिकम् ॥ गणेशमालामन्त्रस्य मुनिस्तु गणकः स्मृतः ॥ छन्दो मितं गणपतिर्देवता परिकीर्त्तितः ॥४२८॥ ह्रींक्रों तारो नमः सर्वं ङेन्तं विद्याधिपं ततः ॥ सर्वार्थसिद्धिदायेति सर्वदुःखप्रशेति च ॥ ४२९ ॥ ततो मनाय एह्येहि भगवन् वादयेति च ॥ स्तम्भयेतिद्वयं ह्रीं गं गां नमो वह्निगेहिनी ॥ ४३० ॥ क्रोंह्रीमित्थं पञ्चपञ्चाशद्वर्णो मन्त्र उच्यते ॥ जपेदिमं चतुर्वारं मुन्यादिसहितंन्यसेत् ॥ ४३१ ॥ न्यासपूर्वंत्रिवारं तु मातृकाध्यानपूर्वकम् ॥ स्वरादिसप्तवर्गैस्तु ग्रहान्सप्त प्रविन्यसेत् ॥४३२॥ मुखे बाह्वोः पादयोश्च जठरे हृदये क्रमात् ॥ तारो माया च हंसश्च सोहं स्वाहेति वै पुनः ॥ ४३३ ॥ प्रपञ्चयागमन्त्रोयमष्टार्णः समुदीरितः ॥ प्रपञ्चयागमन्त्रस्य मुनिर्ब्रह्मा समीरितः ॥ ४३४ ॥ परमाद्या समाख्याता गायत्री छन्द उत्तमम्॥ महः परं समाख्यातं देवताचिन्मयात्मिकम् ॥४३५॥ त्रयन्तेऽबाधितं नित्यं सर्वव्यापि निरञ्जनम् ॥ विलोमगैः पञ्चवर्णैः प्रपञ्चमनुसंस्थितैः ॥ ४३६ ॥ ह्रस्वदीर्घान्तस्थकादिवर्गैः पूर्वसमन्वितैः ॥ तारमायादिकैरेतैर्युक्तैर्हारिहराक्षरैः ॥ ४३७॥ षडङ्गानि प्रकुर्वीत जातियुक्तानि देशिकः ॥ वेदादिपञ्चमनुभिः परिचीयमानं मानं निरस्यं मुनिभि-

जगदेकमूलम् ॥ सच्चित्समस्तगमनश्वरमच्युतं तत्तेजः परं भजत पूर्णकृपाम्बुराशि ॥ ४३८ ॥ वेदादिमाययोरन्ते क्षकारान्तान्सबिन्दुकान् ॥ पृथगुच्चार्य्य हंसोहं स्वाहेति च वदन्हृदि ॥४३९ ॥ विभावयेदिमान्वर्णानात्मवह्नौ जुहोम्यहम् ॥ एवं हुत्वा क्षकारान्तानकारान्तान्पुनर्हुनेत् ॥ ४४० ॥ सविसर्गान्क्षकारान्तान्विन्यसेन्मातृकास्थले ॥ एवं प्रपञ्चयागाख्यमातृकान्यास ईरितः ॥ ४४१ ॥ एकविंशन्ततो योगपीठाख्यं न्यासमाचरेत् ॥ तत्पूर्वमुक्तं च ततः स्वेष्टमन्त्रस्य संचरेत् ॥ ४४२ ॥ तत्तत्कल्पोदितान्पश्चात्तत्तन्मुद्राः प्रदर्शयेत् ॥ आगमोक्तेन मार्गेण न्यासान्नित्यं करोति यः ॥ ॥ ४४३ ॥ देवताभावमाप्नोति मन्त्रसिद्धिः प्रजायते ॥ यो न्यासकवचच्छन्नो मन्त्रजापपरायणः ॥ ४४४ ॥ दृष्ट्वा विघ्नाः पलायन्ते सिंहं दृष्ट्वा यथा गजाः ॥ अकृत्वा न्यासजालं यो मूढात्मा कुरुते जपम् ॥ ४४५ ॥ विघ्नैस्स बाध्यते नूनं व्याघ्रैर्मृगशिशुर्यथा ॥ न्यासानां प्रचरत्वेन फलानामपि भूरिता ॥ ४४६ ॥ उक्तन्यासो न हि त्याज्यः कामतस्त्वधिकं चरेत् ॥ ॐ क्लीमिति तु बीजाभ्यां मुद्राया बन्धनं चरेत ॥ दर्शयेन्मूलमन्त्रेण हसौं बीजेन संन्यसेत् ॥ ४४७ ॥ ध्यानं कुर्य्यात्ततो मन्त्री तत्तत्कल्पोक्तवर्त्मना ॥ तदपि द्विविधं प्रोक्तं सगुणं निर्गुणं तथा ॥ ४४८ ॥ आत्मनो हृदयाम्भोजे कर्णिकाकेशरोज्ज्वले॥ प्रफुल्ले सोमसूर्य्याग्निमण्डले न विराजिते ॥ ॥ ४४९ ॥ स्वस्येष्टदेवतां तत्र यजेदागमबोधिताम् ॥ एवं यद्वेदनं तद्धि सगुणं ध्यानमीरितम् ॥ ४५० ॥ यज्जीवब्रह्मणोरैक्यं सोहं स्यामिति वेदनम् ॥ तदेवं निर्गुणं ध्यानमिति वेदविदो विदुः ॥ ४५१ ॥ अथान्तर्यजनं वक्ष्ये यथावदवधारय ॥ वामनाडीं समाकृष्य किञ्चिदाकुञ्चयेद्गुदम् ॥ रेचयेत्समंमार्गेण जिह्वा तालुगतां चरेत् ॥ ४५२ ॥ शक्तिं शिवे परे युक्त्वा

---

१ ॐ ह्रीं अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं हंसः सोहं स्वाहा ॥

किञ्चिदाकुञ्चयेदधः ॥ कृत्वेत्थं तु यजेत्पीठे न्यासमार्गेण मन्त्रवित् ॥ ॥ ४५३ ॥ तस्मिन्पीठे स्थितामिष्टदेवतां मूर्तिविग्रहाम् ॥ ध्यात्वा यजेच्चन्दनाद्यैर्मानसैर्भोजनान्तकैः ॥ ४५४ ॥ भोजनावसरे त्वन्तर्वैश्वदेवं समाचरेत् ॥ मूलाधारे स्मरेत्कुण्डं कुण्डल्यग्निसमुज्ज्वलम् ॥ ४५५ ॥ आत्मान्तरात्मपरमज्ञानात्मचतुरस्रके ॥ धर्म्माधर्म्मान्विते त्र्यस्रे मूलमन्त्रपुरःसरम् ॥ ॥ ४५६ ॥ अहं जुहोमि स्वाहेति प्रत्येकं जुहुयात्ततः ॥ अहन्ताऽसत्यपैशुन्यकामक्रोधादिकं हविः॥४५७॥ मन एव स्रुवः प्रोक्तास्सुषुम्णादि गुदीरिता ॥ तदन्ते तन्मयो भूत्वा जपेदष्टोत्तरं शतम् ॥४५८॥ मूलं तत्सर्वसम्पत्त्यै देवतायै निवेदयेत् ॥ ततः प्रणम्य च गुरुं पूजाचक्रं समुद्धरेत् ॥ ४५९ ॥ सुवर्णरचिते पीठे भूपाला वशवर्त्तिनः॥रजतालंकृतं यन्त्रं सर्वैश्वर्य्यप्रदं मतम् ॥ ४६० ॥ यन्त्रन्तु स्फाटिकं स्वच्छं मनोभिलषितं ददेत् ॥ माणिक्यरचितं चेदं राज्यदं भुक्तिमुक्तिदम् ॥ ४६१ ॥ कृतं मरकतैर्यन्त्रं सर्वशत्रुविनाशनम् ॥ लोहत्रयोद्भवं यन्त्रं सर्वसिद्धिकरं मतम् ॥ ४६२ ॥ श्रीखण्डं शक्तिदं ज्ञेयं पौष्टिकं रक्तचन्दनम् ॥ श्रीपर्णीपीठमुद्दिष्टं पूजार्थं धनराज्यदम् ॥ ४६३ ॥ बैल्वके बहुलासम्पद्भूर्जपत्रे चतुष्पदाः ॥ गण्डकीभवपाषाणे भुक्तिमुक्तिरदूरतः ॥ ४६४ ॥ भूमौ सिन्दूररजसा रचितं सर्वकामदम् ॥ सीसकांस्यकृतं यन्त्रं सम्पत्तिं सन्ततिं हरेत् ॥ ४६५ ॥ फलकायां परे भित्तौ स्थापयेन्न कदाचन ॥ स्थापितं यदि मोहेन नाशयेत्तस्य तत्कुलम् ॥ ४६६ ॥ अरत्न्यंगुलविस्तारं प्राक्प्रत्यग्दक्षिणोत्तरे ॥ पलप्रमाणं कर्त्तव्यमर्चापीठं मनोहरम् ॥४६७॥ पूर्वाधोर्ध्वं प्रकुर्वीत चतुरस्रं समन्ततः ॥ तस्मिन्पीठे तु निर्माणं पूजाचक्रस्य कारयेत् ॥ ४६८ ॥ माणिक्यादिकपीठेषु मानं न्यूनं न दोषयेत् ॥ श्रीपर्णीचन्दनादीनामधिकं चेन्न दोषकृत् ॥ ४६९ ॥ अग्रे शुभग्रहौघेष्वनुकूलगुणवत्सु च ॥ नवार्चां कारयेदेषां सति तिथ्यादिकेक्षणे ॥४७०॥ क्षौद्राज्यदुग्धैः प्रथमं नारि-

केराम्भसा ततः ॥ अभिषिच्याथ तोयेन कथितेन वरौषधैः॥४७१॥ आवाह्याभ्यर्च्य तल्लग्ने चक्रे संस्थाप्य पूजयेत् ॥ गन्धपुष्पैर्नवैर्धूपैर्दीपनैवेद्यदर्पणौ ॥ ४७२ ॥ त्रिरात्रं पूजयेद्देवि त्रिसन्ध्यं च ततो निशि ॥ मकारैः पञ्चभिर्युक्ताश्चरेयुर्वामिनोर्चनम् ॥ ४७३ ॥ निशायां शक्तिपूजां च द्वितीयायां च कौलिकः ॥ एवं दिनत्रयं कृत्वा ततो नित्यक्रमं भजेत् ॥ ४७४ ॥ एवं देवीप्रतिष्ठायां क्रमस्सान्निध्यकारकः ॥ स्त्रीशूद्राणां वामिनां च कौलिकानामयं विधिः ॥ ४७५ ॥ महापापं न कुर्वन्ति पशुवद्वेदमार्गतः ॥ आख्यानदैश्च रघुभिः सन्ध्यावन्दननाशितैः ॥ ४७६ ॥ पातकैस्ते न लिप्यन्ते तस्मात्तेऽपशवः स्मृताः ॥ वामिनोपासितं यन्त्रं तेषां दृष्टिपथं गतम् ॥ ४७७ ॥ तद्देवताक्षोभकरं विक्षिप्तः साधको भवेत्॥ दक्षिणोपासितं यन्त्रं सूर्य्याग्निसमतेजसम् ॥ ४७८ ॥ पापिनो नैव पश्यन्ति यथोलूकास्तमोदृशः ॥ यथा नृभिर्दिनकरोदयः सर्वैरिहेष्यते ॥४७९॥ दक्षसंस्थापितं यन्त्रं तथा पुण्यात्मनां मतम् ॥ सर्वेषामेव भूतानां तुल्यदुःखसुखावुभौ ॥ ॥ ४८० ॥ वामदक्षिणमार्गौ तु तद्वन्मार्गौ दिवौकसाम् ॥ प्राधान्यं तु पुरन्ध्रीणां वामांगे दक्षिणांगके ॥ ४८१ ॥ पुंसां तथैव मार्गोपि कार्य्याकार्य्यविभेदतः ॥ कुण्डाश्च गोलका जातिविच्युता ये द्विजादयः ॥४८२॥ असंस्कृताश्च ये विप्रास्ते व्रात्याः परिकीर्तिताः ॥ ब्राह्मण्यहानिकृत्तेषां मद्यं मांसं च मैथुनम् ॥ ४८३ ॥ अब्राह्मणा वाममार्गे प्रवृत्तास्तैस्तु सेवितम् ॥ कौलेन वाथ वामेन सिद्ध्यत्येव न संशयः ॥ ४८४ ॥ सिद्धिः संजायतेन्येषां नरकायैव केवलम् ॥ आदौ वेदोदितैर्मन्त्रैर्विप्रोऽग्न्युत्तारणं चरेत् ॥

---

१ पापानामेवाख्यानदत्वं यतः पापकरणादेव जनुर्भवति जनुषा जीवानां नामकरणं तत आख्यानदानि इति पापविशेषणम्॥ २ लोकाल्लोकान्तरं जीवानां प्रापकत्वादेव तेषां रघुत्वम् ३ अमृते जारजः कुण्डो मृते भर्तरि गोलकः ॥ ४ नीचानां पतितानां च वाममार्गे प्रवृत्तिर्भवति । मद्यमांसादिसेवनं कुर्वन्तोपि देवानां पूजाजपादिकरणाद्वहुभिर्दिनैर्निजकर्म्माणि भुक्त्वा पुनर्मुक्ता भवन्ति तेषां वेदानधिकारित्वाद्दक्षिणमार्गद्वारा शीघ्रमेव संसारान्मुक्ता जायन्ते ॥

॥ ४८५ ॥ अग्निः सप्तिं वाजमिति सनर्चं सूक्तमुच्यते ॥ मुनिस्त्रिष्टुप्छन्द उक्तं देवताग्निः प्रकीर्तितः ॥ ४८६ ॥ अग्निशब्देन सहितं सूक्तमेतच्छतं जपेत् ॥ अभिषिञ्चेद्गन्धतोयैस्ततः सम्पूर्णसूक्तकैः ॥ ४८७ ॥ अभिषिञ्चेच्छतावृत्त्याग्न्युत्तारणमिदं स्मृतम् ॥ क्षालयेद्धातुजं यन्त्रं मृदा चाद्भिस्तु नित्यशः ॥ ४८८ ॥ पिष्टान्तकाद्यैः काष्ठस्य मण्यादेः केवलं जलात् ॥ एवं प्रक्षालितं यन्त्रं मण्डयेच्चन्दनादिना ॥ ४८९ ॥ पुरतः स्थापयेत्पीठे दद्यात्पुष्पाञ्जलिं ततः ॥ मूलमन्त्रेणाथ तेषां स्वस्य देवांगतश्चरेत्॥ ४९०॥ वृत्तेन वेष्टितं सम्यक् त्रिकोणं चन्दनाम्भसा ॥ तद्बहिश्चतुरस्रं च विदध्यान्मत्स्यमुद्रया॥ ४९१॥सम्पूज्य गन्धैर्देवाग्रमण्डलाय नमोणुना॥अंगानि चतुरग्न्यादिकोणेषु पुरतस्तस्था४९२॥पश्चात्तु समभ्युक्ष्य शङ्खाधारं प्रविन्यसेत्॥ उक्ता शङ्खादि चाधारं मण्डले स्थापयेत्त्वथ ॥४९३॥ मं रं धर्म्मप्रदेत्युक्त्वा वदेद्दशकलात्मकम्॥ङेंतं वह्निमण्डलं च देवनाम च कीर्त्तयेत्॥ ४९४॥ततोर्घ्यपात्राधाराय नमः शङ्खं स्वमंत्रतः ॥ प्रक्षाल्यामुकदेवार्घ्यपात्रं संस्थापयाम्यहम् ॥ ४९५ ॥ एवमुक्त्वा तदाधारे संस्थाप्यैनं च तत्र हि ॥ अं सूर्य्यमण्डलं प्रोच्य ङेंतं देवस्य नाम तु ॥ अर्घ्यपात्राय च नमो मनुनानेन पूजयेत् ॥ ४९६ ॥ तत्पात्रमपि तत्रैव भावयेद्भूमिमण्डलम् ॥ षट्कोणं तत्र चाङ्गानि पूजयेत्पूर्ववत्ततः ॥ ४९७॥ कला द्वादश सूर्य्यस्य प्रोक्तास्तत्र प्रदक्षिणम् ॥ ततः सुधामयैस्तोयैर्मूलांते मातृकां जपेत् ॥ ४९८ ॥ विलोमां पूरयेत्तस्मि-

---

१ अथाग्निसूक्तम् ॥ अग्निः सप्तिंवा जंभरं ददात्यग्निर्वीरंश्रुत्यं कर्म्मानिष्ठाम् ॥ अग्नी रोदसी विचरत्समजन्नाग्निर्नारीं वीरकुक्षिं पुरन्धिम् ॥ १ ॥ अग्ने रेभमसः सदिस्तु भद्राग्निर्मही रोदसी आविवेश ॥ अग्निरेकं चोदयत्समत्स्वग्निर्वृत्राणि दयते पुरूणि ॥ २ ॥ अग्निर्हत्यंजरतः कर्णमावाग्निरद्भ्यो निरदहज्जरूथम् ॥ अग्निरत्रिं धर्म्मं उरुष्यदन्तराग्निर्नृमेधं प्रजया सृजत्वम् ॥ ३ ॥ अग्निर्दाद्द्रविणं वीरपेशा अग्निर्ऋषिं यः सहस्रासनोति ॥ अग्निर्दिवि हव्यमाततानाग्नेर्धामानि बिभृतापुरुत्रा ॥४॥ अग्निमुक्थैर्ऋषयो विह्वयन्तेग्निं नरो यामनिबाधतासः अग्निर्वयोअन्तारिक्षे पतन्तोग्निः सहस्रा परियाति गोनाम् ॥ ५ ॥ अग्नि विश ईलते मानुषीर्या अग्निं मनुषो नहुषो विजाताः ॥ अग्निर्गान्धर्वीं पथ्यामृतस्याग्नेर्गव्यूतिर्घृत आग्निषत्ता ॥ ६ ॥ अग्नये ब्रह्म ऋभवस्ततक्षुराग्निं महा तवोचामासुवृक्तिम् ॥ अग्ने प्रावजारितारं थविष्ठाग्ने महि द्रविणमायजस्व ॥ ७ ॥ वाम दक्षिपाणिपृष्ठदशे वामपाणितलं न्यसेत् ॥ अंगुष्ठौ चालयेत्सम्यङ्मुद्रेयं मत्स्यरूपिणीति मँ. पुचतुरस्रांविदध्यात् ।



न्पूजको मनुनामुना ॥ ॐ सोमसण्डलायेति षोडशेति कलात्मने ॥ ४९९ ॥ अमुकार्घ्यामृतायेति नमः शङ्खप्रपूरणे ॥ गंधपुष्पाक्षतयवकुशाग्रतिलसर्षपाः ॥ ५०० ॥ दूर्वा इत्यर्घ्यपात्रस्य प्रोक्तं द्रव्याष्टकं सुराः ॥ ततोयं गन्धपुष्पाद्यैः पूजयित्वा समर्च्चयेत् ॥ ५०१ ॥ कलाषोडशकं चाङ्गं पश्चात्सर्वकलासु च ॥ प्राणप्रतिष्ठां कुर्वीत पूजान्ते साधकस्ततः ॥ ५०२ ॥ प्राग्वत्तीर्थं समावाह्य मूलमन्त्रेण तत्र तु ॥ संयोज्य मूलमन्त्रेण पुष्पं न्यस्य शराणुना ॥ ५०३ ॥ प्रदर्श्य गालिनीं मुद्रां मुद्रया धेनुसञ्ज्ञया ॥ अमृतीकृत्य विधिवत्स्वधाबीजेन साधकः ॥ ५०४ ॥ ध्यात्वेष्टदेवतां तत्र सकलीकरणं चरेत् ॥ अङ्गन्यासेन चास्त्रेण कल्पयेच्च दिशो दश ॥ ५०५ ॥ तत्र मन्त्रेण संवीक्ष्य मुद्रया शङ्खसञ्ज्ञया ॥ अवष्टभ्य ततो दीप्य मुद्रया योनिरूपया ॥ ५०६ ॥ गन्धपुष्पादिभिस्तत्र पूजयेदिष्टदेवताम् ॥ षडङ्गानि च सम्पूज्य मन्त्रयेन्मूलमन्त्रतः ॥ ५०७ ॥ अष्टकृत्वस्ततश्चार्घ्यं दापयेन्मत्स्यमुद्रया ॥ तच्छङ्खस्थं जलं किञ्चित्कुम्भतोये विनिक्षिपेत् ॥ ५०८ ॥ अर्घ्यस्योत्तरदिग्भागे पाद्यमाचमनीयकम् ॥ मधुपर्कं च संस्थाप्य त्रिकोणेषु यथाक्रमम् ॥ ५०९ ॥ एकैकपात्रं मूलेन ह्यष्टकृत्वोऽभिमन्त्रयेत् ॥ मधुपर्कस्तु सक्षौद्रो दधि तत्र न लभ्यते ॥ ५१० ॥ दधि दुग्धं गुडक्षौद्रे घृतप्रतिनिधिर्नहि ॥ परमं तत्पदं देवि मधुसञ्ज्ञं यदुच्यते ॥ ५११ ॥ तदाप्यायनं यत्कर्म्म तत्प्रोक्तं मधुपर्ककम् ॥ कांस्यस्य वाथ रौप्यस्य शैवः शङ्खवरो हरौ ॥ ५१२ ॥ महाशङ्खो वाममार्गे स्फाटिको ग्रहनायके ॥ दक्षिणे प्रोक्षणीपात्रमाधायाद्भिः प्रपूरयेत् ॥ ५१३ ॥ किञ्चिदर्घ्याम्बु संगृह्य प्रोक्षण्यम्भसि योजयेत् ॥ पुनराचमनीयार्थं पात्रं संस्थापयेत्ततः ॥ ५१४ ॥ पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्ताभिरुच्यते ॥ जातीलवङ्गकङ्कोलैर्मतमाचमनीयकम् ॥ ॥ ५१५ ॥ कुशपुष्पयवव्रीहिबहुमूलतमालकम् ॥ पातयेत्प्रोक्षणीपात्रे ललितं प्रणवेन च ॥ ५१६ ॥ शुद्धाभिरद्भिर्विहितं पुनराचमनीयकम् ॥ द्रव्याभावे

---

१ उशीरम् । २ चन्दनम् ।

प्रदातव्याः क्षालितास्तण्डुलाः शुभाः ॥ ५१७ ॥ अथार्घ्यादिकपात्राणां फलं वक्ष्ये शुभाशुभम् ॥ सर्वकामप्रदं स्वार्णं रौप्यमायुःसुतप्रदम् ॥ ५१८ ॥ सौभाग्यं ताम्रपात्रेण धर्म्मवृद्धिस्तु मृन्मये ॥ नारिकेले देवतुष्टिर्भवेत्पात्रे तथैव च ॥ ५१९ ॥ लक्ष्मीप्राप्तिर्बिल्वपात्रे ब्राह्मण्यं ब्रह्मवृक्षजे ॥ मारणोच्चाटने लौहं स्तम्भे पाषाणजं भवेत् ॥ ५२० ॥ मन्त्रस्याराधने काष्ठं वाममार्गे तु तौम्बिकम् ॥ रत्नादीनां तु पात्राणि शुभलेखाङ्कितानि च ॥ ५२१ ॥ अर्घ्यनैवेद्यपूजार्थेऽञ्जलिदाने प्रपूजयेत्॥ पात्राणामादरः कार्य्यः पात्राण्येवोत्तमानि च ॥ ५२२ ॥ बलिहोमक्रियाद्यं च विनापात्रं न सिद्ध्यति ॥ षट्त्रिंशदंगुलं पात्रमुत्तमं परिकीर्त्तितम् ॥५२३॥ मध्यमं तत्त्रिभागोनं कनिष्ठं द्वादशांगुलम् ॥ वस्वंगुलविहीनं च न पात्रं कारयेत्क्वचित् ॥ ५२४ ॥ नाभीविवररूपाणिपुंण्डरीकाकृतीनि च ॥ शङ्खनीलोत्पलाभानि पात्राणि परिकल्पयेत् ॥ ५२५ ॥ श्वेतादीन्यतिशस्तानि विप्रादीनां क्रमेण च ॥ सेचयेत्प्रोक्षणीपात्रतोयैर्मूलं समुच्चरेत् ॥ ५२६ ॥ आत्मानं यागवस्तूनि पूजाद्रव्यादिमण्डलम् ॥ दर्शयेद्धेनुमुद्रां च द्रव्यशुद्धिरियं मता ॥ ५२७ ॥ योगपीठे न्यासदेवांस्तत्तत्स्थानेषु पूजयेत् ॥ मणिपीठे भावनया ततः पूज्या स्वदेवता ॥ ५२८ ॥ आत्मानं देवतारूपं ध्यायेन्मूलेन पञ्च तु ॥ पुष्पस्याञ्जलयो देया मस्तके हृदये गुदे ॥ ५२९ ॥ पादयोः सर्वगात्रे च पूजयेच्चन्दनादिभिः ॥ चतुर्भिरुपचारैश्च नैवेद्यं विनिवेदयेत् ॥ ५३० ॥ गुरूपदिष्टविधिना शेषमन्यत्समापयेत्॥ प्रोक्षण्यद्भिः प्रयुञ्जीत सर्वमेतत्समाहितः ॥ ५३१ ॥ ततश्चार्घ्यकरं कार्य्यं यज्ञकार्य्यमथोच्यते ॥ मूलाधारे चतुष्कोणमग्निकुण्डं विचिन्तयेत् ॥५३२॥ तत्राग्निं कुण्डलीरूपं ध्यायेन्मूलं समुच्चरन् ॥ धर्म्माधर्म्महविर्दीप्त आत्माग्नौ मनसा तु वै ॥ ५३३ ॥ सुषुम्णावर्त्मना नित्यमष्टावृत्तीर्जुहोम्यहम् ॥ पुण्यं जुहोमि स्वाहेति श्लोकान्ते प्रोच्चरेत्पुनः ॥ ५३४ ॥ पुनर्मूलं पुनः श्लोकः पुनः पापं जुहोमि च ॥ कृत्याकृत्येति सङ्कल्पो विकल्पो धर्म एव च॥५३५॥

१ पलाशे । २ अष्टाङ्गुलहीनम् । ३ श्वेतकमलाकाराणि । ५ अन्योन्याभिमुखाश्लिष्टा कनिष्ठानामिका पुनः । तथा च तर्जनी मध्या धेनुमुद्रा प्रकीर्तिता । ,

उक्त्वा पृथक् च स्वाहान्तं पुनः श्लोकमिमं पठेत् ॥ प्रकाशामर्शहस्ताभ्यामवलम्ब्योन्मनीषु च ॥ ५३६ ॥ धर्म्माधर्म्मकलास्नेहपूर्णे वह्नौ जुहोम्यहम् ॥ स्वाहान्तेनाहुतिं दत्त्वा प्राणायामनिरोधतः ॥ ५३७ ॥ निरस्तनिखिलोपाधिमात्मानं चिन्मयं स्मरेत् ॥ प्राणायामत्रयं कृत्वा ऋष्यादिन्यासमाचरेत् ॥ ॥ ५३८ ॥ पूजापीठं विनिर्माय पूजयेत्पीठदेवताः ॥ गुरुपाङ्क्तिरुदक्पूज्या महागणपतिस्त्ववाक् ॥ ५३९ ॥ पूजयेदनलादीनि देवस्याधस्तु सप्त च ॥ मण्डूकश्चापि तस्योर्ध्वं रुद्रः कालानलस्तथा ॥ ५४० ॥ मूलप्रकृतिमाधारशक्तिं कूर्म्मं तथान्तकम् ॥ वराहं तस्य दंष्ट्राग्रे पृथिवीमर्चयेत्पुनः ॥५४१॥ तस्यां सुधार्णवं तस्मिन्दीपञ्च नवरत्नकम् ॥ स्वर्णशैलं च तन्मध्ये तदूर्ध्वं नन्दनं वनम् ॥ ५४२ ॥ तन्मध्ये कल्पवृक्षांश्च तन्मध्ये रत्नभूमिकाम् ॥ स्वर्णप्राकारमस्यान्ते तन्मध्ये रत्नमण्डपम् ॥ ५४३ ॥ तस्यान्तः स्वर्णवेदी च रत्नसिंहासनं पुनः ॥ वेदीमध्ये भावनीयं पूजयेच्चन्दनादिना ॥ ५४४ ॥ पूजाचक्राधारपीठं सिंहासनमिति स्मरेत् ॥ तत्पादेषु यजेत्सम्यगाग्नेयादिशिवान्तकम् ॥ ५४५ ॥ धर्म्मं वृषतनुं चित्रं ज्ञानं कृष्णं च सिंहवत् ॥ वैराग्यं भूतवत्पीतमैश्वर्य्यं कृष्णहस्तिवत् ॥ ५४६ ॥ अधर्मादींश्चित्रवर्णान्पीठस्याधः समर्चयेत् ॥ मायाविद्ये च तन्मध्येऽनन्तं तत्त्वाकृतिं यजेत् ॥ ५४७ ॥ तस्य मूर्ध्नि यजेत्पद्ममष्टप्रकृतिपत्रकम् ॥ आनन्दकन्दकं संविन्नालं विकारकेशरम् ॥ ५४८ ॥ मातृकाकर्णिकोपेतं तत्पत्रेषु क्रमाद्यजेत् ॥ सिद्ध्यष्टकं चाणिमाद्यं तन्नामानि ब्रवीम्यहम् ॥ ५४९ ॥ अणिमा महिमा चैव गरिमा लघिमा तथा ॥ प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः ॥ ५५० ॥ अधोधः कर्णिकायास्तु सूर्य्यस्सोमस्तथानलः ॥ गुणान्सत्त्वादिकांस्तत्र तद्वदग्रे त्रयं यजेत् ॥ ५५१ ॥ ब्रह्मविष्णुमहेशांश्च ततो दिक्षु च मध्यतः ॥ ज्ञानं माया कला विद्या परपूर्वं च तत्त्वकम् ॥ ॥ ५५२ ॥ केशरेषु तथा मध्ये पूर्वादिषु यथाक्रमम् ॥ तत्तन्मन्त्रोक्तपीठस्य नव शक्तीः प्रपूजयेत् ॥ ५५३ ॥ पीठमन्त्रेण गन्धाद्यैः पीठं समन्ततोर्चयेत् ॥ चतुर्थीनमसा युक्तैः स्वस्वदैवतनामभिः ॥५५४॥ मध्ये पुष्पाञ्जलिं दद्यात्पी-

ठमन्त्रेण साधकः ॥ मूलमन्त्रं समुच्चार्य्य षष्ठ्यन्तं पीठनाम च ॥ ५५५ ॥ मूर्तिं च कल्पयामीति मूर्तिमध्ये विनिक्षिपेत् ॥ पुनर्मूलं समुच्चार्य्य देवनाम ततः परम् ॥ ५५६ ॥ मूर्तिं च पूजयामीति तां पुष्पेण समर्च्चयेत् ॥ एकपीठेन्य-पूजां च विना यन्त्रं करोति यः ॥ ५५७ ॥ देवताशापमाप्नोति रौरवं नरकं व्रजेत् ॥ तन्त्रेण पूजयेद्यन्त्रं देवताशापमाप्नुयात् ॥ ५५८ ॥ आवाह्य देवता-मेकामर्च्चयेच्चान्यदेवताम् ॥ अन्ययन्त्रेन्यपूजा वा देवता शापकारिणी ॥ ॥ ५५९ ॥ पूजनं बहुमूर्तीनामेकपीठे भवेद्यदि ॥ पृथक्चन्दनपुष्पाणि धूपदीपादि मन्त्रतः ॥ ५६० ॥ खण्डिते स्फुटिते दग्धे भ्रष्टे मानविवर्जिते ॥ व्यङ्गेनर्हपशुस्पृष्टे पतिते दुष्टभूमिषु ॥ ५६१ ॥ अन्यमन्त्रार्चिते चैव पतित-स्पर्शदूषिते ॥ देशेष्वेतेषु नो कुर्य्युः सन्निधानं दिवौकसः ॥ २६२ ॥ गणे-शसूर्य्यविष्णवीशदेवीनां पूजनं क्रमात् ॥ दशस्थानानि देवानां पूजने कल्पि-तानि च ॥ ५६३ ॥ सान्निध्यं सर्वदेवानामवश्यं मन्त्रतो भवेत् ॥ मन्त्रस्तु जीववत्प्रोक्तः प्रतिमाद्यं शरीरवत् ॥ ५६४ ॥ सिद्धायामपि सामग्र्यां विना मन्त्रं फलं न हि ॥ शिवलिङ्गे मणौ यन्त्रे शालग्रामे घटे रवौ ॥ ५६५ ॥ स्थण्डिलेग्नौ मूर्ध्नि हृदि स्थानेष्वेतेषु पूजयेत् ॥ भूमौ चैव कृता पूजा पुत्रायुर्धननाशिनी ॥ ५६६ ॥ दशांगुलप्रमाणा वा तिथ्यंगुलमिता पुनः ॥ अभ्यर्च्चा प्रथमा विष्णोर्गृहेषु गृहमेधिभिः ॥५६७॥ पञ्चसूत्रसमायुक्तं शिव-लिङ्गं समर्चयेत् ॥ गृहस्थानां भुक्तिमुक्तिधनारोग्यप्रदं तु तत् ॥ ५६८ ॥ लिङ्गमस्तकविस्तारोपचितावथ दीर्घतः॥लिङ्गस्य लिङ्गशालक्या जलाहार्य्या-स्तथैव च ॥ ५६९ ॥ लिङ्गपीठस्य पञ्चानां समता पञ्चसूत्रिका ॥ शालग्राम-समुत्पत्तिं शृण्वन्तु परमाद्भुताम् ॥ ५७० ॥ गण्डक्या प्राक् तपस्तप्तं भवन्तु मम देवताः ॥ सर्वे पुत्राः सुखं दातुं जनानामिति ते सुराः ॥ ५७१ ॥ तस्यास्तु तपसा हृष्टा ब्रह्मविष्णुमहेश्वराः ॥ वरं दातुं समुद्युक्ता वव्रे सापि स्वपुत्रताम् ॥ अशक्तास्तं वरं दातुं तदा शप्तास्तया क्रुधा॥ ५७२ ॥ प्रतारणं मम सुराः कृतं यस्मात्पुनः पुनः ॥ कीटयोनिं प्रपद्यध्वं क्रुद्धास्तेप्यशपंश्च ताम् ॥ ५७३ ॥ अविचार्य्य वयं शप्तास्त्वया यत्तपसोद्धते ॥ तेन कर्मविपा-

केन त्वं वै कृष्णा नदी भव ॥५७४॥ अन्योन्यशापं श्रुत्वेत्थं महान्कोलाहलोभवत् ॥ प्रकम्पिताः सुरा याता ब्रह्माणं ते व्यजिज्ञपन् ॥ ५७५ ॥ ब्रह्मंस्त्राहि महाशापादन्योन्यपतितान्क्रुधा ॥ इति देववचः श्रुत्वा ब्रह्मा शङ्करमब्रवीत् ॥ ५७६ ॥ शिवः प्रोवाच धातारमहं संहारकारकः ॥ त्वं सृष्टिकर्ता विष्णुस्तु पालको बुद्धिमत्तरः ॥ ५७७ ॥ स प्रष्टव्यो यथासंख्यमुभयोः शम्भवेदिति ॥ तत्र माहेश्वरं श्रुत्वा वचनं विष्णुरब्रवीत् ॥ ५७८ ॥ शृणु ब्रह्मन्महादेव शृणु देवि गजानन ॥ मद्गणौ ब्राह्मणौ ग्राहमातङ्गौ शापतो यदा ॥ ५७९ ॥ भविष्यतस्तयोर्मोक्षं करिष्यामि कलेवरम् ॥ शीर्णं भविष्यति यदा तन्मेदोमज्जसम्भवाः ॥ ५८० ॥ पाषाणान्तर्गताः कीटा वज्राख्याः प्रभविष्यथ॥अद्यैव गण्डकी पुण्या गङ्गातुल्या महानदी ॥५८१॥ गण्डक्यां गिरिराजस्य दक्षिणे दशयोजनम् ॥ विस्तीर्णं तन्मनुक्षेत्रम्पुण्यं क्षेत्रं महीतले ॥ ५८२ ॥ चक्रतीर्थमिदं ख्यातं त्रिषु लोकेषु विश्रुतम् ॥ शालग्रामशिला यत्र यत्र द्वारवती शिला ॥ ५८३ ॥ उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः ॥ सर्वदेवप्रीतिकरा भुक्तिमुक्तिप्रदायिनी ॥ ॥ ५८४ ॥ नद्यां तस्यान्तु पाषाणा ये तदन्तर्गताः सुराः ॥ पार्थिवांशं विना सर्वे वज्रकीटा भवन्त्विति ॥ ५८५ ॥ अनेनैव तु गण्डक्याः पुत्रत्वं भवतामपि ॥ प्रीताः सुरा न मूर्तेश्च न वृक्षस्यापि पूजनात् ॥ ५८६ ॥ सन्तोषो जायते तेषां गण्डक्यश्मार्चनाद्यथा ॥ इति विष्णुवचः श्रुत्वा ब्रह्मा वचनमब्रवीत् ॥ ५८७ ॥ कीदृक्पूज्या शिला विष्णो किंस्वित्कस्य च वल्लभा ॥ किं फलं कोधिकारी च केन मार्गेण तद्वद ॥ ५८८ ॥ इति ब्रह्मवचः श्रुत्वा विष्णुर्वचनमब्रवीत्॥स्वीयवर्णशिला पूज्या ब्राह्मणाद्यैः सुखाप्तये ॥ ५८९ ॥ स्निग्धा शिला मन्त्रसिद्धिं रूक्षाऽसिद्धिं करोति न ॥ पाण्डुरा पापशमनी मलिना पापधीकरा ॥ ५९० ॥ पीता पुत्रफलं दद्यादाम्रवर्णा सुतान्हरेत् ॥ नीला सन्दिशते लक्ष्मीं धूम्राभा हरते मतिम् ॥ ॥ ५९१ ॥ रोगप्रदा रक्तवर्णा सिन्दूराभा महाकलिम् ॥ दारिद्र्यकारिणी-वक्रा समा सर्वार्थसाधिका ॥ ५९२ ॥ स्थूला निहन्ति चैवायुः सूक्ष्मा

स्वल्पमतिं हरेत् ॥ पूजाफलं लाञ्छितया निष्फलं लाञ्छनं विना ॥५९३॥ कपिला चित्तवैकल्यं नेत्ररोगश्च कर्बुरा ॥ लग्ना भङ्गकलिं दद्याद्बहुचक्रा प्रधानताम् ॥ ५९४ ॥ लक्षणान्तरहीना चेदचक्रा विविधापदम् ॥ विकृतावर्त्तनाभिश्च विनान्नं कुरुते बहु ॥ ५९५ ॥ वंशच्छेदो गृहस्थानां नारसिंह्यां प्रजायते ॥ रेखावर्त्ता दुःखदात्री यथा सूक्ष्मा तथामृतम् ॥ ५९६ ॥ यथा स्निग्धा तथा लक्ष्मीस्तद्विभेदानतः शृणु ॥ लक्ष्मीहरिः स विज्ञेयो यत्र पद्मं सचक्रकम् ॥ ५९७ ॥ केवला वनमाला वा गृहस्थानामभीष्टदः ॥ वासुदेवः स विज्ञेयो यद्द्वारे चक्रयुग्मकम् ॥ ५९८ ॥ निरन्तरं समं चापि स श्वेतः पापनाशनः ॥ संकर्षणः स विज्ञेयः प्राक्पश्चाच्चक्रयुग्मकम् ॥ ५९९ ॥ संलग्नं पूर्वभागस्थं महद्रत्नसुशोभनम् ॥ प्रद्युम्ने सूक्ष्मचक्रं स्याच्छिद्रं दीर्घं विचिन्तयेत् ॥६००॥ शुषिरान्तर्बहुच्छिद्रं पीतमिष्टप्रदायकम् ॥ अनिरुद्धस्तु नीलाभो वर्तुलश्चातिशोभनः ॥ ६०१ ॥ रेखाद्वयं तु तद्द्वारि पृष्ठं पद्मेन लाञ्छितम् ॥ केशवः स तु विज्ञेय एकं वा द्वयमेव च ॥६०२॥ प्राग्वा-पश्चाच्च चक्रं स्याच्चतुष्कोणस्स भाग्यकृत् ॥ नारायणः श्यामवर्णो नाभौ चक्रं तथोन्नतम् ॥ ६०३ ॥ दीर्घरेखासमायुक्तं दक्षिणे सुकरं पृथु ॥ हरिरूपा शिला सा स्याद्यस्या ऊर्ध्वं मुखं भवेत् ॥ ६०४ ॥ हारिवद्दृश्यते द्वारं भुक्तिमुक्तिप्रदा तु सा ॥ परमेष्ठी स विज्ञेयः पद्मचक्रान्वितस्तु यः ॥ ६०५ ॥ बिल्वाकृतिश्च शुक्लाभः पृष्ठे च शुषिरं महत् ॥ विष्णुस्तु कृष्णवर्णः स्यात्स्थूलचक्रे शुभानने ॥ ६०६ ॥ द्वारोपरि तथा रेखा दृश्यते मध्यदेशतः ॥ नरसिंहस्तु कपिलः पृथग्वक्त्रो बृहन्मुखः ॥ ६०७ ॥ त्रयो वा पञ्च वा तत्र बिन्दवो गृहिणां न सन् ॥ कपिलो नरसिंहस्तु गुडलाक्षानिभो भवेत् ॥ ६०८ ॥ स्थूलचक्रद्वयं मध्ये द्वारे रेखा सुशोभना ॥ महानृसिंहो विज्ञेयः पूर्वोक्तैर्लक्षणैर्युतः ॥ ६०९ ॥ रेखाश्च केशराकारा मुखं दीर्घं भयानकम् ॥ लक्ष्मीनृसिंहो विज्ञेयश्चतुश्चक्रस्सबिन्दुकः ॥ ६१० ॥ पूर्वोक्तलक्षणैर्युक्तो वनमालाविराजितः ॥ वराहोसौ शक्तिलिङ्गचक्रे च विषमे तथा ॥ ६११ ॥ इन्द्रनीलनिभःस्थूलस्त्रिरेखालाञ्छितो भवेत् ॥ पृथ्वी वराहनाम्नी सा या वराहा-

कृतिः शिला ॥ ६१२ ॥ अभुग्ना नैव रेखैका गतराज्यप्रदायिका ॥ मत्स्याख्या सा शिला ज्ञेया बिन्दुत्रयविभूषिता ॥ ६१३ ॥ कांस्योद्भवा स्वर्णनिभा दीर्घा सा भुक्तिमुक्तिदा ॥ कूर्म्माख्या तु शिला पृष्ठे वर्तुला चोन्नता भवेत् ॥६१४॥ हरितं वर्णमाधत्ते कौस्तुभेन च चिह्निता॥ शिला कूर्म्मस्य विज्ञेया कूर्म्माकारा तु या भवेत् ॥६१५॥ चक्राङ्किता तथा वृत्ता पूजिता सा पदप्रदा॥हयग्रीवोंकुशाकारा रेखा चक्रसमीपगा॥६१६॥बहुबिन्दु-समायुक्तं पृष्ठं नीरदनीलकम्॥ज्ञेयः सौम्यो हयग्रीवो हयग्रीवसमा शिला६१७ दीर्घया रेखया युक्ता रेखा वा तादृशी भवेत् ॥६१८॥ हयशीर्षः स विज्ञेयो मुखं यस्य हयाकृति ॥ पद्माकृति भवेद्वापि साक्षमालं शिरस्तथा ॥६१९॥ वैकुण्ठस्तिलवर्णाभश्चक्रमेकन्तथा ध्वजः ॥ द्वारोपरि तथा रेखा पूजकाय सुशोभनः ॥ ६२० ॥ श्रीधरस्तु तथा देवश्चिह्नितो वनमालया ॥ कदम्ब-कुसुमाकारो रेखापञ्चकभूषितः ॥ ६२१ ॥ ॥ वामनः स तु विज्ञेयो योति-ह्रस्वश्च वर्तुलः॥ अतसीकुसुमप्रख्यो बिन्दुनोपरि शोभितः॥ ६२२ ॥ दधि-वामननामा च ऊर्ध्वाधश्चक्रसंयुतः ॥ महाद्युतिश्च ह्रस्वश्च सुभिक्षक्षेमदायकः ॥ ६२३ ॥ सुदुर्शनस्तथा देवश्श्यामवर्णो महाद्युतिः ॥ वामपार्श्वे तथाचक्रं रेखैकैव तु दक्षिणे ॥ ६२४ ॥ सहस्रार्ज्जुननामासौ नानारेखामयो भवेत् ॥ बकाकारा यत्र पंक्तिः स नष्टद्रव्यदायकः ॥ ६२५ ॥ स्थूलो दामोदरो यस्य मध्ये चक्रं प्रतिष्ठितम् ॥ दूर्वाभो द्वारसङ्कीर्णपीतरेखो धनप्रदः ॥ ॥ ६२६ ॥ राधादामोदरो ज्ञेय ऊर्ध्वाधश्चक्रसंयुतम् ॥ नातिदीर्घ-मुखं मध्ये लम्बरेखः स भोगदः ॥ ६२७ ॥ दामोदरः स विज्ञेयो यश्चक्रद्व-यलाञ्छितः ॥ सूक्ष्मं भवेच्च विवरं पूजितस्सुखदस्सदा ॥ ६२८ ॥ अनन्तो बहुवर्णः स्यान्नागभोगेन चिह्नितः॥ अनेकचक्रसम्भिन्नः सर्वकामफल-प्रदः ॥ ६२९ ॥ पुरुषोत्तमनामासौ यस्य दिक्षु विदिक्षु च ॥ ऊर्द्ध्वान्या-स्यानि दृश्यन्ते पुरुषार्थफलप्रदः ॥ ६३० ॥ योगेश्वरः स विज्ञेयो लिङ्गं यस्य शिरोगतम् ॥ ब्रह्महत्यादिपापानां नाशको योगसिद्धिदः ॥ ६३१ ॥ पद्मनाभस्तथा रक्तः पङ्कजच्छत्रसंयुतः ॥ तुलस्या पूजयित्वा तं दरिद्रोपीश्वरो

भवेत् ॥ ६३२ ॥ रश्मिज्वालो हिरण्याक्षश्चन्द्राभः स्फटिकोपमः ॥ अथ वा जायते नानास्वर्णरेखाभिरन्वितः ॥ ६३३ ॥ गरुडः स विभुर्ज्ञेयो मध्ये पक्षद्वयान्विते ॥ सुदीर्घा दृश्यते रेखा स सर्वविषनाशकः ॥ ६३४ ॥ जनार्दनः स विज्ञेयः केवलानि स्फुटानि च ॥ यस्योदरे तु चक्राणि चत्वारि पितृतृप्तिकृत् ॥ ६३५ ॥ लक्ष्मीनारायणो ज्ञेयो वनमालाङ्कितोदरः ॥ सूक्ष्मद्वारश्चतुश्चक्रो भुक्तिमुक्तिप्रदायकः ॥ ६३६ ॥ हृषीकेशः स विज्ञेयो योर्धचन्द्राकृतिर्भवेत् ॥ तमभ्यर्च्यानुयात्स्वर्गं विषयांश्च समीहितान् ॥६३७॥ लक्ष्मीनरहरिर्ज्ञेयः कृष्णवर्णः सबिन्दुकः ॥ वामपार्श्वे समे चक्रे गृहस्थाभीष्टदायकः ॥ ६३८ ॥ त्रिविक्रमः स विज्ञेयः श्यामवर्णो महाद्युतिः ॥ वामपार्श्वे चक्रयुग्ममेकरेखा तु दक्षिणे ॥ ६३९ ॥ कृष्णो ज्ञेयः शिला कृष्णा सचक्रो वा विचक्रकः ॥ प्रदक्षिणावर्तकृतो वनमालाविभूषितः ॥ ॥ ६४० ॥ चतुर्मुखः स विज्ञेयो द्वे चक्रे मध्यदेशतः ॥ चतस्रः पार्श्वगा रेखा वेदशास्त्रागमप्रदः ॥ ६४१ ॥ विष्णोर्भेदा इमे प्रोक्ता अत्रैवावाहयेद्धरिम् ॥ विसर्जयेच्च पूजान्ते प्रतिष्ठां नात्र कारयेत् ॥ ६४२ ॥ शालग्रामाः समाः पूज्याः समेषु द्वितयं न हि ॥ असमा नैव पूज्यन्ते सर्वकामफलार्थिभिः ॥ ६४३ ॥ शिला द्वादश यो नित्यं भक्त्या सम्पूजयेन्नरः ॥ दिनेदिने धर्म्मवृद्धिः पापनाशो भवेदिह ॥ ६४४ ॥ शिवनामा स विज्ञेयो यो लिङ्गाकारताङ्कतः ॥ स्वयन्तु लिङ्गाकृतिमान्मन्त्रसिद्धिविधायकः ॥ ६४५ ॥ त्र्यम्बकः स तु विज्ञेयो यो बिन्दुत्रयभूषितः ॥ शूलाकारा तथा रेखा गतायुष्कप्रदायकः ॥ ६४६ ॥ धूर्जटिस्स तु विज्ञेयो यत्र रेखा जटासमाः ॥ तिस्रो यत्र प्रदृश्यन्ते सोचितो ज्ञानदायकः ॥ ६४७ ॥ शम्भुस्तु पाण्डुरो ज्ञेयो बिन्दुः कृष्णस्तु मस्तके ॥ बिल्वप्रमाणस्तेजस्वी पूजितः शिवशङ्करः ॥ ६४८ ॥ ईश्वरस्स तु विज्ञेयो रक्तो बिन्दुस्तु मस्तके ॥ एकचक्रो द्विचक्रो वा ह्यन्तरेऽधश्च गोपदम् ॥ ६४९ ॥ मृत्युञ्जयस्स विज्ञेयो ह्यपमृत्युविनाशकः ॥ अधश्चक्रं तदूर्ध्वञ्च श्वेता रेखा त्रिशूलभाक् ॥ ६५० ॥ चन्द्रशेखरनामासावर्धचन्द्रोस्ति मस्तके ॥ मध्ये चक्रद्वयं तस्य सेवनाद्रोगनाशनम् ॥

॥ ६५१ ॥ चन्द्रः स एव विज्ञेयः कपिलो मूर्ध्नि लक्षितः ॥ चक्रमध्ये भवेद्रेखा मारयेद्रिपुसन्ततिम् ॥ ६५२ ॥ शालग्रामानथो वक्ष्ये शाक्तान्कीटसमुद्भवान् ॥ येषां पूजनतो देवी भवानी सुप्रसीदति ॥ ६५३ ॥ श्रीविद्या सा तले चक्रमूर्ध्नि छत्रं प्रदृश्यते ॥ बाह्ये घण्टाङ्किता मूर्द्धा स्निग्धा सेव्याखिलैस्तदा ॥ ६५४ ॥ महाकाली तु सा ज्ञेया योक्तचिह्नसमन्विता ॥ द्विच्छिद्राद्यास्सर्वशिलास्त्रिकोणेनाङ्कितास्तु याः ॥ ६५५ ॥ यदायुधाकृतिश्चान्तर्देवीं तत्र विनिर्दिशेत् ॥ देवीशिला सचक्रा या दक्षमार्गेण तां यजेत ॥ ६५६ ॥ सार्चिता वाममार्गेण लोकद्वयसुखावहा ॥ या चक्ररहिता देवी शिला तां वामतोर्चयेत् ॥ ६५७ ॥ स्पर्शः कार्य्यो न विप्राणां तस्या या क्षोभकृद्भवेत् ॥ सौरी शिला दुर्लभैव प्रायः कलियुगे सुराः ॥ ६५८ ॥ स्फटिकाभा भवेत्सा तु घर्मे मुक्ता विमुञ्चति ॥ सूर्य्यस्योर्ध्वस्थितं वह्निं साभिषिक्ता प्रवर्षणम् ॥ ६५९ ॥ कुरुते शपथे मिथ्याकृते स्यात्कुष्ठकारिका ॥ इत्यादिलक्षणैर्युक्ता शिला सूर्य्यस्य सम्मता ॥ ६६० ॥ गणेशः स तु विज्ञेयो यस्तु शुण्डाङ्कितो भवेत् ॥ शुण्डाकारा शिला वापि गजाननसमापि वा ॥ ॥ ६६१ ॥ यस्या मध्ये महच्चक्रं सूक्ष्मचक्रं च यद्दिशि ॥ सा शिला तस्य दिक्पस्य सेव्या तद्दिशि राज्यदा ॥ ६६२ ॥ अर्धचन्द्राकृतिर्यत्र दृश्यते शकलद्वयम् ॥ सा तु चन्द्रशिला त्र्यस्त्रयुक्ता भौमशिला मता ॥ ६६३ ॥ बाणाकारेण चिह्नेन ज्ञेया बुधशिला सुराः॥दीर्घेण चतुरस्रेण युक्ता गुरुशिला मता॥६६४॥पञ्चकोणा तु शुक्रस्य चापाकारा शनेर्मता॥शूर्पाकारा तु राहोः स्यात्केतोस्तु ध्वजरूपिणी ॥६६५॥प्राप्ते कलियुगे घोरे वामाचारविमिश्रिते॥ भक्ष्याभक्ष्यविचारादिरहिते म्लेच्छसंकुले ॥६६६॥ कामक्रोधादिभिर्व्याप्ते जने स्त्रीभिर्विनिर्जिते॥क्व शिष्यः क्व गुरुर्मन्त्रः क्व जपः क्व च सिद्धयः॥६६७॥ अयुताब्दे कलेर्याते त्यजेद्विष्णुशिला महीम् ॥ तदर्धञ्जाह्नवीतोयं तदर्धन्देवताशिला ॥ ६६८ ॥ जप एव कलौ श्रेयाञ्छालग्रामार्चनं तथा ॥ सूर्य्यार्घ्यदानसमये दानं विभवतः परम् ॥ ६६९ ॥ आवाहनादिकं कार्य्यं मूर्त्यादौ त्रिविधं तु तत् ॥ आदावावाहनं कार्य्यं त्रिर्जपेन्मूलमन्त्रकम् ॥

॥ ६७० ॥ स्वाल्लोकात्सूक्ष्मरूपेण देव आगत्य मूर्तिषु ॥ स्थित एवं भावयित्वा सुषुम्णावर्त्मना सुधीः ॥ ६७१ ॥ आनीय तेजः स्वस्थानान्नासिकारन्ध्रनिर्गतम् ॥ करपुष्पाञ्जलौ स्थाप्य तद्दद्याद्देवमूर्द्धनि ॥ ६७२ ॥ देवस्य तेजस्तन्मूर्त्तौ [1]आवाहन्याख्यमुद्रया ॥ स्थापयेदुच्चरेन्मूलमेतदावाहनं मतम् ॥ ६७३ ॥ विभोर्निवेशनं यन्त्रं स्थापनं कथितं बुधैः ॥ ततः संस्थापनं कुर्य्यादिह तिष्ठेति तिष्ठ च ॥ ६७४ ॥ मूलान्ते देवतानाम तस्यान्ते च पठेदिति ॥ [2]स्थापनीयमुद्रां च दर्शयित्वा विभावयेत् ॥ ६७५ ॥ या तु स्थिरा देवतेति पश्चात्सम्प्रार्थयेदिति ॥ देवेश भक्तिसुलभ सर्वावरणसंयुत ॥ ६७६ ॥ यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थितो भव ॥ एवं सम्प्रार्थ्य देवेशं सान्निधापनमाचरेत् ॥ ६७७ ॥ मूलमन्त्रं समुच्चार्य्य सम्बुध्येत्तां च देवताम् ॥ इह त्वं सन्निधेहीति द्विरुक्त्वा स्वस्य सन्निधौ॥६७८॥ स्थितं देवं तोषयेच्च [3]सन्निधापनमुद्रया ॥ देवतायास्ततः कुर्य्यान्मूलमुच्चार्य्यसन्निधिम् ॥ ६७९ ॥ सम्बुध्य तां वदेत्पश्चात्सन्निरुद्धो भवेति च ॥ द्विरुच्चरेत्कृपापूर्णां भक्तिभावनिरोधिताम् ॥ ६८० ॥ प्रतिमायां स्थिरं यातां देवतामिति चिन्तयेत ॥ देवतां सम्मुखी कुर्य्यान्मूलमुच्चार्य्य देशिकः ॥६८१॥ सम्बुध्य तां वदेत्पश्चात्सम्मुखो भव इत्यपि ॥ ध्यायेत्स्वसम्मुखं देवं सुप्रसन्नाननाम्बुजम् ॥ ६८२ ॥ सम्मुखी करणीं मुद्रां दर्शयेदिति तत्स्मृतम् ॥ देवावगुण्ठनं कार्य्यं मूलमुच्चार्य्य मन्त्रवित् ॥ ६८३ सम्बुध्य तामवगुण्ठितो भवेदिति प्रदर्शयेत् ॥ अवगुण्ठनमुद्राञ्च दर्शयेच्चिन्तयेदिति ॥६८४॥ भक्त्या-

---

१ सम्यक् सम्पूरिता पुष्पैः कराभ्यां कलिताञ्जलिः ॥ आवाहनी समाख्याता मुद्रा देशिकसत्तमैः । २ अधोमुखीकृता सैव प्रोक्ता स्थापनकर्म्मणि । ३ आश्लिष्टमुष्टियुगला प्रोन्नतांगुष्ठयुग्मका॥सान्निधाने समुद्दिष्टा मुद्रेयं तन्त्रवेदिभिः। ४ अंगुष्ठगर्भिणी सैव सान्निरोधे समीरिता ॥ देवतांगे षडंगानां न्यासः स्यात्सकलीकृता । ५ सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्ज्जनी ॥ अवगुण्ठनमुद्रेयमाभितां भ्रामितो मता ॥ अन्योन्याभिमुखाश्लिष्टा कनिष्ठानामिकापुनः ॥ तथा च तर्जनीमध्या धेनुमुद्रा प्रकीर्तिता ॥ अमृतीकरणं कुर्य्यात्तया देशिकसत्तमः ॥ अन्योन्यग्रथितांगुष्ठप्रसारितकरांगुलिः महामुद्रेयमुदिता परमीकरणे बुधैः ॥ सम्मुखीकरणीमुद्रा सा ज्ञेया मुष्टियुग्मकम् ॥ देवता स्थाप्यते यस्यामंगुष्ठद्वयमुक्तकम् ।

सम्मोहितं देवं विस्मयोत्फुल्ललोचनम् ॥ सकलीकरणं चैव देवस्य हृदयादिषु ॥ ६८५ ॥ षडङ्गमन्त्रान्विन्यस्य मूलमुच्चार्य्य देवताम् ॥ सम्बुध्य तां च सकलीकृतो भव वदेत्ततः ॥ ६८६ ॥ ध्यायेदङ्गानि देवे तु प्रतिष्ठाप्याङ्गदेवताः ॥ यस्माद्भिन्नस्वभावानां यदभिन्नं प्रयोजनम् ॥ ६८७ ॥ अङ्गानामङ्गिना सार्द्धं सकलीकरणाद्भवेत् ॥ अमृतीकरणं वक्ष्ये पीठे संस्थाप्य देवताम् ॥ ६८८ ॥ बद्ध्वा सम्यग्धेनुमुद्रां देवमूर्ध्नि प्रवर्षणम् ॥ जायते चामृतश्चैति ध्यायन्नर्घ्योदकेन च ॥ ६८९ ॥ त्रिः सिञ्चेन्मूलमन्त्रेण दीपिनीमन्त्रमन्त्रितम् ॥ अकारादिक्षकारान्तमातृकाभिस्त्रिधा पुनः ॥ ६९० ॥ वाग्भवं वदयुग्मं च वाग्वादिनि च वाग्भवम् ॥ क्लींक्लिन्ने क्लेदिनि क्लेदय महाक्षोभमित्यापि[१]- ॥ ६९१ ॥ कुरु युग्मं कामबीजमों मोक्षं कुरु युग्मकम् ॥ प्रासादश्च पुनः प्रासादः सप्तत्रिंशदक्षरः ॥ ६९२॥ दीपिनीमनुराख्यातो देवताया हि वृद्धिकृत् ॥ मूलं सम्बोधनान्तं च देवनामामृतीकृतः ॥ भवेति च वदेदित्थममृतीकरणं त्विदम् ॥ ६९३ ॥ परमीकरणं वक्ष्ये महामुद्रां च बन्धयेत् ॥ उच्चार्य्य मूलं देवं च पूर्ववत्परमीकृतिः ॥ कृतो भवेति च प्रोच्य ध्यायेद्देवस्य मस्तके परमामृतवृद्धिं च देवस्य हृदयं स्पृशन् ॥ ६९४ ॥ कुर्य्यात्प्राणप्रतिष्ठां च मम स्थाने वदेत्तथा ॥ देवतानामशेषं च सर्वं प्राग्वत्तदेव हि ॥६९५॥ तत्तद्दैवतकल्पोक्तास्ततो मुद्राः प्रदर्शयेत् ॥ मुदं स्वं पूरयन्त्यद्धा देहद्वारेण चात्मनः॥६९६॥या अर्प्पयन्त्ययत्नेन मुद्रास्ताः शक्तयो मताः ॥ मोदयन्ति ग्रहादिभ्यःपापौघं द्रावयन्ति च॥६९७॥मोदनं द्रावणं यस्मादतो मुद्राः प्रकीर्तिताः॥ततः सम्पूजयेद्देवं शक्त्यालभ्योपचारकैः॥६९८॥तत्रादौ पूजनं कार्य्यं षोडशैरुपचारकैः ॥ आसनं स्वागतं चार्घ्यं पाद्यमाचमनीयकम् ॥ ६९९ ॥ मधुपर्कमाचमनं स्नानं वस्त्रमलंकृतिम् ॥ गन्धपुष्पाणि धूपं च दीपनैवेद्यवन्दनम् ॥ ७०० ॥ प्रयोजयेदर्चनायामुपचारान्हि षोडश ॥ दशोपचारा मध्या

---

१ ऐं वद वद वाग्वादिनि ऐं क्लीं क्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु कुरु क्लीं ॐ मोक्षं कुरु कुरु ह्रौं ह्रौं ॥ इति दीपिनीमन्त्रः॥ २ मूलमन्त्रपूर्वकसम्बोधनान्तदेवनाम अर्थात् हे अमुकदेव ! अमृतीकृतो भव एतयारीत्या परमी करणम् । ३ पूर्वोक्त प्राणप्रतिष्ठामन्त्रेण प्राणप्रतिष्ठान्भवाति परन्तु मम स्थाने अमुकदेवस्य इदं पदं योजयेत् ॥

स्यात्सा गृहस्थैर्विधीयते ॥ ७०१ ॥ अर्घ्यं पाद्यं तथाचामो मधुपर्कस्तथाचमः ॥ गन्धादयो निवेद्यान्ताः उपचारा दश स्मृताः ॥ ७०२ ॥ गन्धादयो निवेद्यान्ताः पूजा पञ्चोपचारिका ॥ अगृहस्थैर्गृहस्थैर्वा कर्त्तव्या कार्य्यतत्परैः ॥ ७०३ ॥ आदौ कुर्य्याद्देशिकस्तु वेदमन्त्रेण पूजनम् ॥ ततश्च तान्त्रिकैर्मन्त्रैर्वामी शूद्रश्च तन्त्रतः ॥ ७०४ ॥ ॐअंहंहमिदमिदं गृहाण ठद्वयम् ॥ योऽयः सर्वोपचारेषु मन्त्रः पञ्चदशाक्षरः ॥ ७०५ ॥ पठेद्वा वैदिकस्यान्ते तत्र तन्त्रं तु वैदिकः ॥ सर्वत्र वह्निजायायाः स्थाने शूद्रो नमः पठेत् ॥ ७०६ ॥ देवस्य वामभागे तु दद्यान्मूलेन चासनम् ॥ पौष्पं दारुमयं वास्त्रं चार्म्मं कौशं च तैजसम् ॥ ७०७ ॥ पौष्पं पुष्पादिरचितं कुशदूर्वादिसंयुतम्॥ नानावर्णसुगन्धं च कोमलं सर्वकामदम् ॥७०८॥ यस्य यानि निषिद्धानि पुष्पाण्युक्तानि तैः कृतम् ॥ केवलैरासनं हन्ति साधकस्य मनोरथान् ॥ ७०९ ॥ यज्ञदारुसमुद्भूतं वैल्वं वा चन्दनोद्भवम्॥ गम्भार्य्या वा समाख्यातं श्रीपर्णस्येप्सितप्रदम् ॥ ७१० ॥ सकण्टकक्षीरयुततालशालविवर्जितम् ॥ चैत्ये श्मशाने सम्भूतं वर्जयेच्च बिभीतकम् ॥७११॥ रोमजं वाल्कलं कौशजातं कर्पाससम्भवम् ॥ वस्त्रं चतुर्विधं श्रेष्ठं पूर्वपूर्वमुदाहृतम् ॥ ७१२ ॥ सिंहव्याघ्रतरक्षूणां छागस्य महिषस्य च ॥ गजानां तुरगाणां च कृष्णसारस्य चर्मणः॥७१३॥आसनं निर्मितं श्रेष्ठं निषिद्धं खारकौक्कुरम् ॥ शृगालस्य वृकस्यापि गोः शशस्य: कपेस्तथा ॥ ७१४ ॥ कुशः काशः शरो ग्रन्थिर्यवो दूर्वाश्च बल्वजाः ॥ वीरणं च नडो गुन्द्रः पूर्वाभावे परः परः ॥ योगपीठस्य सदृशमेतेषामासनं स्मृतम् ॥ पूर्वपूर्वं श्रेष्ठतमं कौशं दशविधं स्मृतम् ॥ ७१५ ॥ सुवर्णतारताम्राणां सर्वेगानां परम्परम्॥ हीनं निषिद्धं लोहं तु कांस्यं सैसं च पैत्तलम् ॥ ७१६ ॥ साङ्गं सावरणं देवं पूजार्थमिह चागतम् ॥ इति ध्यात्वा तु मूलान्ते स्वागतं परिकीर्त्तयेत् ॥ ७१७ ॥ ततोऽर्घ्यं मूर्ध्नि दद्याच्च कालोस्य त्रिविधो मतः ॥ आगताय

१ ॐ अं हं हं इदमिदमिदं गृहाण स्वाहा । २ रजतम् । ३ वंगः प्रसिद्ध एव ।

तथार्चायां स्नातुमासनगाय च ॥ ७१८ ॥ पूजान्ते गन्तुकामाय देवायार्घ्यं प्रदापयेत् ॥ अर्घ्यद्रव्ययुतैस्तोयैरुपचारमनुं पठन् ॥ ७१९ ॥ आगते स्नानकाले च नैवेद्योपक्रमेपि च ॥ त्रिविधः पाद्यकालः स्यात्पाद्यं स्यात्पादयावनम् ॥ ७२० ॥ पाद्ये च मधुपर्के च स्नाने वस्त्रोपवीतयोः ॥ भोजने चाचमः शुद्धतोयैः षोढा प्रकीर्तितः ॥ ७२१ ॥ क्षौद्रं कृत्वा कांस्यपात्रे दद्याद्देवमुखाम्बुजे ॥ दिवसे दधिसंयुक्तमुपचारमनुं पठन् ॥ ७२२ ॥ जातीफललवङ्गैलाचन्द्रकङ्कोलचूर्णयुक् ॥ पुनराचमनीयार्थं तोयं देवमुखेऽर्पयेत् ॥ ७२३ ॥ सुगन्धतैलैरभ्यज्य सुगन्धामलकादिभिः ॥ उद्वर्त्तनं विधायाथ स्नापयेदुष्णवारिणा ॥ ७२४ ॥ गन्धोदकैश्च मूलेन यथाशक्त्यभिषेचयेत् ॥ दुग्धदध्याज्यमधुभिः खण्डेन च पृथक्पृथक् ॥ ७२५ ॥ नारिकेलोदकेनापि तथा तालफलाम्बुना ॥ गन्धद्रव्यैश्च बहुभिस्तथा गन्धोदकेन च ॥ ७२६ ॥ ऐक्षवेणोदकेनापि सकर्पूरादिगन्धिना ॥ शुद्धोदकैश्च मूलेन यथाशक्त्यभिषेचयेत् ॥ ७२७ ॥ कदलीपनसाश्वत्थरसेनापि सुगन्धिना ॥ शतं सहस्रमयुतं शक्त्यावाथाभिषेचयेत् ॥७२८॥ शङ्खं सम्पूज्य तेनैव स्नापयेत्तमनन्यधीः॥ सर्वेषां प्रीतिदः शङ्खो न सूर्य्यस्य कदाचन७२९॥ पञ्चामृतैस्तीर्थतोयैरभिषिक्तः शिवो मुदम्॥लभते नाथ शंखोदैस्ततः शुद्धोदकेन च ॥ ७३० ॥ स्नानं पुरुषसूक्तेन कार्य्यं मूलेन वा नृभिः ॥ प्रदेयं विष्णवे मुख्यं पीतं कौशेयमम्बरम् ॥ ७३१ ॥ शिवाय च सरस्वत्यै पार्श्वनाथाय शुभ्रकम्॥ रक्तं शक्त्यर्कविघ्नानां भौमसौगतयोरपि॥७३२॥कृष्णं भैरवकाल्यादेराद्यादेर्नीलमम्बरम् ॥ अच्छिद्रं मलहीनं च सदशनन्यधारितम् ॥७३३॥ कार्पासजं वा कौशेयं राङ्कवं वा विशिष्यते ॥ तैलादिदूषिताद्रोगः सच्छिद्राद्व्रात्यता भवेत् ॥ ७३४ ॥ परकीयाच्च दारिद्र्यं जीर्णादायुःक्षयो भवेत् ॥ दग्धाद्विपद्भवेदास्यं दत्ते गात्रावलम्बिते ॥ ७३५ ॥ सूचीविद्धात्स्फोटकादि

---

१ कर्पूरम् । २ अभ्यंगः । ३ वृतम् । ४ इक्षुरसः । ५ दशसहस्राणि । ६ पुरुषसूक्तमूलमन्त्रस्त्रानमन्त्रैः । ७ शुक्लम् । ८ देवी । ९ गणेशः । १० बुद्धः । ११ संस्कारहीनो वा संकरः ।

मलिनात्कान्तिहीनता ॥ उग्रकेशे पुत्रनाशः पूजनादौ प्रयोजिते ॥ ७३६ ॥ तानि नानाविधानि स्युर्मुकुटादिप्रभेदतः स्त्रीपुम्प्रभेदतश्चापि विज्ञेयानि विचक्षणैः ॥ ७३७ ॥ चूर्णं घृष्टं धूमसारः सम्मर्दः प्राणिसम्भवः ॥ गन्धः पञ्चविधो ज्ञेयो मोददः स्वर्गवासिनाम् ॥ ७३८ ॥ प्रशस्तगन्धयुक्तानां पत्रचूर्णानि यानि च ॥ तानि गन्धाह्वयानि स्युश्चूर्णाद्यः प्रथमः स्मृतः ॥ ॥ ७३९ ॥ घृष्टो मलयजो गन्धस्सरलो देवदारु च ॥ कृष्णागुरुः कदम्बश्च द्वितीयोयं प्रकीर्तितः ॥ ७४० ॥ शतपत्रीरसे मग्नाच्चन्दनागुरुकादिकात् ॥ पिप्पलीयन्त्रतः काचकुप्यां सिद्धस्तृतीयकः ॥ ७४१ ॥ कृष्णागुरुश्चन्दनदेवदारु कालीयकं बालकभद्रमुस्तम् ॥ शिलारसः कुन्दरकोलकं च सेवन्ति काकं तुरगाभिधानम् ॥ ७४२ ॥ मृत्कर्प्पटैः संयुतकाचकुप्यां दत्त्वा मुखे लोहमलोहसूत्रैः ॥ निष्कासितो धूमरसस्तु तस्य सौगन्धिकैः काचकठोरकेयः ॥ ७४३ ॥ महामोदनामा सुरामोदकारी तथा भूतयक्षोरगातङ्ककारी ॥ ज्वरारोचकच्छर्दिशङ्कापहारी ललाटे स्थितो दृष्टिदोषापहारी॥७४४॥ यथाभागमनेके तु सुगन्धागन्धवारिभिः ॥ मर्दितास्स चतुर्थस्तु सम्मर्द इति कीर्त्यते ॥ ७४५ ॥ कस्तूरिका चैकभागा द्वौ भागौ मुस्तकस्य च ॥ तदर्धैलाजटामांसी त्वक्कुष्ठं च शिलारसः ॥ ७४६ ॥ चतुर्भागं बालकं च घृतभृष्टा तथा नखी ॥ सुगन्धकोकिला लोहबाणो राजवचा तथा ॥ ७४७ ॥ अष्टौ भागाः केशरस्य मुरायाश्चैव षोडश ॥ कृष्णागुरुश्च कालीयं तद्भागाष्टकमुच्यते ॥ ७४८ ॥ तथा सेवन्तिकाकस्य भागानेकत्र मर्दयेत् ॥ कामोदनामा सम्मर्दो देवताराजतोषकृत् ॥ ॥ ७४९ ॥ कास्तूरिकश्चौतुमदः प्राणजात इतीर्य्यते ॥ पञ्चमोयं सुगन्धस्तु देवदानवतोषकृत् ॥ ७५० ॥ पुष्पं पञ्चविधं प्रोक्तं परं चापरमेवच ॥ उत्तमं मध्यमं हीनन्तेषां वक्ष्यामि लक्षणम् ॥ ७५१ ॥ परं सुवर्णपुष्पं स्यात्तत्सदा योग्यमेव हि ॥ अभ्यङ्गपूर्वकं देयमर्चनार्हं सदा भवेत् ॥

---

१ देवदारुभेदः २ शतावरी । ३ पीतचन्दनम्ः । ४ हीबेरम् काला गुरुवा । ५ शतमूली । ६ वारिवाह ।७ सेवन्ती । ८ अश्वकर्णः । ९ अश्वगन्धः । १०तत्तन्नाम्नैव प्रसिद्धम् ।

अपरं राजतं पुष्पं ताम्रजं च प्रकीर्तितम् ॥ ७५२ ॥ सदायोग्यश्चेदमपि त्रिवर्षं चैकवर्षकम् ॥ तुलसीकेतकी पद्मं करवीर[1]श्च[2] मालती ॥ ७५३ ॥ पञ्चैतान्युत्तमान्याहुर्मध्यमानि तथा दश ॥ मल्लिका[3] कुन्दमन्दारबकुला[4]र्जुनकिंशुकाः[5] ॥ ७५४ ॥ पारिजातमशोकं च बिल्वं चम्पकमेव च ॥ एतद्भिन्नं सुवर्णं च सुगन्धहतमुच्यते ॥ ७५५ ॥ तत्तन्मन्त्रविधानेषु विहितानि समर्चयेत् ॥ नार्पयेद्भूमिपतितं कोष्णकं[6] क्रमिभक्षितम् ॥ ७५६ ॥ अंगलग्नं समाघ्रातं म्लानं पर्य्युषितं[7] तथा ॥ उग्रगन्धमगन्धं च मध्याह्नस्नानतस्तथा ॥ ७५७ ॥ पत्रं वा यदि वा पुष्पं फलं नेष्टमधोमुखम् ॥ दुःखदन्तु समाख्यातं यथोतपन्नं तथार्पणम् ॥ ७५८ ॥ चित्रपूजासु सर्वासु न विरुद्धस्य दूषणम् ॥ अधोमुखार्पणं नेष्टं पुष्पाञ्जलिविधौ न तत् ॥ ७५९ ॥ न पर्य्युषितदोषोस्ति तुलसीबिल्वचम्पके ॥ जलजे बकुलेगस्त्ये मालाकार[8]गृहेषु च ॥ ७६० ॥ केतकीकुटजै[9]र्नेशं नार्चयेदक्षतैर्हरिम् ॥ न दूर्वया यजेद्दुर्गां बिल्वपत्रैर्दिवाकरम् ॥ ७६१ ॥ लम्बोदरन्तुलस्या च एतद्धीनैः समर्चयेत् ॥ नार्कपुष्पैर्यजेद्देवीमादित्यं तगरेण च ॥ ७६२ ॥ गणेशाय च सूर्य्याय रक्तपुष्पमतिप्रियम् ॥ पुष्पाभावे प्रवालैर्वा तदभावे च कोरकैः[10] ॥ ७६३ ॥ तदभावे फलैः पत्रैस्तदभावे तृणैः कुशैः ॥ कपित्थं दाडिमं कोलं[11] जम्बूश्चि[12]श्चामलं[13] चाम्रकम्[14] ॥ ७६४ ॥ मातलुगं[15] च जम्बीरं[16] पनसं[17] श्रेष्ठमुच्यते ॥ अथ पुष्पोपचारान्ते कुर्य्यादावरणार्चनम् ॥ ७६५ ॥ मन्त्रसम्पुटितैर्वर्णैर्मातृकायाः सबिन्दुकैः ॥ क्रमेण गन्धपुष्पाद्यैर्देवस्यांगं समर्चयेत् ॥ ७६६ ॥ लयाङ्गत्वेन मातृणां स्थानाङ्गेषु ततः परम् ॥ आदावावरणं पूज्यं तदन्ते देवतां यजेत् ॥ ७६७ ॥ एवमभ्यर्च्य सर्वास्ता यथोक्ता वृत्तिदेवताः ॥ केशरेष्वग्निकोणादौ हृदयादीनि पूजयेत् ॥ ७६८ ॥ नेत्रं मध्ये दिशास्वस्त्रं ध्यातव्या-

---

१ करवीरंप्रसिद्धमेव । २ जाती वा मालती प्रसिद्धैव । ३ बेला प्रसिद्धैव । ४ मौलसिरीति भाषायाम् । ५ पलासः । ६ तप्तम् । ७ पूर्वदिवससञ्चितम् । ८ मालाकारागारे । ९ कुरैयेतिभाषायाम् १० मुकुलम् । ११ बेरफलम् । १२ चिञ्चिनी । १३ धात्री । १४ रसालः । १५ जम्बीरभेदश्चकोतरेति भाषायाम् । १६ जम्बीरम् । १७ कण्टकिफलम् ।

श्चाङ्गदेवताः ॥ तुषारस्फटिकश्यामनीलकृष्णारुणार्चिषः ॥ ७६९ ॥ वर-
दाभयदारिण्यः प्रधानतनवः स्त्रियः॥ अग्नीशासुरवायव्यमध्यदिक्षु क्रमात् स्थिताः
॥ ७७० ॥ देवस्य पुरतः प्राची ज्ञेयावरणपूजने ॥ तदादिपरिवाराणां प्राद-
क्षिण्येन पूजनम् ॥ ७७१ ॥ अङ्गमन्त्रास्तु पूजायामोमन्ताश्चान्ताहुतौ तथा ॥
स्वाहान्ता अथ देवस्याभिमुखं तास्समास्थिताः॥ ७७२ ॥ ततो यजेल्लोकपा-
लान्स्वस्वदिक्षु व्यवस्थितान् ॥ आयुधानि तदग्रे च तेषां ध्यानमथोच्यते ॥
॥ ७७३ ॥ इन्द्रं सुराधिपं पीठमैरावतगतं विभुम् ॥ सहस्रनेत्रं द्विभुजं पीठ-
वज्रधरं भजे ॥ ७७४ ॥ अग्निं तेजोधिपं रक्तं श्वेतशक्तिकरं प्रभुम् ॥ सभू-
षणं मेषवाहं देवरं कान्तलोचनम् ॥ ७७५ ॥ यमं प्रेताधिपं कृष्णं महिषो
परिसंस्थितम् ॥ कालदण्डकरं क्रूरं वृतं दूतैर्भयानकैः ॥ ७७६ ॥ रक्षो-
धिपं च निर्ऋतिं शवासनसमास्थितम् ॥ धूम्राभं खड्गहस्तञ्च पिङ्गलश्मश्रु-
कूर्चकम् ॥ ७७७ ॥ मकरे संस्थितं विद्युन्निभं पाशकराम्बुजम् ॥
शुभ्राङ्गं तुन्दिलं वन्दे वरुणं यादसां पतिम् ॥ ७७८ ॥ वायुं प्राणप्रियं
धूम्रं रक्तांकुशकरं परम् ॥ वानप्रस्थसमारूढं धावन्तं वेगतो भजे ॥ ७७९॥
यक्षाधिपं कुबेरं च शुक्लं शुक्लगदाधरम् ॥ नारसिंहासनारूढं पानपात्रयुतं
भजे ॥ ७८० विद्याधिपं नीलशूलधरं वृषभवाहनम् ॥ त्रिनेत्रं भालचन्द्रं
च जटाजूटधरं सितम् ॥ ७८१ ॥ गौरं नागाधिपं मूर्ध्नि फणामण्डलभू-
षितम्॥ पीनोत्तुङ्गं चक्रधरमनन्तं विश्वलं भजे॥७८२॥लोकाधिपं विधातारं
रक्तं पद्मकरं शुभम्॥ हंसारूढं वेदपाठं कुर्व्वन्तं तमहं भजे ॥७८३॥ पुनर्मूलं
समुच्चार्य्य साङ्गायै सपरीतिच ॥ वारायै च नामदेव्याश्चतुर्थ्यन्तमुदीरयेत् ॥
॥ ७८४ ॥ नम इत्यर्चयेद्गन्धपुष्पाद्यैस्साधकाग्रिधा ॥ धूपपात्रं ततोऽस्त्रेण
लक्षयेत्पूजयेत्ततः ॥ ७८५ ॥ हृदाणुनाथ चास्त्रेण घण्टां सम्पूज्य वादयेत् ॥
धूपो देयो गणेशस्य प्रियः प्रोक्तस्तु गुग्गुलुः ॥ ७८६ ॥ सर्जं देव्या महे-

---

१ मध्ये पूज्यदेवता तिष्ठति तस्याः स्वस्य चान्तराले पूर्वा दिक्प्रदेष्टव्या । २ ओमन्तोऽन्तावय-वोयेषाम् ३ लोकपालानां पूजायाः पश्चान्मूलमन्त्रमुच्चार्य्य साङ्गायै सपरिवारायै देव्यै नमः एतन्मन्त्रेन पूजाविधेया । ४ नमोमन्त्रेणः । ५ धूप इति प्रसिद्धः ।

शस्य निर्यासो देवदारुजः ॥ विष्णोः कृष्णागुरुः सिह्लं[1] भास्करस्य प्रियं मतम् ॥ ७८७ ॥ शक्तेर्दशांगं वक्ष्यामि शैलेयं मलयोद्भवम्[2] ॥ नखं कुष्ठं सर्ज्जरसमेकैकांशं प्रकल्पयेत् ॥ ७८८ ॥ शिलारसागुरुजटामांसीभागद्वयं मतम् ॥ षण्माक्षिकं[3] सिता चाष्टौ धूपोयं शक्तिमोहनः ॥ ७८९ ॥ हरीतकीसर्ज्जरसमुरामांस्यः कुभागिकाः ॥ लाक्षा त्रिभागा चत्वारो भागाः शैलजमुस्तयोः ॥ ७९० ॥ पञ्चभागं नखं प्रोक्तं षड्भागं कुष्ठमुच्यते ॥ द्वादशांशोगुरुः केशविघ्नोविष्णुदशाङ्गकः ॥ ७९१ ॥ मधु मुस्ता घृतं गन्धो गुग्गुल्वगुरुशैलजम् ॥ सरलं सिह्लसिद्धार्थैः शेषदेवदशाङ्गकः ॥ ७९२ ॥ वामेन तु तथा धूपमग्रे वा न तु दक्षिणे ॥ न धूपं वितरेद्भूमौ नासने न पटे तथा ॥ ७९३ ॥ यथा तथाधारगतं कृत्वा तं विनिवेदयेत् ॥ मेदोमज्जायुतो नेष्टो विष्णवे दारुसम्भवः ॥ ७९४ ॥ पूजयित्वा स्वमन्त्रेण घण्टावादनपूर्वकम् ॥ दीपं दद्यात्तु विभवैर्नानावाद्यपुरस्सरम् ॥ ७९५ ॥ तारो[6] जयध्वनिपदं मन्त्रमानेग्निगेहिनी ॥ एकादशाक्षरो मन्त्रो घण्टायास्सर्वसिद्धिदः ॥ ७९६ ॥ आवाहनार्घ्यधूपेषु पुष्पे नैवेद्यदीपयोः ॥ घण्टानादं प्रकुर्वीत विशेषाद्धूपदीपयोः ॥ ७९७ ॥ पूजाकालं विनान्यत्र कुर्यात्तस्या न वादनम् ॥ नानया च विना पूजां कारयेत्सिद्धिलालसः ॥ ७९८ ॥ गोसर्पिषा वा तैलेन वर्त्या च लघुगर्भया ॥ उच्चैः प्रदर्शयेद्दीपं न च मेदादिना क्वचित् ॥ ७९९ ॥ न मिश्रीकृत्य दद्यात्तु दीपं स्नेहाद्घृतादिकान् ॥ दत्त्वा मिश्रीकृतस्नेहात्तामिस्रं नरकं व्रजेत् ॥ ८०० ॥ पारावत[7]भ्रमाकारं भ्रामयेच्च प्रदर्शयेत् ॥ देवस्य सर्वावयवाञ्श्लोकमेकं ततः पठेत् ॥ ८०१ ॥ सुप्रकाशो महादीपः सर्वत्र तिमिरापहः ॥ सबाह्याभ्यन्तरं ज्योतिर्दीपोयं प्रतिगृह्यताम् ॥ ८०२ ॥ दक्षिणे सार्षपं तैलं तिलतैलस्य वामतः ॥ सितावर्तिर्दक्षिणतो वामतो रक्तवर्तिका ॥ ८०३ ॥ पात्रेषु दीपो दातव्यो न तु भूमौ कदाचन ॥ कृत्वा तु पृथिवीभागे दीपमुत्सृजते नरः ॥ स तापपापं नरकं प्राप्नोति च शतं समाः ॥ ८०४ ॥ नैव निर्वापयेद्दीपं लक्ष्मीनाशकरो यतः ॥ पाद्य-

---

१ मनःशिला २ चन्दनम् ३ षद्भागंमाक्षिकम् ४ एकभागाः ५ सर्द्वपः ६ ॐ जयध्वनि मन्त्रमाने स्वाहा ७ कपोतभ्रमणवद्दीपभ्रमणम् ॥

आचमनीयं च दत्त्वा नैवेद्यमर्पयेत् ॥ ८०५ ॥ निधाय स्वर्णकं पात्रं साधारं मण्डले त्विह॥ संस्थाप्य चतुरस्रं च संस्कुर्य्याच्छास्त्रमार्गतः ॥८०६॥ अस्त्र-मन्त्रेण सम्प्रोक्ष्य चक्रमुद्राभिरक्षितम् ॥ स्पर्शदृष्ट्यादिदोषांश्च वायुबीजेन शोषयेत् ॥ ८०७ ॥ स्पृशन्दक्षकराग्रेण वह्निबीजेन निर्दहेत् ॥ वंबीजेना-मृतीकृत्य मूलमन्त्रेण तत्पुनः ॥ ८०८ ॥ स्पृशेत्कराभ्यां विधिवदष्टवारा-भिमन्त्रितम् ॥ धेनुमुद्रां प्रदर्श्याथ गन्धपुष्पैः समर्चयेत् ॥ ८०९ ॥ देव-मभ्यर्च्य कुर्य्याच्च पुष्पाञ्जलिमनन्यधीः ॥ हेमपात्रस्थितं दिव्यं परमान्नं सुसं-स्कृतम् ॥ ८१० ॥ पञ्चधा षड्रसोपेतं गृहाण मम सिद्धये ॥ मूलमन्त्रं समुच्चार्य्य स्वाहान्तं जलमर्प्पयेत् ॥ ८११ ॥ कराभ्यां संस्पृशन्पात्रं नैवेद्या-न्ते नमो वदेत् ॥ देवस्य दक्षिणे हस्ते जलं दत्त्वा पठेदिदम् ॥ ८१२ ॥ अमृतोपस्तरणमसि स्वाहेति अंवाक्षरः ॥ दर्शयेद्दक्षहस्तेन विकचोत्पलसन्नि-भाम् ॥ ८१३ ॥ दर्शयित्वा ग्रासमुद्रां पञ्च प्राणाहुतीश्चरेत् ॥ कनिष्ठा-नामिकांगुष्ठयोगः प्राणस्य मुद्रिका ॥ ८१४ ॥ तया ग्रासं गृहीत्वा प्राणाय स्वाहेति संवदेत् ॥ तर्जनीमध्यमांगुष्ठयोगेपानपदं वदेत् ॥ ङेन्तं स्वाहान्तमथ च व्यानाय च ततो वदेत् ॥ ८१५ ॥ स्वाहान्तमध्यमानामांगुष्ठयोगेन निर्व-पेत् ॥ हित्वा कनिष्ठां सर्वाभिरुदानायाग्निगेहिनी ॥ ८१६ ॥ सर्वाभिस्तु समानाय स्वाहोक्त्वा ग्रासमर्पयेत् ॥ ततः स्वर्णादिजे पात्रे सुतोयं धेनुमुद्रया॥ ॥ ८१७ ॥ अमृतीकृत्य देवाय देयं मन्त्रमिमं पठेत् ॥ नमस्ते देवदेवेश सर्व-तृप्तिकरं परम् ॥ अन्नं निवेदितं शुद्धं प्रकृतिस्थं सुशीतलम् ॥ ८१८ ॥ परमानन्दसम्पूर्णो गृहाण जलमुत्तमम् ॥ उक्त्वैवं देवतावामे जलपात्रं निवेश-येत् ॥ ८१९ ॥ त्रिभिर्वर्णैः प्रदातव्यं देवार्थं पाकभोजनम् ॥ घृतपक्वं दुग्ध-सिद्धं साधितं केवलाग्निना ॥ ८२० ॥ युक्तमैक्षवपङ्केन तच्छूद्रस्य प्रश-स्यते ॥ ततः पुष्पाञ्जलिं दद्यादस्त्रमन्त्रेण बन्धनम् ॥ ८२१ ॥ दिशां कृत्वा-

---

१ हस्तौ तु सम्मुखौ कृत्वा संलग्नौ सुप्रसारितौ ॥ कनिष्ठांगुष्ठकौ लग्नौ मुद्रैषा चक्रसञ्ज्ञिता ॥ पाणिद्वयं निबध्य कनिष्ठांगुष्ठयोः अनामिकाकनिष्ठिकयोः प्रवेशेन चक्रमुद्रा भवति२ यमिति मन्त्रेण-३ रमिति मन्त्रेण । ४ पुनरष्टौ वारान्मूलमन्त्रं पठित्वा अभिमन्त्रितं पात्रं हस्ताभ्यां स्पृशेत् ।५ एका-दशाक्षरो मन्त्रः । ६ विकसितकमलाकृतिदाक्षिणहस्ताङ्गुलिभिन्नकरणेन ग्रासमुद्रा भवति ॥

जवनिकां[1] देवस्य परितो न्यसेत् ॥ अमृतात्मकनैवेद्यं नम इत्युच्चरेत्पुनः ॥ ॥ ८२२ ॥ धेनुमुद्रां प्रदर्श्याथ भुञ्जानां देवतां स्मरेत् ॥ अष्टोत्तरशतं जप्त्वा मूलमन्त्रं ददेज्जलम् ॥ ८२३ ॥ नैवेद्यान्ते त्वाचमनं दत्त्वा होमविधिं चरेत् ॥ पूर्ववत्संस्कृते वह्नौ देवमावाह्य मन्त्रवित् ॥ ८२४ ॥ सम्पूज्य मूलमनुना पञ्चविंशतिमाहुतीः ॥ हुनेदाज्येन हविषा तिलैर्वा पायसैः शुभैः ॥ ८२५ ॥ तण्डुलैस्तिलमिश्रैर्वा केवलैर्वापि पुष्पकैः ॥ अङ्गावरणदेवानामेकैकामाहुतिं हुनेत् ॥ ८२६ ॥ उद्वास्य देवं वह्निं च पूजास्थानं व्रजेत्ततः ॥ उपविश्यासने मन्त्रैर्दद्याद्भूतबलिं ततः ॥ ८२७ ॥ ईशाने मण्डलं कृत्वा साधारं तत्र निक्षिपेत् ॥ अन्नं व्यञ्जनतोयाढ्यं पात्रं पुष्पादिपूरितम् ॥ तत्र भूतानि सम्पूज्य ततस्तेभ्यो बलिं हरेत् ॥८२८॥ ये रौद्रा रौद्रकर्म्माणो रौद्रस्थाननिवासिनः ॥ योगिन्योप्यग्निरूपाश्च गणानामधिपाश्चये ॥ ८२९ ॥ भूचराः खेचराश्चैव ये तिष्ठन्त्यन्तरिक्षगाः ॥ सर्वतः प्रीतमनसो भूता गृह्णन्त्विमं बलिम् ॥ ८३० ॥ वामहस्तेन तत्पात्रे जलधारां समर्प्पयेत् ॥ पुष्पाञ्जलिं समादाय भूतानि प्रार्थयेदिति ॥ ८३१ ॥ भूतानि यानीह वसन्ति भूमौ बलिं गृहीत्वा विधिवत्प्रयुक्तम् ॥ सन्तोषमासाद्य व्रजन्तु सर्वे समन्ततोन्यत्र नमोस्तु तेभ्यः ॥८३२॥ दत्त्वा पुष्पाञ्जलिं नत्वा विहरन्तु यथासुखम् ॥ भूतादीनि च नाराचमुद्रया विसृजेत्ततः ॥ ॥ ८३३ ॥ देवं तृप्तमिति ध्यात्वा नैवेद्यं गतसारकम् ॥ सञ्चिन्त्य रक्षोदिग्भागे पात्रं तत्स्थापयेत्ततः ॥ ८३४ ॥ गोमयाद्भिस्तदस्त्रेण नैवेद्यं स्थापयेत्ततः ॥ देवोच्छिष्टं गृहीत्वा तु निर्माल्यभोजिने नमः ॥८३५॥ ऐशान्यां तु विनिक्षिप्य हस्तं प्रक्षालयेत्ततः ॥ पुनराचमनं दद्यात्करोद्वर्त्तनमेव च ॥ ८३६ ॥ शुद्धमाचमनं दत्त्वा सुगन्धैर्गन्धयेत्करौ ॥ ततो दद्याच्च ताम्बूलं विष्णवे द्वादशाङ्गकम्॥८३७॥खादिरैलालवङ्गेन्दुचूर्णपर्णतमालकम्॥ जातीफलं च जावित्रीकस्तूरीकेशरैर्युतम् ॥८३८॥ पौगं फलमथ प्रोक्तं दशाङ्गं

---

१ तिरस्कारिणी ॥

भास्करस्य तु ॥ मृगनाभितमालाभ्यां हीनं विघ्नेश्वरस्य तु ॥८३९॥ पञ्चाङ्गं चूर्णखदिरपर्णपूगफलेन्दुकम् ॥ शैवं देव्या जातिकोशयुतं तच्च महेशितुः ॥ ॥ ८४० ॥ ततश्च मुकुटादीनि दद्याद्भूषणकानि च ॥ दर्शयेच्च तथादर्शं कल्पयेच्छत्रचामरे ॥ ८४१ ॥ शिरस्यारोप्य देवस्य दूर्वाक्षतपवित्रकम् ॥ आरात्रिकं ततः कुर्य्याद्धर्म्मकामार्थसिद्धये ॥ ८४२ ॥ सौवर्णे राजते कांस्ये लोकनेत्रमनोहरे ॥ कुंकुमेन लिखेत्पद्ममष्टपत्रं सुशोभनम् ॥ ८४३ ॥ कर्णिकायां महादीपं तत्पत्रेष्वष्टदीपकान् ॥ यवगोधूमरचिताञ्छर्करादुग्धसंयुतान् वलयाञ्चितशोभाभिः शोभितान्घृतपूरितान् ॥ ८४४ ॥ अभिमन्त्र्य ततो मन्त्री रत्नेश्वर्य्या नवार्णतः ॥ श्रीं ह्रीं ग्लूं स्तूं त्वथ प्राग्वत्ततः श्रीं ह्रीमिति क्रमात् ॥ ८४५ ॥ रत्नेश्वर्य्यास्समुद्दिष्टस्ततो मूलेन तां यजेत् ॥ ततस्तत्पात्रमुद्धृत्य मस्तकान्तं पुनःपुनः ॥ ८४६ ॥ नववारं भ्रामयेच्च चक्रमुद्रां प्रदर्शयेत् ॥ देवं प्रणम्य च ततः प्राणायामत्रयं चरेत् ॥ ८४७ ॥ मूलमन्त्रेणाथ पूर्वं न्यासपूर्वान्समाचरेत् ॥ अष्टोत्तरसहस्रं तु नव द्वे त्रिशतं तु वा ॥ ८४८ ॥ अष्टोत्तरशतं चापि जपेन्मूलमतन्द्रितः ॥ समाप्ते तु जपे मालां निदध्यान्मस्तकोपरि ॥ अर्घ्यपात्राज्जलं चैव गृहीत्वेदं पठेत्पुनः ॥ ८४९ ॥ गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ॥ सिद्धिर्भवतु मे देव त्वत्प्रसादाज्जगत्पते ॥ ८५० ॥ देवस्य दक्षिणेहस्ते तोयं दत्त्वा समर्पयेत् ॥ जपश्च जपमाला च स्थाप्या रहसि वेष्टिता ॥ ततस्तु गीतस्तुतिभिर्घण्टावादनपूर्वकम् ॥ ८५१ ॥ ब्राह्मणो वेदमन्त्राद्यैः क्षत्रियः संहितादिभिः ॥ पौराणिकाद्यैर्वैश्यस्तु शूद्रस्तु प्राकृतादिभिः ॥ ८५२ ॥ वामिनस्तूपचारान्ते कुर्य्युर्मद्येन तर्प्पणम् ॥ तेषामनित्यो होमस्तु नित्यं तर्प्पणसेवनम् ॥ ८५३ ॥ कौलिकैः शक्तिसहितैस्तदुच्छिष्टञ्च सेव्येत् ॥ मोहाद्वा कामतः शूद्रः पुराणं वा स्मृतिं पठेत् ॥ संहितां नरक याति पितृभिस्सह पापकृत् ॥ ८५४ ॥ यः शूद्रो बुद्धिपूर्वन्तु शृणुयाच्छ्रावयेद्द्विजान् ॥ वेदांस्तौ दुःखितावस्मिन्भवेन्यत्र च नारकौ ॥ ८५५ ॥ अधि-

---

१ श्रीं ह्रीं ग्लूं स्तूं श्रीं ह्रीं ग्लूं स्तूं ह्रीं ॥ इति नवाक्षरः रत्नेश्वरीमन्त्रः ॥

कारमदायस्तु धनस्य मदतोपि वा ॥ शूद्रस्तु शृणुयाद्वेदं स निर्वंशस्तु निर्धनः ॥ ८५६ ॥ अज्ञानाच्चेच्छुतो वेदः श्रावितो वा द्विजन्मना ॥ प्राजापत्यत्रयं कृत्वा तौ संशुद्धौ भविष्यतः ॥ ८५७ ॥ ततोर्घ्यपात्रमादाय मूलमुच्चार्य्य मन्त्रतः ॥ साधु वासाधु वा कर्म्म यद्यदाचरितं मया ॥ तत्सर्वं भगवन्देव गृहाणाराधनं वरम् ॥ ८५८ ॥इत्यर्घ्योदकमुत्सृज्य किञ्चिद्देवस्य दक्षिणे ॥ करे समर्प्पयेद्विद्वान्कृतमाराधनं ततः ॥ भक्त्या प्रणम्य देवेशं श्लोकैरेभिः समर्प्पयेत् ॥ ८५९ ॥ यद्दत्तं भक्तिमात्रेण पत्रं पुष्पं फलं जलम् ॥ निवेदितं च नैवेद्यं तद्गृहाणानुकम्पया ॥८६०॥ आवाहनं न जानामि न जानामि विसर्ज्जनम् ॥ पूजां चैव न जानामि त्वं गतिः परमेश्वर ॥ ८६१ ॥ कर्मणा मनसा वाचा त्वत्तो नान्या गतिर्मम ॥ अन्तश्चारेण भूतानां द्रष्टा त्वं परमेश्वर ॥ ८६२ ॥ नाथ योनिसहस्रेषु येषुयेषु व्रजाम्यहम् ॥ तेषुतेष्वचला भक्तिरच्युतास्तु सदा त्वयि ॥ ८६३ ॥ देवो दाता च भोक्ता च देवस्सर्वमिदं जगत् ॥ देवो जयति सर्वत्र यो देवः सोहमेव हि ॥ ८६४ ॥ ततोर्घ्यपात्रतोयेन कुर्य्यादाराधनार्प्पणम् ॥ ब्रह्मार्प्पणस्य मनुना कुर्य्याद्ब्रह्मार्प्पणं ततः ॥ ८६५ ॥ तारस्तत्सत्पूर्वमिति प्राणबुद्धीति संवदेत् ॥ देहधर्म्माधिकारेति जाग्रत्स्वप्नसुषुप्त्यवस्थासूक्त्वा मनसा वाचा कर्म्मणाभ्यन्तरा ततः ॥ ८६६ ॥यच्छब्दश्चोदरेणेति शिष्ण्वा यच्च स्मृतं च यत् ॥ उक्तं यच्च कृतं तच्च सर्वं ब्रह्मार्प्पणं भवेत् ॥ ८६७ ॥ भूस्स्वाहेति च मन्त्रोयं षट्षष्टयर्णः समीरितः ॥ उद्वासयेत्ततो देवं परिवारगणैस्सह ॥ ॥८६८॥इति पुष्पाञ्जलिं दत्त्वा प्रणम्य परिभावयेत्॥ देवस्याग्रे विलीनं तु रश्मिवृन्दमशेषतः ॥ ८६९ ॥ तेजोरूपं शिवं ध्यात्वा क्षमस्वेति पुनः पुनः॥ क्षमयारोपयेत्स्वीये हृदम्भोजे तु देवताम् ॥८७०॥ गच्छगच्छ सुरश्रेष्ठ स्वस्थानं परमेश्वर ॥ यत्ते ब्रह्मादयो देवा न विदुः परमं पदम् ॥ ८७१ ॥ विसृ-

---

ॐतत्सत्प्राणबुद्धिदेहधर्म्माधिकारजाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्म्मणाभ्यन्तरा यच्चोदरेण शिष्ण्वा यच्च स्मृतं यदुक्तं यच्च कृतं तत्सर्वं ब्रह्मार्प्पणं भवेत् भूस्स्वाहा ।

ज्यानेन मन्त्रेण ततः पूरकवायुना ॥ ध्यायेच्च मन्त्रेणानेन ध्यात्वा तां स्थापयेद्धृदि॥८७२॥ तिष्ठतिष्ठ परस्थाने स्वस्थाने परमेश्वर ॥ यत्र ब्रह्मादयः सर्वे सुरास्तिष्ठन्ति मे हृदि ॥८७३ ॥ इति संस्थाप्य सम्पूज्य स्वात्मानं तन्मयं स्मरेत् ॥ ऐशान्यां मण्डलं कुर्य्याद्वारि पद्मविवर्ज्जितम् ॥ ८७४ ॥ निर्माल्यं मोक्तुं पूजार्थं पञ्चायतनपूजने ॥ कर्त्तव्यानि तु पञ्चैव ईशानाद्यं समर्च्चयेत् ॥८७५॥ लम्बोदरो गणेशस्य तेजश्चन्द्रो विवस्वतः ॥ विष्वक्सेनो हरेः प्रोक्त ईश्वरी च महेशितुः ॥ ८७६ ॥ चण्डेश्वरो भवान्याश्च मन्त्रैरेतादृशं चरेत् ॥ लेह्यचोष्यान्नपानादि निर्माल्यं प्रविलेपनम् ॥ ८७७ ॥ निर्माल्यभोजिने तुभ्यं ददामि श्रीशिवाज्ञया ॥ इति नैवेद्यशेषं तु दत्त्वा नत्वा विसर्ज्जयेत्॥८७८॥ अथ ह्रीं ह्रीं सः बीजैस्तु सहितैर्नमसा पुनः ॥ मन्त्रेण भास्करायार्च्चामच्छिद्रार्थं निवेदयेत् ॥ ८७९॥ नमो विवस्वते तुभ्यं भास्वते विष्णुतेजसे॥जगत्सवित्रे शुचये सवित्रे कर्मदायिने८८०॥ततः कृताञ्जलिश्चित्तं स्थिरीकृत्य पठेदिति॥यन्नच्छिद्रं तपश्छिद्रं यच्छिद्रं पूजने मम ॥सर्वं तदच्छिद्रमस्तु भास्करस्य प्रसादतः॥८८१॥अर्घ्यतोयेन च ततो गन्धपूजावशेषितम् ॥ आलोड्य किञ्चिन्मूलेन मन्त्रयेदष्टधा पुनः ॥८८२॥ प्रोक्षयेत्तेन तोयेन तत्स्थानं मूलमन्त्रतः ॥ निर्माल्यं मस्तके धार्य्यं मूलमन्त्रेण मन्त्रिणा॥ ॥ ८८३ ॥ प्राश्य पादोदकं पश्चान्नैवेद्यं विभजेत्ततः ॥ तद्भक्तेभ्यः स्वयं भुक्त्वा तन्मयो हि वसेत्सुखम्॥८८४॥ शैवस्तु शिवनिर्माल्यप्रसादस्याधिकारवान् ॥ अन्यो निरयमाप्नोति न दोषः पञ्चसङ्क्रमे ॥८८५॥ स्वयं तु लिङ्ग तीर्थं वा प्रसादं वापि भक्तितः ॥कृत्वा शैवा ह्यशैवा वा मुच्यन्ते पापराशितः ॥ ८८६ ॥ शूद्रसंस्थापितं लिंगं पूजयेद्वा नमेत्तदा ॥ तत्सम्बन्धिप्रसादादि गृह्णन्निरयमाप्नुयात् ॥८८७॥ प्रातरुत्थाय गुर्वादि स्मृत्वासम्यक्समाचरेत् ॥ स्नानं सन्ध्यां तर्प्पणं च वैदिकं तान्त्रिकं तथा॥८८८॥आगत्य च गृहे पश्चात्प्राणायामत्रयं चरेत् ॥ कुर्य्याच्च मातृकान्यासं तथा छन्दर्षिदैवतम्॥८८९॥

तन्मन्त्रस्य करांगाख्यं न्यासं कृत्वा तथा स्थितिम् ॥ मन्त्रस्नानं देवतायाः पूजां पञ्चोपचारिकाम्॥ ८९० ॥वैश्वदेवान्तरे तत्र दद्यादाहुतिपञ्चकम् ॥ मूलेन होमयेत्तत्र जपेच्चाष्टोत्तरं शतम् ॥८९१॥ वैदिकीकाकबल्यन्ता पूजा चोच्छिष्टभोजनम् ॥ ततः सम्प्रार्थयेद्देवं सायं सन्ध्यां समाचरेत् ॥ ८९२ ॥ देवागारे दीप्यमाने प्रोक्तः संक्षेप आह्निकः ॥ अथापराह्निकं वक्ष्ये तत्स्थानदशके भवेत् ॥ ८९३ ॥ मार्गे प्रवासे दुर्गे च रोगमातौ महाभये ॥ कारागृहेऽशुभे स्थाने सर्पव्याघ्रादिजे भये॥८९४॥ परचक्रागमे[1] कुर्य्यात्करायन्तु यथातथा॥ तत्र स्नानादिकं चिन्त्यं कृत्वा मानसपूजनम् ॥८९५॥ मनसा हृदये तच्च ध्यात्वा योगाख्यपीठकम्॥ तत्रैव पृथिवीमध्ये पूजा देवस्य चाचरेत्॥८९६॥ यथापुष्पादिभिः पूजा बहिर्देशे विधीयते ॥ तथा हृद्यपि कर्त्तव्या सर्वाशाप्रतिपत्तये॥८९७॥मनसा च चरेद्धोममेतद्विपदि चाह्निकम् ॥ अथातश्चाह्निकं वक्ष्ये नित्यं स्वास्थ्याधिकस्य तत्॥८९८॥यदि लङ्घनपर्य्यन्ते व्याधिरात्मनि दृश्यते॥ तदा पूजा न कर्तव्या स्थण्डिले प्रतिमासु च ॥ ८९९ ॥ न स्नानं दन्तकाष्ठं वा कुर्य्याद्धोममथापि वा ॥ रविमण्डलमालोक्य प्रतिमामथ वा पुनः ॥ ९०० ॥ मूलमन्त्रं सकृज्जप्त्वा पुष्पं साक्षतमुत्सृजेत् ॥ क्रान्तो व्याधिभिरत्युग्रैर्जरया चेन्द्रियैस्तथा ॥ निजसामयिकैर्वापि स्वकर्त्तव्यं समापयेत् ॥ ९०१ ॥ रुग्निवृत्तस्ततस्स्नात्वा पूजयित्वाग्निदेवताः ॥ गुरून्विप्रांस्तदग्रे च वाक्यमेतदुदीरयेत् ॥ ९०२ ॥ एतावत्कालविच्छिन्ना पूजा युष्मत्प्रसादतः ॥ न दोषोस्त्विति सम्प्रार्थ्य पुनः पूर्ववदाचरेत्॥९०३॥ यस्तु रोगवशाद्दोषो यतस्तत्क्षालनं चरेत् ॥ जपेन चाथ ध्यानेन होमेन दानतोपि वा ॥९०४॥ अथ सूतकिनां नित्यं वैदिकन्तु श्रुतीरितम् ॥ कृत्वा तान्त्रिकपूजादि मनसैव समाचरेत् ॥९०५॥ कामनार्थप्रयोगश्चेत्तदा पूर्ववदाचरेत् ॥ मृतगेहं परित्यज्य वामाचारे न सूतकम् ॥९०६॥ स्पृहां हित्वा ज्ञानपूर्वं कुलतो धर्ममार्गतः ॥ यथा लभेद्ध्यानधर्म्मं भक्त्या वामे करोति यः ॥ शास्त्रतत्त्वं देवतत्त्वं नो वेत्ति स तु गुह्यकः ॥९०७॥ ज्ञानं वामेन भजते सुखार्थी तत्र जायते ॥ क्षुत्तृड्भ्यामर्दितः प्रेतस्तस्माद्धर्म्मं विचारयेत् ॥९०८॥ पूजोदकेन

१ स्वदेशे अन्यदेशीयराज्ञां सेनागमःपरचक्रागम उच्यते ॥

कर्तव्या तद्यन्त्रं नैव विद्यते॥तदा सम्पूजयेद्देवं भावनाकुसुमादिभिः॥१०९॥ भक्तिः श्रद्धा भावना च पूजानां जीव उच्यते ॥ जडानामाह्निकं वक्ष्ये तथा संक्षेपकर्म्मणि ॥ ११० ॥ रत्नमण्डपधर्म्मादिचतुष्कमरुणाम्बुजम् ॥ मूलमूर्त्तिषडङ्गानि तेषां पूजाभिधीयते ॥ १११ ॥ सर्वेषामपि वस्तूनामलाभे भाव नैव हि ॥ निर्मलेनोदकेनैव पूजयेत्स्थिरमानसः ॥ ११२ ॥ सामान्यत स्त्रिधा पूजा चोत्तमाधममध्यतः ॥ अधिकारिनिमित्ताभ्यां भिद्यते शतधा पुनः ॥ ११३ ॥ या सोपकरणा पूजा क्रियमाणोत्तमा मता ॥ यथालब्धैर्विनिष्पाद्या द्रव्यैः पूजा तु मध्यमा ॥ ११४ ॥ पत्रपुष्पाम्बुनिष्पाद्या पूजा साधमसञ्ज्ञिका ॥ विहिताखिलवेदोक्तैर्ब्रह्मर्षिभिरकल्मषैः ॥ ११५ ॥ क्रियमाणा[२] तु या पूजा सात्विकी सा विमुक्तिदा ॥ राजर्षिभिस्तपोनिष्ठैर्भगवत्तत्त्ववेदिभिः ॥ ११६ ॥ या पूजा क्रियते सम्यग्राजसी सा सुखप्रदा ॥ स्त्रीबालवृद्धमुख्याद्यैर्भक्तैरक्षुण्णमानसैः ॥ ११७ ॥ या पूजा क्रियते नित्यं तामसी सा प्रकीर्तिता ॥ वेदे कर्त्तुं तु नो शक्तास्तन्त्राणि तु युगेयुगे ॥ ११८ ॥ कल्यंशसम्भवैर्विप्रैर्नाम्ना कीर्त्तितानि तु ॥ कलिना प्रेरिता विप्रास्तत्तन्त्रपथगामिनः ॥ ११९ ॥ कामलोभादिभिर्ग्रस्ता ब्राह्मण्यरहिता नराः ॥ म्लेच्छास्ते तु भविष्यन्ति क्षीणपुण्याश्च रौरवे ॥ १२० ॥ पतिष्यन्तीति विज्ञाय न वै वैदिकमुत्सृजेत् ॥ उल्लासै रहितं गोपं पटलैर्विष्णुगोपनम् ॥ १२१ ॥ अध्यायैर्ये कृता ग्रन्थास्स्वाध्यायास्ते द्विजन्मनाम् ॥ यमुद्दिश्य कृतं तन्त्रं तस्य तत्र प्रधानता ॥ १२२ ॥ मेरुतन्त्रे तु यत्प्रोक्तं तत्स्थिरं नान्यथा भवेत् ॥ इति देवाः समाख्यातो युष्मत्प्रश्नविनिर्णयः ॥ १२३ ॥ यद्विचार्य्य कृतं कर्म्म न दुःखाय प्रवर्त्तते ॥ अतो वेदोदितं कर्म्म कार्य्यं निःश्रेयसाय वै ॥ १२४ ॥

इति श्रीमहामायामहाकालानुमते मेरुतन्त्रे शिवप्रणीत आह्निकप्रकाशः पञ्चमः ॥५॥

१ पूजायां यद्यद्वस्तु न लभ्येत तद्दाने भावना मनस्येव कर्त्तव्या । २ कामक्रोधादिकलिदोषैर्दुष्टाऽजितेन्द्रियपुंसां वैदिकधर्मानधिकारं विज्ञाय पूर्वाचार्यैस्तन्त्राणिरचितानि तत्र ये वैदिका धर्मास्ते सर्वे सेव्याः पुनः ये बलिवाममार्गादयो वेदविरुद्धास्ते केवलं केनाप्युपायेन मूर्खशूद्रादीनां देवभक्तौ प्रवृत्तये उक्ताः तन्त्राचार्य्याणामाशयमभिज्ञाय ये तानेव वेदाविरुद्धधर्मान् मुख्यान्मत्वा कुर्वते कारयन्ति च ते ब्रह्मतेजसो भ्रष्टा भूत्वा निरये पतन्ति ॥

श्रीदेव्युवाच ॥ पुरश्चरणशब्दस्य ब्रूह्यर्थं च विधिं प्रभो ॥ वैदिकाद्यास्सर्वे मन्त्रा न सिद्ध्यन्ति च यं विना ॥ १ ॥ ईश्वर उवाच ॥ रहस्यं सर्वमन्त्राणां कथयामि तवाग्रतः ॥ कैल्यर्थं सर्वतन्त्रेषु यः सारः स तु गोपितः ॥ २ ॥ धर्म्मार्थकाममोक्षाणां साधको मन्त्र उच्यते ॥ तत्सिद्धये पुरा यच्च चर्य्यते तत्प्रकीर्त्तितम् ॥ ३ ॥ पुरश्चरणकर्म्माख्यं वेदादौ शाबरान्तके ॥ मन्त्रो यस्तु तथा स स्यात्तत्प्रकारं ब्रवीम्यहम् ॥ ४ ॥ जपो होमस्तर्प्पणं च मार्ज्जनं विप्रभोजनम् ॥ पञ्चाङ्गकस्वरूपं तदाहुः केचन तत्र तु ॥५॥ चतुरङ्गास्त्वथ त्र्यङ्गा द्व्यङ्गा एकाङ्गिनोपि च ॥ मन्त्रास्तिष्ठन्ति वेदेषु तथा तन्त्रे च शाबरे ॥ ६ ॥ केचित्षडङ्गा मन्त्राः स्युस्तदङ्गान्ज्ञापयामि वै ॥ अघमर्षेण सूर्य्यार्घेण जपेन प्रणामकैः ॥ ७ ॥ देवार्च्चया पञ्चभिश्च एवं पञ्चाङ्गकाः स्मृताः॥ हुतिर्यागस्तथा चार्चा कर्म्मतश्चक्रपूजनात् ॥८॥ ध्वजलिङ्गसमायोगाज्जपाच्च बलिदानतः॥महा बलिप्रदानाच्च भवत्येकादशाङ्गकः ॥९॥ षोडशाङ्गे कौलिकानां गणानामधिकारिता ॥ सर्वपापक्षयं कुर्य्यादथ वा सिद्धिबन्धकृत् ॥ १० ॥ यावत्पापं तस्य नाशं कृत्वा कुर्य्यात्पुरस्कृतिम् ॥ यथा प्रोक्तेन मार्गेण तस्य सिद्धिरदूरतः ॥ ११ ॥ सर्वपापक्षयस्तत्र भवेद्वैदिकवर्त्मनाम् ॥ तान्त्रिकाणां कौलिकानां वामिनां नाधिकारिता ॥ १२ ॥ तस्मिन्कर्म्मणि तेषान्तु नाधिकारोस्ति वैदिके ॥ ऋक्शाखाध्यायिभिः कार्य्यो गणको योथ तद्विधिः॥ १३॥ स्नातः कृतक्रियः पत्नीसहितो दर्भसंस्तरः ॥ प्राणानायम्य सङ्कल्प्य पूजयित्वा गणेश्वरम् ॥ १४ ॥ स्वगृह्योक्तविधानेन संस्थाप्याग्निं च संश्रयेत् ॥ आज्यं विलिप्य तद्धव्यं द्विराघोंनयते ततः ॥ १५ ॥ अग्ने नयेति सूक्तेन षडर्चेन हुनेत् पुनः ॥ प्रतिमन्त्रं वदेत्त्यागेग्नये चेदं न वै मम ॥ ॥ १६ ॥ इत्यथात्र ऋचो वक्ष्ये माभूच्छाखाविपर्य्ययः ॥ १७ ॥ ॐ अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ॥ युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नमउक्तिं विधेम ॥१८॥ प्र वः शुक्राय भानवे

---

१ कल्यावुत्पन्नजनानां भुक्तिमुक्तिप्रयोजनम् । २ स्वगृह्यसूत्रेषु कीर्त्तितविधानेन । ३ अग्ने नय इत्यादि एकमेकं पठित्वा स्वाहा देया । अग्ने अग्नये चेदं न वै मम इदं वचनं स्वाहान्ते पठेत् ।

भरध्वं हव्यं मतिं चाग्नये सुयुतम् ॥ यो दैव्यानि मानुषा जनुष्यन्तर्विश्वानि विद्मना जिगाति ॥ १९ ॥ अच्छा गिरो मतयो देवयन्तीरग्निं यन्ति द्रविणं भिक्षमाणाः ॥ सुसंदृशं सुप्रतीकं स्वं च हव्यवाहमरतिं मानुषाणाम् ॥ २० ॥ अग्ने त्वमस्मद्युयोध्यमीवा अनग्नि त्रा अभ्यमन्वकृष्टीः ॥ पुनरस्मभ्यं सुविताय देवा यक्षा विश्वेभिरमरेभिर्यजत्रा ॥ २१ ॥ अग्ने त्वं पारया नव्यो अस्मान्स्वस्तिभिरति दुर्गाणि विश्वा ॥ पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः ॥ २२ ॥ प्रकारवो मनना वच्यमाना देवद्रीचीं नयथ देवयन्तः ॥ दक्षिणावाड्वाजिनिप्राचोतिहविर्भरन्त्यग्नये घृताची ॥ २३ ॥ पुनरष्टादशर्चेन पौरुषेण ततो हुनेत् ॥ जगद्बीजाय पुरुषाय न ममेति सन्त्यजेत् ॥ ॥ २४ ॥ [१]अवैष्णवो वैष्णवस्तु नारायणाय न मम ॥ देवदेवीप्रियं सूक्तं तदिदानीं निगद्यते ॥ २५ ॥ ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशांगुलम् ॥ २६ ॥ पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम् ॥ उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २७ ॥ एतावानस्य महिमातो ज्यायांश्च पूरुषः ॥ पादोस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ २८ ॥ त्रिपादूर्ध्व उदैत्पुरुषः पादोस्येहाभवत्पुनः ॥ ततो विष्वङ्व्यक्रामत्साशनानशने अभि ॥ २९ ॥ तस्माद्विराडजायत विराजो अधिपूरुषः ॥ स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ३० ॥ यत्पुरुषेण हविषा देवा यज्ञमतन्वत ॥ वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ ३१ ॥ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधः कृताः ॥ देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥ ३२ ॥ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः ॥ तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ ३३ ॥ तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् ॥ पशूंस्तांश्चक्रे वायव्यानारण्यान्ग्राम्यांश्च ये ॥ ३४ ॥ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ॥ छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ॥ ३५ ॥ तस्मादश्वा अजायन्त ये केचोभयादतः ॥ गावो ह जज्ञिरे तस्मा

---

१ अवैष्णवः प्रत्येकमन्त्रान्ते स्वाहादानसमये जगद्बीजाय चेदं न वै मम अस्य वचनस्य वैष्णवस्तु नारायणाय चेदं न वै मम अस्योच्चारणं कुर्वीत ।

त्तस्माज्जाता अजावयः ॥ ३६ ॥ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ॥ मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते ॥ ३७ ॥ ब्राह्मणोस्य मुखमासीद्बाहू राजन्यः कृतः ॥ ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ ३८ ॥ चन्द्रमा मनसो जातश्चक्षोस्सूर्य्यो अजायत ॥ मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥ ३९ ॥ नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्त्तत ॥ पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकानकल्पयन् ॥४०॥ वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसस्तु पारे ॥ सर्वाणि रूपाणि विचित्य धीरा नामानि कृत्वाभिवदन्यदास्ते ॥ ४१ ॥ धाता पुरस्ताद्यदुदाजहार शक्रः प्रविद्वान्प्रदिशश्चतस्रः ॥ तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते ॥ ४२ ॥ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् ॥ ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥४३॥ अग्नेर्मन्वेति सूक्तेन द्वाविंशत्यृचकेन तु ॥ हुनेत्तत्र त्रिषु त्यागस्त्वं[1]-ग्नये न ममेति च ॥ ४४ ॥ तुर्य्ये[2] चेन्द्राय न मम त्यागः पञ्चमषष्ठयोः[3] ॥ मित्रावरुणाभ्यामिति सप्तमाष्टमयोस्तथा[4] ॥ ४५ ॥ वायुसूर्य्याभ्यामिति नवमे दशमे तथा ॥ अश्विभ्यां च मरुद्भ्यस्तु द्वादशैकादशे भवेत् ॥ ४६ ॥ विश्वेभ्यो देवेभ्य इति त्रयोदशचतुर्दशे ॥ अनुमत्यै हव्यवाहाग्नये च तिथि सङ्ख्यके ॥ ४७ ॥ अनुमत्यै षोडशे स्यात्तु ततः सप्तदशे भवेत् ॥ वैश्वानरायाग्नये च तथैवाष्टादशेपि च ॥ ४८ ॥ द्यावापृथिवीभ्यामिति विंशत्येकोनविंशयोः ॥ शेषयोरग्नये चेति ऋचस्ताः शृणु साम्प्रतम् ॥ ४९ ॥ अग्नेर्मन्वेति प्रथमस्य प्रचेतसोयं पाञ्चजन्यं बहवः ॥ सामिन्धते विश्वस्यां विशि प्रविविशि वास्समीमहे स नो मुञ्चत्वँहसः ॥५०॥ यस्येदं प्राणनिमिषद्यदेजति यस्य जातं जनमानं च केवलम् ॥ स्तौम्याग्निं नाथितो जोहवीमि स नो मुञ्चत्वँहसः ॥ ५१ ॥ इन्द्रस्य मन्ये प्रथमस्य प्रचेतसो वृत्रघ्नः स्तोमा

१ अग्नये चेदं न मम एतन्मन्त्रेण स्वाहा देवैतद्रीत्यैव अल्पनामसु वाक्यं विरचय्य संयुज्य जुहुयात्।
२ चतुर्थे ( इन्द्राय चेदं न मम )। ३ पञ्चमषष्ठयोः ( इन्द्रावरुणाभ्यां न मम )। ४ सप्तमाष्टमयोः ( वायुसूर्य्याभ्यां न मम अग्रेनयैव रीत्या ।

उपमामुपागुः ॥ यो दाशुषः सुकृतो हवमुपगन्ता स नो मुञ्चत्वँहंसः ॥ ॥५२॥यः संग्रामं नयति संवशी युधे यः पुष्टानि सँसृजति त्रयाणि॥ स्तौमीन्द्रं नाथितो जोहवीमि स नो मुञ्चत्वँहंसः ॥ ५३ ॥ मन्वेवां मित्रावरुणा तस्यवित्तँ सत्यौजसाहँहणायन्नुदेते ॥ त्याराजानँ सरथे पाथं उग्रतौ नो मुञ्चतमागसः ॥ ५४ ॥ यो वाँरथः सजरश्मिः सत्यधर्म्मा मिथश्चरत्वाँ समुपयाति दूषयन् ॥ स्तौमि मित्रावरुणौ नाथितौ जोहवीमि तौ नो मुञ्चतमागसः ॥ ५५ ॥ वायोस्सवितुर्वितथानि मन्महे यावात्मन्वद्विभृतो यौ च रक्षतः ॥ यौ विश्वस्य परिभूबभूवतुस्तौनो मुञ्चतमागसः ॥ ५६ ॥ उपश्रेष्ठा न आशिषो देवयोर्धर्मे अस्थिरन्॥स्तौमि वायुँ सवितारं नाथितो जोहवीमि तौ नो मुञ्चतमागसः ॥५७॥रथीतमौ रथीनामह्व ऊतये शुभङ्गमिष्टौ सुयमेभिरश्वैः ॥ ययोर्वान्देवौ देवेष्वनिशितमोजस्तौ नो मुञ्चतमागसः ॥ ५८ ॥ यदयातं वहतुँ सूर्य्यायास्त्रिचक्रेण सँसदमिच्छमानौ ॥ स्तौमि विश्वान्देवान्नाथितो जोहवीमि तौ नो मुञ्चतमागसः ॥ ५९ ॥ मरुतां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तु विश्वे ॥ आसून्हवे सुयमानूतये ते नो मुञ्चन्त्वेनसः ॥ ६० ॥ तिग्मायुधव्रीडितँ सहस्वद्दिव्यः सर्व्वः पृतनासु विष्णुः ॥ स्तौमि देवान्मरुतो नाथितो जोहवीमि ते नो मुञ्चंत्वेनसः ॥ ६१ ॥ देवानां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तु विश्वे ॥ आसून्हवे सुरामानूतये ते नो मुञ्चंत्वेनसः ॥ ६२ ॥ यदिदं माभिशोचति पौरुषेयेण दैव्येन स्तौमि ॥ विश्वान्देवान्नाथितो जोहवीमि ते नो मुञ्चंत्वेनसः ॥ ६३ ॥ अनुनोद्यानुमति र्यज्ञं देवेषु मन्यताम् ॥ अग्निश्च हव्यवाहनो भवतां दाशुषे मयः ॥ ६४ ॥ अन्विदनुमते त्वमन्यासैशं च नः कृधि ॥ क्रत्वे दक्षाय नो हिनु प्रण आयूंषि तारिषः॥६५॥वैश्वानरो न ऊतं ये प्रयातु परावतः ॥ अग्निर्नः सुष्टुतेतीरुप ॥ ॥ ६६ ॥ पृष्टो दिवि पृष्टो अग्निः पृथिव्या पृष्टो विश्वा ओषधीराविवेश ॥ वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा सरिषः पातु नक्तम् ॥ ६७ ॥ ये अप्रथेता अमितेभिरोजोभिर्ये प्रतिष्ठे अभवतां वसूनाम् ॥ स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमंहसः ॥ ६८ ॥ उर्वीरोदसी वरिवः

कृणोत्तं क्षेत्रस्य पत्नी अश्विनो ब्रूयात्तं स्तौमि ॥ द्यावापृथिवीं नाथितो जोहवीमि ते नो मुञ्चतमंहसः ॥ ६९ ॥ यत्ते वयं पुरुषत्रा यविष्ठा विद्वांसश्चकृमाकच्चनागः ॥ कृधास्वस्मानदितेरनागाव्येनाँसि शिश्रथो विष्वगग्ने॥ ७० ॥ यथाहताद्वसवो गौर्य्यैंचित्पदिषितामसुञ्चतायजत्राः ॥ एवोष्वस्मन्मुञ्चतामंहः प्रतार्य्यग्ने प्रतरं न आयुः ॥ ७१ ॥ यावामिन्द्रावरुणेति चतुर्भिः सूक्तकैस्ततः ॥ इन्द्रावरुणाभ्यामिति त्यागः सर्वत्र नान्यथा ॥ ७२ ॥ यावामित्रावरुणा यतव्या तनूस्तये ममाँहसो मुञ्चतम् ॥ ७३ ॥ यावामिन्द्रावरुणा सहस्या तनूस्तये ममाँहसो मुञ्चतम् ॥ ७४ ॥ यावामिन्द्रावरुणा रक्षस्या तनूस्तये ममाँहसो मुञ्चतम् ॥ ७५ ॥ यावामिन्द्रावरुणा तेजस्या तनूस्तये ममाँहसोमुञ्चतम् ॥ ७६ ॥ यो वामिन्द्रावरुणेति ततोष्टभिश्च होमयेत् ॥ इन्द्रावरुणाभ्यामिति त्यागः सर्व्वत्र नान्यथा ॥ ७७ ॥ यो वामिन्द्रावरुणावग्नौ स्नामस्तं वामेतेनावयजे ॥ ७८ ॥ यो वामिन्द्रावरुणाद्विपात्सु पशुषु स्नामस्तं वामेतेनावयजे ॥ ७९ ॥ यो वामिन्द्रावरुणौषधीषु स्नामस्तं वामेतेनावयजे ॥ ८० ॥ यो वामिन्द्रावरुणा वनस्पतिषु स्नामस्तं वामेतेनावयजे ॥ पावमानानुवाको यः ख्यातः सप्तदशर्चकः ॥ त्रिषष्टिवाक्यैस्तत्राद्या ऋक्त्रिवाक्यात्र शाक्तकैः ॥ ८१ ॥ पावमानीभ्यो मम त्यागो वाच्यस्त्वशाक्तकैः ॥ ८२ ॥ पावमान्यै अथो शैवैः पावमानाय नान्यथा ॥ ८३ ॥ पवमानः सो अद्य पवित्रेण विचर्षणिः ॥ यः पोता स पुनातु मा ॥ ८४ ॥ द्वितीयापि त्रिवाक्यादेव जनेभ्यो मरुद्भ्यश्च ॥ विश्वेभ्यश्च तथा युञ्ज्यान्न मम त्याग ईरितः ॥ ८५ ॥ पुनन्तु मां देवजनाः पुनन्तु मनसा धियः ॥ पुनन्तु विश्वा भूतानि जातवेदः पुनीहि माम् ॥ ॥ ८६ ॥ तृतीयापि चतुर्वाक्या अग्नये जातवेदसे ॥ इदं न मम इत्युक्त्वा त्यागः सोपि प्रकाश्यते ॥ ८७ ॥ जातवेदः पवित्रवत्पवित्रेण पुनीहि मा ॥ शुक्रेण देवदीव्यदग्ने क्रत्वाक्रतूँरनु ॥ ८८ ॥ चतुर्थी तु त्रिवाक्या अग्नये न ममेति च ॥ त्रिवाक्या पञ्चमी त्यागः सवित्रे च उभे यथा ॥ ८९ ॥

सूक्तकैः सूक्तप्रोक्तमन्त्रैः।

यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा ॥ ब्रह्म तेन पुनीहि नः ॥ ९० ॥ उभाभ्यां देव सवितः पवित्रेण सवेन च ॥ मां पुनीहि विश्वतः ॥ ॥ ९१ ॥ ऋचा षष्ठीचतुर्वाक्या त्यागश्चास्या निरूप्यते ॥ वैश्वदेव्यै इति वदेन्न ममेति च सा यथा ॥ ९२ ॥ वैश्वदेवी पुनन्ती देव्यागाद्यस्यामि मा बह्व्यस्तन्वो वीतपृष्ठाः ॥ तया मदंतः सधमादेषु वयँस्याम पतयो रयीणाम् ॥ ९३ ॥ वैश्वानराय वाताय इषिराय मयोभुवे ॥ द्यावापृथिवीभ्यां चेति सप्तम्यां त्याग इष्यते ॥ ९४ ॥ वैश्वानरो रश्मिभिर्मा पुनातु वातः प्राणेनेषिरो मयोभूः ॥ द्यावापृथिवी पयसा पयोभिः शतावरी यज्ञिये मा पुनीताम् ॥ ९५ ॥ सप्तमी तु चतुर्वाक्या त्रिवाक्या चाष्टमी मता ॥ सवित्रेऽग्नये न मम त्यागोऽष्टम्यां च सायथा ॥ ९६ ॥ बृहद्भिः सवितुस्त्रिभिर्वर्षिष्ठैर्देवमन्मभिः ॥ अग्ने दक्षैः पुनीहि मा ॥ ९७ ॥अतः परं चतुर्वाक्या दिव्याय ब्रह्मणे त्यजेत् ॥ नवम्यां पावमानीभ्यो दशम्यादिषु ता यथा ॥ ॥ ९८ ॥ येन देवा अपुनन्त येनापो दिव्यंकशः ॥ तेन दिव्यं ब्रह्मणा इदं ब्रह्म पुनीहि मा ॥ ९९ ॥ यः पावमानीरध्येत्यृषिभिः सम्भृतꣳरसम् ॥ सर्वं सपूतमश्नाति स्वदितं मातरिश्वना ॥ १०० ॥ पावमानीर्यो अध्येत्यृषिभिः सम्भृतं रसम् ॥ तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम् ॥ १०१ ॥ पावमानीः स्वस्त्ययनीः सुदुघा हि पयस्वतीः ॥ ऋषिभिः सम्भृतो रसो ब्राह्मणेष्वमृतꣳहितम् ॥ १०२ ॥ पावमानीर्दिशन्तु न इमं लोकमथो अमुम् ॥ कामान्समर्द्धयन्तु नो देवैर्देवीः समाहिताः ॥ १०३ ॥ पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः ॥ ऋषिभिः सम्भृतो रसो ब्राह्मणेष्वमृतं हितम् ॥ १०४ ॥ येन देवाः पवित्रेण आत्मानं पुनते सदा ॥ तेन सहस्रधारेण पावमान्यः पुनन्तु माम् ॥ १०५ ॥ प्राग्वत्त्यागस्तु षोडश्यां विशेषः श्रोत्रियस्य तु ॥ प्राजापत्याय पवित्राय चेति षोडशीं शृणु ॥१०६॥ प्राजापत्यं पवित्रं शतोद्यामं हिरण्मयम् ॥ तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे ॥ १०७ ॥ सुनीत्या सहितेन्द्राय स्वस्त्या सहितसोमाय ॥ समीच्या सहिता येति वरुणाय ततो वदेत् ॥ १०८ ॥ प्रमृणाभिः सहिताय यमाय राज्ञ ईर-

येत ॥ ऊर्ज्जयन्त्या सहिताय जातवेदस इत्यपि ॥१०९॥ न ममेति वदेत्स-
प्तदश्यास्त्यागेथ यैर्नरैः ॥ मार्जनं कृतमेताभिस्तैः स्नातं जाह्नवीजले॥११०॥
इन्द्रः सुनीत्या सह मा पुनातु सोमः स्वस्त्या वरुणः समीच्या ॥ यमो राजा
प्रमृणाभिः पुनातु मा जातवेदा मोर्ज्जयन्त्या पुनातु ॥१११॥ यद्देवा देवहेडनं
विंशत्यर्चेन होमयेत् ॥ त्यागः प्रथमके तत्र आदित्येभ्यश्च नान्यथा ॥ यद्देवा
देवहेडनं देवासश्चकृमा वयम् ॥ आदित्यास्तस्मान्मा मुञ्चततँस्यर्तेन मामुतः
॥ ११२ ॥ अग्नये गार्हपत्याय न ममेति द्वितीयके ॥ द्यावापृथिवीभ्यां सर-
स्वत्यै चेति यथा ऋचि ॥ ११३ ॥ देवा जीवनकाम्या यद्वाचानृतमूदिम ॥
अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेहसम्
॥ ११४ ॥ ऋतेन द्यावापृथिवी ऋतेन त्वꣳसरस्वति ॥ कृतान्नः पाह्येनसो
यत्किञ्चानृतमूदिम ॥ ११५ ॥ जातवेदसे न मम चतुर्थे त्वथ पञ्चमे ॥ अग्नये
गार्हपत्याय त्यागस्तद्वत्कृतो यथा ॥ ११६ ॥ सजातशꣳसादुतजामिशꣳसा
ज्याय सःशꣳसादुत वा कनीयसः॥अनाज्ञातं देवकृतं यदेनस्तस्मात्त्वमस्माञ्जात
वेदोमुमुग्धि॥११७॥ यद्वाचा यन्मनसा यद्बाहुभ्यामूरुभ्यामष्ठीवद्भ्याꣳशिश्नैर्य
दनृतञ्चकृम वयम् ॥ अग्निर्मा तस्मादेनसोगार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम
करोतु मामनेनसम् ॥ ११८ ॥ राष्ट्रभृतेभरसेभ्यः षष्ठे त्यागोष्टसप्तमे ॥ अग्नये
गार्हपत्याय नवमे चाग्नये वदेत् ॥ ११९ ॥ यद्धस्ताभ्यां चकर किल्बिषाण्य
क्षाणां वग्नुमुपजिघ्नमानः ॥ दूरेपश्या च राष्ट्रभृच्च तान्यभरसावनुदत्तामृणानि॥
॥१२०॥ अदीव्यन्नृणं यदहं चकार यद्वा दास्यन्सञ्जगाराजनेभ्यः॥अग्निर्मा-
तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरितायानिचकृम करोतु माननेहसम् ॥१२१॥
यन्मयि माता गर्भे सत्येनश्चकार यत्पिता ॥ अग्निर्मा तस्मादेनसो गार्हपत्यः
प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेनसम् ॥१२२॥ यदापिपेष मातरं
पितरं पुत्रः प्रमुदितो धयन् ॥ अहिंसितौ पितरौ मया तत्तदग्ने अनृणो भवामि
॥ १२३ ॥ अग्नये गार्हपत्याय दशमैकादशे वदेत् ॥ द्वादशे त्वग्नयेथाग्नेग्नये

---

१ तृतीयर्चि द्यावापृथिवीभ्यां सरस्वत्यै न मम वाक्यमुच्चरेत् ॥

गार्हपत्याय च ॥ १२४ ॥ यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वाजिहिं-सिम् ॥ अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु माम नेनसम् ॥ १२५ ॥ यदाशसा निशसः यत्पराशसा यदेनश्चकृमा नूतनं यत्पु राणम् ॥ अग्निर्मातस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु माम नेनसम् ॥ १२६ ॥ अतिक्रामामि दुरितं यदेनो जहामि रिप्रं परमे सधस्थे ॥ यत्र यन्ति सुकृतो नापि दुष्कृतस्तमारोहामि सुकृतान्नु लोकन्निते ॥ १२७ ॥ देवा अमृजतैतदेनस्त्रित एतन्मनुष्येषु मामृजे ॥ ततो मा यदि किञ्चिदानशे-ग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु माम-नेनसम् ॥ १२८ ॥ चतुर्दशे तिथौ[1] त्वद्वयो वरुणाय ततो द्वयोः ॥ अष्टा-दशे चोनविंशे त्वग्नीवरुणाभ्यामिति ॥ १२९ ॥ दिवि जाता अप्सु जाता या जाता ओषधीभ्यः ॥ अथो या अग्निजा आपस्ता नः शुधन्तु शुन्धनीः ॥ ॥ १३० ॥ यदापोनक्तंदुरितं चराम यद्वा दिवा नूतनं यत्पुराणम् ॥ हिरण्य-वर्णास्तत उत्पुनीत नः ॥ १३१ ॥ इमम्मे वरुण श्रुधीहवमद्याचमृळय ॥ त्वाम-वस्युराचके ॥ १३२ ॥ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणेहबोध्युरुशँसमा न आयुः प्रमोषीः ॥ १३३ ॥ त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाँसि प्रमुमुग्ध्यस्मत् ॥ १३४ ॥ स त्वन्नो अग्नेवमो भवोतीनेंदिष्ठो अस्या उषसो व्युष्टौ ॥ अवयक्ष्व नो वरुणँ रराणो वीहि-मृडीकँसुहवो न एधि ॥ १३५ ॥ अग्नये चाथ विंशे तु सूक्तं वैश्वानरं ततः ॥ अग्नये वैश्वानरायाष्टर्चान्त्यागोयमीरितः ॥ १३६ ॥ त्वमग्ने अया स्ययासन्मनसा हितः ॥ अयासन्हव्यमूहिषे या नो धेहि भेषजम् ॥ १३७ ॥ वैश्वानरो न ऊतयेवयातुपरावतः ॥ अग्निर्नः सुष्टुतीरुप ॥ १३८ ॥ ऋता-वानं वैश्वानरमृतस्य ज्योतिषस्पतिम् ॥ अजस्रं धर्ममीमहे ॥ १३९ ॥ वैश्वानरस्यदँसनाभ्यो बृहदरिणादेकः स्वपश्यया कविः ॥ उभा पितरा

---

१ तिथौ पञ्चदशे अर्थात् चतुर्दशे पञ्चदशे ( अद्वयश्चेदं न वै मम ) इदं वाक्यमस्ति ।

महयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा ॥ १४० ॥ पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश ॥ वैश्वानरः सहसा पृष्टो अग्निः समो नो दिवासरिपः पातु नक्तम् ॥ १४१ ॥ जातो यदग्ने भुवना व्यख्यः पशुं न गोपाइर्यः परिज्या ॥ वैश्वानर ब्रह्मणे विन्दगातुं यूयं यात स्वस्तिभिः सदा नः ॥ १४२ ॥ त्वमग्ने शोचिषा शोशुचान आरोदसी अपृणा जायमानः ॥ त्वं देवानभिशस्तेरमुचो वैश्वानर जातवेदो महित्वा ॥ १४३ ॥ अस्माकमग्ने मघवत्सुधारयानामिक्षत्रमजर७ंसुवीर्यम् ॥ वयञ्जयेम शतिन७ं सहस्रिणं वैश्वानरवाजमग्ने तवोतिभिः ॥ १४४ ॥ वैश्वानरस्य सुमनौस्यामनौस्यामराजाहिकंभुवनानामभिः श्रीः ॥ इतो जातो विश्वमिदं विचष्टे वैश्वानरो यतते सूर्याय ॥ १४५ ॥ ततः स्विष्टकृतं कृत्वा परिधीन्पर्य्यगृह्य च ॥ पूर्णं कलशमादाय नैर्ऋत्यान्तु चतुष्पथे ॥ १४६ ॥ पादप्रक्षालनं कृत्वाथाचम्य प्राङ्मुखस्तथा ॥ पत्नीभिः सह वीक्षेतच्छायां तस्मिञ्च्छुभाशुभाम् ॥ ॥ १४७ ॥ सिंहे मे मन्युरस्यां प्रेमेनुवाकं जपेत्ततः ॥ सुमित्रिया न आप ओषधयः सन्त्विति क्षिपेत् ॥ १४८ ॥ भूम्यां किञ्चिज्जलं पश्चादुत्तिष्ठेत्कलशान्वितः ॥ दुर्मित्रियास्तस्मै[१] सन्तु पृष्ठतः कलशं क्षिपेत् ॥ १४९ ॥ यस्यामस्य दिशि द्वेष्यो भवेत्तत्रैव निःक्षिपेत् ॥ पश्चादप उपस्पृश्य स्वगृहं प्रविशेत्ततः ॥ १५० ॥ त्रिसन्ध्यमेवं सप्ताहं कुर्य्याद्रूपं निरीक्षयेत् ॥ यदा पश्येत्तोयमध्ये छायामच्छान्तदा भवेत् ॥ १५१ ॥ यजमानः सुपूतोयमन्यथा पुनराचरेत् ॥ तत आशीर्वचोगृह्याद्ब्राह्मणान्भोजयेत्ततः ॥ १५२ ॥ यावत्कर्म्म प्रकुर्वीत तावन्मौनं समाचरेत् ॥ सकृदेव समश्नीयाद्धविष्यं ब्रह्मचर्य्यभाक् ॥ १५३ ॥ जितेन्द्रियो भूमिशायी पूर्वजन्मार्जितादघात् ॥ मन्त्रसिद्धेर्विघ्नकर्तुर्मुक्तो भवति नान्यथा ॥ १५४ ॥ अज्ञानाच्च प्रमादाद्वा जन्मन्यस्मिंश्च यत्कृतम् ॥ पातकं तस्य नाशार्थं कूष्माण्डीभिस्तु होमयेत ॥ १५५ ॥ वैदिके यस्य निस्नाताः पितरोज्ञानदोषतः ॥ पतित्वा कौलिके मार्गे दारिद्र्यादिभिरर्दितः ॥ १५६ ॥ मनसा उपतप्तश्चेन्नित्यं सर्वसुखाप्तये ॥

---

१ दुर्मित्रियास्तस्मै सन्तु योस्मान्द्वेष्टि यञ्च वयं द्विष्मः ।

लोकद्वयप्रतिष्ठार्थं सोपि गुप्तं समाचरेत् ॥ १५७ ॥ स्वर्णचौर्य्ये सुरापाने गोवधे ब्रह्मघातने ॥ गुरुतल्पगमे वर्षं व्रतमेतत्समाचरेत् ॥ १५८ ॥ चौर्य्ये च भ्रूणहत्यायामयोनौ वीर्य्यसेचने ॥ विश्वासघातने न्यासहरणे त्वयुतं चरेत् ॥१५९॥ इष्टाप्तौ ग्रहे घोरे ग्रहणे चन्द्रसूर्य्ययोः ॥ जले शिवालये दानं गृहीत्वायुतमेककम् ॥१६०॥ कूटसाक्ष्ये वार्द्धुषिके वृत्तिहारे करग्रहे ॥ देवविप्राधिकारे चापदन्ते लक्षमाचरेत् ॥ १६१ ॥ संस्कारभोजने वेश्यागमने पशुघातने ॥ देवाद्यर्थाशने लक्षं त्रिसन्ध्यालोपने त्वहः ॥ १६२ ॥ केशश्मश्रून्वापयित्वा स्नात्वा पुण्ये जलाशये ॥ आज्यभागानन्तरं च कूष्माण्डीभिस्तु होमयेत् ॥ १६३ ॥ सावित्रीं च जपेन्नित्यं पवित्राणि च शक्तितः ॥ ब्राह्मणो दुग्धपायी स्यात्क्षत्रियस्तु यवागुलेट् ॥ १६४ ॥ आमिक्षां भक्षयेद्वैश्यो यदा शक्तो भवेत्तदा ॥ ओदनं सक्तवो धाना घृतं वापि समाश्रयेत् ॥ ॥ १६५ ॥ एतद्भिन्नं न भोक्तव्यं ब्रह्मचर्य्यादिपूर्ववत् ॥ होमस्तु गोघृतेनैव तदभावे तु माहिषम् ॥ १६६ ॥ प्रथमा मन्त्रिका तत्र यद्देवा देवहेडनम् ॥ देवेभ्य आदित्येभ्यश्च त्यागस्तत्र समीरितः ॥ १६७ ॥ विश्वेभ्यो देवेभ्य इति द्वितीयायाश्च सोच्यते ॥ प्राग्वत्त्यागस्तृतीयाया ऋग्भिन्ना सा च कथ्यते ॥ १६८ ॥ यद्देवा देवहेडनं देवासश्चकृमा वयम् ॥ आदित्यास्तस्मान्मा मुञ्चतर्तस्यर्त्तेन मामुतः ॥ १६९ ॥ देवा जीवनकाम्या यद्वाचानृतमूदिम ॥ तस्मान्न इह मुञ्चत विश्वेदेवाः सजोषसः ॥ १७० ॥ ऋतेन द्यावापृथिवी ऋतेन त्वꣳसरस्वति ॥ कृतान्नः पाह्येनसो यत्किञ्चानृतमूदिम ॥ १७१ ॥

---

१ गर्भमारणायाम् । २ निःक्षेपे । ३ मिथ्यासाक्ष्ये । ४ कुसीदे । ५ देवार्थसंचितद्रव्यभक्षणे । ६ सव्याहृतिर्वा तत्सवितुरिति गायत्रीं । पुनन्तु मां देवजनाः पुनन्तु मनसाधियः ॥ पुनन्तु विश्वा भूतानि जातवेदः पुनीहि माम् ॥ इत्यादिपवित्रमन्त्राः । ७ यवागूः षड्गुणे तोये संसिद्धाघनसिक्थका । पृथग्द्रवैस्तु विरलैः संयुक्ता ज्वरिणे हिता ॥८ तप्तक्षीरे दधिप्रक्षेपेण आमिक्षा भवति ॥ ९ प्रथमं यद्देवा इति मन्त्रेण जुहुयात् । ततः परम् । देवेभ्य आदितेभ्य इति पठेत् पुनरन्यैव रीत्या अग्रे पठितमन्त्रेषु देवानां नाम्ना वचनं योजनीयम् ॥ १० द्वितीयमन्त्रे विश्वेभ्यो देवेभ्यः इति ॥ ११ तृतीये द्यावापृथिवीभ्यां सरस्वत्यै च इदं न वै ममेति वाक्यस्य सर्वत्र योजना ॥

इन्द्राग्निमित्रावरुणसोमधातृबृहस्पतिभ्यस्त्यागस्तु ॥ चतुर्थी या अधुना सा ऋगुच्यते ॥ ॥ १७२ ॥ इन्द्राग्नी मित्रावरुणौ सोमो धाता बृहस्पतिः ॥ तेनो मुञ्चन्त्वेनसो यत्किञ्चानृतमूदिम ॥ १७३ ॥ सजातसॐसादिति पूर्वोक्ता पञ्चमी मता ॥ यद्वाचा यन्मनसा षष्ठी पूर्वमुदीरिता ॥ १७४ ॥ ज्योतिषे न मम त्यागः सप्तम्यां सा च कथ्यते ॥ अग्नये न मम त्यागस्तथाष्टम्याथ सोच्यते ॥ १७५ ॥ येन त्रितो अर्णवाभिर्बभूव येन सूर्यं तमसन्निर्मुमोच ॥ येनेन्द्रो विश्वा अजहादरातींस्तेनाहं ज्योतिषां ज्योतिरानशा न आक्षि ॥ १७६ ॥ यत्कुसीदमप्रतीतं मयेह येन यमस्य निधिना चरामि ॥ एतत्तदग्ने अनृणो भवामि जीवन्नेव प्रति तत्ते दधामि ॥ १७७ ॥ यन्मयि मातेति पूर्वोक्ता प्राग्वत्सा नवमाहुतिः ॥ यदापियेष मातरं प्राक्प्रोक्ता दशमाहुतिः ॥ १७८ ॥ यदन्तरिक्षं पृथिवी प्राक्प्रोक्तैकादशाहुतिः ॥ यदाशसानिशसाप्राक्प्रोक्तात्र द्वादशाहुतिः ॥ १७९ ॥ तदग्ने तु ऋचस्तिस्र एवं पञ्चदशाहुतीः ॥ यदापो नक्तमिति पूर्वोक्ताषोडशी भवेत् ॥ १८० ॥ अद्भ्यो हिरण्यवर्णाभ्यस्तस्यां त्यागो भिधीयते ॥ इमम्मे वरुणेत्यादि पञ्चर्चः पूर्वमीरिताः ॥ १८१ ॥ सत्यागास्तेनैकविंशदाहुतयःसमीरिताः॥इन्द्राग्निभ्यां च द्वाविंशे त्यागः सा ऋगथोच्यते ॥ १८२ ॥ उग्रंपश्ये राष्ट्रभृत्किल्बिषाणि यदक्षवृत्तमनुदत्तमेतत् ॥ तेन ऋणानृणव इत्समानो यमस्य लोके अधिरज्जुराय ॥ १८३ ॥ अदीव्यं नृणं यदहमित्याद्याः षट् च पूर्ववत् ॥ ततो द्वयोरिह त्यागो वरुणाय न वै मम ॥ १८४ ॥ अवते हेलो वरुण नमो भिस्वयज्ञेभिरीमहे हविर्भिः ॥ क्षयं नस्मभ्यमसुरप्रचेतो राजन्नेताँ सिशिश्रथःकृतानि ॥ १८५ ॥ उदुत्तमं वरुणपाशमस्मद बाधमं विमध्यमं श्रथाय ॥ अथावयमादित्यव्रते तवानागसो अदितये स्याम ॥ ॥ १८६ ॥ एकत्रिंशे शंकुशुकौ विकुशुकौ च निर्ऋथेः निःस्वनेभ्यस्त्याग

१ सजातसँसादत जामिशँसा ज्यायसः शँसादत वा कनीयसः ॥ आनाअनाज्ञातं देवकृतं यदेनस्तस्मात्वमस्माज्जातवेदो मुग्धि जातवेदसे चेदं न वै मम ।

उक्तः सा ऋचा प्रोच्यते धुना॥ शंकुशुको विकुशुको निर्ऋथो यश्च निःस्वनः ते येस्मयक्ष्मनागसो दूराद्दूरमचीचतम् ॥ १८७ ॥ ततो द्वयोरग्नये च त्वष्ट्रे त्यागस्तदग्निमे ॥ आयुष्मतेऽग्नये त्यागः पञ्चत्रिंशत्तमे मतः॥ १८८॥ निर्यक्ष्म मचीच ते कृत्या निर्ऋतिश्च ॥ तेन योस्मतसमृच्छाते तस्मै प्रसुवामसि ॥ १८९ ॥ दुःशꣳ सानुशꣳ साभ्यां घणेनानुघणेन च ॥ तेनात्योरस्मत्समृच्छाते तस्मै सुप्रसवामसि ॥ १९० ॥ संवर्चसा यशसा सन्तनूभिरगन्महि मनसा शꣳशिवेन ॥ त्वष्टा नो अत्र विदधातु रायो नु मार्ष्टतन्वो यद्विलिष्टम् ॥ १९१ ॥ आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः ॥ पुनस्ते प्राण आयाति परा यक्ष्मꣳ सुवामि ते ॥ १९२ ॥ आयुर्दायाग्नये त्यागः षट्त्रिंशेथ तदग्निमे ॥ १९३ ॥ अग्नये वरुणायादित्यै विश्वेभ्यो देवेभ्यश्च ॥ १९४ ॥ आयुर्दा अग्नये हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि ॥ घृतं पीत्वा मधु चारुगव्यं पितेव पुत्रमभिरक्षतादिमम् ॥ १९५ ॥ इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण सꣳ शि शाधि ॥ माते मातेवास्मा आदिते शर्म्म यच्छ विश्वे देवा जरदष्टिर्यथासत ॥ १९६ ॥ अग्नये पवमानाय त्यागोष्टत्रिंशतत्त्विषु ॥ ततो द्वयोर्जातवेदसेग्नये त्याग उच्यते ॥ १९७ ॥ अग्न आयूꣳषि पवस आसुवोर्ज्जमिषं च नः ॥ आरे बाधस्वदुच्छनाम् ॥ १९८ ॥ अग्ने पवस्व स्वपा अस्मै वर्चः सुवीर्य्यं ॥ दधत्योषꣳ रयिं मयि ॥ १९९ ॥ अग्न ऋषिः पवमानः पाञ्चजन्यः पुरोहितः ॥ तमीमहे महागयम् ॥ २०० ॥ अग्ने जातान् प्रणुदानः सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व ॥ अस्मेदीदिह सुमना अहेडं शर्मंतेस्यामत्रिवरूथ उद्भौ ॥ २०१ ॥ सुवीर्य्यंसहसा जातान्प्रणुदानः सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व ॥ अधिनो ब्रूहि सुमनस्यामानो वयꣳ स्याम प्रणुदानः सपत्नान् ॥ २०२ ॥ अग्नये वृत्रघ्नायेति त्रिचत्वारिंशके पुनः ॥ अग्नये इति तस्मात्तु उषसे निमुचे भवेत् ॥ २०३ ॥ अग्नेयो नोभितो जनो वृको वारा जिघाꣳसति ॥ तां त्वं वृत्रहञ्जहि वस्वस्मभ्यमाभर ॥ २०४ ॥ अग्ने यो नो भिदा समानो यश्च निष्टयः॥तं वयं समिधं कृत्वा तुभ्यमग्ने प्दिध्मसि ॥

॥२०५॥ यो नः शपादशपतो यश्च न शपतः शपात्॥ उषाश्च तस्मै निम्रुक् च सर्वंपापꣳसमूहताम् ॥ २०६ ॥ षद् चत्वारिंशके त्यागो देवेभ्यश्च तदग्निमे ॥ जातवेदसेऽग्नये च ततस्त्यागोऽग्नये भवेत् ॥२०७॥ यो नः सपत्नो यो रणोमर्तोभिदासति देवाः ॥ इध्मस्येव प्रक्षायतो मातस्योच्छेषि किञ्चन ॥ ॥ २०८ ॥ यो मां द्वेष्टि जातवेदो यं चाहं द्वेष्मि यश्च माम् ॥ सर्वाꣳस्तानग्ने सन्दह याꣳश्चाहं द्वेष्मि ये च माम् ॥ २०९ ॥ यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः॥ निन्दाद्यो अस्मान्दिप्साच्च सर्वाꣳस्तान्मष्मषाकुरु ॥ २१० ॥ श्रोत्रियाय ब्राह्मणे चाग्नये पञ्चाशके मतः ॥ तदग्निमेपि च तथान्तिमे वैश्वानराय च ॥ २११ ॥ सꣳशितं मे ब्रह्म सꣳशितं वीर्य्यंबलम् ॥ सꣳशितं क्षत्रं मे जिष्णु यस्याहमस्मि पुरोहितः ॥ २१२ ॥ उदेषां बाहू अतिरमुद्वर्चो अथो बलम् ॥ क्षिणोमि ब्रह्मणामित्रानुन्नयामि स्वां अहम् ॥ २१३ ॥ पुनर्मनः पुनरायुर्म अगात्पुनश्चक्षुः पुनःश्रोत्रं म अगात्पुनः ॥ प्राणः पुनराकूतं म आगात्पुनश्चित्तं पुनराधीतं म अगात् ॥ २१४ ॥ वैश्वानरो मे दब्धस्तनूपा अवबाधतां दुरितानि विश्वा ॥ २१५ ॥ एवं हुत्वा ततस्तिष्ठेत्समित्पाणिरुदङ्मुखः॥ अग्नेर्दक्षिणतो वह्निं स्तुवीत द्वादशर्चभिः ॥ २१६॥ वैश्वानराय प्रतिवेदयामो यदीनृणꣳसङ्गरो देवतासु ॥ स एतान्पाशान्प्रमुञ्चन्वेद स नो मुञ्चतु दुरितादवद्यात् ॥ २१७ ॥ वैश्वानरः पवयान्नः पवित्रैर्यत्सङ्गरमभिधावाम्याशाम् ॥ अनाजानन्मनसा याचमानो यदत्रैनो अव तत्सुवामि ॥२१८॥ अमी ये सुभगे दिवि वृत्तौ नाम तारकी प्रेहामृतस्य यच्छतामेतद्बद्धकमोचनम् ॥ ॥ २१९ ॥ विजिहीर्ष्व लोकान्कृधि बन्धान्मुञ्चासिबद्धकम् ॥ योनेरिव प्रच्युतो गर्भः सर्वान्पथो अनुष्व ॥ २२० ॥ स प्रजानन्प्रतिगृणीत विद्वान्प्रजापतिः प्रथमजा ऋतस्य ॥ अस्माभिर्दत्तं जरसः परस्तादच्छिन्नं तन्तुमनुसञ्चरेत् ॥ २२१ ॥ न तं तन्तुमन्वेके अनुसञ्चरन्ति येषां दत्तं पित्र्यमायनवत् ॥ अबन्ध्वेके ददतः प्रयच्छद्दातुं चेच्छक्नुवाꣳसस्वर्ग एषाम् ॥ २२२ ॥ आरभेथामनुसꣳरभेथाꣳसमानं पन्थामवथो घृतेन ॥ यद्वां पूर्तं परिविष्टं

यदग्नौ तस्मै गोत्रा येह जायापरीक्षꣳरभेथाः ॥ २२३ ॥ यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वाव जिहिꣳसिम ॥ अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेहसम् ॥ २२४ ॥ भूमिर्मातादितिर्नो जनित्रं भ्रातान्तरिक्षमभिशस्तरा नः ॥ द्यौर्नः पिता पितृयाच्छम्भवासि जामिति त्वा मा विवित्सि लोकात् ॥ २२५ ॥ यत्र सुहार्दः सुकृतो मदन्ते विहाय रोगं तन्वा स्वया ॥ अश्लोणाङ्गैरह्रुताः स्वर्गे तत्र पश्येम पितरं च पुत्रम् ॥ २२६ ॥ यदन्नमद्म्यनृते देवा दास्यन्नदास्यन्नुत वा करिष्यन् ॥ यद्देवानां चक्षुष्यागो अस्ति यदेव किञ्च प्रतिजग्राहमग्निर्मा तस्मादनृणं कृणोतु ॥ २२७ ॥ यदन्नमपि बहुधा विरूपवासो हिरण्यमुत गामजामवियद्देवानां चक्षुष्यागो अस्ति यदेव किञ्च प्रतिजग्राहमग्निर्मा तस्मादनृणं कृणोतु ॥ २२८ ॥ एवमग्निमुपस्थाय करस्थां समिधं हुनेत् ॥ वक्ष्यमाणेन मन्त्रेण त्यागो वैश्वानराय च ॥ २२९ ॥ यन्मयः मनसा वाचा कृतमेनः कदाचन ॥ सर्वस्मात्तस्मान्मेलितो मोग्धि त्वꣳहि वेत्थ यथातथꣳस्वाहा ॥ २३० ॥ जपादिहोमं च ततः कुर्य्यादेतन्निरूपितम् ॥ इह जन्मकृताघानां प्रायश्चित्तं निवारणम् ॥ २३१ ॥ इदमुक्तं द्विजातीनां शूद्राणामथ चोच्यते ॥ मार्गशीर्षे सिताष्टम्यां कृतनित्यक्रियः शुचिः ॥ २३२ ॥ एकभक्तं हविष्येण नवम्यामेवमाचरेत् ॥ अयाचितं दशम्यां च एकादश्यामुपोषणम् ॥ २३३ ॥ द्वादश्यां वपनं कृत्वा पूजयेद्विप्रदेवताः ॥ नमो नारायणायेति स्वेष्टबीजादिकं मनुम् ॥ २३४ ॥ अष्टाक्षरं गुरुमुखाद्गृहीत्वा जपमाचरेत् ॥ अष्टलक्षं द्विजोच्छिष्टभोजी तत्सेवने रतः ॥ २३५ ॥ आमध्याह्नं जपं कुर्य्याद्भूशायी ब्रह्मचर्य्यकृत ॥ निष्पापो जायते पूर्णे जपे नो चेत्पुनश्चरेत् ॥ २३६ ॥ निष्पापचिह्नं वक्ष्येत्र तथा पूर्वोक्तहोमयोः ॥ होमाद्यारम्भदिवसे मृन्मयं निर्व्रणं दृढम् ॥ २३७ ॥ आनयेच्छुद्धकलशं स्थापयेन्निर्मले स्थले ॥ तास्मिंस्तीर्थादिजं तोयं निःक्षिपेत्कलशोन्मितम् ॥ २३८ ॥ शृङ्गलद्वीपगोमूत्रं काचपात्रे निधापयेत् ॥ पलमात्रं द्वयोश्चैव कुर्य्याद्धरिहरार्चनम् ॥ २३९ ॥ परीक्षादिवसे पूजां कृत्वा तत्प्रार्थयेज्जलम् ॥ आपो

नारायणः साक्षादप्सु सर्वं प्रतिष्ठितम् ॥ २४० ॥ तेन सत्येन मत्पापं ज्ञानं सत्यं ममास्तु ते ॥ इति तोयं संप्रार्थ्य दद्यात्पुष्पाञ्जलिं ततः॥ २४१ ॥ पश्येत्स्वस्य शरीरस्यच्छायां तोये तथा रसे ॥ यथा रसे तथा तोये दृष्टा चेत्पातकं गतम् ॥ २४२ ॥ म्लाना तोये यदाच्छाया तदा पापं गतं न हि ॥ प्रायश्चित्तं ततः कुर्य्याद्यदिच्छायातिनिर्मला ॥ २४३ ॥ नष्टपापो भवेदेवं पुरश्चरणसिद्धिभाक् ॥ यः कश्चिद्वैदिको मन्त्रो जपश्चेदर्बुदाक्षरम् ॥ ॥ २४४ ॥ एकजन्मकृतं पापं नाशयेन्नाममन्त्रकः ॥ विष्णोर्मम गणेशस्य रवेस्तव तदर्धकम् ॥२४५॥ हन्ति पापं तान्त्रिकस्तु तदर्धं प्राकृतो दलम् ॥ अपदंशस्तदर्धं चेत्येतत्सर्वत्र गोपितम् ॥ २४६ ॥ जपस्थानानि वक्ष्यामि कृत्रिमाकृत्रिमाणि च ॥ गुप्तानि सर्वतन्त्रेषु देवतानां पृथक्पृथक् ॥ ॥२४७॥महागणपतिक्षेत्रं मापुरं नर्मदा तटे ॥ महाश्मशानं मापूरं गणेशमनुसिद्धिदम् ॥ २४८ ॥ प्रभासं च कुरुक्षेत्रं पुष्करं भृगुपर्वतम् ॥ यमुनायास्तटं काश्यां दिनेशमनुसिद्धिदम् ॥ २४९ ॥ अयोध्या मथुरा माया काशी बदरिकाश्रमः ॥ गया च गण्डकीतीरं द्वारका विष्णुसिद्धिदा ॥ ॥ २५० ॥ केदारस्त्र्यम्बकं काशी काञ्च्यवन्त्यौ वनानि च ॥ गङ्गातीरं वैद्यनाथं रामेशः शिवसिद्धिकृत् ॥ २५१ ॥ ज्वालामुखी प्रयागश्च कामिनी मालिकापदम् ॥ सरस्वत्यास्तथातीरं शाक्तमन्त्रस्य सिद्धिकृत् ॥ ॥ २५२ ॥ तीरञ्च कमलेश्वर्य्यामेकलो यक्षपर्वतः ॥ अङ्गवङ्गकालिङ्गाश्च क्षुद्रदैवतसिद्धिदाः ॥ २५३ ॥ कामरूपञ्च तत्स्थानं हिंगुला विन्ध्यवासिनी ॥ जालन्धरं पूर्णगिरिर्वाममार्गस्य सिद्धिदाः ॥ २५४ ॥ तीरं पद्माकराणां च कदलीक्ष्वर्कवाटिकाः ॥ विद्रुमाकुलितो देशो गणेशस्यातिवल्लभः ॥ २५५ ॥ पद्माकरं तदारण्यं करवीरार्कवाटिकाः॥गोधूमदूर्वाक्षेत्राणि शिला भानुमतः प्रिया ॥२५६॥ तुलस्यश्वत्थधात्रीक्षुशालग्रामादिसन्निधौ॥ गोष्ठे श्रोत्रिययुग्ग्रामे हरेर्मुद्वैदिकान्तिके ॥ २५७ ॥ पश्चिमाभिमुखे लिङ्गे नन्दिवर्ज्जे शिवालये ॥ शिवतीरे वटस्यारात्सङ्गमे विपिने ह्रदे ॥ २५८ ॥ कदलीचूतसुमने सेवन्तीचर्च्चरीवने ॥ ग्रन्थाख्यातनदीतीरे शक्तेः प्रीतिश्च

निर्जने ॥ २५९ ॥ पल्वेलाग्रे निम्बकोलशाखोटमधुकाकुले ॥ वल्मीके शुष्कनद्यां च मोदन्ते क्षुद्रदेवताः ॥२६०॥ पितृगृहे श्मशाने च त्रिपथे च चतुष्पथे ॥ शून्यालये शवाकीर्णे स्थाने तुष्यन्ति वामकाः ॥ २६१ ॥ गृहे गोष्ठे तथोद्याने तथा पर्वतमस्तके ॥ नद्यां तत्सङ्गमे देवालये स्याद्वै-दिकोधिकः ॥ २६२ ॥ यस्मिन्देशे न गोहत्या नापि ब्रह्मवधो भवेत् ॥ न श्रावयन्ति शूद्राश्च सिद्धिस्तत्र तु वैदिकी ॥ २६३ ॥ म्लेच्छाः पाख-ण्डिनो धूर्त्ता राजानः सचिवादयः ॥ युवत्यश्च न वर्तन्ते तत्र सिद्धिरदूरतः ॥२६४॥जीर्णदेवालयोद्यानगृहवृक्षनदीषु च॥नदीकूलाद्रिकूलेषु भूछिद्रादिषु नो वसेत् ॥२६५॥ एवमाचार्य्यमतिमान्कुर्य्याद्भूमिपरिग्रहम्॥पृथ्वीं वराहं सम्पूज्य भूसुतस्य बलेन च ॥ २६६ ॥ ब्रूयादमुकमन्त्रस्य पुरश्चरणसिद्धये ॥ मयेयं गृह्यते भूमिर्मन्त्रोयं सिद्ध्यतामिति ॥ २६७ ॥ न्यग्रोधदुग्धसस्यस्थ-वृक्षान्यतरवृक्षजान् ॥ वितस्तिप्रमितान्वृत्तान्गृह्णीयात्कीलकान्दश ॥२६८॥ अष्टौ निखातयेदष्टदिशास्वीशानपूर्वयोः ॥ मध्ये निखन्योनवम ऊर्ध्वबुद्ध्या तथाप्यधः ॥ पश्चान्नैर्ऋत्ययोर्मध्ये यन्त्रमन्त्रेण कीलयेत् ॥ २६९ ॥ पूजा तथास्त्रमन्त्रेण तेष्वस्त्रं च प्रपूजयेत् ॥ क्षेत्रे च कीलिते मन्त्री न विघ्नैः परि-भूयते ॥ २७० ॥ दिक्पालेभ्यो माषभक्तबलिं दिक्षु प्रकल्पयेत् ॥ क्षेत्रमध्ये क्षेत्रपालं पूजयेच्च गणेश्वरम् ॥ २७१ ॥ तृतीयं वास्तुपुरुषन्तेभ्यो दद्याद्बलि त्रयम् ॥ क्षेत्रमध्ये समाश्रित्य कूर्म्मचक्रं विचारयेत् ॥ २७२ ॥ कूर्म्मच-क्रानभिज्ञस्य महाविघ्नोभिजायते ॥ परदेशग्रामगृहभेदात्कूर्म्मश्चतुर्विधः ॥ ॥ २७३ ॥ वृत्तद्वयं प्रकुर्वीत नवकोष्ठकभेदितम् ॥ कवर्गाद्याः सप्त लेख्याः पूर्वाशादिषु लक्षकौ ॥२७४॥ ऐशान्यां विलिखेन्मध्यवृत्ते कोष्ठे द्वयंद्वयम् ॥ स्वराश्च पूर्वतो लेख्याः श्रीबीजं मध्यकोष्ठके ॥ २७५ ॥ प्राङ्मुखः परकूर्म्मस्तु सर्वदैव प्रजायते ॥ देशानामग्रिमो वर्णो यस्यां दिशि व्यवस्थितः ॥ २७६ ॥ देशकूर्म्ममुखं तस्यां दिशि स्याद्ग्रामकूर्म्मके ॥ मुखद्वयं तु विज्ञेयं स्वराद्व्यञ्जनतस्तथा ॥ २७७ ॥ गृहकूर्मस्य वदनं यद्दिग्द्वारं गृहं

१ पल्वकोल्वसर इत्यमरः ॥

भवेत् ॥ मुखस्य पार्श्वयोः पाणी कुक्षी पादौ ततस्ततः ॥ २७८ ॥ पुच्छमेकमथो मध्ये पृष्ठमेकं षडङ्गवान् ॥ महारित्वे जीवनाशो वैरे स्याद्धननाशनम् ॥ २७९ ॥ किञ्चिद्वैरे सुखाल्पत्वं तदिदानीं निगद्यते ॥ अगौ ऋच्छौ लपौ जाहौ पषौ एनौ इरौ उलौ ॥ २८० ॥ फधौ भरौ यसौ चेति महारी परिकीर्तितौ ॥ जछौ ओटू यडौ गादौ जटौ राखौ बुधौ रलौ ॥ २८१ ॥ वैरन्तु पञ्चमे वर्गे तत्किञ्चित्करयोर्भवेत् ॥ चटयोः पचयोश्चापि तरयो रलयोरपि ॥ २८२ ॥ एकवर्गे परा प्रीतिः स्वं वर्गं द्विगुणं कुरु ॥ स्थानवर्गयुतं तष्टमष्टभिश्चापि उच्यते ॥२८३॥ स्थानवर्गो द्विगुणितः स्ववर्गाढ्योऽष्टशेषितः॥ स्थानाय उभयोःकार्य्यमधिकं यस्य शेषकम्॥ २८४॥यावत्स्थितं सोऽर्थदःस्यात्सा धकोऽर्थप्रदो न सत् ॥ मुखे सर्वार्थसिद्धिः स्यात्करयो रल्पसिद्धयः॥ कटौ न किञ्चिद्दासत्वं पादयोः पुच्छतो मृतिः ॥२८५॥ कुरुक्षेत्रे प्रयागे च गंगासागरसंगमे ॥ महाकाले च काश्यां च कूर्म्मस्थानं न चिन्तयेत् ॥ २८६ ॥ क्षेत्रसाधकमन्त्राणामेकमेवाद्यमक्षरम् ॥ यदि स्यात्स ध्रुवं मन्त्रः सर्वसिद्धिफलप्रदः ॥ २८७ ॥ अमृतो वृषभः शैलराजो वासुकिरेव च ॥ अर्थकृच्छ क्तिकृत्पूर्वकाष्ठादौ बलिनार्चयेत ॥ २८८ ॥ पद्मयोनिं महाशङ्खं छायाख्यं चापि मध्यमे ॥ कूर्म्मपृष्ठे गृहं कृत्वा गृहस्थो जपमाचरेत् ॥ २८९ ॥ अथ मालां प्रवक्ष्यामि द्विविधा सा स्थिरा चरा ॥ स्थिरा तु स्थिरचित्तानां चञ्चला चलचेतसाम् ॥ २९० ॥ अकारादिक्षकारान्तैर्बिन्दुवन्मातृकाक्षरैः ॥ अनुलोमविलोमस्थैः क्लृप्तया वर्णमालया ॥ प्रत्येकमन्त्रयुग्मन्त्रा जप्तव्याः सर्वसिद्धिदाः ॥ २९१ ॥ ऋगाद्या अपि किञ्चान्यैः प्रोक्ता च स्थिरमालिका ॥ अकारादिक्षकारान्ता प्रोक्ता चाक्षरमालिका ॥ जपे चाष्टोत्तरशतं पुनर्वर्णस्य योजनम् ॥२९२॥ चराथ कथ्यते मालाभिचारे तिथिसङ्ख्यकैः ॥ मुक्त्यर्थं पञ्चविंशत्या भसङ्ख्यैः सर्वदा जपेत् ॥ २९३ ॥ त्रिंशद्भिर्धर्म्मवृद्धिः स्याच्चतुष्पञ्चाशतेप्सितम् ॥ शतात्साम्यं तथाष्टाधिशतात्सकलसिद्धयः ॥२९४॥ समस्तसिद्ध्यै रुद्राक्षा मणयो धनदा मताः ॥ गर्तस्वामिकरः शङ्खो भोगकृत्स्फटिको मतः ॥ २९५ ॥ पुत्रप्रदाः पुत्रजीवाः पद्माक्षाः पुष्टिवर्द्धनाः ॥

---

१ गतद्रव्यलाभकृत् ॥

विद्रुमोत्था वश्यकरा मौक्तिका मुक्तिदा मताः ॥ २९६ ॥ पापापहाः कुशशुण्यास्स्वर्णजाः कामदायकाः ॥ कामवृद्धिस्तारजातैरिन्द्राक्षैः स्वागतम्पदम् च ॥ २९७ ॥ स्त्रीवश्यार्थे च हारिद्रा दार्व्या पुरुषवश्यकृत् ॥ ज्वरहन्त्री गृंतु लाक्षायाः शंखस्य पितृतृप्तिकृत् ॥ २९८ ॥ अर्कजोच्चाटने कार्य्या श्रीफलैर्ज्ञानसाधने ॥ पद्मकाष्ठोद्भवा तुष्टौ देवदारूद्भवा निरुक् ॥ २९९ ॥ कृष्णकाष्ठसमुद्भूतैस्तामसं कर्म सिध्यति ॥ गजदन्तस्य सर्वार्थे मोहने ताम्रजा मता ॥ ३०० ॥ मारणे चायसी प्रोक्ता धनार्थे श्वेतपद्मजा ॥ विषान्तरे चन्दनोत्था शक्तिकृच्छ्वेतकाष्ठजा ॥ ३०१ ॥ रक्तचन्दनबीजोत्था यक्षिण्यादिकसाधने ॥ ३०२ ॥ भूतस्तम्भे निम्बजाता जनस्तम्भे शमीभवा ॥ महानिम्बेन डाकिन्या भूनिम्बैः स्तम्भनं रुजाम् ॥ ३०३ ॥ इन्द्रवृक्षाहणस्तम्भोऽभिचारो वानरास्थितः ॥ ऋक्षास्थितो वन्यसिद्धिः शार्दूलात्तस्य देवताः ॥ ३०४ ॥ नरास्थ्ना राक्षसा वश्या वीरा वश्या हयास्थिभिः ॥ रासभास्थ्ना क्षुद्रसिद्धिर्मान्यता तु गजास्थिभिः ॥ ३०५ ॥ मृत्तिकाभूष्टमणिजा माला शाबरसिद्धिकृत् ॥ कुशग्रन्थ्या जपेद्विप्रः सुवर्णमणिभिर्नृपः ॥ ॥ ३०६ ॥ पुत्रजीवैर्जपेद्वैश्यः पद्माक्षैः सर्व एव हि ॥ रुद्राक्षस्फटिकेन्द्राक्षमध्ये किञ्चिन्न दापयेत् ॥ ३०७ ॥ मध्ये दत्त्वा जपं कुर्वन्काममोक्षौ विनाशयेत् ॥ चतुर्थ्यां प्रोतयेन्मालां गणनाथस्य मन्त्रकैः ॥ ३०८ ॥ मध्याह्नेऽर्कस्य सप्तम्यां रवौ वा तस्य मन्त्रकैः ॥ द्वादश्यां वैष्णवी माला प्रोतव्या विष्णुमन्त्रतः ॥ ३०९ ॥ त्रयोदश्यां तु सन्ध्यायां तन्मन्त्रैः शिवमालिका ॥ अष्टम्यां वा चतुर्दश्यां नवम्यां भूमिनन्दने ॥ ३१० ॥ शक्तीनामपि कर्तव्या शुक्ररात्रौ [illegible] विधि ॥ ग्रन्थिता पट्टसूत्रेण देव्याः प्रीत्यै तु मालिका ॥ [illegible] ॥ ३११ ॥ कार्य्या सा वैष्णवी माला पट्टसूत्रैरथापि वा ॥ ऊर्णाभिर्वा [illegible]लैर्वा शैवी कार्पाससूत्रकैः ॥ ३१२ ॥ प्रायशः सर्वदेवानां सूत्रोत्पत्तिं [illegible] शृणु ॥ सूत्रं द्विजेन्द्रपुण्यस्त्रीनिर्मितं ग्रन्थिवर्जितम् ॥ ३१३ ॥

---

१ श्लोकप्पसर [illegible]षितवस्तुसिद्धिः ॥ २ बकैनेति भाषायाम् ॥ ३ तिक्तकः ॥

त्रिगुणं त्रिगुणीकृत्य ग्राह्यं प्रक्षाल्य यत्नतः ॥ ३१४ ॥ एकवक्त्रैर्द्विवक्त्रैश्च चतुर्वक्त्रैश्च पञ्चभिः ॥ षड्वक्त्रैर्वाथ कर्तव्या मिथो मिश्रांस्तु वर्ज्जयेत् ॥ ३१५ ॥ मुखं मुखेन संयोज्य पृष्ठं पृष्ठेन योजयेत् ॥ रुद्राक्षस्योन्नतं प्रोक्तं मुखं पृष्ठं तु निम्नकम् ॥ ३१६ ॥ धात्रीफलसमः श्रेष्ठो मध्यो बदरसन्निभः ॥ अधमश्चणकाभः स्यात्ततो हीनो विपत्तिकृत् ॥ ३१७ ॥ एको मेरुस्तत्र देयः सर्वत्रस्थोऽल्पयुक् च यः ॥ आद्यं स्थूलं ततस्तस्मान्न्यूनं न्यूनतरं ततः ॥ ३१८ ॥ सर्पाकारं प्रकुर्वीत ब्रह्मग्रन्थिमार्णं प्रति ॥ अथ वा ग्रन्थिरहितां दृढचक्रसमन्विताम् ॥ ३१९ ॥ त्रिरावृत्त्याथ मध्येन चार्धावृत्त्या तु देशतः ॥ ग्रन्थिः प्रदक्षिणावर्त्तः स ब्रह्मग्रन्थिरुच्यते ॥ ३२० ॥ एकभक्तं विधायादौ साधको ग्रन्थयेत्स्वयम् ॥ कृतनित्यक्रियः शुद्ध उक्तेष्वक्षेष्वतन्द्रितः ॥ ३२१ ॥ श्वेता रक्ता सुवर्णाभा कृष्णा चैव द्विजादितः ॥ एतेषु ब्राह्मणश्रेष्ठो जपमालाकृते भृशम् ॥ ३२२ ॥ अलाभे तु द्विजातीनामपि वा स्वस्वजातयः ॥ कलौ तु दुर्लभो विप्रो यथा विप्राः स्वधर्म्मगाः ॥ ३२३ ॥ अतिस्थूलोऽतिसूक्ष्मश्च स्फुटितो भंगुरो लघुः ॥ भिन्नः पुराधृतो जीर्णो रुद्राक्षो न शुभः स्मृतः ॥ ३२४ ॥ अन्योन्यघर्षणादेव जपहानिर्भवेद्ध्रुवम् ॥ मध्यतो ग्रन्थयः कार्य्या नात्र मुक्तादि विन्यसेत् ॥ ३२५ ॥ एकवक्त्रः शिवस्तस्य माला तु जपतो हरेत् ॥ ब्रह्महत्यादिपापानि तथा भक्तादिकेष्टदः ॥ ३२६ ॥ उमाशङ्करनामाख्यो द्विमुखोऽयं व्यपोहति ॥ गोहत्यादिकपापानि गृहस्थाश्रमसौख्यदः ॥ ३२७ ॥ त्रिमुखस्त्वग्निरूपः स्यात्स्त्रीहत्यादिकपापहा ॥ धर्म्मार्थकामाः सिद्ध्यन्ति धारणात्तज्जपादपि ॥ ॥ ३२८ ॥ चतुर्मुखो भवेद्ब्रह्मा गुरुहत्यादिनाशकः ॥ स्फुरन्ति सकला विद्या वाक्सिद्धिश्चापि जायते ॥ ३२९ ॥ पञ्चवक्त्रः शिवः साक्षात्सर्वपापापहारकः ॥ शैवगाणेशशाक्तानां द्रुतसिद्धिस्तु तज्जपात् ॥ ३३० ॥ कार्त्तिकेयस्तु षड्वक्त्रः स्खलितव्रतपापहा ॥ विधितो दक्षिणे बाहौ धारणात्समरे जयः ॥ ॥ ३३१ ॥ सप्तवक्त्रो महानागोऽनन्तोनामाथ तज्जपात् ॥ अनन्ताः सिद्धयः सर्पविषमृत्युर्न जायते ॥ ३३२ ॥ अष्टवक्त्रो गणेशः स्यात्सर्वविघ्ननिवारकः ॥ नश्यन्ति तज्जपात्सर्वे कामक्रोधादिशत्रवः ॥ ३३३ ॥ नववक्त्रो भैरवः स्याद्वाममार्गस्थदेवताः ॥ जपादेव प्रसीदन्ति वामबाहौ स्थितोग्रहा ॥ ३ ... णात् ॥

जनार्दनो दशमुखो जपान्नश्यन्ति धारणात् ॥ पिशाचग्रहवेतालब्रह्मराक्षसपन्नगाः ॥ ३३५ ॥ एकादशमुखः साक्षाद्रुद्र एवास्य धारणात् ॥ जपाच्च हयमेधादियज्ञानां फलभाग्भवेत् ॥ ३३६ ॥ द्वादशास्यो भास्करः स्याद्धारणात्तज्जपादपि ॥ तेजस्वी च प्रतापी च गोमेधफलभाग्भवेत् ॥ ३३७ ॥ त्रयोदशमुखः साक्षाद्विश्वदेवात्मकः स्मृतः ॥ श्राद्धकाले धृतो दद्यात्पितॄणामक्षयाङ्गतिम् ॥ ३३८ ॥ चतुर्दशमुखैर्जप्तं तदानन्त्याय जायते ॥ पूज्यते देवमनुजैरक्षयां लभते गतिम् ॥ ३३९ ॥ अथ मालाकृतिं वक्ष्ये क्षालयेत्पञ्चगव्यकैः ॥ दुग्धं काञ्चनवर्णायाः श्वेतायाश्चैव गोमयम् ॥ ३४० ॥ गोमूत्रं ताम्रवर्णाया नीलायाश्च भवेद्दधि ॥ घृतन्तु कृष्णवर्णाया एवं पञ्चामृतेपि च ॥ ॥ ३४१ ॥ गवां वर्णास्तु सुलभाः सन्ति देशेषु कुत्र च ॥ तत्र वर्णविभागेन पञ्चगव्यानि चाहरेत् ॥ ३४२ ॥ वर्णालाभे न दोषोस्ति मात्राहीनन्तु वर्ज्जयेत् ॥ गोशकृद्द्विगुणं मूत्रं सर्पिर्दद्याच्चतुर्गुणम् ॥ ३४३ ॥ क्षीरमष्टगुणं प्रोक्तं पञ्चगव्यं तथा दधि ॥ [1]गायत्र्यादाय गोमूत्रं [2]गन्धद्वारेति गोमयम् ॥ ३४४ ॥ [3]आप्यायस्वेति च क्षीरं दधि [4]काव्णेति वै दधि ॥ [5]तेजोसि शुक्रमित्याज्यं [6]देवस्य त्वा कुशोदकम् ॥ ३४५ ॥ क्षालयेत्पञ्चगव्याद्यैः [7]सद्योजातादिमन्त्रतः ॥ चन्दनागुरुगन्धाद्यैर्[8]वामदेवेन घर्षयेत् ॥ ३४६ ॥ धूपयेद[9]घोरेण चासितागुरुगुग्गुलैः ॥ [10]तत्पुरुषाख्यमन्त्रेण लेपयेच्चन्दनादिभिः ॥ ३४७ ॥ [11]ईशानः

---

१ ॐ तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ २ गन्धद्वारान्दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ।३ आप्यायस्व समेतु ते विश्वतःसोमवृष्ण्यम् ॥ भवा वाजस्य सङ्गथे । ४ दधिक्राव्णो अकारिषञ्जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखाकरत्प्रण आयूँषि तारिषत् । ५ तेजोसि शुक्रमस्यमृतमस्यायुर्मे पाहि । ६ देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् । अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेभिषिञ्चामि । ७ सद्योजातं प्रपद्यामि सद्योजाताय वै नमोनमः। भवेभवे नातिभवे भवस्व मां भवोद्भवाय नमः।८वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः । ९ अघोरेभ्योथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः । १० तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ।११ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥

सर्वमिति च प्रत्येकं मन्त्रयेच्छतम् ॥ तेनैव मन्त्रयेन्मेरुमघोरेण च मन्त्रयेत् ॥ ३४८ ॥ अथान्यमालासंस्कारं वक्ष्येश्वत्थस्य पत्रकैः ॥ पद्माकारेण नवभिः स्थापिते तत्र विन्यसेत् ॥ ३४९ ॥ मणीन्सूत्रं च गन्धोदैः क्षालयित्वाथ मन्त्रयेत् ॥ ॐ ह्रींपूर्वैर्मातृकार्णैः क्रमादेकैकशो मणिम् ॥ ३५० ॥ सूत्रं च तत्र विन्यस्य पूजयित्वा हुनेत्ततः ॥ तिलाद्यैः केवलाज्यैर्वा सद्योजातादिभिः पृथक् ॥ ३५१ ॥ पञ्चमन्त्रैः शतं चाष्टावष्टाविंशतिमेव वा ॥ होमाभावे जपः प्रोक्तः प्रोतयेन्मालिकां ततः ॥ ३५२ ॥ गोपुच्छसदृशी कार्य्या एकाग्रा वा समेरुका॥आवाहनादिमुद्राणामष्टकं दर्शयेत्ततः॥सद्योजातादिभिर्मन्त्रैः पूर्ववत्क्षालनादिकम् ॥ ३५३ ॥ कौलिकादौ विशेषोयं सुरया मणितर्प्पणम्॥ शिरोमाला तु षट्त्रिंशद्द्वात्रिंशत्कण्ठमालिका ॥ ३५४ ॥ कूर्परे षोडश प्रोक्ता द्वात्रिंशन्मणिबन्धयोः ॥ अष्टोत्तरशतैर्युक्तमुपवीतं विधीयते॥ ३५५ ॥ तदर्धमुरसो माला शिखायामेक उच्यते ॥ कर्णयोश्चापि षट्सङ्ख्या धारणक्रम ईरितः ॥ ३५६ ॥ सङ्ख्याहीनं न कर्त्तव्यमधिकं नैव दुष्यति ॥ रुद्राक्षं धारयन्नेवं देहान्ते स शिवो भवेत् ॥ ३५७ ॥ बहुलं लभते पुण्यं भाग्यवानिह जायते ॥ स्नाने दाने जपे होमे वैश्वदेवे सुरार्चने ॥ ३५८ ॥ प्रायश्चित्ते तथा श्राद्धे दीक्षाकाले विशेषतः ॥ रुद्राक्षधारी भूत्वा च यत्किञ्चित्कर्म वैदिकम् ॥ ३५९ ॥ यो विप्रः सततं कुर्यात्तत्कर्म सफलं भवेत् ॥ कण्ठे शिरसि हस्ते च कर्णयोरुपवीतके ॥ ३६० ॥ रुद्राक्षधारणादेव रुद्रो भवति मानवः ॥ खादन्मांसं पिबन्मद्यं सङ्गच्छन्नन्त्यजादिषु ॥ ३६१ ॥ सद्यो भवति पूतात्मा रुद्राक्षं मूर्ध्नि धारयन् ॥ देवान्पुष्णन्ति ये देवाः पशवस्तेत्र वैदिकाः ॥ ३६२ ॥ तान्घातयन्ति ये कौले तेषां शास्तास्त्ययं यमः ॥ तेषां संरक्षणार्थाय नान्यो रुद्राक्षतो भुवि ॥ ३६३ ॥ रुद्राक्षाः सर्वदेवानां मन्त्रसिद्धिविधायकाः ॥ रुद्राक्षं कण्ठमाश्रित्य शूकरो म्रियते यदि ॥ ॥ ३६४ ॥ सोपि रुद्रमवाप्नोति किं पुनर्मानुषादयः ॥ उच्छिष्टो वा विकर्म्मस्थो युक्तो वा सर्वपातकैः ॥ मुच्यते सर्वपापेभ्यो नरो रुद्राक्षधारणात् ॥

॥ ३६५ ॥ रुद्राक्षमालिकां कण्ठे धारयेद्भक्तिवर्ज्जितः ॥ पापकर्म्मापि यो नित्यं रुद्रलोके महीयते ॥ ३६६ ॥ अरुद्राक्षधरो भूत्वा यत्किञ्चित्कर्म्म वैदिकम् ॥ कुर्य्याद्विप्रोपि यो मौढ्यान्नासावाप्नोति तत्फलम् ॥ ३६७ ॥ शूद्रार्थं योषितामर्थे मालासंस्कार उच्यते ॥ गणेशसूर्य्यविष्ण्वीशदुर्गाः सम्पूज्य भक्तितः ॥ ३६८ ॥ मालां तामथ तां मालां क्रोम्बीजेनाभिमन्त्रि-देत्म्॥ अष्टोत्तरशतं पञ्चगव्ये तां स्थापयेत्र्यहम्॥ ३६९॥ चतुर्थे तु समृद्धृत्य क्षालयेदस्त्रमन्त्रतः॥हन्मन्त्रेण ग्रन्थयित्वा स्थण्डिले तां निधापयेत्॥ ३७०॥ तत्र प्रक्षालितां मालां स्थापयेद्धेमपात्रके॥पञ्चामृतेन संस्नाप्य शीतलेन जलेन च ॥ ३७१ ॥ चन्दनेन सुगन्धेन कस्तूरीकुंकुमादिभिः ॥ अभिषेकं ततः कुर्य्याद्धसौंमन्त्रेण साधकः ॥ ३७२॥ नवग्रहान्पूजयित्वा दिक्पालांश्चापि पूजयेत् ॥ ३७३ ॥ तिलेन घृतयुक्तेन शक्तितो होमयेत्ततः ॥ स्वर्णन्तु दक्षिणां दद्याद्गुरवे मणिसङ्ख्यकम् ॥ ३७४॥ तन्मन्त्रजापिनो विप्रान्भोजयेद्वापि वैदिकान् ॥ अभावे स्वर्णपत्रस्य ग्राह्यमश्वत्थपत्रकम् ॥ ३७५ ॥ मालासंस्कार इत्युक्तो जपः स्यात्सिद्धिदायकः॥ कीकसादिकमालानां कौलिकानाञ्च वामिनाम् ॥ ३७६ ॥ सिद्धयै वक्ष्यामि संस्कारं सर्वतन्त्रेषु गोपितम् ॥ शिल्पिनं पूजयेदादौ वस्त्रगन्धानुलेपनैः ॥ ३७७ ॥ संहृष्टः कारयेन्मालां मन्त्रपूतं पिबेन्मधु ॥ पञ्चाशन्मणिभिः कार्य्या ऋतुमत्या भगे क्षिपेत् ॥ ३७८ ॥ निशामेकां समुद्धृत्य तन्मणीन्क्षालयेत्ततः॥ शुद्धोदैर्मूलमन्त्रेणाभिषिञ्चेद्विजयारसैः ॥ ३७९ ॥ प्रक्षाल्य धूपयेत्पश्चात्प्रोतयेदिष्टसूत्रकैः ॥ सूत्रं स्वेष्टजपे नीलं कृष्णं मारणकर्म्मणि ॥ ३८० ॥ मोहने हारितं स्तम्भे धूमाभं द्विषितालभम् ॥ शान्तौ पुष्टौ सितं द्वेषे रक्तमुच्चाटने भवेत् ॥ वश्ये पीतं कषायन्तु विक्षेपकरणे मतम् ॥ ३८१॥ चक्रपूजां ततः कृत्वा त्वष्टोत्तरसहस्रकम्॥ हुनेन्मद्यपलाभ्यां च मूलमन्त्रेण साधकः ॥ ३८२ ॥ ततो बलिं यथान्यायं महिषादेः प्रदापयेत् ॥ शिल्पिनः साधकांश्चापि भोजयेन्मणिसङ्ख्यकान् ॥ ॥ ३८३ ॥ एवं सम्मार्जितां मालां गुरवे तां प्रदर्शयेत् ॥ येन मन्त्रेण या माला कृता तन्तु जपेत्तया॥ ३८४॥अन्यमन्त्रजपाच्छापो देवतायाः प्रजायते॥

दृढं सूत्रं नियुञ्जीत जपेत्तु स्थगितो यथा ॥ ३८५ ॥ जीर्णे सूत्रे पुनः सूत्रं ग्रन्थयित्वा शतं जपेत् ॥ तर्जन्या न स्पृशेत्सूत्रं कम्पयेन्नैव धूनयेत् ॥ ३८६॥ न स्पृशेद्वामहस्तेन करस्रस्तन्न कारयेत् ॥ अक्षाणां चालनेंगुष्ठश्चान्यमक्षंन संस्पृशेत्॥ ३८७॥ जपकाले तदा विद्वान्मन्त्रं नैव विलङ्घयेत् ॥ परिवर्त्तनकाले तु सङ्घट्टं नैव कारयेत्॥ ३८८॥ कलिः खटखटाशब्दे दोलने च चलन्मृतिः॥ चलिते चैव विद्वेषः स्फुटिते व्याधिसम्भवः ॥ ३८९ ॥ हस्तच्युते महाविघ्नः सूत्रच्छेदे विनाशनम्॥ अथ वांगुलिमालाभिर्जपं कुर्य्यात्तदुच्यते ॥ ३९० ॥ अनामामध्यमारभ्य कनिष्ठानुक्रमेण तु ॥ मध्यमा मूलपर्य्यन्ता करमाला प्रकीर्तिता ॥ ३९१॥ मध्यमानामिकामध्यपर्वयुग्मं प्रकल्पयेत् ॥ मेरुं चानामिकामूलात्कनिष्ठानुक्रमेण च ॥ ३९२॥ तर्ज्जन्यग्रादितो मध्यामूलान्तं दशसङ्ख्यकाः ॥ अथ वा कल्पयेन्मेरुं मध्यानामादिपर्वकम् ॥ ३९३ ॥ अनामामध्यमे तत्र तर्ज्जनीमूलकावपि ॥ जपसङ्ख्याजपः प्रोक्तस्तथायन्त्रिविधोमतः ॥ ३९४ ॥ तत्रादौ त्रिविधः प्रोक्तः पूर्वोक्तोऽयं जपो मया ॥ अंगुल्याख्यो जपः प्रोक्तो मतोन्यो न ममैव च ॥ ३९५ ॥ अंगुलीगतलेखाभिर्जपो लेखाजपो भवेत् ॥ अंगुलीं न वियुञ्जीत जपकाले कदाचन ॥ ३९६ ॥ अंगुलीनां वियोगेन च्छिद्रेषु स्रवते जपः ॥ नोल्लङ्घयेच्च गुणवान्किञ्चित्सङ्कोचयेत्तलम्॥ ३९७॥ न[1] दर्शयेत्करं नोचेत्फलं गृह्णन्ति राक्षसाः ॥ त्यजेद्विंशद्विकर्म्माणि सिद्धिविघ्नकराणि च ॥ ३९८ ॥ कुर्य्याद्विंशतिकर्म्माणि जपसिद्धिकराणि च ॥ लोभं क्रोधं च मात्सर्य्यं कामं द्वेषञ्च ताडनम् ॥ ३९९ ॥ दम्भमुच्चाटनाभ्यङ्गौ प्रियं मिथ्यावचस्तथा ॥ गीतं वाद्यं मधु च्छायां विभीतककरञ्जयोः॥ ॥ ४०० ॥ मांसं प्रातग्रहं माल्यं ताम्बूलं पापिभाषणम् ॥ एतानि वर्ज्जयेद्विद्वान्कर्तव्यान्यथ मे शृणु ॥ ४०१ ॥ मन्त्रो निरोधो मन्त्रार्थचिन्तनं नित्यकर्म्म च ॥ नैमित्तिकं श्रौतमौने परसङ्गस्य वर्ज्जनम् ॥ ४०२॥ भूमिशय्या त्रिषवणस्नानं प्रात्यहिकार्चनम् ॥ नित्यदानं गुरोः पादपूजाहारनिमन्त्रणे ॥ ४०३ ॥ स्नानञ्च पञ्चगव्येन पवित्रकरधारणम् ॥ त्रिसन्ध्यं वन्दनं

---

१ जपकाले करेण न दर्शयेद्यदि दर्शयेत् तर्हि राक्षसास्तत्फलमाददति ॥

पञ्चयज्ञास्तर्पणमेव च ॥ ४०४ ॥ यथोक्तवस्त्रधरणं प्रायश्चित्तमथोच्यते ॥ सकृदुच्चरिते शब्दे प्रणवं समुदीरयेत् ॥४०५॥ प्रोक्ते पामरशब्देपि प्राणायामं सकृच्चरेत् ॥ बहुप्रलापे चावश्यं न्यस्याङ्गानि ततो जपेत् ॥ ४०६ ॥ क्षुतेप्येवं तथास्पृश्यस्थानानां स्पर्शनेपि च ॥ मौनत्यागे जपेन्मन्त्रं वैष्णवं वा स्मरेद्धरिम् ॥४०७॥ पतितान्त्यजसन्दर्शे तेजोवन्तं निरीक्षयेत् ॥ सूर्य्योग्निश्चन्द्रमाः खेटा मुनयो भानि तारकाः ॥ ४०८ ॥ विद्वांसो ब्राह्मणाश्चेति तेजोहीनास्ततः परे ॥ क्षुतेधोवायुगमने पतितादिकभाषणे ॥४०९॥ त्यक्त्वा जपं तथाचम्य प्राणायामं षडङ्गकम् ॥ कृत्वा पश्चाज्जपेन्मन्त्रमम्भोऽलाभे हरिं स्मरेत् ॥ ४१० ॥ मार्जारं कुक्कुटं क्रौञ्चं श्वानं गृध्रं खगं कपिम् ॥ दृष्ट्वाचम्य चरेत्कर्म स्पृष्ट्वा स्नानं विधीयते ॥ ४११ ॥ दैवादसत्यभाषी चेत्स रौद्रं पौरुषं जपेत् ॥ बहुवस्त्रैकवस्त्रो वा मुक्तकेशो गलावृतः ॥ ४१२ ॥ उष्णीषी कञ्चुकी नग्नः शिरसि प्रावृतोपि वा ॥ चिन्ताद्याकुलचित्तो वा क्रुद्धो वान्तः क्षुधान्वितः ॥४१३॥ जङ्घानिगूढपादो वा यानशय्यागतस्तथा ॥ शयानो वा धौतपादः पश्चाद्वा दक्षिणामुखः ॥४१४॥ म्लानवस्त्रोर्ध्ववस्त्रश्च तथा द्विगुणवस्त्रकः॥च्युतवस्त्रो रक्तवस्त्रःस्निग्धवस्त्रो द्विकच्छकः ॥४१५॥ बहिष्कच्छोनुत्तरीयो विकच्छश्चैककच्छकः ॥ कौपीनी प्रौढपादश्च तथैव स्यूतवस्त्रवान् ॥ ॥ ४१६ ॥ जपेशक्तः प्रमादाच्च राक्षसैर्हृततेफलम् ॥ तत्कारणं परित्यज्य तज्जपं पुनरा चरेत् ॥४१७॥ स्वभार्य्यायां प्रमादेन स्खलितश्चेत्तदोषसि ॥ स्नात्वार्द्रवासा मौनेन दशकुम्भमितैर्जलैः ॥ ४१८ ॥ श्रोत्रियस्य गृहे दद्यात्परनार्य्यां सहस्रकम् ॥ जपः स्यादक्षरावृत्तिः स त्रेधा परिकीर्त्तितः ॥ ४१९ ॥ हीनो वाग्जः कायिकस्तु मध्यः श्रेष्ठस्तु मानसः ॥ य उच्चनीचैः स्वरितैः शब्दैः स्पष्टपदाक्षरैः ॥ ४२० ॥ मन्त्र उच्चार्य्यते हीनोऽसौ जपो वाचिकः स्मृतः ॥ शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचारयेत् ॥ ४२१ ॥ कस्यचिच्छ्रवणायोग्यः कायिकः स तु मध्यमः ॥ बुद्ध्या यदाक्षरश्रेणीं यथास्थानेषु चोच्चरेत् ॥ ४२२ ॥ अर्थस्मरणपूर्वन्तु स श्रेष्ठो मानसो जपः ॥

१ षिवु तन्तुसंताने ॥

षट्कर्मकृद्वाचिकः स्यात्कायिकः सर्वसिद्धिकृत् ॥ ४२३ ॥ मानसः साधये-न्मोक्षं ततोन्यः क्षुद्रकर्मकृत् ॥ जपेन देवता नित्यं स्तूयमाना प्रसीदति ॥ ४२४ ॥ जपात्सिद्धिर्जपात्सिद्धिर्जपात्सिद्धिरदूरतः ॥ यथा धनेन सन्तुष्टो जायते क्षुल्लको नरः ॥ ४२५ ॥ तथैव बलिदानेन पूजया क्षुद्रदेवताः ॥ यथा महागुणैर्वश्यो जायते गुणवान्प्रभुः ॥ ४२६ ॥ तथाहं त्वं च[1] विष्णवर्कौ जपा देव फलप्रदाः ॥ आसनन्तु द्विधा प्रोक्तं नित्यकामिकभेदतः ॥ ४२७ ॥ कुशाजिनोत्तरैर्युक्तं चतुरंगुलमूर्ध्वतः ॥ चतुरस्रं द्विहस्तञ्च सुन्दरं मृदु निर्म-लम् ॥४२८॥ इदं सुखासनं नित्यं जपसिद्धिविधायकम् ॥ अथ काम्यानि वक्ष्यन्ते ज्ञानसिद्ध्यायिहाजिनम् ॥ ४२९ ॥ सर्व्वसिद्ध्यै व्याघ्रचर्म्म [2]त्वाविकं रोगनाशनम् ॥ कौशेयं पौष्टिकं प्रोक्तं वेत्रजं श्रीविवर्द्धनम् ॥ ॥ ४३० ॥ श्वेते तु कम्बले धर्म्मसिद्धिरुक्तेर्थसिद्धयः ॥ पीते कामो द्विजा[3]न्येषां मोक्षदः कृष्णकम्बलः ॥ ४३१ ॥ दुःखमुक्त्यै रञ्जितस्तु नीलरङ्गो न शोभनः ॥ त्यजेन्निषिद्धं मतिमांस्त्वनिषिद्धेषु संविशेत् ॥ ४३२ ॥ निषिद्धान्यथ वक्ष्यन्ते शोकः स्याद्दारुकासने ॥ वंशासने दरिद्रः स्याद्वस्त्रे स्थानविनाशनम् ॥ ४३३ ॥ पाषाणे च तथोच्चाटो ज्वरः स्यान्मृ[4]ण्मयासने ॥ ४३४ ॥ क्षित्यासने भवेत्पीडा पल्लवे चित्त-विभ्रमः ॥ तृणासने भवेत्पीडा निषिद्धं त्विष्टकासनम् ॥ ४३५ ॥ चित्त-क्षोभो गृहस्थस्य कृष्णसाराजिने भवेत् ॥ बटुर्वनस्थः संन्यासी स्नातकः सिद्धिमाप्नुयात् ॥ ४३६ ॥ शुभे मुहूर्त्ते नक्षत्रे तिथौ स्नात्वा यथाविधि ॥ विप्रान्सन्तर्प्य यत्नेन भोजनाच्छादनादिभिः ॥ ४३७ ॥ भूवित्तवस्त्रभूषाद्यैः सन्तोष्य गुरुमात्मनः ॥ आरभेच्च जपं पश्चात्तदनुज्ञापुरस्सरम् ॥ ४३८ ॥ जपस्थाने ततः कुर्य्यात्त्रिकोणं वर्तुलं बहिः ॥ तद्बहिश्चतुरस्रं च तत्र क्षेत्रे

---

१ अत्र चकारोनुक्तसमुच्चयार्थस्तेन गणेशो बोध्यः ॥ २ मेषोर्णावासः ॥ ३ द्विजत्त्वं त्रयाणां तदितरत्वं शूद्रे तदुक्तं मनौ—"ब्राह्मणक्षत्रियविशस्त्रयो वर्णा द्विजातयः ॥ चतुर्थ एकजा-तिस्तु शूद्रो नास्ति तु पञ्चमः" इति॥ ४ मृण्मयशब्देन सामान्यस्य। पाषाणेष्टकयोः पृथगुपादानात्॥

समर्चयेत् ॥ ४३९ ॥ इहागच्छेत्यादिवाक्यैस्त्रिकोणादग्रतः पुनः ॥ अन्नोदकादिसम्पूर्णं बलिपात्रं निधापयेत् ॥४४०॥ वामिभिर्माहिषो देयः कौलिकैर्बर्करस्तथा ॥ अविः सिद्धान्तिभिस्तत्र निवेद्यो मनुना सुराः ॥ ४४१ ॥ ऐंह्येहि विद्रषीत्युक्त्वा पुरुषं जययुग्मकम् ॥ नर्त्तयद्वितयं पश्चाद्विघ्नविघ्न महेति च ॥ ४४२ ॥ भैरवपदपूर्वन्तु क्षेत्रेशमिति चोच्चरेत् ॥ क्षेत्रपालबलिं गृह्णगृह्णस्वाहेति वै वदेत् ॥ ४४३ ॥ त्रिचत्वारिंशदर्णोयं क्षेत्रपालबले मनुः ॥ तस्मै सपरिवाराय बलिं दद्यान्न भक्षयेत् ॥ ४४४ ॥ आरभेत पुरश्चर्य्यां दीक्षोक्तदिवसे शुभे ॥ प्रणम्यादौ गुरून्विप्रान्गणेशं परिपूज्य च ॥ ॥ ४४५ ॥ पुण्याहवाचनं कृत्वा कुशहस्तो वदेदिति ॥ सूर्य्यः सोमो यमः कालः सन्ध्ये भूतान्यहः क्षपा ॥ ४४६ ॥ पवनो दिक्पतिर्भूमिराकाशं खेचरामराः ॥ ब्रह्मशासनमास्थाय कल्पध्वमिह सन्निधिम् ॥ ४४७ ॥ पठित्वेदं ताम्रपात्रे कृत्वा कुशतिलाक्षतान् ॥ उदङ्मुखस्तु सङ्कल्पं कुर्य्यात्संवत्सरादिकान् ॥ ४४८ ॥ कामनान्तानुच्चरेच्च तत्र विंशतिसंख्यकान् ॥ संवत्सरमृतुं मासं पक्षं पञ्चाङ्गमेव च ॥ ४४९ ॥ नवग्रहस्थितिं घस्रभागमुहूर्त्तके त्विति ॥ स्वदेशभेदानुच्चार्य्य कामनासहितान्वदेत् ॥ ४५० ॥ द्वीपेमुके मुके खण्डे गोत्रं प्रवरमुच्चरेत् ॥ स्वनाम जातिनामान्तं पुनः शर्म च वर्म्म च ॥ ४५१ ॥ गुप्तो दासोथामुकस्य मन्त्रस्य सिद्धिकामकः ॥ करिष्येहं पुरश्चर्य्यामेतत्सङ्ख्यजपात्मिकाम् ॥ ४५२ ॥ अथवैयद्दिनैरेतैरसति प्रतिबाधके ॥ करिष्य इति सङ्कल्पं मनसैव प्रकल्पयेत् ॥ ४५३ ॥ वदेद्वाचाभिलाषं च कर्म्मणा चोपपादयन् ॥ गुरुं गणपतिं दुर्गां मह्यं नत्वा च पूजनम् ॥४५४॥ कृत्वा स्वमूलमन्त्रेण प्राणायामत्रयं चरेत् ॥ कृत्वा ऋष्यादिविन्यासमङ्गन्यासं तथैव च ॥ ४५५ ॥ ध्यायेच्च हृदये देवं पात्रे संस्थाप्य मालिकाम् ॥ अर्घ्योदकेन सम्प्रोक्ष्य ततस्तां प्रार्थयेदिति ॥ ४५६ ॥ ॐ मालेमाले माहामाये सर्वशक्तिस्वरूपिणि ॥ चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे

---

१ एह्येहि विद्रषीपुरुष जयजय नर्त्तय नर्तय विघ्नविघ्न महाभैरव क्षेत्रेश क्षेत्रपाल बलिं गृह्णगृह्ण स्वाहा ।

सिद्धिदा भव ॥ ४५७ ॥ पूजयित्वा ततो मालां गृह्णीयाद्दक्षिणे करे ॥ बीजं गणपतेः पूर्वमुच्चार्य्य तदनन्तरम् ॥४५८॥ अविघ्नं कुरु माले त्वं गृह्णीयात्तदनन्तरम् ॥ हस्तेथ दक्षिणे पश्चाच्चिन्तयेन्मनसा शिवम् ॥ ५५९ ॥ चिन्तयेच्च गुरुं मूर्ध्नि यथावर्णादिकं भवेत् ॥ मन्त्रं ध्यायेत्कण्ठमध्ये पीतवर्णं हिरण्मयम् ॥४६०॥ महामायां च हृदये स्वात्मानं गुरुपादयोः ॥ आज्ञाचक्रे ततः पश्चाद्गुरोर्मन्त्रस्य चात्मनः ॥ ४६१ ॥ देव्याश्चाप्येकतां नीत्वा सुषुम्णावर्त्मना ततः॥गुरुस्वरूपमेकं तं षट्चक्रं प्रति लङ्घयेत॥४६२॥षट्चक्रेपि महामायां क्षणं ध्यात्वा प्रयत्नतः ॥लम्बयेन्मूलमन्त्रेण चादिषोडशचक्रकम्॥४६३॥ आदिषोडशचक्रे तां साधकानन्ददायिनीम् ॥ चिन्तयेत्साधको देवीं जातकर्म्मसमारभेत् ॥ ४६४ ॥ भ्रुवोरुपरि नाडीनां तिसृणां प्रान्त उच्यते ॥ तत्प्रान्तं त्रिपथस्थानं षट्कोणं चतुरंगुलम् ॥ ४६५ ॥ चक्रं च कुलयोगज्ञैराज्ञाचक्रमितीरितम् ॥ कण्ठे त्रयाणां नाडीना वेष्टनं विद्यते नृणाम् ॥ ४६६ ॥ सुषुम्णेडापिङ्गलानां षट्कोणं तत्षडंगुलम् ॥तत्त्वचक्रमिति प्रोक्तं शुक्लं कण्ठस्य मध्यगम् ॥ ४६७ ॥ त्रयाणामपि देवानां हृदये चैकता भवेत् ॥ तत्स्थाने षोडशारं स्यात्सप्तांगुलप्रमाणतः ॥ ४६८ ॥ तत्पूर्वमुक्तयोगानामादिषोडशचक्रगम्॥ ध्येयानामथ मन्त्राणां चिन्तितस्य जपस्य च ॥४६९॥ यस्मादाद्यं तु हृदयं तस्मादादिर्निगद्यते ॥ तत्र प्रणव उत्पन्नः पूर्वमादिस्तुतस्य तु॥४७०॥ निस्सेतुकं यथा तोयं क्षणान्निम्नं प्रसर्पति ॥ मन्त्रस्तथैव निस्सेतुः क्षणात्क्षरति यज्वनाम् ॥ ४७१ ॥ तस्मात्सर्वप्रयत्नेषु चतुर्वर्णादिजातयः॥ पार्श्वयोः सेतुमादाय जपकर्म्म समारभन् ॥ ४७२ ॥ मन्त्राणां प्रणवः सेतुर्द्विजानां परिकीर्तितः ॥ चतुर्दशस्वरोन्येषां चन्द्रानुस्वारसंयुतः ॥ ॥४७३॥ एवं विचिन्त्य मध्याया मध्ये भागे तु मालिकाम् ॥ अस्पृशंस्तर्ज्जनीं मालामंगुष्ठाग्रेण चालयेन्न ॥ ४७४ ॥ पूर्वं मन्त्रं जपन्यस्तु संस्पृशेदपरं मणिम् ॥ अंगुष्ठेन भवेत्तस्य स जपो निष्फलः सदा ॥ ४७५ ॥

---

१ गमिति बीजम् ॥ २ अत्र मन्त्रे ॐमामिति पूर्वं पठेत् ॥ छन्दो भङ्गभयादिह तदनुक्तिः ॥
३ मध्यमाङ्गुलेर्मध्यपर्वणि।

मालां स्वहृदयासन्नां धृत्वा दक्षिणपाणिना ॥ मालामन्त्रस्तु ह्रीं सिद्ध्यै नमः सम्प्रार्थयेदिति ॥ ४७६ ॥ त्वं माले सर्वदेवानां प्रीतिदा शुभदा भव ॥ शिवं कुरुष्व मे भद्रे यशो वीर्यं च वर्धय ॥ ४७७ ॥ इह प्रार्थनपूजायां प्रोक्तोयं मालिकामनुः ॥ पञ्चाक्षरस्ततो देवं स्वेष्टं सम्प्रार्थयेदिति ॥४७८॥ गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ॥ सिद्धिर्भवतु मे देव त्वत्प्रसादा- ज्जगत्पते ॥ ४७९ ॥ मूलमन्त्रं समुच्चार्य देवहस्ते निवेदयेत् ॥ तं जपं चार्घ्यतोयेन मध्याह्नसमये त्विदम् ॥ ४८० ॥ तदर्थं पूर्ववत्स्नात्वा विशेषेण विधानवित् ॥ न्यासावसानमखिलं कर्म्म कुर्य्यात्पुरोदितम् ॥ ४८१ ॥ पूजाग्निहोमपर्य्यन्तं ततश्च जपमारभेत् ॥ यावद्दिनावसानं तु भूयः स्नात्वा ततो द्विजः ॥ ४८२ ॥ उपास्य पूर्ववत्सन्ध्यां देवं सम्पूजये- त्पुनः ॥ विसृज्य भोजनं कुर्य्यात्सततं तारकोदये ॥ ४८३ ॥ सत्कन्द- फलमूलाशी सद्भिक्षाशी हविष्यभुक् ॥ पयोव्रती भवेच्छ्रेष्ठस्तेषां लक्षणमुच्यते ॥४८४॥ आयुष्करं पद्ममूलं पिण्डारककसेरुकम् ॥ रक्तहस्तशिंखमधुशालुकं श्रेष्ठमुच्यते॥४८५॥द्राक्षाम्रजम्बूपनसं कपित्थं खर्ज्जूरिकादाडिमनारिकेरम्॥ परूषकं क्षीरिणिकाकदल्योः फलं तु धात्र्याश्च भवेत्पवित्रम् ॥ ४८६ ॥ पत्रमूलं त्वचामूलं विमूलं पंचमी जटी ॥ अकवाकुः कुवाकुश्च मूले पावि- त्र्यकारकम् ॥ ४८७ ॥ वैदिकाचारयुक्तानां शुचीनां श्रीमतां सताम् ॥ सत्कुलस्थानजातानां भिक्षाशी चाग्रजन्मनाम् ॥ ४८८ ॥ चरुमूलफलक्षीर- दधिभिक्षान्नसक्तवः ॥ एतत्सप्तविधं भिक्षालब्धं भक्ष्यं व्रतास्थितैः ॥ ४८९ ॥ हविष्याणि तु पंचाशच्छ्रेताः स्विन्ना हिमोद्भवाः ॥ तण्डुलाः षष्टिनीवारशालि- जास्त्रिविधा मताः ॥ ४९० ॥ मुद्गा यवास्तिलाः कृष्णाः कुल्माषास्त्रिपुटा अपि ॥ कङ्गवश्च मकुष्ठाश्च यावन्नालकणशिका ॥ ४९१ ॥ कालकंशो ववास्तूकं करम्बुर्हिलमोचिका ॥ चक्रवती चक्रमर्दः पलङ्कः शतपुष्पिका ॥ ॥ ४९२ ॥ मूलं हेमन्तजं श्वेतं राजिकां माषजं तिलम् ॥ मृणालमुसली वोण्टा शतमूली विदारिका ॥ ४९३ ॥ सर्वे पिण्डालवश्चैव पद्मो वारवु षा- तथा ॥ आयुष्करः कञ्च्युकश्च शृङ्गाटककसेरुकौ ॥ ४९४ ॥ सामुद्रं

सैन्धवं चैव दध्याज्यं गोजमाहिषम् ॥ दुग्धं ससारं मधुरं पयोन्यत्त्वल्पवीज-
कम् ॥४९५॥पनसाम्रामलं चिंचा विफाणितगुडैक्षवम् ॥ हविष्यं भेषजं सर्वं
हित्वा मीनान्सुरां पलम्॥४९६॥श्रेष्ठं गवां दुग्धमुक्तं मध्यमं सुरभीभवम् ॥
अधमं माहिषं चान्यद्व्रतस्थानां निषिध्यते ॥४९७॥ त्यजन्निषिद्धमन्नाद्यं मध्यो
सौ शास्त्रतश्च यः ॥ निषिद्धं देशकुलतः प्रशस्तं सोत्तमः स्मृतः॥४९८॥निषि-
द्धान्यथ कथ्यन्ते सप्तविंशामितानि तु ॥ श्वेतमुद्गा मसूराश्च कोद्रवाश्चणकास्त्रिधा
॥ ४९९॥ माषाश्च भूमिलवणं यत्र जातं रसान्तरम् ॥ क्षौद्रं क्षारं पलाण्डुश्च
गृञ्जनं काचभोजनम् ॥ ५०० ॥ मांसं च स्विन्नलवणं रामठं चैव नाल-
कम् ॥ अन्नं पर्य्युषितं तैलं ताम्बूलं क्षुद्रधान्यकम् ॥ ५०१ ॥ पटोलं चापि
वृन्ताकं मूलकं च कलिङ्गकम् ॥ दग्धान्नं च द्विपक्वं च गुडान्नं तालजं फलम् ॥
॥ ५०२ ॥ देवा विशेषं शृण्वन्तु वर्णाश्रमविभेदतः ॥ तिलतैलं मन्त्रपूतं
पावनं देवदुर्ल्लभम् ॥५०३॥ मर्दयित्वा गृहस्थेन स्नानं कार्य्यं तु सर्वदा ॥
द्विजैस्तु भोजनं कार्य्यमुपस्तीर्य्याविधार्य्य च ॥ ५०४ ॥ पावयेद्वैदिकैर्मन्त्रैः
प्रोक्षणादिककर्म्मणा ॥ पुनर्मूलेन सम्मन्त्र्य भुञ्जीयाद्धृदयाणुना ॥
॥ ५०५ ॥ मूलाभिमन्त्रितं तोयं भोजने तृषि सम्पिबेत् ॥ पलाशपत्रे
भुञ्जीत त्वन्यत्पत्रं विवर्जितम् ॥ ५०६ ॥ तदभावे कदल्यां वा मधूके
सर्ज्जेकेपि च ॥ भुक्त्वा शयीत शयने सुशुद्धे वसुधातले ॥ ५०७ ॥ अहता-
स्तरणास्तीर्णे सन्दर्भेणायने शुचौ ॥ मन्त्रिते मूलमन्त्रेण जितक्रोधो जितेन्द्रियः
॥ ५०८ ॥ अभीष्टदेवतां ध्यायन्प्राक्शिरस्को निशि स्वपेत् ॥ अर्धरात्रे
समुत्थाय पादशौचं विधाय च ॥५०९॥ आचम्य देवं सम्पूज्य शीघ्रं संस्पृश्य
पूर्ववत् ॥ जपं कुर्य्याद्यथाशक्ति त्वर्पयेच्च तथेश्वरे॥५१०॥स्वपेत्ततस्तु यो दृष्टः
स्वप्नं तं गुरवे वदेत् ॥ जपश्चायं वनस्थानां प्रोक्तो वै ब्रह्मवादिनाम् ॥५११॥
देशाद्युपद्रवत्रासात्स्वैरं यावत्समापनम् ॥ कर्त्तव्यं चेदयं कालः प्रोक्तो-
त्यावश्यकेपि च ॥ ५१२ ॥ आमध्याह्नं जपः श्रेष्ठो मध्यमप्रहरत्रयम् ॥
सार्धयामत्रयं हीनोऽवश्यके प्रोक्तलक्षणः ॥ ५१३ ॥ पञ्चधा तु विधिः
प्रोक्तो जपसम्पूर्णकारकः ॥ आद्यः कल्पः प्रतिदिनमामध्याह्नं जपं चरेत् ॥

॥ ५१४ ॥ तद्दशांशेन कल्पोक्तद्रव्यैर्होमं प्रकल्पयेत् ॥ तर्प्पणं मार्जनं कृत्वा तथा ब्राह्मणभोजनम् ॥ ५१५ ॥ तस्य दशांशतश्चायं प्रथमः कल्प ईरितः ॥ अयं द्वितीयः कल्पस्तु लक्षमेकं जपं चरेत् ॥ ५१६ ॥ होमादिकं तस्य कृत्वाग्निमलक्षं समारभेत् ॥ अयं तृतीयः कल्पस्तु सम्पूर्णं जपमाचरेत् ॥ ५१७ ॥ पूर्णे होमे तर्प्पणादि पूर्वमेवाचरेदिति ॥ चतुर्थस्तु तथा कल्पो दरिद्रैर्द्विगुणो जपः ॥ ५१८ ॥ होमाद्यभावे कर्त्तव्यस्त्र्यादिनिम्नो नृपादिकैः ॥ पञ्चमस्तु तथा कल्पो यस्य देवस्य यत्प्रियम् ॥ ५१९ ॥ तदेव द्विगुणं कार्य्यं शीघ्रं दैवततुष्टये ॥ जपप्रियास्सर्वदेव्यो वाममार्गे बलिप्रियाः ॥ ५२० ॥ होमप्रियो महादेवो भास्करस्तर्प्पणप्रियः ॥ मार्ज्जनं तु गणेशस्य विष्णोर्ब्राह्मणभोजनम् ॥ ५२१ ॥ प्रायश्चित्तं तु न कृतं तदा शुद्धो भवेद् द्विजः ॥ पुरश्चर्य्याचतुष्केण त्रिद्व्याद्यैः क्षत्रियादयः ॥ ५२२ ॥ अथवान्यप्रकारेण पुरश्चरणमुच्यते ॥ गृहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्वमुपोषितः ॥ ५२३ ॥ नद्यां समुद्रगामिन्यां नाभिमात्रे जले स्थितः ॥ स्पर्शादिमुक्तिपर्य्यन्तं जपेन्मंत्रं समाहितः ॥ ५२४ ॥ तावत्कालं जपेदित्थं ततो होमादिकं चरेत् ॥ ब्राह्मणान्भोजयेत्पश्चात्पुरश्चर्य्यासमन्त्विदम् ॥ ५२५ ॥ प्रायश्चित्तं प्रयोगस्य प्रत्यवायस्य नाशनम् ॥ येषां जपे च होमेच सङ्ख्या तन्त्रेषु नोदिता ॥ ॥ ५२६ ॥ तत्र चेयं पुरश्चर्य्या सर्वतन्त्रेषु गोपिता ॥ वाममार्गीय मन्त्राणामेवमेवान्यदुच्यते ॥ ५२७ ॥ कृष्णाष्टमीं समारभ्य यावत्कृष्णचतुर्दशी ॥ देवं ध्यात्वा जपेन्मन्त्रमयुतानां चतुष्टयम् ॥ ५२८ ॥ दशांशं होमयेत्पश्चात्तर्प्पयेदभिषेचयेत् ॥ असिद्धत्वाद्गुरोर्देवाः शिष्यसिद्धिर्न जायते ॥ ५२९ ॥ तदोपायं प्रकुर्य्याद्यत्तद्गोप्यमधुनोच्यते ॥ अनुलोमविलोमेन बिन्दुमन्मातृकाक्षरैः ॥ ५३० ॥ जपेत्सम्पुटितं मन्त्रं प्रत्यहं शतसंख्यया ॥ एकमासं ततो होमादिकात्सिद्धो भवेन्मनुः ॥ ५३१ ॥ पुरश्चर्य्योक्तमखिलमाह्निकं च समाचरेत् ॥ एवं वैदिकमन्त्रस्य सिद्धयेत्र च सस्वराः ॥ ५३२ ॥ वर्णा देया बिन्दुयुक्ताः क्रमतश्चोत्क्रमेण च ॥ ह्रस्वदीर्घप्लुतैर्भेदैरइउऋ त्रिधा मताः

१ कार्य इति शेषः ॥

॥ ५३३ ॥ ह्रस्वः प्लुतो लृद्विविध एचापि द्विविधो मतः ॥ दीर्घप्लुतविभेदेन ह्यनुस्वारविसर्गकैः ॥ ५३४ ॥ चतुर्विंशतिराख्याताः स्वरा एवं ञमैः स ह ॥ चत्वारः कादिका वर्णा जिह्वामूलीययुक्च कः ॥ ५३५ ॥ एवं कवर्गो दशधा चाद्याः पञ्चदश स्मृताः ॥ उपध्मानीयसंयुक्तः पकारस्तेन तत्र षट् ॥ ५३६ ॥ याद्यष्टावपि सम्प्रोक्ता यज्ञे वेदे तु मातृकाः ॥ ळक्षौ द्वावधिकौ ऋक्षु[1] क्षोधिकोऽथर्वणि[2] स्मृतः ॥ ५३७ ॥ जपश्चाष्टोत्तरशतं प्रत्यहं मासमात्रकम् ॥ अनध्यायान्वर्जयित्वा चत्वारिंशद्दिनं तथा ॥ ५३८ ॥ होमादिसकलं प्राप्य नित्यमेव प्रकल्पयेत् ॥ क्षुद्रदैवतमन्त्रं तु भूतलिप्या पुटीकुरु ॥ ५३९ ॥ क्रमोत्क्रमाच्छतावृत्तिं कुर्य्यात्सिद्धिस्तु मासतः ॥ अचो[3] हयवरला आद्यन्तिमद्विचतुर्थकम् ॥ ५४० ॥ तृतीयं च क्रमेणैव वर्गाणामक्षरं पठेत् ॥ ऊष्मत्रयं ततश्चैवं द्विचत्वारिंशदक्षरैः ॥ ५४१ ॥ इत्युग्रदैवते जाप्य स्त्वष्टोत्तरसहस्रकः ॥ त्रिकालं गन्धपुष्पाद्यैर्निशीथे परतः पुनः ॥ ५४२ ॥ षण्मासं कौलिकाद्यैश्चेदार्चिता सुप्रसीदति ॥ अयोग्यैर्गुरुतो लब्धाचार्य्यादिस्थानमाश्रितैः ॥५४३॥ उद्दशाद्वा पुरश्चर्य्या कर्त्तव्येत्युच्यते न हि ॥ राज्ञां भाग्यवतो वापि सुकुमारस्य वा यथा ॥ ५४४ ॥ सिद्धिर्भवेत्तथा वक्ष्ये वर्णौषधिपुरस्क्रियाम् ॥ सप्तधा सा परिज्ञेया वर्णमासैस्तु सिद्धिदा ॥ ५४५॥ मन्त्रवर्णौषधीकाष्ठैरचयेद्गुटिकाः शुभाः ॥ वर्णक्रमेण ताः प्रोक्ता अनुलोमविलोमतः ॥ ५४६ ॥ मूलादिभ्यश्च बहुशः कर्त्तव्या मणयो यथा ॥ सर्प्पद्वयाकृतिर्माला भवेन्नित्यं ततो जपेत् ॥ ५४७ ॥ मालाया मणिसङ्ख्याकः प्रथमोयं जपः स्मृतः ॥ सर्वे समाना मणयः प्रोतव्याः सार्णसूत्रकैः ॥ ॥ ५४८ ॥ कण्ठे धार्य्या कण्ठमाला नित्यमेष द्वितीयकः ॥ तथैव राजते सूत्रे ये ह्यताः पारिपूजयेत् ॥ ५४९॥ तद्देवकल्पमार्गेण प्रक्रमोयं तृतीयकः ॥ वर्णौषधीनां क्वाथेन नित्यं स्नानं चतुर्थकः ॥ ५५० ॥ वर्णौषधिजलादिभ्यो गोघृतेन तु पञ्चमः ॥ तच्चूर्णो द्वर्त्तनंकुर्य्यादेष षष्ठः प्रकीर्तितः ॥ ५५१ ॥

---

१ ऋग्वेदेषु । २ अथर्वणि । ३ अं इं उं ऋं लृं एं ऐं ओं औं हं यं वं रं लं कं ङं खं घं गं चं ञं छं झं जं टं णं ठं ढं डं तं नं थं धं दं पं मं फं भं बं शं षं सं ।

तद्भस्मधारणं नित्यं कुर्य्यादिति तु सत्तमः ॥ अलब्देपाङ्कुरोद्वेषात्स्त्रीद्वेषाच्चेन्न[1] जायते ॥ ५५२ ॥ शापतो वा कीलितत्वात्तत्रोपायाष्टकं भवेत् ॥ सन्तापाप्यायने द्रावो बोधनं च वशीकृतिः ॥ ५५३ ॥ पीडनं पोषशोषौ च दहनं तत्क्रियोच्यते ॥ भूर्ज्जपत्रं समानीय पद्ममष्टदलं लिखेत् ॥ ५५४ ॥ अष्टगन्धेन देवस्य रोचनाचन्दनेन वा ॥ साधकस्य तु नामार्णैर्मन्त्रं सन्दर्भितं लिखेत् ॥ ५५५ ॥ यावद्द्वयोः समाप्तिः स्यात्तस्य चाद्यन्तयोर्लिखेत् ॥ तारादिकं साधकस्य नामाथाष्टदलेषु च ॥ ५५६ ॥ द्वौद्वौ लेख्यौ स्वरौ तत्र सम्यग्ध्यायन्[2]सुधात्मकम् ॥ तत्संवेष्ट्य मृदा सम्यग्वेष्टयेद्ब्राह्मणादिकः ॥ ॥ ५५७ ॥ शुक्लादिवर्णया पश्चात्सद्वस्त्रेण च वेष्टयेत् ॥ क्षिपेत्त्रिमधुरे तत्तु मृण्मये लघुभाजने ॥ ५५८ ॥ क्षीरपूर्णे नवे कुम्भे तत्क्षिपेल्लघुभाजनम् ॥ अग्निसंस्थापनं कृत्वा सन्निधौ तस्य तं घटम् ॥ ५५९ ॥ संस्थापयेत्त्रिमधुरै-र्मूलमन्त्रेण होमयेत् ॥ अष्टाधिकसहस्रं तु सम्यक्तं कलशं क्षिपेत् ॥ ॥ ५६० ॥ होमं समाप्य तं कुम्भं निःक्षिप्य च जलाशये ॥ स्वगुरुं ब्राह्मणांश्चान्नैस्तोषयेद्दक्षिणादिभिः ॥ ५६१ ॥ सन्तापाप्यायनं चैतदुक्तं सिद्धिर्न चेद्भवेत् ॥ द्रावणं तु तदा कुर्य्यात्तत्प्रकार इहोच्यते ॥ ५६२ ॥ वंबीजेन ग्रन्थयित्वा भूर्जपत्रे लिखेन्मनुम् ॥ उशीररोचनाभ्याञ्च शिलाकर्पूरकुंकुमैः ॥ ५६३ ॥ क्षीराज्यमधुतोयानां मध्ये तं लिखितं क्षिपेत् ॥ पूजनाच्च जपाद्धोमाद्द्रावितः फलदो भवेत् ॥ ५६४ ॥ द्रावितोपि न सिद्धश्चेद्बोधनं तस्य कारयेत् ॥ वाग्भवेन[3] च बीजेन सम्पुटीकृत्य तं जपेत् ॥ ५६५ ॥ एवं बुद्धो भवेत्सिद्धो नोचेत्कुर्य्याद्वशीकृतिम् ॥ कुचन्दनं महादारु हरिद्रा च मनःशिला ॥ ५६६ ॥ एतैस्तु लिखितो मन्त्रो भूर्जपत्रे सुशोभने ॥ कण्ठे धृतो भवेद्वश्यो नो चेत्कुर्य्यात्प्रपीडनम् ॥ ५६७ ॥ अनुदात्तस्वरेणाद्यमुदात्तेन द्वितीयकम् ॥ तृतीयमनुदात्तेन पठेत्तुर्य्यमुदात्ततः ॥ ॥ ५६८ ॥ एवं पदानि सर्वाणि पठेन्मन्त्रस्य साधकः ॥ अनुदात्तपदोच्चारे देवं ध्यायेदधःस्थितम् ॥ ५६९ ॥ ऊर्ध्वंस्थितमुदात्तस्योच्चारेष्टाधिसहस्रकम् ॥ जपे

१ सिद्धिरिति शेषः । २ वंबीजम् । ३ ऐँबीजेन ।

न्मन्त्रं ततो भूर्ज्जे भानुदुग्धेन लेखयेत् ॥ ५७० ॥ मन्त्रं तमाक्रमेद्वामपादेनाथ च होमयेत् ॥ अष्टोत्तरशतं मन्त्रः पीडितः स प्रसीदति ॥ ५७१ ॥ न सिद्धश्चेत्तदा पोष्यः प्रोच्यते तत्क्रियाधुना ॥ सोम्बीजपुटितं मन्त्रं लिखेद्भूर्ज्जस्य पत्रके ॥ ५७२ ॥ रोचनाकुंकुमाभ्याञ्च धारयेद्दधिदुग्धयोः ॥ इदं पोषणमित्युक्तमथ शोषणमुच्यते ॥ ५७३ ॥ यज्ञस्य भस्मनालेख्य वायुबीजविदर्भितम् ॥ भूर्ज्जपत्रे स्वेष्टमन्त्रं तत्कण्ठे धारयेदिति ॥ ५७४ ॥ एतच्छोषणमित्युक्तं दहनं प्रोच्यतेऽधुना ॥ पृथक्पृथक्च मन्त्राणां चतुर्दिक्षु समावृतान् ॥ ५७५ ॥ रंबीजेन पलाशस्य बीजतैलेन संलिखेत् ॥ भूर्ज्जपत्रेथ तद्धार्य्यं कण्ठे दाहक्रिया त्वियम् ॥ ५७६ ॥ अथ शाबरमन्त्राणां पुरश्चरणमुच्यते ॥ कामरूपाख्यदेशे तु कामाक्षा यत्र देवता ॥ ५७७ ॥ कामशैलोऽस्ति यत्रासौ कामपीठस्स उच्यते ॥ तत्र संलेख्य मन्त्रं हि वंशोपरि यथाक्रमम् ॥ ५७८ ॥ गुरुणा वाचनीयः स स्वयं पश्चात्पठेन्मनुम् ॥ गुरोरभावे तस्यैव मूले शैलस्य पर्वणि ॥ ५७९ ॥लिखित्वा प्रपठेन्मन्त्रं कामपीठं गुरुर्मतः ॥ अथ वा योगिनीशैले दक्षिणस्यां दिशि ध्रुवम् ॥ ५८० ॥ योगाम्बा यत्र देवी सा लिखित्वात्र पठेन्मनुम् ॥ ज्वालामुखीसमीपे वा हिंगुलाजसमीपतः ॥ ५८१ ॥ लिखित्वा प्रपठेन्मन्त्रं नान्यथैव प्रसिद्ध्यति ॥ मुख्यतः श्रीसमीपे तु कामपीठे मनोर्ग्रहः ॥ ५८२ ॥ अथवा सर्वदेशेषु मन्त्रग्रहणमुच्यते ॥ तालपत्रे लिखेन्मन्त्रं पूर्णकुम्भे निधापयेत् ॥ ५८३॥ भास्करन्तु गुरुन्ध्यात्वा वाचयेन्निर्गुरू रविः ॥ अथ तान्त्रिकमन्त्राणां दीक्षां शृणु गुरुं विना॥५८४॥ शुक्लपक्षे त्रयोदश्यां चन्द्रताराबलान्विते ॥ गत्वा च दाक्षिणामूर्त्तेः सन्निधौ पूजयेच्च तम् ॥ ५८५ ॥ कलशस्थापनं कृत्वा तदग्रे तु परिक्षिपेत् ॥ तालपत्रे लिखित्वाथ मन्त्रं देवं च पूजयेत् ॥ ५८६ ॥ देवो गुरुरिति ध्यात्वा मन्त्रं व्यक्तं तु वाचयेत् ॥ अष्टोत्तरशतं चैव मन्त्रग्रहणमुच्यते ॥ ५८७ ॥ एतत्तत्वं समाख्यातं गोप्यं मातरि जारवत् ॥ गुरौ लोभादयो दोषास्तस्मादुद्विजते जनः॥अतः शास्त्रं गुरुं कृत्वा दक्षिणामूर्तितो मनुः ॥ ५८८ ॥ एवं सिद्धे मनौ देवि मोक्षमार्गनिबन्धकाः ॥ तपःक्षयकरा-

श्चैव जायन्ते नैकसिद्धयः ॥ ५८९ ॥ स्वल्पसिद्धौ निमग्नश्चेन्न जायन्ते णिमादयः ॥ अणिमादिषु मग्नश्चेन्मोक्षवार्तातिदुर्लभा ॥ ५९० ॥ अल्पं तपः क्षणान्नश्येन्मध्यमं चापि गर्वतः ॥ सिद्धिद्वारमिदं तस्य मया लक्षणमुच्यते ॥ ५९१ ॥ स्वप्ने वाक्षिसमक्षं वा आश्चर्य्यमतिहर्षदम् ॥ अकास्माद्यदि जायेत न ख्यातव्यं गुरुं विना ॥ ५९२ ॥ प्रकाशनीयं न क्वापि ऐहिकीं सिद्धिमिच्छता ॥ प्रकाशयति यो मोहादौत्सुक्यान्मन्त्रजं सुखम् ॥ निकटस्थाश्च तास्तस्य सिद्धयो यान्ति दूरतः ॥ ५९३ ॥ आभवन्ति च दुःखानि शोकाश्च विविधा अपि ॥ अल्पाशनं स्वल्पनिद्रा सदा चित्तप्रसन्नता ॥ ५९४ ॥ प्रकाशयुक्शरीरं च वाक्यं सत्यं प्रजायते ॥ मन्त्राराधनशक्तस्य प्रथमं वत्सरत्रयम् ॥ ५९५ ॥ जायन्ते बहवो विघ्ना नियमत्यागहेतवः ॥ नोद्विग्नं साधको याति कर्म्मणा मनसा यदि ॥ ५९६ ॥ततो वर्षत्रयादूर्ध्वं राजानश्च महीभृतः ॥ प्रार्थयन्तेनुरोधेन गर्विता अपि मानिनः ॥ ५९७ ॥ प्रसादः क्रियतां नाथ ममोद्धरणकारणम् ॥ प्रज्वलन्तं प्रपश्यन्ति तेजसा विभवेन च ॥ ५९८ ॥ अतस्ते मुनिशार्दूलं विस्तरं वक्तुमक्षमाः ॥ नवमाद्वत्सरादूर्ध्वं स्वयं सिद्ध्यति मन्त्रराट् ॥ ५९९ ॥ वाङ्मनोरथसंसिद्धो दाता भोक्ता ह्ययाचकः ॥ अथ वक्ष्ये दरिद्रस्य मन्त्रसिद्धिर्यथा भवेत ॥ ६०० ॥ होमकर्म्मण्यशक्तस्य विप्रस्य द्विगुणो जपः ॥ इतरेषान्तु वर्णानां त्रिगुणादिर्विधीयते ॥ ६०१ ॥ होमाद्द्विगुणजाप्येन सम्पूर्णं तर्प्पणं भवेत् ॥ अकृते मार्ज्जने प्रोक्तस्तर्प्पणाद्द्विगुणो जपः ॥ ६०२ ॥ प्रत्याम्नायो ब्रह्मभोज्ये न कुत्रापि श्रुतौ श्रुतः ॥ सर्वथा भोजयेद्विप्रान्कृतसाङ्गत्वसिद्धये ॥ ६०३ ॥ विप्राराधनमात्रेण व्यङ्गं साङ्गं प्रजायते ॥ यानि यानि च कर्म्माणि हीयन्ते द्विजभोजनैः ॥ निरर्थकानि तानि स्युर्बीजान्यूषरगानि च॥ ६०४॥ गुरुं सन्तोषयेत्पश्चाद्गोहिरण्याम्बरादिभिः ॥ गुरौ तुष्टे हि सन्तुष्टो मन्त्रः सिद्ध्यति मन्त्रिणः॥ ६०५॥ यदृच्छया श्रुतो मन्त्रश्छद्मनापि बलेनवा॥ परेरितोवा गाथावा तज्जपो नैव चार्थकृत्॥ ६०६॥ पुस्तके लिखितान्मन्त्रानालोक्य प्रजपन्ति ये॥ ब्रह्महत्यासमं तेषां पातकं परिकीर्तितम्॥ ६०७॥

अनेककोटिं मन्त्राणां चिन्तयन्नाकुलः कविः ॥ मन्त्रो गुरुमुखात्प्राप्त एकः स्यात्सर्वसिद्धिदः ॥६०८॥ कुलप्राप्तः कुलाचारो मानितः सर्वसाधकैः ॥ सिद्धिलक्षणसम्पूर्णः प्राणिमात्रस्य यस्समः ॥ ६०९ ॥ मित्रं न शत्रवो यस्य सर्वमार्गप्रदर्शकः ॥ स एव तु गुरुः कार्य्यो नान्यो वामे कदाचन ॥६१०॥ इह लोके परत्रापि कौलः पतति चान्यथा ॥ सिद्धेरभावे दक्षे तु पापहानिः प्रजायते ॥६११॥ सेवनान्मचतुष्कस्य[1] वामे तु निरयः पुरः ॥ इत्थं प्रोक्ता पुरश्चर्य्या किमन्यच्छ्रोतुमिच्छथ ॥ ६१२ ॥

इति श्रीमहामायामहाकालानुमते मेरुतन्त्रे शिवप्रणीते पुरश्चर्य्याप्रकाशः षष्ठः॥६॥

---

श्रीदेव्युवाच ॥ अस्मिन्घोरे कलियुगे स्वल्पसिद्ध्यातिदर्पिताः ॥ भविष्यन्ति जनास्तेषां स्थिरा सिद्धिः कथं भवेत् ॥ १ ॥ अग्रे वंशादिवृद्धिश्च वंशे देवकृपा तथा ॥ मोक्षः कथं साधकस्य तथा वद कृपानिधे ॥ २ ॥ ईश्वर उवाच ॥ अहङ्कारपरित्यागात्काम्यकर्म्मविवर्ज्जनात् ॥ स्वधर्म्माचरणात्सर्वमनायासेन जायते ॥३॥ एतत्कर्त्तुमशक्तश्चेन्निषिद्धं तु परित्यजेत् ॥ विहितं कर्म्म कुर्वीत सिद्धिः स्यात्पुत्रपौत्रिकी ॥ ४ ॥ तत्रादौ कथयिष्यामि निषिद्धानि शृणु प्रिये ॥ देवस्थाने गुरुस्थाने श्मशाने च चतुष्पथे ॥ पादुकासनविण्मूत्रमैथुनादि विवर्ज्जयेत् ॥५॥ प्रमत्तामन्त्यजां कन्यां पुष्पितांपतितस्तनीम् ॥ विरूपां मुक्तकेशीं च कामार्त्तां च न निन्दयेत् ॥ ६ ॥ कन्यायोनिं पशुक्रीडां दिग्वस्त्रां प्रकटस्तनीम् ॥ नालोकयेत्परद्रव्यं परदारांश्च वर्ज्जयेत् ॥ ७ ॥ धान्यगोगुरुदेवाग्निकोशपुस्तकसम्मुखम् ॥ नैव प्रसारयेत्पादौ न चैतानि विलङ्घयेत् ॥ ८ ॥ आलस्यमदसम्मोहशापपैशुन्यविग्रहान्॥असूयामात्मसम्मानं परनिन्दां च वर्ज्जयेत् ॥९॥ लिङ्गिनं व्रतिनं विप्रं वेदवेदाङ्गसंहिताः ॥ पुराणागमशास्त्राणि मनसापि न दूषयेत् ॥ १० ॥ युगं मुसलमश्मानं दाम चुल्लीमुलूखलम्॥शूर्प्पं सम्मार्जनीं दण्डं ध्वजं वै तुर्य्यमायुधम्॥ ॥११॥ कलशं चामरं छत्रं दर्प्पणं भूषणं तथा ॥ भोगयोग्यानि चान्यानि

---

१ चतुर्मकारादिसेवनात् ॥

यागद्रव्याणि यानि च॥ १२॥ महास्थानेषु वस्तूनि यानि वा देवतालये॥ दिव्योक्तानि च वस्तूनि भूताविष्टानि यानि वै॥ लङ्घयेज्जातु नैतानि न चैतानि पदा स्पृशेत॥ १३॥ या गोष्ठी लोकविद्विष्टा या च स्वैरविसर्प्पिणी॥ परहिंसात्मिका या च न तामवतरेत्क्वचित् ॥ १४॥ प्रतिग्रहान्न गृह्णीयादात्मभोगविधित्सया॥ देवतातिथिपूजार्थं दानतोप्यर्ज्जयेद्धनम् ॥ १५ ॥ बिभीतककरञ्जार्कस्नुही-छायां न संश्रयेत् ॥ स्तम्भदीपमनुष्याणामन्येषां प्राणिनां तथा ॥ १६ ॥ नखाग्रकेशनिर्धूतस्नानवस्त्रपटोदकम्॥ एतत्स्पर्शं त्यजेद्दूरं खरश्वाजरजस्तथा॥ ॥ १७ ॥ लिङ्गस्थानं च निर्माल्यं नद्यां नैव च लङ्घयेत् ॥ नद्यां प्रवाहयेत्सर्वं दद्याद्वा शिवदीक्षिते ॥ १८ ॥ न लङ्घयेद्गुरोराज्ञामुत्तरं न वदेत्तथा॥ अप्रियं च तथा काले कामं क्रोधं विशेषतः॥ १९॥ नाप्रच्छन्नमुखो ब्रूयाद्गुरोरग्रे कदाचन ॥ अद्वैतं देवपूजां च गुरोरग्रे परित्यजेत् ॥ २० ॥ पादुकायोग-पट्टादिगुरुचिह्नानि साधकः ॥ न लङ्घयेत्स्पृशेन्नैव तत्समक्षं न धारयेत ॥ ॥ २१ ॥ पर्य्यङ्कशयनं तद्वत्तथा पादप्रसर्प्पणम् ॥ अङ्गभङ्गं च लीलां च न कुर्य्याद्गुरुसन्निधौ ॥२२॥ छायां न लङ्घयेत्तस्य गच्छेन्न पुरतो गुरोः ॥ न कुर्वीत गुरोरग्रे प्रभावं स्वस्य शिष्यकः ॥ २३ ॥ अहङ्कारं न कुर्वीत नोल्बणं धारयेद्वपुः ॥ प्रगुरोः सन्निधौ नैव स्वगुरुं प्रणमेद्बुधः ॥ २४ ॥ नमस्काराय चोद्युक्तं गुरुर्दृष्ट्वा निवारयेत् ॥ न नियोगं गुरोर्दद्यात्त्वमित्यादि न वा वदेत् ॥ २५ ॥ श्रीनाथदेवस्वामीति बोधने भाषणे वदेत् ॥ जातायामापदि क्वापि शपथं गुरुसञ्ज्ञितम् ॥२६॥ न कुर्य्याच्छिवसञ्ज्ञं वा प्रमादेन क्रियेत चेत् ॥ तदर्थं निर्वहेद्यत्नादन्ते पूजाजपाहुतीः ॥ २७ ॥ अनिर्वहंस्तु कार्य्यं तद्यदर्थं शपथः कृतः॥ प्रायश्चित्तं मनोः कुर्य्यान्मूलस्यैव सहस्रकम् ॥ ॥ २८ ॥ लोकोद्वेगकरी या च या च मर्मनिकृन्तिनी ॥ स्थित्युद्वेगकरी या च तां गिरं नैव भाषयेत् ॥ २९ ॥ अरण्यमुज्ज्वलमपि मनसापि समीप्सितम् ॥ लोकविद्वेषणं वेषं न गृह्णीयात्कदाचन ॥ ३० ॥ तन्त्रोक्ता-

---

यत्नत इति पाठान्तरम् ॥

न्यसमाचारानैहिकामुष्मिकांश्च तान् ॥ आचरन्नादराच्छान्तिं दीक्षितः सोधिगच्छति ॥ ३१ ॥ सामान्यसिद्धौ रक्षार्थं परेषां न कदाचन ॥ प्रयोक्तव्यः स्वस्य मन्त्रो महापद्यपि साधकैः ॥ ३२ ॥ गुरोरुद्भूतवाक्येन भयात्स्वार्थेन वा पुनः ॥ कृपया परया कुर्य्याद्दिनाथेषु दयां सदा ॥ ३३ ॥ यत्रयत्र पुरीष्वेव मात्सर्य्यं श्रूयते गुरोः ॥ तत्रत्र न वस्तव्यं प्रयायात्संस्मरन्हृदि ॥ ॥ ३४ ॥ विष्णोः शिवस्य शाक्तस्य वेदस्यार्कगणेशयोः ॥ भवान्या यत्र निन्दा तु तस्मिन्स्थाने न वै वसेत् ॥ ३५ ॥ कर्म्मणा मनसा वाचा नहीच्छेत्परदारकान् ॥ वक्तव्यं च वचः सत्यं सौशील्यं समतां धृतिम् ॥ ३६ ॥ शान्तिं दयामवस्थां च दिव्यां शान्तिं च सर्वदा ॥ गमनागमने कुर्य्यात्प्रणम्य गुरुपादुके ॥ ३७ ॥ पश्चात्पादेन निर्गच्छेत्प्रणम्य च गुरोर्गृहात् ॥ मलयुक्तादिरहितः केशश्मश्रुविलुञ्चनात् ॥ ३८ ॥ सोमसूर्य्योत्तरस्थां चगवाश्वत्थादिमध्यगाम् ॥ भावयेद्देवतां विष्णुं गुरुविप्रशरीरगाम् ॥ ३९ ॥ सेवेत मातापितरौ विष्णुं तद्वत्प्रियातिथिम् ॥ ज्ञेयो विश्वाश्रयो विष्णुरात्मा ज्ञेयश्च विष्णुवत् ॥ ४० ॥ स्वानुष्ठाने तु यत्कर्म्म सर्वं सर्वस्य गोपयेत् ॥ मन्त्रगुप्तिश्च कर्त्तव्या सततं मन्त्रसिद्धये ॥ ४१ ॥ गुरोर्नाम न गृह्णीयाद्देदावश्यके त्विति ॥ ॐश्रीपूर्वं गुरोर्नाम देवनाम तदुत्तरम् ॥ ४२ ॥ पादशब्दसमेतं तु कृत्वा मूर्ध्न्यञ्जलिं पुनः ॥ नमोऽन्तं च वदेन्नाम तिथ्यर्णं च हरेर्मम ॥ ४३ ॥ नित्यं नैमित्तिकं काम्यं सापेक्षं पूर्वपूर्वतः ॥ अन्यथा भजनं देवि करोत्यापत्परंपराम् ॥ ४४ ॥ प्रत्यहं क्रियते पूजा सा तु नित्या प्रकीर्त्तिता ॥ नैमित्तिकापि तत्संख्या पञ्चतुल्या परे दिने॥ ४५ ॥अभावेपि कदाचित्स्यान्नित्ये नैमित्तिका त्वियम् ॥ शुद्धा नैमित्तिका पूजा प्रोक्ता विंशतिभेदिका ॥ ४६ ॥ पर्वाणि च महायोगा व्यतीपातः सवैधृतिः ॥ मन्वादयो युगाद्याश्च यदङ्गं देवताभवम् ॥ ४७ ॥ पुष्यश्च रविवारश्च त्रिगुरूणां स्वकीयकम् ॥ जन्माहश्चापि दीक्षाया दिवसं नवरात्रकम् ॥ ४८ ॥ गन्डान्तान्यथ पूजाया आवश्यकदिनं शृणु ॥ विशेषेण कृता पूजा यस्मिन्भवति निष्कला ॥ ४९ ॥ दशिकागमने चैव वीरस्वजनदर्शने ॥ चन्द्रसूर्य्योपरागे च लाभे होमे महो-

त्सवे ॥ ५० ॥ पीठे पीठगमे पुण्ये तीर्थदैवतदर्शने ॥ रोगेष्वापत्सु दोषेषु दुस्सङ्गे दुर्निमित्तके ॥ ५१ ॥ यथा कालो यथा श्रद्धा यथा द्रव्यं यथोचितम् ॥ यथाबलं यथा देशस्तथा पूजां समाचरेत् ॥ ५२ ॥ नैमित्तिकार्चने कालाः प्रातर्मध्याह्नसम्भवाः ॥ प्रदोषे चापि विघ्नेशरविविष्ण्वीशशक्तयः ॥ ॥ ५३ ॥ दमनेन च यो देवं वर्षमध्ये न पूजयेत् ॥ तस्य वर्षकृतापूजाफलं गृह्णाति कामराट् ॥ ५४ ॥ चैत्रादयस्त्रयो मासाः प्रशस्ताः पूर्वपूर्वतः ॥ अष्टमी नवमी पौर्णमास्यमा च चतुर्दशी ॥ ५५ ॥ एतन्मध्ये तु कस्मिंश्चित्प्राग्दिने तु प्रदोषके॥ कृतनित्यक्रियश्शुद्धो युक्तः सामयिकैर्जनैः ॥५६॥ दमनस्य समीपन्तु गत्वासन उपाविशेत् ॥ प्राणायामत्रयं कृत्वा ऋष्यादीन्विन्यसेत्ततः ॥ ५७ ॥ कामभस्मसमुद्भूत रविपोष्य जलोद्भव ॥ ऋषिगन्धर्वदेवादिमोहनाय नमोस्तु ते ॥ ५८ ॥ सांवत्सरिकपूजायाः परिपूर्णत्वसिद्धये ॥ दमन त्वं समायाहि क्षमस्व च नमोस्तु ते ॥ ५९ ॥ शिवप्रसादसम्भूत ह्यत्र सन्निहितो भव॥शिवकार्य्यं समुत्थेय नेतव्योसि शिवाज्ञया॥६०॥ एवं दमनमामन्त्र्य कामदेवं तथा रतिम् ॥ प्रीतिं च पूजयेत्तत्र तत्तन्मन्त्रेण साधकः ॥ ६१ ॥ तारः क्लीं कामदेवाय नमश्चेति नवाक्षरः ॥ श्रींश्रींश्रींक्रोमिति प्रोच्य रत्यै हृच्चाष्टवर्णकः॥६२॥ रतिस्थाने प्रीतिपदादयमप्यष्टवर्णकः॥ ततः स्वगृहमागच्छेद्द्वितीये दिवसे पुनः ॥ ६३ ॥ कृतनित्यक्रियस्स्वेष्टैर्युक्तो दमनमाव्रजेत् ॥ उत्पाटयेच्छेदयेद्वा स्वमूलेनास्त्रमन्त्रतः ॥ ६४ ॥ गृहमानीय तोयेन मन्त्रेणानेन सेचयेत् ॥ ॐ अघोरे ऐं च ॐ च घोरे ह्रीमिति कीर्त्तयेत् ॥ ६५ ॥ घोरघोरतरे श्रीं च सर्वतः सर्वसर्वेभ्यः ॥ नमस्ते रुद्ररूपेभ्यो ह्रींश्रीमिति मनुः स्मृतः ॥ ६६ ॥ चतुस्त्रिंशदक्षरात्मा दमने तं निधापयेत् ॥ पूजास्थाने च पीठादौ नवांशांस्तस्य कारयेत् ॥ ६७ ॥ कृत्वा चाष्टदलं पद्मं तत्र भागान्प्रविन्यसेत् ॥ चन्दनागुरुकर्पूरचन्दनैर्लेपयेच्च तान् ॥ ६८ ॥ आनन्देशीबीजवर्णैर्बिन्दुपद्भिर्नमोन्तकैः ॥ पृथक्पूज्यं तु

---

१ ॐक्लींकामदेवाय नमः ॥ २ श्रीं श्रीं श्रीं क्रों रत्यै नमः ॥

तद्बीजं जपन्निह क्षमापयेत् ॥६९॥ पूजास्थाने प्रकुर्वीत सर्वतोभद्रमण्डलम् ॥ तस्याष्टदिक्षु संस्थाप्या घटाः स्वर्णादिनिर्मिताः ॥ ७० ॥ मध्ये वा कुम्भमेवैकमशक्तः स्थापयेत्ततः ॥ तत्र स्वासनपूजादियोगपीठान्तमर्चयेत् ॥ ॥ ७१ ॥ तस्य दक्षिणदिग्भागे सिन्दूरेणाष्टपत्रकम् ॥ पद्मं कुर्याद्वृत्तयुग्मवेष्टितं भूपुरेण च ॥ ७२ ॥ पञ्चवर्णरजोभिश्च कर्णिकायामशोककम् ॥ लिखित्वा प्रार्थयित्वा तं पूजयेच्चन्दनादिभिः ॥ ७३ ॥ अशोकाय नमस्तुभ्यं कामस्त्रीशोकनाशक ॥ शोकार्त्तिं हर मे नित्यमानन्दं जनयस्व मे ॥ ७४ ॥ तस्य दक्षिणतस्तादृङ्मण्डले पूजयेत्ततः ॥ वरखड्गधरं कालं पञ्चरङ्गैर्विचित्रितम् ॥ ७५ ॥ त्रुट्यादिप्रलयान्तो यः कालरूपो महाबलः ॥ कलयत्यपि विश्वं यस्तस्मै कालात्मने नमः ॥ ७६ ॥ अशोकस्य ततोधस्तात्त्रिकोणे मण्डल शुभे ॥ मण्डूकादिज्ञानात्मान्तां पीठपूजां समाचरेत् ॥ ७७ ॥ तद्बाह्येष्टदले प्रोक्तं शक्त्यष्टकसमर्चनम् ॥ सौभाग्यां च तथा हृद्यां वृषां चापि धृतिं रतिम् ॥ ७८ ॥ प्रीतिं वासन्तिकीं निर्वाणाख्यां मध्ये तु कामुकाम् ॥ आवाह्य कामदेवं च तद्गायत्र्या तदुत्तरम् ॥ ७९ ॥ कामदेवाय विद्महे पुष्पबाणाय धीमहि ॥ तन्नोनङ्गः प्रचोदयात् ॥ ८० ॥ कृत्वा प्राणप्रतिष्ठान्तं ततो मुद्राः प्रदर्शयेत् ॥ पाशांकुशधनुर्बाणाभिधा ध्यायेत्ततः परम् ॥ ८१ ॥ रक्ताम्बरं रक्तवर्णं रक्तगन्धानुलेपनम् ॥ रक्तमाल्यं च तरुणं वामदक्षिणयोर्युतम् ॥ ८२ ॥ रत्या प्रीत्येक्षुकोदण्डपुष्पबाणमधः करे ॥ ऊर्ध्वे पाशस्ततः पूज्यं पूर्वोक्तमनुभिस्त्रयम् ॥ ८३ ॥ रक्तवस्त्रपरीधाना सर्वाभरणभषिताम् ॥ पद्मद्वयकरां गौरवर्णां ध्यायेद्रतिं शुभाम् ॥ ८४ ॥ श्यामवर्णां रक्तवस्त्रां सर्वाभरणभूषिताम् ॥ ताम्बूलास्यां भजेत्प्रीतिं घटपुष्पलसत्कराम् ॥ ८५ ॥ अग्रे तु कामदेवस्य वसन्तं परिपूजयेत् ॥ सुधाकुम्भं वामहस्ते दक्षिणे कुसुमाकरम् ॥ ८६ ॥ कदम्बवनमध्यस्थं रक्तमाल्यांशुकावृतम् ॥ ध्यायेद्वसन्तं गौराङ्गं सुरूपं लोकमोहनम् ॥ ८७ ॥ वंवसन्ताय हृदयं तस्य सप्ताक्षरो मनुः ॥ पूजाद्यर्थं ततोग्नीशरक्षोवायव्यमध्यतः ॥ ८८ ॥ चतुर्दिक्षु वषड्दीर्घयुगनङ्गस्य बीजकम् ॥ पठित्वा हृदयादीनि षडङ्गानि प्रपूजयेत् ॥ ८९ ॥ तदग्राष्टदले

देवमुखतस्तु प्रदक्षिणम् ॥ कामं भस्मशरीरं चानङ्गमन्मथमेव च ॥ ९० ॥ वसन्तस्य सखायं च स्मरामीक्षुधनुर्धरम् ॥ पुष्पबाणं तदग्रे तु लोकपानायुधानि च ॥ ९१ ॥ ततस्तु कामगायत्र्या यथासंख्यं जपं चरेत् ॥ वसन्तं कामदेवं च श्लोकाभ्यां प्रार्थयेदिति ॥ ९२ ॥ वसन्ताय नमस्तुभ्यं वृक्षगुल्मलताप्रिय ॥ सहस्रसुखसंवाह कामरूप नमोस्तु ते ॥ ९३ ॥ नमोस्तु पुष्पबाणाय जगदानन्दकारिणे ॥ मन्मथाय जगन्नेत्रे रतिप्रीतिप्रियाय च ॥९४ ॥ कामदेवं प्रणम्याथ मूलन्यासं समाचरेत् ॥ अवाहयेन्मध्यकुम्भे देवं साङ्गं च पूजयेत् ॥ ९५ ॥ आवाहितोसि देवेश सद्यः काले मया विभो ॥ कर्त्तव्यं तु यथालाभं पूर्णं पर्व त्वदाज्ञया ॥ ९६ ॥ इति सावरणं देवं दमनैः पूजयेत्ततः ॥ धूपदीपादिकं कृत्वा नित्यहोमं समाचरेत् ॥ ९७ ॥ द्रव्यैस्तु देवकल्पोक्तैर्होमस्तु त्रिगुणो जपात् ॥ पूजाशेषं समाप्याथ प्रार्थयेद्देवतामिति ॥ ९८ ॥ सर्वरूप जगन्नाथ वाञ्छितार्थफलप्रद ॥ हृत्स्थान्पूरय मे देव कामान्कामेश्वरेश्वर ॥ ९९ ॥ एवं सम्प्रार्थ्य देवेशं विसृज्य च गुरुं ततः॥द्रव्याद्यैस्तोषयेद्विप्रान्भोजयेदिति तद्विधिः॥ १००॥ पवित्रनामनागाय वरो दत्तस्तु शम्भुना ॥ पवित्रारोपणं यैस्तु न कृतं तत्फलं तव॥ १०१॥कुर्य्यान्मिथुनसंक्रान्तेस्तुलासंक्रमणावधि ॥ आषाढ उत्तमो मासः श्रावणो मध्यमो भवेत् ॥ १०२ ॥ हीनो भाद्रपदः पक्षः श्वेतः सन्मध्यमोसितः॥ अष्टम्यां च चतुर्थ्यां च चतुर्दश्यां पवित्रकम् ॥ ॥ १०३॥नवम्यामपि कर्त्तव्यं कृतादिषु यथाक्रमम्॥सौवर्णं राजतं ताम्रं कलौ कार्पासकं शुभम् ॥ १०४॥ पट्टजं तु गृहस्थानां वनस्थानां तु वाल्कलम् ॥ पद्मजातं सौगतानां शूद्राणां क्षौममिष्यते ॥ १०५॥ बटूनां दर्भसञ्जातं वैश्यानां तु शणोद्भवम् ॥ मुञ्जजातं व्रतस्थानामाविकं समरैषिणाम् ॥ १०६॥ सरस्तु नवसूत्राणां त्वष्टोत्तरशतैः सरैः ॥ पवित्रं परमं प्रोक्तं तदर्धं मध्यमं स्मृतम् ॥ १०७ ॥ कनिष्ठं सप्तविंशत्या तावदंगुलदीर्घकम् ॥ पूजावरणदेवानां तुल्यानि रचयेद्बुधः ॥ १०८ ॥ षट्त्रिंशांगुलयः श्रेष्ठ चतुर्विंशच्च मध्यमे ॥ द्वादशैव कनिष्ठे स्युरथान्यच्च पवित्रकम् ॥ १०९ ॥ स्कन्धाच्च नाभिपर्य्यन्तं दशग्रन्थिसमन्वितम् ॥ क्रमज्ञानाञ्च शिष्याणां पवित्रं तदुदाहृतम् ॥ ११०॥

अन्येषां स्वेच्छया कुर्य्यात्तनुग्रन्थियुतानि च ॥ ग्रन्थीनां वेष्टनं श्रेष्ठं षड्विंशद्भिश्च तन्तुभिः ॥ १११ ॥ चतुर्विंशतिभिर्मध्यमधमं भानुभिः स्मृतम्॥ग्रन्थयो वर्म्ममन्त्रेण कर्त्तव्याः प्राग्दिने ततः ॥ ११२ ॥ रात्रौ सामयिकैः सार्धं पवित्राणि समानयेत् ॥ पूजास्थानेथ सिन्दूरकुंकुमारक्तचन्दनैः ॥ ११३ ॥ कस्तूरीविधुलाक्षाभिर्गैरिकाद्यैर्विचित्रयेत ॥ ग्रन्थिस्थानेषु संस्थाप्य पीठे तन्नवतन्तुषु ॥ ११४ ॥ देवतानवकम्पूज्यमोंकारश्चन्द्रमास्तथा ॥ वह्निर्ब्रह्मा नागगुरू रविश्चापि शिवाशिवौ ॥११५॥ सर्वे देवाश्चापि पूज्याः शिरोमन्त्रेण मन्त्रयेत् ॥ अभ्युक्षयेच्च हृन्मन्त्रेणास्त्रमन्त्रेण रोधयेत् ॥ ॥ ११६ ॥ तेषां दशग्रन्थिषु च सम्पूज्या दशशक्तयः ॥ क्रिया च पौरुषी वीरा गायत्री चापराजिता ॥ ११७ ॥ विजया च जया मुक्तिः सदाशिवमनोन्मनी ॥ पवित्रेषु ततः पूज्यं मूलमन्त्रैः षडङ्गकम् ॥ ११८ ॥ घटे च विन्यसेदाद्यं पवित्रं च महत्तथा ॥ कृत्वा न्यासादिकं तत्र प्राग्वत्पूजां प्रकल्पयेत् ॥ ११९ ॥ कुम्भे देवं समावाह्य यजेदावरणैः सह ॥ देवस्य मूलमन्त्रेण पवित्रस्य समर्पणम् ॥ १२० ॥ देवतेभ्यः पवित्राणि दीनानाथांश्च तर्पयेत् ॥ दत्त्वा च भूयसीं पश्चात्स्वयम्भुञ्जीत वाग्यतः ॥१२१॥ अतिस्पष्टोत्र सम्प्रोक्तः पवित्रारोपणे विधिः ॥ काम्यकर्म्माणि वक्ष्यामि तत्रादौ शान्तिरुच्यते ॥ १२२ ॥ शान्तिर्नाम मनुष्याणां रोगकृत्यादिनाशनम् ॥ विभज्य षोढाहोरात्रं पञ्चमेंशे तु शान्तिकम् ॥ १२३ ॥ हेमन्ते च प्रकर्त्तव्यं नासाधश्च यदा चलेत् ॥ वायुस्तदा त्वपस्तत्त्वं तस्मिञ्छान्तिकमाचरेत् ॥ १२४ ॥ श्वेतवर्णेन निर्माय चतुरस्रं तु मण्डलम्॥पूजयेच्चन्दनाद्यैर्वबीजेन शत्रुशान्तिके ॥१२५॥उत्तराभिमुखो भूत्वा शान्तिकन्तु समाचरेत्॥शान्तिकादौ रतिःपूज्या पद्ममुद्रां च दर्शयेत् ॥१२६॥बद्ध्वा पद्मासनं स्थेयं नमोन्तः शान्तिके मनुः ॥

१ द्वादशसंख्याभिः ॥ २ कर्पूरः ॥ ३ स्वाहेति मंत्रेण । ४ पद्ममुद्रा करतले त्वंगुष्ठौ मिलितौ यदा । हस्तौ तु सम्मुखौ कुर्य्यात्संहता उन्नतांगली: ॥ ५ पद्मासनलक्षणं प्रथममुक्तम् ॥ वामजानुनि दक्षिणपदं दक्षिणजानुनि वामपदं निदध्यादिति ॥

शान्तौ कुशांसनं शस्तं होमयेन्मृगमुद्रया ॥१२७॥ मुक्त्वा कनिष्ठिकां यत्र हूयते सा मृगी भवेत् ॥ त्रिपूत्तरासु पूर्वासु शान्तिकं स्याद्विजन्मसु ॥१२८॥ अथ वश्यं प्रवक्ष्यामि स्वायत्तीकरणं तु तत् ॥ देवरक्षोराजलोकसर्प्पस्त्री-हयहस्तिनाम् ॥१२९॥ प्रथमेंशे वश्यकर्म्म वसन्ते च प्रसिध्यति ॥ नासोर्ध्वे वहते वायुरग्नितत्त्वं वहेत्तदा ॥ १३० ॥ वश्यं कर्म्म त्रिकोणेन रंवीजेनाग्नि-पूजनम् ॥ रक्तवर्णेन निर्माय वश्यम्पूर्वमुखश्चरेत् ॥ १३१ ॥ वाणीं सम्पूज-येद्वश्ये पाशमुद्राम्प्रदर्शयेत् ॥ स्वस्तिकासनमारुह्य स्वाहान्तं मन्त्रमुच्चरेत् ॥ ॥ १३२ ॥ छागलं चर्म्म वश्ये स्याद्धोमयेन्मृगमुद्रया ॥ रक्तद्रव्यैरत्र होमो ध्यानमारक्तकं मतम् ॥१३३॥ मृगान्त्यचित्रामित्रर्क्षविशाखाकृत्तिकासु तु ॥ अथ स्तम्भम्प्रवक्ष्यामि तदुद्योगनिवारणम् ॥१३४॥ शिशिरे स्तम्भनम्प्रोक्तं षष्ठाङ्के तु दिनस्य तत् ॥ अम्भरपां च सैन्यस्य क्रुद्धस्य विषदं ...णः ॥ १३५॥ तर्प्पणार्थं मेषरक्तमिश्रितन्तोयपाश्वहेत् ॥ जानुभ्यामवनीं गत्वा स्तम्भनस्य क्रियां चरेत् ॥ १३६ ॥ जारबौद्धरुजां स्तम्भो धर्म्मः प्रेतादिरक्षसाम् ॥ नासादण्डेन संलग्नो वायुश्चेद्भूदयो भवेत् ॥१३७॥ स्तम्भकर्म्म तदा कुर्य्या-ल्लंबीजेन वसुन्धराम् ॥ अष्टकोणयुते पीते मण्डले तां समर्च्चयेत् ॥ १३८ ॥ प्राङ्मुखः स्तम्भनं कुर्य्याद्ब्रमान्तत्र प्रपूजयेत् ॥ विकटासनगो देव्यै गदामुद्रां प्रदर्शयेत् ॥ १३९ ॥ स्तम्भने वषडन्तश्च होमे मन्त्रः प्रकीर्तितः ॥ गज-चर्म्मासनं स्तम्भे गदामुद्राहुतौ तथा ॥ १४० ॥ पीतद्रव्यैश्चात्र होमः पीतवस्त्रादिधृक्स्वयम् ॥ स्तम्भने भरणी चित्रा रोहिणी चोत्तरात्रयम् ॥ ॥ १४१ ॥ अथ विद्वेषणं वक्ष्ये प्रीतिनाशस्तु तु द्वयोः ॥ ग्रीष्मे विद्वेषणं घस्रस्यांशके तु द्वितीयके ॥ १४२ ॥ नासायां मध्यगे वायौ खोदये द्वेषणं

---

१ शान्तिकर्मणि गोचर्मासनं ग्रन्थान्तराज्ज्ञेयम् । पुना रतिपूजनं तन्त्रविधेयम् । २ दिवस-प्रथमभागे ॥ ३ तर्जनीमध्यमे वामे मूर्द्धमुख्यौ विधाय च ॥ दक्षिणे द्वे अधो मुख्यौ सुमुख्यौ च परस्परम् ॥ पाशमुद्रा भवेदेषा मिथः सम्पीडने तयोः । ४ ग्रन्थान्तरे खड्गचर्म ॥ ५ जानुजङ्घा-न्तराले च भुजयुग्मं प्रकल्पयेत् । विकटासनमेतत्स्यान्मुनिभिः परिभाषितम् ॥ ६ गदा तु सरलौ हस्तौ त्वन्योन्यग्रन्थितांगुली । अंगुष्ठौ मध्यमे भूयः संलग्ने सुप्रसारिते ॥ ७ आकाशतत्त्वोदये ॥

मतम् ॥ वर्त्तुले धूम्रवर्णे तु मण्डले खं समर्चयेत् ॥ १४३ ॥ हंबीजेनाथ विद्वेषं नैर्ऋत्याभिमुखश्चरेत् ॥ पूज्या धूमावती द्वेषे मुद्रा तु मुसला भवेत् ॥ ॥ १४४ ॥ होममन्त्रः फडन्तोत्र विशेत्कुक्कुटकासने ॥ विद्वेषे जाम्बुक-श्चर्म लोहासनमथापि वा ॥ १४५ ॥ धूम्रवर्णैश्च होतव्यं तादृग्वस्त्रादि साधकैः ॥ आर्द्राचतुष्टयं मूलं ज्येष्ठा विद्वेषणे मता ॥ १४६ ॥ उच्चाटन-मथो वक्ष्ये तदरीणां प्रवासनम् ॥ प्रावृडुच्चाटने शस्ता तृतीयांशे दिनस्य तत्॥ ॥ १४७ ॥ तिर्य्यग्गते समीरे तु वायुर्वहति तत्र तु ॥ शत्रोरुच्चाटनं कुर्य्याद्यं बीजेन तमर्चयेत् ॥१४८॥ षट्कोणं मण्डलं वायोः कृष्णं षड्बिन्दुलाञ्छि-तम् ॥ मृगचर्म्मादिकं तत्र वायव्यस्य च कर्म्मणि ॥ १४९ ॥ दुर्गां सम्पू-जयेन्मुद्रामेशानिन्तु प्रदर्शयेत् ॥ वज्रासनसमारूढः फडन्तश्चाहुतौ मनुः ॥ ॥ १५० ॥ धूम्रमुच्चाटने ध्यानं कृष्णद्रव्यैस्तथा हुनेत् ॥ उच्चाटनं तथा कर्म्म क्षिप्रभेषु प्रशस्यते ॥१५१॥ मारणं प्राणहरणं शत्रूणामीरितं तु तत् ॥ मारणे वर्ज्जयेद्विप्रानन्यांश्चापि सुधार्मिकान् ॥ १५२ ॥ स्त्रीबालव्यतिरि-क्तेषु राजवैरिषु योजयेत् ॥ स्वरोषतो वा लोकाना रक्षार्थं तु तदा हरेत् ॥ ॥ १५३ ॥ न तु लोभाद्भयान्मन्त्री कुर्य्याच्चैव तु मारणम् ॥ प्रायश्चित्तं च कर्तव्यं देवि तद्दोषशान्तये ॥ १५४ ॥ अयुतं प्रजपेन्मन्त्रं जहुयात्तावदेव हि ॥ सघृतैः पायसैः कृष्णतिलैर्वा घृतसंयुतैः ॥ १५५ ॥ आत्मरक्षा प्रक-र्तव्या कर्म्मकाले सदा बुधैः ॥ अह्लश्चतुर्थः षष्ठोंशः शरन्मारणकर्म्मणि ॥ ॥ १५६ ॥ वश्यवन्मारणे कार्य्यं पूजाद्यं वह्निमण्डले ॥ दक्षिणाभि-मुखः कुर्य्याद्भद्रकालीं समर्चयेत् ॥ १५७ ॥ दर्शयेत्खड्गमुद्राञ्च

---

१ ज्येष्ठा देवी॥ २ मुसलाख्या भवेन्मुद्रा वामस्योपरि दक्षिणम् ।हस्तयोर्मुष्टियुगलं कुर्य्यात्सा विघ्नना-शिनी॥ ३ कृत्वोत्कटासनं पूर्वं समपादद्वयं ततः । अन्तर्जानुकरद्वन्द्वं कुक्कुटासनमीरितम्॥ ४ वायुतत्त्वम्॥ ५ कनिष्ठांगुष्ठयुङ्मुद्रा त्रिकोणा त्वशानिर्मिता । ६ ऊर्वोः पादौ क्रमान्न्यस्य जान्वोः प्रत्यङ्मुखांगुली । करौ निदध्यादाख्यातं वज्रासनमनुत्तमम् । ७ हस्ताश्विनीपुष्याभिजित्सु । ८ वेति शेषः । १०ऊर्ध्वस्य वामहस्तस्य तर्जन्याद्यंगुलित्रयम्।प्रसार्य्य योजयेदन्ये मिथोंगुष्ठकनिष्ठिके।खड्गमुद्रेयमुदिता सर्वशत्रुनिकृन्तनी ।

विशेद्भद्रासने[1] हुनेत॥हुंकारान्तेन मन्त्रेण माहिषं वाथ लोहजम्॥ १५८॥आसनं शूकरीमुद्रा करसङ्कोचतो भवेत् ॥ ध्यानं कुर्य्यात्कृष्णवर्णं कृष्णद्रव्यैश्च पूजनम् ॥ १५९ ॥ उग्रे[2]तीक्ष्णो[3]डुषु स्वस्य चन्द्रताराबलादिके ॥ शत्रोश्चैव बलाभावे चैकपादोपरि स्थितः ॥ १६० ॥ उष्णोदकं समरिचं तर्प्पणार्थन्तु मारणे ॥ तिष्ठन्कुर्य्यान्मारणं वा भूमौ पादं निवेशयेत् ॥ १६१ ॥ वामपादनिविष्टः स चरेत्तत्र तु तर्प्पणम् ॥ प्रकीर्णान्यथ वक्ष्यन्ते त्व-भिचाराश्च तत्र च ॥१६२॥ दक्षिणाभिमुखः कुर्य्यान्मेषीचर्म्मणि संस्थितः॥ लोहासनगतो वापि शूकर्य्या मुद्रया हुनेत् ॥ १६३ ॥ धनसिद्धिकरं कर्म्म पश्चिमाभिमुखश्चरेत्॥मृगान्त्यचित्रामैत्रेषु देवध्यानन्तु राजसम्॥ १६४॥ गोचर्म्मणासनं मोहे स्वाहान्तं मन्त्रमुच्चरेत् ॥ हरिद्रामिश्रितन्तोयं तर्प्पणाथ प्रयोजयेत् ॥ १६५ ॥ स्वाती च रोहिणी तत्र श्रेष्ठा चापि सुखासनम् ॥ अथ सर्वाणि कर्म्माणि रौद्रभे तु प्रसाधयेत् ॥ १६६ ॥ नानाविधेषु कार्येषु व्याघ्रचर्म्म समीरितम् ॥ सर्वरक्षमिभाकारं ध्यायेन्निश्चलमानसः ॥ १६७ ॥ पीयूषवर्षसंयुक्तं पूर्णचन्द्रसमप्रभम् ॥ ध्यायेदेवंविधं वापि सर्वकार्येषु साधकः ॥ १६८ ॥ आयुष्करस्तु श्रवणे ध्यायेद्देवं च राजसम् ॥ अपमृत्युजये प्रोक्तं पूर्वा चैवोत्तरात्रयम् ॥ १६९ ॥ वषडन्तो होममन्त्रो ध्यायेद्राजसदैवतम् ॥ आकर्षणं वह्निकोणसम्मुखस्तु समाचरेत् ॥ १७० ॥ वश्योक्तमखिलं ज्ञेयमा-कर्षे कार्य्यसिद्धये ॥ सर्वज्ञानप्रसिद्ध्यर्थमीशानाभिमुखो भवेत् ॥ १७१ ॥ सर्वविज्ञानकार्येषु श्वेतकम्बलमासनम् ॥ पुष्ट्यादिसाधने मन्त्रो वौषट्पल्लवसं-युतः ॥ १७२ ॥ हंसी स्यात्तर्जनीमुक्ता मुद्रा होमस्तु पौष्टिके ॥ यथोक्त-देवताध्यानं कुर्य्यात्पौष्टिककर्म्मणि ॥ १७३ ॥ सर्वत्र भयनाशाय वष-डन्तो हुतौ मनुः ॥ महासुखसमायुक्तध्यानं वै निर्भयम्भवेत् ॥ १७४ ॥

---

१ सीविन्याः पार्श्वयोर्न्यस्य गुल्फयुग्मं सुनिश्चलम् । वृषणाधः पादपार्ष्णी पाणिभ्यां परिबन्धयेत् । गुदलिंगयोर्मध्ये या नाडी सीविनीत्युच्यते तत्र गुल्फौ निधाय वृषणयोरधः प्रपदे कृत्वा हस्ताभ्यां प्रपद-बन्धनं भद्रासनम् । २ पूर्वाफाल्गुनीपूर्वाषाढापूर्वाभाद्रपदाभरणीमघा उग्राः । ३ आर्द्राश्लेषामूल-ज्येष्ठास्तीक्ष्णाः ।

मन्त्रभञ्जनकार्येषु वषडन्तो हुतौ मनुः ॥ खण्डने तु फडन्तः स्याद्धोमो ध्या-नन्तु तामसम् ॥ १७५ ॥ सौख्यायोदङ्मुखः कुर्याज्जपञ्च रुरुचर्मणि ॥ कल्पान्ताग्निसमं युद्धे ध्यायेद्देवं च तामसम् ॥ १७६ ॥ अथ वक्ष्यामि काम्यादौ सम्पूज्या याश्च देवताः ॥ नित्यं समर्चयेद्विघ्नं वारेशांश्च तिथीश्व-रम् ॥ १७७ ॥ नक्षत्रेशास्ततः पूज्यास्तत्तत्कर्म्माधिदेवताः ॥ ततोर्चयेदि ष्टदेवन्ततो होमं समाचरेत् ॥ १७८ ॥ क्रमाद्वारेश्वरौ सूर्यशिवौ सोमा-म्बिके तथा ॥ गुहाङ्गारौ ज्ञविष्णू च चतुर्वक्त्रबृहस्पती ॥ १७९ ॥ शु-क्रेन्द्रौ शनिकालौ च सूर्यादौ पूज्यदेवताः । प्रोक्ता वारेश्वरा देवि तिथी-शांस्त्वमथो शृणु ॥ १८० ॥ ब्रह्मा विधाता विष्णुश्च यमः शीतकरो गुहः ॥ इन्द्रश्च वसवो नागा धर्म्मः शिवदिवाकरौ ॥ १८१ ॥ कन्दर्पश्च कलिर्विश्वेदेवाश्च पितरस्तथा ॥ आश्विनेयौ यमो वह्निर्ब्रह्मा चन्द्रः शिवोऽ दितिः ॥ १८२ ॥ गुरुः सर्प्पाश्च पितरो भगोर्यमदिवाकरौ ॥ त्वष्टा वायु-रथेन्द्राग्नी मित्रश्चैव सुरेश्वरः ॥ १८३ ॥ निर्ऋतिश्च जलं विश्वेदेवाश्चापि विधिर्हरिः ॥ वसवो वरुणोऽजैकपादहिर्बुध्न्यपूषकौ ॥ १८४ ॥ नक्षत्रेशा इमे साभिजित्का अष्टौ च विंशतिः ॥ प्रणवादिचतुर्थ्यन्ता नमसा च सम-न्विताः ॥ १८५ ॥ एतेषां नाममन्त्रास्तु ग्राह्याः पूजादिसाधने ॥ १८६ ॥ सिद्धमन्त्रः प्रकुर्वीत काम्यकर्म्माणि नान्यथा ॥ कृतानि विपरीतानि कृत्वा निरयमाप्नुयात् ॥ १८७ ॥ गुरुभक्तः शुचिः स्नातः काम्यकर्म्मविधान-वित् ॥ आत्मनश्च परस्यापि काम्यकर्म्माणि चाचरेत् ॥ १८८ ॥ षट्-कर्म्माणि परार्थञ्च कुर्य्यान्मन्त्रविदुत्तमः ॥ एतेषामेव कुर्वीत नान्येषान्तु कदाचन ॥ १८९ ॥ राज्ञो वा राजपुत्रस्य धनाढ्यस्येतरस्य वा । आस्ति-कस्यापि भक्तस्य न्यायार्जितधनस्य च॥ १९० ॥कृतज्ञस्य वदान्यस्य गुरुदेवार्च-कस्य च॥सुशीलस्य सुभक्तस्य कार्य्यं कुर्य्याच्च देशिकः॥ १९१ ॥राजा कार यितान्यो वा प्रणिपत्य च साधकम् ॥ वृणुयात्कर्मकर्तारं दीक्षोक्तविधिना

---

१ ॐ ब्रह्मणे नमः ॐ विधात्रे नमः इत्यादि ।

ततः ॥ १९२ ॥ साधकः प्रयतो भूयाद्द्विजः सन्तोषवाञ्छुचिः ॥ जितेन्द्रियो जितक्रोधो मानक्षोभविवर्जितः ॥ १९३ ॥ नित्ये नैमित्तिके रक्तः कुर्य्यात्कामानने-कधा ॥ क्रूरकर्म्म यथोक्तन्तु कृत्वाभ्यङ्गं समाचरेत् ॥ १९४ ॥ स्नात्वा सावरणा साङ्गां पूजयेदिष्टदेवताम् ॥ अष्टोत्तरसहस्रञ्च रक्षार्थं प्रजपेन्मनुम् ॥ १९५ ॥ मां रक्षरक्षेत्युक्त्वा च नत्वा देवं समुत्सृजेत् ॥ अन्यैः सुहृद्भिः सुस्निग्धैरात्मरक्षान्तु कारयेत् ॥ १९६ ॥ मृत्युञ्जयादिभिर्मन्त्रैः सूर्य्यसेवार्घ्यदानकैः ॥ जपहो-मार्चनाद्यैश्च ब्राह्मणाराधनादिभिः ॥ १९७ ॥ प्रयोगकरणं सम्यग्गुरुतः शा-स्त्रतस्तथा ॥ ज्ञात्वा प्रयोगान्कुर्वीत ह्यन्यथा दुःखमाप्नुयात् ॥ १९८ ॥ ततः कारयिता राजा तोषयेत्साधकन्धनैः ॥ प्रणिपत्य मुहुश्चापि यथा स्यात्तु-ष्टिमांस्तथा ॥ १९९ ॥ सिद्धमन्त्रस्य सिद्ध्यन्ति षट् कर्म्माणि न संशयः ॥ नैव सिद्ध्यन्त्यसिद्धस्य देवताशापमाप्नुयात् ॥ २०० ॥ काम्यप्रयोगका-राणां परलोको न विद्यते ॥ प्रयोगसिद्धिरेवैषां फलमन्यन्न विद्यते ॥ २०१ ॥ होमतर्प्पणमन्त्राद्यैर्नानाध्यानविशेषकैः ॥ आत्मनश्च परस्यापि षट् कर्म्माणि सुसाधयेत् ॥ २०२ ॥ एकलक्षं जपेन्मन्त्री ध्यानविन्यासयोगतः ॥ प्रयोगदोषशान्त्यर्थमात्मरक्षार्थमेव च ॥ २०३ ॥ न चेन्न फलमाप्नोति देवता-शापमाप्नुयात् ॥ अग्निप्रभाधूमवर्णध्वनिगन्धशिखाकृति ॥ दूतचेष्टादिकं सर्वं कथ-येत शुभाशुभम् ॥ २०४ ॥ मन्त्रयित्वानुसन्धानं देहावेशादिलक्षणम् ॥ गुरुभक्तिः सदा कार्य्या कर्म्मकाले विशेषतः ॥ २०५ ॥ ऐहिकामुष्मिका-नान्तु गुरुरेव परायणम् ॥ मारणोच्चाटनादीनि क्षुद्राणां वाममार्गिणाम् ॥ ॥ २०६ ॥ क्षुद्रदेवास्साधयन्ति सुखं दातुं न ते क्षमाः ॥ परनिष्ठापराणान्तु वामिनां परमा गतिः ॥ २०७ ॥ यावदिष्टं तावदेव प्रतिष्ठा च धनादिकम् ॥ दाक्षिणात्या न कुर्वन्ति कदाचिदिह निन्दितम् ॥ २०८ ॥ तेषां प्रभावसंसिद्धिः परलोकश्च शाश्वतः ॥ ये नराः कुलसंशुद्धाः कल्पोक्तेनैव संस्कृताः ॥ २०९ ॥ ते चेन्निपतिता वामे पातकं किमतः परम् ॥ इयं प्रोक्तोत्तरा चर्या किमन्य च्छ्रोतुमिच्छसि ॥ २१० ॥

इति श्रीमहामायामहाकालानुमते मेरुतन्त्रे शिवप्रणीते सिद्धिस्थिरीकरण-प्रकाशः सप्तमः ॥ ७ ॥

श्रीदेव्युवाच ॥ मुद्राणां लक्षणं ब्रूहि यास्तुल्या वामदक्षिणे ॥ सर्वदेवप्रिया याश्च पूजासाफल्यदायिकाः ॥ १ ॥ श्रीशिव उवाच ॥ वक्ष्येथ नाम पूर्वाणि मुद्राणां लक्षणानि तु ॥ नित्यं यः कुरुते सर्वा देवास्स्युस्तस्य सौख्यदाः ॥ २॥ अंकुशाख्या भवेन्मुद्रा पृष्ठेनामा कनिष्ठया ॥ अंगुष्ठे तर्जनी वक्रा सरला चापि मध्यमा ॥ ३ ॥ सा कण्ठमुद्रा हस्ताभ्यां सर्वकण्ठो निबध्यते ॥ यत्रैकमुष्टिरंगुष्ठो दक्षो वामं समाश्रितः ॥ ४ ॥ वह्निप्राकारमुद्रा तु त्रिशूलाग्रावुभौ करौ ॥ व्यत्यस्तावभितो वह्नेर्नयेदस्राह्वयापि च ॥ ५ ॥ अंगुलीन्यासमुद्रास्तु पञ्चांगुल्यः स्पृशेत्क्रमात् ॥ अंगुष्ठेन चतस्रस्तु तर्ज्जन्यां-गुष्ठमेव च ॥ ६ ॥ हृदयाख्या भवेन्मुद्रांगुष्ठवर्ज्याः प्रसारिताः ॥ चतस्रों-गुलयो व्यस्ता हृदये तस्य मन्त्रतः ॥ ७ ॥ शिरोमुद्रा तु सा ज्ञेया तलं पार्श्वे प्रसारितम् ॥ चतस्रोंगुलयश्चापि प्रसार्य्य शिरसा धृताः ॥ ८ ॥ शिखा-मुद्रा तु सा ज्ञेया मुष्टिं चांगुष्ठपल्लवम् ॥ बद्ध्वा तेन शिखां स्पृष्ट्वा शिखामन्त्रे-ण साधकैः ॥ ९ ॥ कवचाख्या त्वियं मुद्रा ह्यंगुल्यः कृतनालिकाः ॥ स्क-न्धादानाभिपर्य्यन्तं पाण्योस्तु प्रक्रमो भवेत् ॥ १० ॥ त्रिनेत्रमुद्रा ख्यातेयं तर्ज्जनीदक्षनेत्रगा ॥ भाले मध्या त्वनामा तु वामे त्र्यक्षदिवौकसाम् ॥११॥ द्विनेत्रमुद्रा ख्यातेयं तर्ज्जनीदक्षनेत्रगा ॥ मध्यमावामनेत्रे च सूर्य्यविष्ण्वा-दिभेदयोः ॥ १२ ॥ अष्टमुद्राः समाख्याताः सर्वारिष्टनिवारिणीः ॥ अंगुष्ठ-तर्जन्यग्राभ्यां हस्तयोरभिशाब्दिताः ॥ १३ ॥ नित्ये नैमित्तिके चैता अङ्गषट्क-स्य मुद्रिकाः ॥ अथ काम्येषु वक्ष्यामि षण्मुद्राणान्तु लक्षणम् ॥१४॥ अंगु-ष्ठयोः पार्श्वयोगस्तर्जन्यौ सरले युते॥ मध्यमेऽन्योन्यकरयोः पृष्ठलग्ने परे तथा ॥ १५ ॥ अन्योन्यान्तर्गते कैश्चिद्दुवे च करपृष्ठतः ॥ एषा नमस्कारमुद्रा ललितायाः प्रकीर्तिता ॥ १६ ॥ तर्ज्जन्यौ सरले कृत्वा शेषांगुल्यो नखै-र्युताः ॥ कनिष्ठामध्यपर्वस्थावंगुष्ठौ क्षोभिणी मता ॥ १७ ॥ सरले तर्जनीमध्ये कनिष्ठानामिके युते॥अग्रयोश्च कनिष्ठास्थावंगुष्ठौ द्राविणी भवेत् ॥ ॥ १८॥ कनिष्ठामध्यमांगुष्ठौ तर्जन्यौ विनतेर्धतः ॥ मध्यमे सरले शेषा मुख-

१ प्रथमार्थे द्वितीया ।

मुक्तानुकर्षिणी ॥ १९ ॥ हन्मुद्रा स्यादियं काम्ये तथा शैवागमेषु च ॥ कृतमुष्टिपदौ हस्तौ कृत्वांगुष्ठौ हृदि न्यसेत् ॥ २० ॥ शिरोमुद्रा ललाटाग्रे कृतौ मुष्टियुतौ करौ ॥ कुर्य्यादूर्ध्वप्रसक्ताग्रे तर्जन्यौ ज्येष्ठया युते ॥ २१ ॥ शिखामुद्रा करौ मुक्तौ कृतमुष्टियुताकृती ॥ ज्येष्ठांगुल्यौ प्रसक्ताग्रे कनिष्ठे तूर्ध्वतः स्थिते ॥ २२ ॥ कवचाख्या प्रसक्ताख्यावंगुष्ठौ च त्रिकोणवत ॥ तर्जन्यावानयेन्मूर्ध्नि मुखे पार्श्वे करे हृदि ॥ २३ ॥ नेत्रमुद्रा तु सरला मध्या तर्जन्यनामिके ॥ धनुषाभे संयुताग्रे अंगुष्ठककनिष्ठिके ॥ २४॥ अस्त्रमुद्रा करद्वन्द्वस्फोटे चापि तदुत्तरम् ॥ तर्जन्या शब्दयेत्ताभ्यां ज्येष्ठाग्रवलिताग्रया ॥२५॥ गालिनी तु कनिष्ठांगुष्ठौ युतावितरेतरम् ॥ करयोस्तर्जनीमध्यानामायुक्ता न वक्रिताः ॥ २६ ॥ धनुर्मुद्रा कनिष्ठानामिके चान्योन्यहस्तयोः ॥ तर्जनीमध्यमे चापि दक्षस्कन्धे प्रदर्शयेत् ॥ २७ ॥ शङ्खमुद्रा तु वामाख्यमंगुष्ठं दक्षमुष्टिगम् ॥ वामांगुल्यग्रदक्षांगुष्ठस्य योगे प्रजायते ॥ २८ ॥ योनिमुद्रान्योन्यकरकनिष्ठातर्जनीयुतिः ॥ न्यस्ते तले तु शेषांगुल्यावंगुष्ठावनामिके ॥ २९ ॥ मत्स्यमुद्राधोमुखन्तु वामहस्तं तदूर्ध्वतः ॥ तादृशं दक्षिणं न्यस्यांगुष्ठकौ चालयेदिति ॥ ३० ॥ आवाहनी तु मुद्रा स्यात्कराभ्यामञ्जलिं चरेत् ॥ अनामयोर्मूलपर्वण्यंगुष्ठौ निक्षिपेत्तदा ॥ ३१ ॥ स्थापनी सा तु मुद्रा स्यादेषावाहनमुद्रिका ॥ अधोमुखीकृता सा चेत्सर्वसंस्थापने क्षमा ॥ ॥ ३२ ॥ सम्मुखीकरणी मुद्रा सा ज्ञेया मुष्टियुग्मकम् ॥ देवानां स्थापने या स्यादंगुष्ठद्वयमुक्तकम् ॥ ३३ ॥ सकलीकरणीमुद्रा सा प्रोक्ता यः षडङ्गके ॥ देवानां क्रियते न्यासो ह्यङ्गानामङ्गिने सकृत् ॥ ३४ ॥ अवगुण्ठनमुद्रा तु दीर्घाधोमुखतर्जनी ॥ मुष्टिबद्धस्य हस्तस्य सव्यस्य भ्रामयेच्च ताम् ॥ ॥ ३५ ॥ महामुद्रा समुद्दिष्टा परमीकरणे तु या ॥ अन्योन्यग्रथितांगुष्ठप्रसारितकरांगुली ॥ ३६ ॥ सन्निधापनमुद्रा स्याद्योगो मुष्टिद्वयस्य तु ॥ सम्यक्कृतावुभौ जातौ त्वंगुष्ठावुच्छ्रितौ यदि ॥ ३७ ॥ संरोधिनी तु सा मुद्रा मुष्ट्योरन्तःप्रवेशितौ ॥ द्वावंगुष्ठौ मुष्टियोगो निश्छिद्रश्च भवेद्यदि ॥ ३८ ॥ दन्तमुद्रा गणेशस्य वल्लभा दक्षहस्तजा ॥ उत्तानोर्ध्वमुखी मध्यसरलाबद्धमुष्टिका ॥ ३९ ॥

पाशाह्वया तु वामस्य तर्जन्यां दक्षतर्जनीम् ॥ क्षिप्त्वा बद्ध्वा मुष्टियुगं तर्जन्यंगुष्ठयोर्युतिः ॥ ४० ॥ अन्योन्यान्तर्गता लग्नाः करांगुल्यस्त्वधोमुखाः ॥ अंगुष्ठौ चोत्थितौ लग्नौ मुद्रा वशकरी मता ॥ ४१ ॥ कनिष्ठाग्रे तु चान्योन्यं सम्प्रसारितहस्तयोः ॥ मध्यमाभ्यां दृढं बद्ध्वानामिकाग्रे तु योजयेत् ॥ ४२ ॥ तर्ज्जन्यौ नामिकाग्रे तु अर्पयेन्मध्यमोपरि ॥ अन्योन्यांगुष्ठकौ लग्नौ मुद्रा चोन्मादिनी मता ॥ ४३ ॥ मध्यमाभ्यां दृढं बद्ध्वा कनिष्ठांगुलयः पराः ॥ संयोज्यानामिकामुख्यौ सरलौ स्यान्महांकुशा ॥ ४४ ॥ विघ्नमुद्रा दीर्घरूपा मध्यमाधोमुखी यदा ॥ तर्ज्जनी मध्यमासन्धिनिर्गतांगुष्ठमुष्टिका ॥ ॥ ४५ ॥ परशोश्च भवेन्मुद्रा तिर्य्यक् संयोज्य चांगुलीः ॥ प्रसृतासंयुता हस्ता तलं हस्ततलान्वितम् ॥४६॥ लड्डुकाख्या भवेन्मुद्रा ऊर्ध्वास्यं दक्षिणं करम् ॥ अंगुल्यो विरला नम्रा निम्नं करतलं तथा ॥ ४७ ॥ बीजपूरणया वाममुष्टावुत्तानके सति ॥ दन्ताद्याः पञ्च गणेशस्यांकुशमुद्रा च सप्तमी ॥ ४८॥ वराख्या सा तु मुद्रा स्यादतिसन्निहितांगुलिम् ॥ उत्तानं दक्षिणं हस्तं कृत्वाधो नामयेच्छनैः ॥ ४९ ॥ अभयस्य तु मुद्रैषा कथिता चाभयप्रदा ॥ पराङ्मुखं वामहस्तं बद्धांगुष्ठकनिष्ठिकम् ॥ ५० ॥ दक्षहस्तस्य मध्या च तर्जनी प्रसृते युते ॥ चर्म्ममुद्रा वामहस्तन्तिर्य्यक्च सम्प्रसार्य्य हि ॥ आकुञ्चितगतिं कुर्य्यादियं शक्तिप्रिया मता ॥ ५१ ॥ धनुर्मुद्रा वाममध्याग्रं तर्ज्जन्यग्रयोजितम् ॥ वामस्कन्धे कनिष्ठाग्रे दक्षिणांगुष्ठपीडितम् ॥ ५२ ॥ मुसलाख्या भवेन्मुद्रा वामस्योपरि दक्षिणम् ॥ हस्तयोर्मुष्टियुगलं कुर्य्याद्विघ्नविनाशनम ॥ ५३ ॥ दुर्गामुद्रा तु करयोर्मुष्टिं कृत्वा नियोजयेत् ॥ वामस्योपरि दक्षञ्च शिरसि स्थापयेदिति ॥ ५४ ॥ बाणमुद्रा दक्षमुष्टेस्तर्जन्या दीर्घया भवेत् ॥ अष्टौ वराद्याः पाशश्चांकुशः शक्तेर्दश स्मृताः ॥ ५५ ॥ चक्रमुद्रा करतले विपरीते विधाय च ॥ अंगुष्ठौ वेशयेच्चैव कनिष्ठानामिकान्तरे ॥ ५६॥ गदा तु सरलौ हस्तावन्योन्यग्रन्थितांगुली ॥ अंगुल्यौ मध्यमे भूयः सश्लिष्टे सुप्रसारिते ॥ ५७ ॥ पद्ममुद्रा करतले त्वंगुष्ठौ मिलितौ यदा ॥ हस्ता तु

---

१ अकारलोपः ।

सम्मुखौ कुर्य्यात्संहता उन्नतांगुली ॥ ५८ ॥ वेणुमुद्रा वामदक्षकनिष्ठांगुष्ठयोगतः ॥ वामांगुष्ठोदरे शेषा वक्राचोर्ध्वं कनिष्ठिका ॥ ५९ ॥ श्रीवत्सं मध्यमानामेंगुष्ठबद्धौ करौ युतौ ॥ कनिष्ठयोर्मूलगते तर्जन्यौ भवतो यदि ॥ ॥ ६० ॥ कौस्तुभा मध्यमानामांगुष्ठाश्चोर्ध्वमुखा युताः ॥ कनिष्ठातर्ज्जनीग्रन्थिः स्थाप्यौ तिर्यङ्मुखौ करौ ॥ ६१ ॥ वनमालाह्वया मुद्रा तर्जन्यंगुष्ठमुष्टिका ॥ करद्वयेन मालावत्स्पृशेदाकण्ठपादकम् ॥ ६२ ॥ ज्ञानमुद्रा हृदि न्यस्तौ तर्ज्जन्यंगुष्ठकौ युतौ ॥ वामहस्ताम्बुजं वा तु यदि मूर्द्धनि विन्यसेत् ॥ ६३ ॥ विश्वाख्या दक्षिणांगुष्ठवेष्टितं वाममुच्छ्रितम् ॥ अन्योन्यहस्तांगुलयस्तन्निष्ठाः स्थापयेद्धृदि ॥ ६४ ॥ प्रकोष्ठं वेष्टयित्वा च मणिबन्धौ च कूर्प्परौ ॥ सम्यक्संयोज्य मध्ये च तर्ज्जनीभ्यां सुवेष्टयेत् ॥ ६५ ॥ योगं मध्यमयोः कृत्वा द्वावंगुष्ठौ परांगुली ॥ अन्योन्यान्तर्गते दक्षकर्णान्ते खेचरी मता ॥ ६६ ॥ आद्यपर्वणि चान्योन्यं सम्यग्योज्य कनिष्ठिके ॥ अनामिके च तदधो मध्यपर्वणि योजयेत् ॥ ६७ ॥ तासामूर्ध्वमनामे च नखाग्रे संनियोजयेत् ॥ सान्तरौ करभौ कृत्वा तर्जन्यंगुष्ठयोर्युतिः ॥ ६८ ॥ एषा तु वरयोन्याख्या मुद्रा बीजाह्वया मता ॥ बीजविद्यां विना सर्वं वृथा पूजाजपादिकम् ॥ ६९ ॥ मुद्रा गरुडस्य हस्तकौ विपरीतौ ग्रथिते कनिष्ठिके ॥ तर्जन्यपि संयुता मिथः पदतुल्ये उभयांगुली वरे ॥ ७० ॥ नृसिंहमुद्रा चिबुकाधरौ तु जान्वोस्तु मध्येथ करौ कुलज्ञौ ॥ चेत्कम्पते व्यात्तमुखस्य जिह्वा संलेलिहाना नयने तु भीमे ॥ ७१ ॥ मुद्रा नरहरेः सर्वा अंगुल्यश्चेदधोमुखाः ॥ अंगुष्ठाभ्यां च करयोराक्रमेत कनिष्ठिके ॥ ७२ ॥ वाराही दक्षमुत्तानं न्युब्जं वामं तदूर्ध्वतः ॥ अंगुल्यग्राणि संयोज्याधस्तात्सन्नमयेदिति ॥ ७३ ॥ हयग्रीवा वामहस्ते तुल्यांगुल्यस्त्वधोमुखाः ॥ रुद्ध्वा मध्यमया मध्यां नामयेदिति सा भवेत् ॥ ७४ ॥ कामाख्या संपुटौ हस्तौ मध्यमे पृष्ठगे यदा ॥ तर्जन्यौ मध्यमासंस्थमंगुष्ठयुगलं यदि ॥ ७५ ॥ त्रैलोक्यमोहिनी मुद्रा मूर्ध्नि सांगुष्ठमुष्टिकैः ॥ चक्राद्याश्च धनुर्बाणपर्य्यन्ताश्च हरेरिमाः ॥ ७६ ॥ विधुमुद्रा करौ पद्मनिभौ श्लिष्टे च मध्यमे ॥ अंगुल्यौ धारयेत्त-

स्मिंश्चन्द्राग्रे सम्प्रदर्शयेत् ॥ ७७ ॥ सौरमुद्रा वामहस्तमधश्चोत्तानमूर्द्धतः ॥ कमलाकृतिमुद्रा स्यादुभे स्तो भास्करप्रिये ॥ ७८ ॥ लिङ्गमुद्रा दक्षिणाख्यं वामांगुष्ठेन वेष्टयेत् ॥ वामांगुल्यौ दक्षिणाभिर्वेष्टयेत्सा शिवप्रिया ॥ ॥ ७९ ॥ त्रिशूलाख्या भवेन्मुद्रा अंगुष्ठेन कनिष्ठिकाम् ॥ बद्ध्वा प्रसारयेच्छेषमंगुलीनां त्रयं तदा ॥ ८० ॥ मालामुद्रांगुष्ठतर्जन्यग्रं तु ग्रन्थयेद्दृढम् ॥ प्रसारयेदंगुलीनां त्रयं जपसुसिद्धये॥८१॥मृगमुद्रा तर्जनी च कनिष्ठा चोच्छ्रिताग्रका ॥ अनामिकागुष्ठमध्याग्राणि तिर्य्यग्युतानि च ॥ ८२ ॥ खट्वाङ्गमुद्रा षडङ्का शिवस्यातिप्रिया भवेत् ॥ पञ्चांगुल्यो दक्षिणाश्चेन्मिलिता ऊर्ध्वमुच्छ्रिताः ॥ ८३ ॥ कपालिनी भवेन्मुद्रा वामांसे वामहस्तकम् ॥ स्थापयित्वा पात्रवच्च कुर्य्यात्सा भैरवप्रिया ॥ ८४ ॥ डमरुः शिथिलां मुष्टिं कृत्वा मध्यां समुन्नताम् ॥ प्रचालयेत्कर्णपार्श्वे दशैताः शूलिनो मताः ॥ ॥ ८५ ॥ आसनाख्या पद्ममुद्रा सूपविष्टः सुखासने ॥ स्वस्वजानुस्थितौ हस्तौ कलिकाभावधोमुखौ ॥ ८६ ॥ कुशलाख्या भवेन्मुद्रा करावुन्नामितौ यदि ॥ आन्दोलितौ फणाकारौ स्वस्वदिग्भागसंस्थितौ ॥ ८७ ॥ वाममुष्टिं दृढं बद्ध्वा तर्जनीं सम्प्रसारयेत् ॥ आनयेद्वामकर्णे तां मुद्रा सौभाग्यदायिनी ॥ ८८ ॥ अंगुष्ठगुम्फितां मुष्टिं बध्नीयाद्दक्षपाणिना ॥ रिपुजिह्वाग्रहाख्येयं मुद्रिका शत्रुनाशिनी ॥ ८९ ॥ स्वागताख्या भवेन्मुद्रा वितस्त्यन्तरगौ करौ ॥ उत्तानावूरुदेशस्यासन्नौ नम्रस्तथा पुमान् ॥ ॥ ९० ॥ अर्घ्यमुद्रा तु सा ज्ञेया दृढो निश्छिद्र एव च ॥ अञ्जलिस्तु यदा बद्धौ मुष्टी कर्णवदाश्रितौ ॥ ९१ ॥ पाद्यमुद्रा त्वर्घ्यमुद्रासमायन्तु विशेषकः ॥ अंगुष्ठतर्ज्जनीयोगः कर्त्तव्यो हस्तयोर्द्वयोः ॥ ९२ ॥ मुद्राचमनसञ्ज्ञा तु निम्ने करतले युताः ॥ हीनाः कनिष्ठजास्तिस्रोंऽगुष्ठाग्रं तर्ज्जनीयुतम् ॥ ॥ ९३ ॥ मधुपर्कस्य मुद्रा स्यादियं चाधोमुखी यदि ॥ अनामिकांगुष्ठयोश्चेदग्रयोगः प्रजायते ॥ ९४ ॥ स्नानमुद्रा दक्षहस्तमुष्टिः स्याच्चेदधोमुखी ॥ कनिष्ठयापि युक्तासास्नानेनन्तफलप्रदा ॥ ९५ ॥ वस्त्रमुद्रा दक्षहस्तं कृत्वोत्तानाञ्च मध्यमाम् ॥ अंगुष्ठेन स्पृशेदेषा दाने वस्त्रस्य धारणे ॥ ९६ ॥ आभू-

षणस्य मुद्रा स्यादियं चाधोमुखी यदि॥अनामिकांगुष्ठयोश्चेदग्रयोगः प्रजायते ॥ ९७ ॥ स्नानमुद्रा समाख्याता कनिष्ठांगुष्ठयोगतः ॥ उपवीतस्य करणादि-के स्खलितधारणे ॥ ९८ ॥ गन्धस्य मुद्रा विज्ञेयाधोत्तानं हस्तमाचरेत् ॥ श्रेष्ठाग्रेण कनिष्ठाग्रे स्पृशेत्स्याद्गन्धधारणे ॥ ९९ ॥ पुष्पाख्या च भवेन्मुद्रा हस्तं चाधोमुखं कुरु ॥ तर्ज्जन्यग्रे तथांगुष्ठाग्रं संयोज्येति पूजने ॥ १०० ॥ धूपमुद्रा तु देवादिधूपने सम्प्रसारिता ॥ अंगुष्ठाग्रेण तर्ज्जन्याः स्पृशेदग्रं च पूर्ववत् ॥ १०१ ॥ दीपमुद्रा प्रोच्यतेथ दीपे सर्वप्रियङ्करा ॥ ज्येष्ठाग्रेण स्पृशेदग्रं मध्यमायाश्च पूर्ववत ॥ १०२ ॥ नैवेद्यमुद्रा देवानां पूर्ववत्परि-कीर्तिता ॥ विशेषोनामिकाग्रन्तु ज्येष्ठाग्रेणं तु योजयेत ॥ १०३ ॥ ग्रास-मुद्रा सव्यहस्तं प्रफुल्लकमलाकृतिम् ॥ दर्शयेत्पञ्चवायूनामुच्यन्ते पञ्चमुद्रिकाः ॥ १०४ ॥ प्राणमुद्रामथो वक्ष्ये भोजनादौ प्रदर्शयेत् ॥ कनिष्ठानामिके सम्यगंगुष्ठाग्रेण योजयेत् ॥ १०५ ॥ मुद्रापानस्य विज्ञेया तर्ज्जनीमध्ययो-र्युतौ ॥ एतद्दर्शनतो वायुरोधाद्योगी विमुच्यते ॥ १०६ ॥ व्यानमुद्रा तु सा ज्ञेया मध्यमानामिके युते ॥ समस्तदेहगो वायुर्दृष्ट्वा तां सुप्रसीदति ॥ ॥ १०७ ॥ उदानवायोर्मुद्रा स्यादंगुष्ठेन समन्विता ॥ तर्जनीमध्यमाना-मास्सर्वरोगापनोदिनी ॥ १०८ ॥ समानवायोर्मुद्रा स्याद्यदा पञ्चांगुली-युतिः ॥ प्रणवादिचतुर्थ्यन्ता नमोऽन्तानाममन्त्रकाः ॥ १०९ ॥ कनिष्ठांगुष्ठसंयोगे सरलं चांगुलीत्रयम् ॥ महायोन्यभिधा मुद्रा सुन्द-र्य्यानन्ददायिनी ॥ ११० ॥ करौ संवलितौ कृत्वा चान्योन्या-सक्तकांगुली ॥ अन्तर्वलितमुत्थाप्य तर्जन्यौ सरले कृते ॥ १११ ॥ कुर्य्यान्नमस्कृतिम्पश्चाच्छक्त्युत्थापनमुद्रिका ॥ आनीता शक्तिरनया स्व-स्थाने वरदा व्रजेत् ॥ ११२ ॥ सप्तजिह्वाख्यमुद्रा तु प्रसृतांगुलिकौ करौ ॥ कनिष्ठांगुष्ठयुगलं मणिबन्धौ च संयुतौ ॥ ११३ ॥ मुद्रा भूतबलेः प्रोक्ता सर्वांगुलिसमागमः ॥ अन्तश्च शुषिरे हस्ते काकतुण्डनिभे मुखे ॥ ११४ ॥ नाराचाग्रे वामहस्तं पृष्ठे दक्षं समानयेत् ॥ शनैः शनैश्च सरले तर्जन्यो मु-द्रिताः पराः ॥ ११५ ॥ संहाराख्याधोमुखो वामहस्तो दक्षस्योर्द्ध्वे ग्रन्थि-

तागुल्य एवम् ॥ पर्यस्तौ बद्धौ करौ स्याद्विसर्गे बल्यादीनां देवता तुष्टिकर्त्री ॥ ११६ ॥ अशनिर्नाम सा मुद्रा ऊर्ध्वास्या वामतर्जनी ॥ अधोवक्त्रा परा तत्र संयुक्तारिविनाशिनी ॥ ११७ ॥ विधुमुद्रांगुलीभिश्चेन्मुद्रा बद्धा तु मुष्टिका ॥ तर्जन्यंगुष्ठसंयोगः पूर्णकर्मणि योजयेत् ॥ ११८ ॥ कालकर्णी भवेन्मुष्ट्योरंगुष्ठावुन्नतौ यदा ॥ पार्श्वयोश्चापि संलग्नौ द्वावेवाभिमुखौ तदा ॥ ११९ ॥ मुद्रा विस्मयसञ्ज्ञा स्याद्विस्मयावेशकारिणी ॥ दक्षिणानिविडा मुष्टिर्नासिकार्पिततर्जनी ॥ १२० ॥ नादमुद्रा तु तर्जन्या मुष्टावंगुष्ठको यदि ॥ निबद्धो यमिनां सेव्या ब्रह्माभिव्यक्तिकारिणी ॥ १२१ ॥ प्रार्थनाख्या भवेन्मुद्रा हस्तौ कुर्य्याद्धृदि स्वके ॥ प्रसृतांगुलिकौ दृश्यौ मिथः श्लिष्टौ च सम्मुखौ ॥ १२२ ॥ लक्ष्मीमुद्रा परा ह्येषा सर्वसम्पत्प्रदायिनी ॥ हस्तौ तु संयुतौ कृत्वा प्रसृतांगुलिकौ तथा ॥ १२३ ॥ अन्नाख्यमुद्रिका हस्तौ नाभिदेशे प्रसार्य्य च ॥ अधोमुखं स्पृशेत्तस्य तर्जनीभ्यां तदान्नदा ॥ १२४ ॥ दंष्ट्रामुद्रा चक्रमुद्रामादौ कृत्वा प्रपीडयेत् ॥ मध्यमे तर्जनीभ्यान्तु सर्वपातकनाशिनी ॥ १२५ ॥ भवेत्पृष्ठकमुद्रा च दक्षहस्तः प्रसारितः ॥ नाभ्यग्रे चान्तरिक्षे च स्थापितश्च निरीक्षितः ॥ १२६ ॥ गजकर्णाख्यमुद्रा तु हस्तयोः पृष्ठमेलनम् ॥ कृत्वा चोर्ध्वमुखौ हस्तौ ग्रन्थिरंगुष्ठयोर्भवेत् ॥ १२७ ॥ वस्त्रस्फालनमुद्रा तु कनिष्ठा वामतर्जनी ॥ मध्यमानामयोरग्रे मूले पृष्ठे च तद्द्वयम् ॥ १२८ ॥ वापीमुद्रा दक्षहस्तानामाधें वामजे ततः ॥ ज्येष्ठा कनिष्ठा दक्षा स्यात्तयोरूर्ध्वन्तु वामजे ॥ १२९ ॥ शकटाख्या भवेन्मुद्रा तर्जनीभ्यामनामिके ॥ अन्योन्यमध्ययोः पृष्ठान्मध्यापरिनिपीडिते ॥ १३० ॥ गायत्र्या अथ वक्ष्यन्ते चतुर्विंशतिमुद्रिकाः ॥ जपादौ दर्शयेत्तासां देवताश्च तथा फलम् ॥ १३१ ॥ सुमुखे संहतौ हस्तावुक्तावाकुञ्चितांगुली ॥ प्रह्लादिनी तत्र शक्तिः सुमुखानन्ददायिनी ॥ १३२ ॥ सम्पुटं पद्मकोशाभौ करावन्योन्यसंहतौ ॥ तस्य शक्तिर्नित्यविश्वा विश्वस्यातिप्रियङ्करा ॥ १३३ ॥ विततं संहतौ हस्तावुक्तं चानायतांगुली ॥ हृदया नाम तच्छक्तिः सर्वेषां हृदयंगमा ॥ १३४ ॥ विस्तीर्णं संहतौ पाणी मिथो मुक्तां-

गुलीद्वयम् ॥ शक्तिस्तु विमला तस्याः प्रभावादमलो भवेत् ॥ १३५ ॥ द्विमुखाख्या हस्तयोस्तु सम्मुखं सक्तयोर्द्वयोः ॥ कनिष्ठयोरेव योगः शक्तिस्तस्यास्सदाभिधा ॥ १३६ ॥ त्रिमुखाख्या हस्तयुग्मे सुसक्तेनामिकाद्वयम् ॥ संयुक्तं शेषमंगुल्यो भिन्नाः शक्तिः प्रभावती ॥ १३७ ॥ चतुर्मुखं हस्तयुग्मं संसक्तं मध्यमायुतिः ॥ शेषांगुल्यस्तु सम्भिन्ना लीला शक्तिप्रकीर्त्तिता ॥ १३८ ॥ मुद्रा पञ्चमुखी तद्वत्तर्जन्योर्यत्र संयुतिः ॥ अपरांगुलयो भिन्नाः शक्तिः शान्तिश्च शान्तिकृत् ॥ १३९ ॥ भवेत्षण्मुखमुद्रासा सम्पूर्णांगुलियोजनम् ॥ कनिष्ठाद्वितयं हित्वा शक्तिर्दुर्गा प्रकीर्तिता ॥ ॥ १४० ॥ अधोमुखं नाम मुद्रा न्युब्जौ हस्तौ त्वधोमुखौ ॥ आकुञ्चिताग्रौ संयुक्तौ शक्तिरस्याः सरस्वती ॥ १४१ ॥ व्यापकाञ्जलिकं नाम मुद्रा हस्तौ तु तादृशौ ॥ विशेषोत्र तु चोत्तानौ विश्वरूपास्ति देवता ॥ ॥ १४२ ॥ शकटं नाम मुद्रा सा बद्धाग्रांगुलिकौ करौ ॥ अधोमुखौ बद्धमुष्टी विशाख्या शक्तिरत्र तु ॥ १४३ ॥ यमपाशं बद्धमुष्ट्योः करयोर्ग्रथिते यदा ॥ तर्जन्यौ तत्र संलग्नौ वामा लोपात्र देवता ॥ १४४ ॥ ग्रन्थिताख्यान्योन्यसन्धिलग्नाश्चागुलयो यदि ॥ उत्तानौ चोच्छ्रितांगुष्ठौ वामा शक्तिः समीरिता ॥ १४५ ॥ सम्मुखोन्मुखमुद्रा तु सम्बद्धाधोंगुलीकरौ ॥ दक्षिणोधोमुखो वाम ऊर्ध्वमाप्यायिनी भवेत्॥ १४६॥ विलम्बं नाम मुद्रा सा चोत्तानोन्नतिकोटिकौ॥ यस्यां करौ तु विमला तस्याः शक्तिः प्रकीर्तिता ॥ १४७॥ मुष्टिकन्तु यदा मुष्टी भवतोन्योन्यसंयुते॥ उत्तानौ तु करौ तत्र शक्तिः प्रोक्ता तमोमयी ॥ १४८॥ मत्स्यस्तु सम्मुखी भूते युक्तानामाकनिष्ठिके ॥ अंगुल्यश्चोर्ध्वयुक्ताग्राः शेषाः शक्तिर्हिरणमयी॥ १४९॥ कूर्म्मस्त्वधोमुखो वामो ग्रस्तो दक्षेण पृष्ठके॥ समाक्रान्तस्तु तच्छक्तिः सूक्ष्मा सूक्ष्मार्थसाधिका॥ १५०॥ वाराही दक्षिणस्योर्ध्वं वाममुत्तानकङ्करम् ॥ स्थापयित्वाधोमुखं तन्नामयेद्विश्वयोनिका ॥ १५१॥ सिंहाक्रान्तं नाम मुद्रात्वंगुल्यः पल्लवीकृताः ॥ देव्यग्रे दर्शयेच्छक्तिर्गदारूपा प्रकीर्त्यते ॥ १५२ ॥ न जातु दर्शयेन्मुद्रां महाजनसमागमे ॥ क्षुभ्यन्ति देवतास्तस्य विफलन्तु कृतं भवेत् ॥ १५३ ॥ यथा बालस्याभि-

नयं दृष्ट्वा हृष्यन्ति मातरः ॥ तथा भक्तकृता मुद्रा दृष्ट्वा हृष्यन्ति देवताः ॥ १५४ ॥ उत्तराम्नायसम्प्रोक्ता देवास्तुष्यन्ति पञ्चमैः ॥ छिन्नः पदार्थ एकश्चेत्साधकन्ते शपन्ति च ॥ १५५ ॥ पश्चिमाम्नायदेवानां सुरापानं कृताकृतम् ॥ मद्यचतुष्टयमिच्छन्ति तं विना प्रशपन्ति च ॥ १५६ ॥ पूर्वाम्नायोक्तदेवानां तन्मांसञ्च कृताकृतम् ॥ आवश्यकमत्र पञ्च तं विना प्रशपन्ति च ॥ १५७ ॥ दक्षिणाम्नायदेवानां निषिद्धं मद्यचतुष्टयम् ॥ मेनैकेन विना तेपि प्रशपन्ति च साधकम् ॥ १५८ ॥ तस्मान्मुद्राः शिक्षणीयाः सम्प्रदायानुसारतः ॥ सर्वत्र मोक्षं लभते मुद्राविन्नात्र संशयः ॥ १५९ ॥ इति ते सर्वमाख्यातं सर्वतन्त्रेषु गोपितम् ॥ मुद्राणां परमं तत्त्वं किमन्यच्छ्रोतुमिच्छसि ॥ १६० ॥

इति श्रीमहामायामहाकालानुमते मेरुतन्त्रे शिवप्रणीते
मुद्रालक्षणप्रकाशोऽष्टमः ॥ ८ ॥

---

श्रीदेव्युवाच ॥ प्रयोगात्परलोकेन परार्थी नेह सौख्यकृत् ॥ सिद्ध्यर्थी च कलौ शिष्यो धनार्थी गुरुरेव च ॥ १ ॥ पूजार्थिनस्तथा देवा विषयार्थि तथा मनः ॥ दूरेऽस्माद्दैहिकी सिद्धिः पारकीया कथं भवेत् ॥ २ ॥ तस्मात्कश्चिदुपायश्चेत्पुरश्चर्यादिकं विना ॥ परत्रेह च सिद्धिः स्याद्विना निन्दां वदस्व तत् ॥ ३ ॥ ईश्वर उवाच ॥ आयान्ति यान्ति न पुनर्मन्यन्ते सर्वजन्तुभिः ॥ ते मदंशकृता ग्रन्था आगमाख्याः प्रसारिताः ॥ ४ ॥ कलेः सहस्राब्दितयं सार्द्धं देवा यदा गतम् ॥ सर्वदेवगणैस्त्यक्तं तदा तु पृथिवीतलम् ॥ ५ ॥ वेदो नारायणः साक्षात्संस्थास्यत्ययुतावधि ॥ आगमैर्भासिते देशे सोप्यगम्यो भविष्यति ॥ ६ ॥ उद्धाराय च साधूनां महाकालाज्ञया मया ॥ कथितं चिरजीविभ्यः पार्थिवं लिङ्गपूजनम् ॥ ७ ॥ तद्विधिं संप्रवक्ष्यामि देवाः शृण्वन्तु सादरम् ॥ इहलोके परत्रापि सिद्धिः करतले स्थिता ॥ ८ ॥ तत्र पार्थिवलिङ्गानां पूजने स्यादयं विधिः स्नात्वा नित्यं विधायादौ गच्छेच्छुद्धां भुवं सुधीः ॥ ९ ॥ स्थानाष्टके स्थिता या मृत्साच सर्वार्थसिद्धिदा ॥ शमीगर्भाश्वत्थमूले नदीकूले च निर्जने

॥ १० ॥ पर्वताग्रे च तीर्थे च गोष्ठे वा तुलसीवने ॥ वटाधस्तात्तत्र भूमिं मन्त्रयेत्प्रार्थयेदिति ॥ ११ ॥ ह्रीं पृथिव्यै नम इति मन्त्रः प्रोक्तः षडक्षरः॥ अनेन पूजयित्वा तु धरणीं प्रार्थयेदिति ॥ १२ ॥ सर्वाधारा धरा त्वं हि पाहि मां मृत्तिकामिमाम् ॥ ग्रहीष्यामि प्रसन्ना त्वं लिङ्गार्थं भव मे सदा ॥ ॥ १३ ॥ ततो मृदमुपादाय सम्यङ्किःशर्करां चरेत् ॥ पात्रे निदध्यात्संशुद्धे प्रत्यहं पूजनाय ताम् ॥ १४ ॥ सद्दिने सद्गुरोर्वाथ सूर्य्याद्वा देवतान्तरात् ॥ गृह्णीयात्तत्पूजायास्तथा गुहगणेशयोः ॥ १५ ॥ मृत्तिकाहरणे तारो हराय नम इत्ययम् ॥ तारो महेश्वरायेति नमः संघट्टनं भवेत् ॥ १६ ॥ तारो ङेंतः शूलपाणिर्नमः प्रस्थापने भवेत् ॥ वस्त्राद्याच्छादिते पीठे ॐ पिनाकधृते नमः ॥ १७ ॥ स्थापयेदिति मन्त्रेण शिवाकान्तं शिवप्रदम् ॥ कामनायास्तु भेदेन तत्र ध्यायेच्छिवं प्रभुम् ॥ १८ ॥ ॐ पशुपतये नमः स्नापयेदिति मन्त्रतः ॥ ॐ शिवाय नम इति पूज्यः पञ्चोपचारकैः ॥ ॥ १९ ॥ ॐ महादेवाय नमो मन्त्रेणेति विसर्ज्जयेत् ॥ ह्रीं गं ग्लौं गणतये ग्लौं गं ह्रीं च भवाक्षरः ॥ २० ॥ ऐं हुं क्षं क्लीं कुमाराय नमोन्तः स्याद्दशाक्षरः ॥ इमान्मनून् गृहीत्वा तु जपेदष्टसहस्रकम् ॥ २१ ॥ दत्त्वा धूपं हृदि ध्यात्वा गुरुं तन्मन्त्रसिद्धये ॥ अथार्चनं शुभे घस्रे प्रारभेतेष्टसिद्धये कृतनित्यक्रियः शुद्धः प्रदायार्घ्यं विवस्वते ॥ २२ ॥ मृदमादाय तोयञ्च वंबीजेनाभिमन्त्रयेत् ॥ आसिच्य पिण्डयेत्स्वेष्टमानं पात्रे निधापयेत् ॥२३॥ ततः कालमनुस्मृत्य कामनामपि हृद्गताम् ॥ लिङ्गानि पार्थिवानीह पूजयेमुकसंख्यया ॥२४॥ सङ्कल्प्यैवं मृदः पिंडादादायाल्पां मृदं सुधीः ॥ गणेश्वरस्य मन्त्रेण कुर्याद्द्वारगणेश्वरम् ॥ २५ ॥ फलाभयलसत्पाणिं तुन्दिलं चोन्दुरुस्थितम् ॥ निर्माय स्थापयेत्पीठे ततो विप्रस्समाचरेत् ॥ २६ ॥ न्यासं रुद्रस्य विधिवत्सम्पुटीकरणान्वितम् ॥ अविप्राणाञ्छृणु न्यासं गोप्यं पार्थिवपूजने॥ २७॥अस्य श्रीपार्थिवाख्यस्य विद्या चिन्तामणेर्मनोः॥ निग्रहानु-

१ ॐ ब्रह्मणे ऋषये नमः शिरसि, ॐ गायत्रीछन्दसे नमो मुखे, ॐ कामदुघायै देवतायै नमो हृदये, ॐ ह्रींह्रौं बीजाय नमो गुह्ये, ॐ ह्रीं शक्तये नमः पादयोः, ॐ नमः कीलकाय नमो नाभौ

नुग्रहकर्त्ता ब्रह्मा निगदितो मुनिः॥२८॥ देवता स्यात्कामदुघा गायत्री छन्द ईरितम्॥ॐ ह्रीं ह्रौं बीजं ह्रीं शक्तिर्नमः कीलकमुच्यते॥२९॥अभीप्सितार्थ-सिद्ध्यर्थे नियोगो लिङ्गपूजने॥ॐ ह्रीं ह्रौं बीजपूर्वास्तु न्यासे मन्त्रान्प्रविन्यसेत् ॥३०॥शिवायेति परं चान्ते ततोङ्गादि समुच्चरेत्।।[1]सर्वज्ञाय प्रथमतः सर्वतृप्ताय चोत्तरम् ॥ ३१ ॥ नित्यमलुप्तशक्तये सर्वज्ञानशक्तये च ॥ नित्यानन्दशक्तये चानन्तशक्तिशिवाय च ॥ ३२ ॥ कृत्वा चांगुलिविन्यासं विन्यसेद्धृदयादिषु ॥ केवलः श्रोत्रियस्तत्र [2]सद्योजातेन मृत्तिकाम् ॥ ३३ ॥ गृहीत्वा वामदेवेन जलं दत्त्वा विमर्दयेत् ॥ लिङ्गं कुर्य्यादघोरेणार्चयेत्तत्पुरुषेण च ॥ ॥ ३४ ॥ संस्थाप्य रुद्रसूक्तेन ईशानेन विसर्ज्जयेत् ॥ आदौ कृत्वा गणेशानं पीठमध्ये निवेशयेत् ॥ ३५ ॥ पश्चाल्लिङ्गानि कुर्वीत यथेष्टानि समानि च ॥ अंगुष्ठमानादधिकं वितस्त्यवधिसुन्दरम् ॥ ३६ ॥ पार्थिवं रचयेल्लिङ्गं न न्यूनं नाधिकं क्वचित् ॥ पक्वजम्बूफलाकारं सर्वकामसमृद्धिदम् ॥ ॥ ३७ ॥ अतिपुष्टे तु दारिद्र्यं चिपिटे रोगसम्भवः ॥ मानाधिके वियोगः स्यात्स्वल्पे सिद्धिर्न जायते ॥ ३८ ॥ द्विखण्डे तु भवेन्मृत्युर्वियोनौ न सुखं भवेत् ॥ अवशिष्टमृदा कुर्य्यात्कुमारन्तस्य मन्त्रतः ॥ ३९ ॥ स्थापयेल्लिङ्गपर्य्यन्ते स्वमन्त्रेणार्च्चयेच्च तम् ॥ अर्च्चयन्पार्थिवं लिङ्गं यथोक्तफलभाग्भवेत् ॥ ४० ॥ तारो ह्रौं [3]ह्रीं जूं सः इति पञ्चबीजादिकैस्तु तैः ॥ तान्त्रिको मासमन्त्रैस्तु फलार्थी शिवमर्चयेत् ॥ ४१ ॥ प्रासादबीजपूर्वैस्तु वाममार्गी समर्चयेत् ॥ पराप्रासादबीजाद्यैः पूजयेत्कौलिकैस्तु तैः ॥ ४२ ॥ आवाहनस्य समये ईदृशं शिवमागतम् ॥ लिङ्गे प्रतिष्ठितं ध्यायेत्कामनाभेदनात्तु तत् ॥ ४३ ॥ भवेन्नानाविधं ध्यानं योनिं कामं प्रपूजयेत् ॥ तत्र

---

१ ॐ ह्रींह्रौमिति बीजत्रयं मन्त्रन्यासेभ्यः पूर्वं संयोज्यम् ॐ शिवाय सर्वज्ञाय अंगुष्ठाभ्यां नमः, ॐ शिवाय सर्वतृप्ताय तर्जनीभ्यां नमः, ॐ शिवाय नित्यमलुप्तशक्तये मध्यमाभ्यां नमः, ॐ शिवाय सर्वज्ञानशक्तये अनामिकाभ्यां नमः, ॐ शिवाय नित्यानन्दशक्तये कनिष्ठिकाभ्यां नमः, ॐ शिवायानन्तशक्तिशिवाय करतलकरपृष्ठाभ्यां नमः पुनरेतैरेव मन्त्रैर्हृदयादिन्यासान् कुर्वीत । २ सद्योजातादयः पञ्च मन्त्रा बहुस्थलेषु गदिता अतोत्र नोक्ताः । ३ ह्रौं ।

ध्यानमिदं ज्ञेयं नोक्तं वा यत्र तत्र च ॥ ४४ ॥ अथात्मानं शिवात्मानं पञ्चास्यं चिन्तयेद्बुधः ॥ त्रिलोचनं चतुर्बाहुं सर्वाभरणभूषितम् ॥ ४५ ॥ नीलग्रीवं शशाङ्काङ्कं शुद्धस्फटिकसन्निभम् ॥ व्याघ्रचर्म्मोत्तरीयं च नागयज्ञोपवीतकम् ॥ ४६ ॥ कमण्डलुधरं देवमक्षमालान्वितं प्रभुम् ॥ वरदाभयहस्तं च नमज्जनवरप्रदम् ॥४७॥ वृषपृष्ठसमारूढमुमादेहार्धधारिणम् ॥ जटिलं कपिलं दन्तनखाभिद्योतकारिणम् ॥ ४८ ॥ अमृतेनाप्लुतं दिव्यं दिव्यभोगसमन्वितम् ॥ दिग्देवतासमायुक्तं सुरासुरनमस्कृतम् ॥ ४९ ॥ नित्यं च शाश्वतं शुद्धं ध्रुवमक्षरमव्ययम् ॥ सर्वव्यापिनमीशानं रुद्रं वै विश्वरूपिणम् ॥ ॥ ५० ॥ एवं ध्यात्वा द्विजः सम्यक् ततो यजनमारभेत् ॥ आराधितो मनुष्यैस्त्वं सिद्धैर्देवासुरादिभिः ॥ ५१ ॥ आराधयामि भक्त्या त्वां मां गृहाण महेश्वर ॥ स्वामिन्सर्वजगन्नाथ यावत्पूजावसानकम् ॥ ५२ ॥ तावत्त्वं प्रीतिभावेन लिङ्गेस्मिन्सन्निधो भव ॥ इति सम्प्रार्थ्य देवेशं पार्थिवं पूजयेत्ततः ॥ ५३ ॥ एकैकं पूजयेल्लिङ्गमेकैकं च विसर्ज्जयेत् ॥ अन्ते पूज्यः कार्त्तिकेयः प्रोक्ता पूजेयमुत्तमा ॥ ५४ ॥ सर्वेषामेव लिङ्गानां शीघ्रमेकत्र पूजनात् ॥ प्रोक्ता पूजा विधिज्ञैः सा पूजेयं मध्यमा तदा ॥ ५५ ॥ प्रत्येकमाचरेद्ध्यानमन्धं पुष्पं पृथक्पृथक् ॥ धूपदीपनिवेद्यादि यथांशेन निवेदयेत् ॥ ५६ ॥ प्रागादिवामावर्तेन दिक्ष्वष्टौ परिपूजयेत् ॥ [1]शर्वं भवं रुद्रमुग्रं भीमं पशुपतिं तथा ॥ ५७ ॥ महादेवं तथेशानं क्रमात्क्षित्यादिमूर्तकान् ॥ क्षित्यप्तेजोनिलाकाशयजमानेन्दुभास्कराः ॥ ५८ ॥ क्षित्यादयः स्युः शर्वाद्यास्तत इन्द्रादिकान् यजेत् ॥ धूपदीपनिवेद्यादिनमस्कारप्रदक्षिणैः ॥ ५९ ॥ ततो जपं प्रकुर्वीत [2]ॐ हौं ह्रीं हूं समुच्चरेत् ॥ ॐ नमश्च शिवो ऽन्तः प्रसन्नायेदमुच्चरेत् ॥ ॥ ६० ॥ पारिजाताय स्वाहेति एकविंशतिवर्णकः ॥ पूजान्तेष्टोत्तर-

---

१ ॐ शर्वाय क्षितिमूर्तये नमः पूर्वे, ॐ भवाय जलमूर्तये नमः ईशानकोणे, ॐ रुद्रायाग्निमूर्तये नमः उत्तरे, ॐ उग्राय वायुमूर्तये नमः वायव्यकोणे, ॐ भीमायाकाशमूर्तये नमः पश्चिमे, ॐ पशुपतये यजमानमूर्त्तयेनमः नैर्ऋत्यकोणे, ॐ महादेवायेन्दुमूर्त्तये नमः दक्षिणे, ॐ ईशानाय सूर्य्यमूर्त्तये नमः आग्नेयकोणे, एवमष्टदिक्षु । २ ॐ हौंह्रींहूं ॐ नमः शिवाय प्रसन्नाय पारि

शतं जपेन्मन्त्रमनन्यधीः ॥ ६१ ॥ बिल्वं वा बिल्वपत्रं वा घृताक्तं सतिलं हुनेत् ॥ एकादशाहुतीः पश्चात्प्रणमेद्दण्डवत्क्षितौ ॥ ६२ ॥ प्रणवादिचतुर्थ्यन्तानन्तदेवनमोन्वितैः[1] ॥ षष्ठीयुक्तं च तन्नाम पत्नीं ङेन्तां नमोन्विताम्[2] ॥ ६३ ॥ पुनश्च तर्पणं कार्य्यं तादृशैरेव नामभिः ॥ द्वितीयान्तैस्तर्प्पयामि बिल्वपत्रैर्जलाक्षतैः ॥ ६४ ॥ भवः शर्वस्तथेशानस्तुर्य्यः पशुपतिर्मतः ॥ रुद्रोग्रभीमर्महतस्त्वष्टौ[3] ते परिकीर्तिताः ॥ ६५ ॥ दम्पती भोजयेन्नित्यं पार्वतीशमनीषया ॥ शैवं वा भोजयेदेकमभावे वेदवित्तमम् ॥ ॥ ६६ ॥ एवमर्चयतः पुंसः पार्थिवं लिङ्गमुत्तमम् ॥ मासमात्रेण सिद्धिस्स्यान्नात्र कार्य्या विचारणा ॥ ६७ ॥ अकृत्वा पार्थिवं लिङ्गं योन्यदेवं प्रपूजयेत् ॥ वृथा भवति सा पूजा स्नानदानादिकाः क्रियाः ॥ ६८ ॥ काम्यकर्म्मण्ययं कार्य्यो विधिः शृणु विशेषकम् ॥ तण्डुलोद्भवपिष्टेन विद्यार्थी[4] तु सहस्रकम् ॥ ६९ ॥ द्वयोः पूजनमेकत्र मासमेकं करोति चेत् ॥ अवश्यं लभते विद्यां ध्यानमस्य निरूप्यते ॥ ७० ॥ अनेनैव विधानेन पूजयेन्नवनीतजम् ॥ भवेद्विया च सपदि चतुर्दिक्षु तथा यशः ॥७१॥ वन्दे महेशं सुरसिद्धसेव्यं विद्याप्रदं पुस्तकदत्तदृष्टिम् ॥ भक्तैर्जनैः पूजितपादपद्मं ध्याये सद कामप्रदं प्रभुं तम् ॥ ७२ ॥ इत्थं श्वेतागुरोर्लिङ्गं पूजितं बुद्धिवृद्धिकृत् ॥ एवं कृष्णागुरोर्लिंगं पूजितं धारणाप्रदम् ॥ ७३ ॥ चणकोद्भवपिष्टस्य प्राग्वल्लिंगं तु बुद्धिकृत् ॥ प्राग्वद्व्रीहिमयं लिंगं कृत्वा हन्यात्स्खलद्गिरम् ॥ ७४ ॥ विद्याकामैश्चिन्तनीयः परशुं हरिणं वरम् ॥ ज्ञानमुद्रां दधद्धस्तैर्वटमूलमुपाश्रितः ॥ ७५ ॥ योर्चयेत्प्रत्यहं पञ्चशतान्येकं पृथक्पृथक् ॥ पार्थिवानि तु लिंगानि मासात्सा सर्वतोमुखी ॥ ७६ ॥ दक्षाङ्कस्थं गजपतिमुखं प्रामृजन्दक्षदोष्णा वामोरुस्थागपतितनयाङ्के गुहं चापरेण ॥ इष्टाभीती परिकरयुगे धारयन्निन्दुकान्तिरव्यादस्मांस्त्रिभुवननतो नीलकण्ठस्त्रिनेत्रः ॥ ७७ ॥ पुंसोर्विरुद्धयोस्सन्धौ कुर्यादयुतसङ्ख्यया ॥ नदीतीरद्वयानीतमृदा तानि च

---

१ ॐ अनन्तदेवाय नमः ॥ २ ॐ अनन्तदेवस्य पत्न्यै नमः॥ ३ महान्तः ॥ ४ पूजेति शेषः॥

पूजयेत् ॥ ७८ ॥ तत्र ध्येयो हरिहरः शङ्खपद्मादिशूलभृत् ॥ इन्द्रनील-शरच्चन्द्रनिभो भूषणपूगवान् ॥ ७९ ॥ दम्पत्योरभिधानार्थमर्धनारीश्वरः स्मृतः ॥ पीयूषपूर्णकलशं दधत्पाशांकुशावपि ॥ ८० ॥ पुत्रार्थी सार्धसाहस्रं कुर्य्यात्तण्डुलपिष्टजम् ॥ पार्थिवान्यथ वा कुर्य्यादर्धलक्षमितानि तु ॥ ८१ ॥ दक्षाङ्कस्थमिति ध्यानं पूजनं च पृथक्पृथक् ॥ दधिभक्तस्तु नैवेद्ये पैष्टेनात्र यथेच्छया ॥ ८२ ॥ आढकीपिष्टसम्भूतं कान्तार्थी शतपञ्चकम् ॥ पार्थिवान्यथवा कुर्य्यादर्द्धलक्षमितानि तु ॥ पृथग्द्वयं द्वयं पूज्यं ध्यानमत्र निरूप्यते ॥ ॥ ८३ ॥ कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् ॥ सदा रमन्तं हृदयारविन्दे भवं भवानीसहितं नमामि ॥ ८४ ॥ मारणार्थं सप्तशतं लिंगं केशास्थिसम्भवम् ॥ अथ वा लोहलिंगानि तुषजान्यथ वापि च ॥ ८५ ॥ सहस्रमिक्षुदण्डस्य लिंगान्युच्चाटने यजेत् ॥ श्मशानमृत्तिकायास्तु विद्वेषे युतमाचरेत् ॥ ८६ ॥ पूजयेत्कार्य्यवशतो लक्षावधिसहस्रतः ॥ उच्चाटे मारणे द्वेषे ध्यातव्यः पुनरीदृशः ॥ ८७ ॥ कालीहस्ताम्बुजालम्बः शूलप्रोतद्विपच्चयः[1] ॥ मुण्डमालालसत्कण्ठो राववित्रासिताखिलः ॥ ८८ ॥ विना ज्ञानेन मोक्षस्तु नराणां परिजायते ॥ तदा तु कोटिलिंगानि पूजयेद्ध्यानमुच्यते ॥ ८९ ॥ यो योगमायापहृतं च पुंसां ज्ञानं विधत्तेऽखिलवस्तुनिष्ठम् ॥ तं विश्वनाथं कलिकिल्बिषघ्नं ध्याये शिवालिङ्गितमष्टदेहम् ॥ ९० ॥ भोगार्थी लक्षमेकन्तु कुर्य्यात्पुष्पमयानि[2] तु ॥ दिव्यान्भोगानवाप्नोति ध्यानमत्र निरूप्यते ॥ ९१ ॥ वन्दे महेशं सुरसिद्धसेवितं कल्पद्रुमारण्यगतं प्रसन्नम् ॥ पर्य्यङ्कगं शैलसुतासमेतं देवाङ्गनागीतसुनृत्यतुष्टम् ॥ ९२ ॥ निर्विघ्नकाशीवासार्थं लोकद्वयजिगीषया ॥ लिङ्गान्ययुतसङ्ख्यानि धात्रीफलभवानि तु ॥ ९३ ॥ सहस्रमात्रं पित्तल्या यो लिङ्गानि प्रपूजयेत् ॥ यथेष्टं लभते भूमिं त्रिसन्ध्यं त्वेकमेव वा ॥ ९४ ॥ सहस्रत्रितयं रूपकामो गोरोचनोद्भवम् ॥ तावत्संख्यं कान्तिकामः काश्मीरीसंभवं यजेत् ॥ ९५ ॥ मधुपुष्पोद्भवं[3] लिंगं वसन्ते शतमर्चयेत् ॥ प्रत्यहं जायते कामी स्त्रियां तु ध्यानमत्र तु ॥ ९६ ॥

---

१ वैरिसमूहः ॥ २ कुसुमसम्भूतम् ॥ ३ मत्तमधुकुसुमोद्भवम् ॥

कौलिका वामका मन्त्रास्तत्र सिद्ध्यन्ति नेतरे ॥ ८९४ ॥ थकारोभूत्क्षीरिकायां वामजङ्घा तु तत्र ते ॥ तत्र वैतालिका मन्त्राः सिद्धिं यान्ति च शाबराः ॥ ८९५ ॥ हस्तिनापुर उत्पत्तिर्नकारस्य प्रकीर्त्यते ॥ दक्षस्ते पतितो गुल्फो नूपुरश्चैव तत्र हि ॥ ८९६ ॥ उपपीठन्तु तज्जातं यत्ख्यातं नूपुरार्णवम् ॥ पीठोपपीठयोस्तत्र मन्त्राः सिद्ध्यन्ति भास्कराः ॥८९७॥ उड्डीशाख्यं पकारस्य पीठं तत्र तु वामकः ॥ गुल्फो निपतितस्तत्र कृतसाधकसिद्धिदम् ॥ ॥ ८९८ ॥ उड्डीशाख्यं महातन्त्रं सिद्धम्भवति तत्र तु ॥ नूपुरः पतितो यत्र डामरश्चोपपीठकम् ॥८९९॥ प्रयागस्तु फकारस्य स्थानं देहरसोत्र तु ॥ यत्रैव पतितस्तत्र दृश्यते श्वेतमृत्तिका ॥ ९०० ॥ गङ्गायमुनयोर्मध्ये पारावारे तथैव च ॥ एवं स्थानेषु तेस्थीनि पतितानि द्विजोत्तमैः ॥९०१॥ कृतानि तानि भूम्यन्तस्तत्र पीठानि जज्ञिरे ॥ गङ्गायाः प्राक् च बगलाद्युपपीठं महाद्भुतम् ॥ ९०२ ॥ उत्तरेस्यास्तु चामुण्डाद्युपपीठं महाद्भुतम् ॥ गङ्गायमुनयोर्मध्ये राजराजेश्वरीश्वरम् ॥ ९०३ ॥ यमुनादक्षिणे कूले भुवनेशी समाश्रिता ॥ प्रयागोतस्तीर्थराजः पीठराजश्च कथ्यते ॥ ९०४ ॥ षष्ठीशस्तु बकारस्य स्थानं पृष्णिस्तु तत्र ते ॥ दक्षिणः पतितो देवि पादुकासिद्धिरत्र तु ॥ ॥ ९०५ ॥ मायापुरे वामपार्ष्णिः पतितो भस्थलन्तु तत ॥ देवदानवगन्धर्वमायाः सिद्ध्यन्ति तत्र तु ॥ ९०६ ॥ मलयाख्ये मकारोभूत्पीठेऽसृग्यत्र तेपतत ॥ रक्ताम्बरादिबौद्धानां मन्त्रसिद्धिस्थलन्तु तत ॥ ९०७ ॥ श्रीशैले तु यकारोभूत्तत्र पित्तं तवाम्बिके ॥ सर्वमन्त्रास्तत्र सिद्धा वैष्णवास्तु विशेषतः ॥९०८॥ रस्थानन्तु हिमागस्य मेरुनामकशृंगकम् ॥ त्वन्मेदः पतितं सिद्धेत्स्वर्णाकर्षणभैरवः ॥ ९०९ ॥ लकारस्य समुत्पत्तिर्गिरिपीठे तु यत्र ते ॥ जिह्वाग्रं पतितन्तत्र जपाद्वाक्सिद्ध्यति ध्रुवम् ॥९१०॥ माहेन्द्रस्तु वकारस्य स्थानं मज्जापतत्तव ॥ सर्वेषां शक्तिमन्त्राणां सिद्धिस्तत्र न संशयः ॥९११॥ वामनन्तु शकारस्य स्थानमङ्गुष्ठतोभवत् ॥ जपात्तत्र तु मुख्यत्वं मन्त्रिषु प्राप्नुयादपि ॥ ९१२ ॥ हिरण्यपुरसम्भूतः षकारो वामतोभवम् ॥ अंगुष्ठादेव तत्पीठो वाममार्गेधिकोभवत् ॥ ९१३ ॥ पीठे चापि महालक्ष्म्याः सका-

रोभूद्बुचिस्तव ॥ शरीरात्पतिता तत्र सर्वसिद्धिः प्रजायते ॥ ११४ ॥ हकारश्चात्रिस्थानेभूद्धमनी तत्र तेपतत् ॥ दृग्गोचरास्तु यावन्त्यः सिद्धयस्तत्र संस्थिताः ॥ ११५ ॥ छायापीठे लकारोभूद्दृष्टा छाया मया तव ॥ सतीवेषं तु लब्ध्वाभूच्छायापीठमतस्तु तत ॥ ११६ ॥ छत्रपीठे समुत्पन्नः क्षकारः केशपाशकः ॥ यत्र ते पतितो देवि तत्र सिद्धिरदूरतः ॥ ११७ ॥ एतद्देवि मया प्रोक्तं रहस्यं पीठसम्भवम् ॥ अथान्यत्सम्प्रवक्ष्यामि रहस्यं परमाद्भुतम् ॥ ११८ ॥ कलौ लुब्धास्तु गुरवः शिष्याः सिद्ध्यभिलाषिणः॥ तस्मान्न सिद्धिः कुत्रापि नाश एव दिनेदिने ॥ ११९ ॥ वक्ष्यामि सिद्धये तस्मात्सर्वतन्त्रेषु गोपितम् ॥ सुभक्ताय सुशिष्याय देयं नान्यत्र कुत्रचित् १२० तारमायारमाकामबीजपूर्वं तु रामकम् ॥ विप्राद्यैश्च चतुर्थ्यन्तं नमोन्तं प्रजपेदिति ॥ १२१ ॥ वृद्धाद्विप्राद्ग्राह्यमेतदेकदा तन्तु तोषयेत् ॥ सिद्धोयं मन्त्र उद्दिष्टो गोप्यं मातरि जारवत् ॥ १२२ ॥ षडङ्गन्यासमाद्येन बीजेन रचयेत्पुनः ॥ पूर्वोक्तमातृकाणां तु न्यासमादौ समाचरेत् ॥ १२३ ॥ गजानने देवयोनौ गणेशस्य च मातृकाः ॥ शाक्तके लघुमात्राणां श्रीकण्ठाद्याः शिवादिषु ॥ १२४ ॥ केशवाद्या विष्णुसूर्य्यग्रहादौ परिकीर्तिताः ॥ पीठन्यासस्तु सर्वत्र कर्त्तव्यो देहशुद्धये ॥ १२५ ॥ पूजादिकन्तु प्राग्वत्स्यात्पुरश्चर्य्या तथैव हि ॥ षट्कर्म्माणि तु तत्स्तोत्रं भक्तस्थाने स्वयं भवेत् ॥ १२६ ॥ नाश्यस्थाने तथा शत्रुं स्वस्थाने देवतां स्मरेत् ॥ सर्वे प्रयोगाः सिद्ध्यन्ति मोक्षमन्ते लभेतसः ॥ १२७ ॥ नैव त्याज्यस्स्वस्य धर्म्मः पोष्यवर्गान्प्रपूजयेत् ॥ अप्रियं नैव कुर्वीत मातरम्पिरं तथा ॥ १२८ ॥ देववत्सेवयेदेतद्रहस्यं सम्प्रकाशितम् ॥ मन्त्रप्रदः सदा दुःखी मन्त्रग्राही च निर्धनः ॥ ६२९ ॥ भविष्यति कलौ

---

१ ॐ ह्रीं श्रीं क्लीं रामाय नमः, अयं मन्त्रश्चातुर्वर्ण्येन जपितः शीघ्रसिद्धिदः अथवा ॐ रामाय नमः ब्राह्मणेन ह्रीं रामाय नमः, क्षत्रियेण तथा श्रींरामाय नमः, वैश्येन क्लीं रामाय नमः, शूद्रेण जपितव्यः २ । अंकामपीठाय नमः, शिरसि, आं काशिकापीठाय नमः मुखे, इंनेपालपीठाय नमः दक्षनेत्रे, ईं रौद्रपर्वतपीठाय नमः वामनेत्रे उं काश्मीरपीठाय नमः दक्षकर्णे । ऊं कान्यकुब्जकपीठाय नमः वामकर्णे ।

प्रायोऽविवेकाद्गुरुशिष्ययोः ॥ ज्ञात्वा शास्त्रं गुरुं कुर्य्यात्तदा सुखमवाप्नुयात् ॥ १३० ॥ इति दीक्षाविधिः प्रोक्तः कुलाचारसमन्वितः ॥ अर्थवादं विना देवि किमन्याच्छ्रोतुमिच्छसि ॥ १३१ ॥ मेरौ शिवप्रणीतेस्मिन्मेरुणा प्रकटीकृते ॥ मेरुभूते च तन्त्राणां पुरश्चर्यादिनिर्णयः ॥ १३२ ॥

इति श्रीमहामायामहाकालानुमते मेरुतन्त्रे शिवप्रणीते पुरश्चर्या-कौलिकाचारप्रकाशो दशमः ॥ १० ॥

---

श्रीदेव्युवाच ॥ महादेव महाघोरे कलौ केके च वैदिकाः ॥ स्थास्यन्ति मनवः कुत्र कल्पाः के च फलप्रदाः ॥ १ ॥ कियच्च वैदिकं कर्म्म ब्राह्मे पाद्मे च कथ्यते ॥ शाखाः स्थास्यन्ति काश्चैव उपशाखास्तथा च काः ॥ ॥ २ ॥ श्रीमहेश्वर उवाच ॥ वैदिके कर्म्मणि कलौ नराणां धीः सुदुर्लभा॥ यथा नावं विना सिन्धुपारमिच्छन्ति मानवाः ॥ ३ ॥ तेनाज्ञानात्कलौ देवि वामे कौले कृतादराः ॥ अतत्त्वज्ञा विनश्यन्ति ते तु मानुष्यवर्जिताः ॥ ॥ ४ ॥ केचित्त्वद्भक्तियोगेन उपदिष्टाः प्रतारकैः ॥ वैदिकं कर्म्म ते त्यक्त्वा जायन्ते यवनाधिपाः ॥ ५ ॥ कलेर्दशसहस्रेषु विष्णुः स्थास्यति मध्यमम् ॥ देशे स देवो भवति विन्ध्ये हिमवति क्वचित् ॥ ६ ॥ यावत्पूर्णः कलेः सन्धिस्तावत्स्थास्यत्यतः परम् ॥ स्त्रीमांसमद्यनिरते लोके धर्मपराङ्मुखे ॥ ७ ॥ सर्व एव हि ते मन्त्राश्चतुर्वेदेषु संस्थिताः ॥ स्थास्यन्ति पृथिवीमध्ये यावत्पूर्णः कलिर्भवेत् ॥ ८ ॥ सन्ध्यांशे तु कलेः सर्वे त्रिंशन्मन्त्रा भुवि स्थिताः ॥ तदा कल्किस्वरूपस्य विष्णोर्जन्म भविष्यति ॥ ९ ॥ ये तिष्ठन्ति कलौ देवि तत्साधनमहं ब्रुवे ॥ स्वाध्यायाभ्यसनस्यादौ व्रतान्येव चतुर्दश ॥ १० ॥ केशश्मश्रु वापयित्वा शुचिर्गुर्वाज्ञया चरेत् ॥ अथ वा पूर्वविधिना निष्पापः सन्समभ्यसेत् ॥ ११ ॥ तानध्यायान्प्रदोषेषु देवि शिष्यः पुरस्सरम् ॥ शुचिस्थले तथैकान्ते नम्रो गुर्वाज्ञया पठेत् ॥ १२ ॥ त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ॥ त्र्यहं परं च नाश्नीयात्प्राजापत्यव्रतं त्विदम् ॥ १३ ॥ एकैकं ग्रासमश्नीयात्र्यहाणि त्रीणि पूर्ववत् ॥ त्र्यहं चोपवसेदन्त्यमतिकृच्छ्रं

व्रतं त्विदम् ॥ १४ ॥ स्नानं सन्ध्यामुपासीत प्रत्यहं विधिपूर्वकम् ॥ उपवासश्च सप्ताहं शिशुसान्तपनं व्रतम् ॥ १५ ॥ प्रतित्र्यहं पिबेदुष्णजलक्षीरघृतानि च ॥ समाहितः सकृत्स्नायी तप्तकृच्छ्रं व्रतं त्विदम् ॥ १६ ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥ एकरात्रोपवासश्च कृच्छ्रसान्तपनं व्रतम् ॥ १७ ॥ त्र्यहंत्र्यहं तु गोमूत्रादिकं सेव्यं त्र्यहं पुनः ॥ उपवासस्तदा प्रोक्तं महासान्तपनं व्रतम् ॥ १८ ॥ एकैकं ह्रासयेत्पिण्डं कृष्णेऽमायां न भोजनम् ॥ शुक्लेपि वर्धयेच्चापि प्रोक्तं चान्द्रायणं व्रतम् ॥ १९ ॥ पलप्रमाणमन्नं तु ग्रासं शुक्लेपि वर्धयेत् ॥ ह्रसेत्कृष्णे व्रतं चान्द्रायणं स्यादेव मध्यमम् ॥ ॥ २० ॥ चतुरः प्रातरश्नीयाद्विप्रः पिण्डान्कृताह्निकः ॥ चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं व्रतम् ॥ २१ ॥ अष्टावष्टौ समश्नीयात्पिण्डान्मध्यगते रवौ ॥ नियतात्मा हविष्यस्य यतिचान्द्रायणं व्रतम् ॥ २२ ॥ स्नानसन्ध्यादिकं कृत्वा द्वादशाहं न भोजनम् ॥ स्थिरचित्तोऽप्रमत्तश्च पराकाख्यमिदं व्रतम् ॥ २३ ॥ पिण्याकमधुतक्राम्बुसक्तूपोषणकं क्रमात् ॥ षड्भिर्दिनैः सौम्यकृच्छ्रनामकं व्रतमुत्तमम् ॥ ॥ २४ ॥ एवं त्रिरात्रमभ्यासादेकैकस्य यथाविधि ॥ तुलापुरुषवत्त्रीणि स्तोमायनमिदं व्रतम् ॥ २५ ॥ त्रींस्त्रीन्पिडान्समश्नीयान्नियतात्मा दृढव्रतः ॥ हविष्यान्नस्य वैभागमृषिचन्द्रायणं व्रतम् ॥ २६ ॥ सप्तसप्तदिने चैवं त्रिदिने गोस्तनं पिबेत् ॥ षड्दिने वायुभक्षश्च स्तोमायनमिदं व्रतम् ॥ २७ ॥ पर्णदूर्वायवस्विर्णबिल्वपत्रकुशोदकैः ॥ प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्रव्रतं त्विदम् ॥ २८ ॥ एतैर्व्रतैस्तु शुद्धात्मा गुरुशुश्रूषणे रतः ॥ भिक्षाशीवा हविष्याशी भुञ्जन्मौनं समास्थितः ॥ २९ ॥ प्रतिलोमान्पुष्पवतीं यवनान्बौद्धकौलिकान् ॥ आचारहीनाञ्छूद्रांश्च दृष्ट्वा नैव पठेच्छ्रुतिम् ॥ ३० ॥ रात्रेश्चतुर्थप्रहरे पादप्रक्षालनादिकम् ॥ कृत्वासने समाविश्य ज्ञातं वेदं समुद्धरेत् ॥ ३१ ॥ निन्दां स्तुतिं न कस्यापि कुर्यादनृतभाषणम् ॥ नारीं रूपवतीं दृष्ट्वा ध्यायेद्विष्णुं सनातनम् ॥ ३२ ॥ हरिरोम्पठनादौ च तस्यान्ते च समुच्चरेत् ॥ साष्टाङ्गं तु नमस्कारमादावन्ते गुरोश्चरेत् ॥ ३३ ॥ आद्ये यामे चतुर्थी च गणेशानं सर-

१ पर्णोदुम्बरराजी वेति पाठान्तरम् ।

स्वतीम् ॥ प्रयाति रात्रौ यत्तस्मात्पूजनीयो गणाधिपः ॥ ३४ ॥ अह्नश्चतुर्थ-प्रहरे पूजयित्वा विसर्ज्जयेत् ॥ सरस्वतीं तोषयित्वा गणेशं पुनरागताम् ॥ ३५ ॥ मम वक्त्रे स्थितां चेति ध्यात्वा यामे चतुर्थके ॥ पुनः पठेदनध्यायस्तदा पाठं न कारयेत् ॥ ३६ ॥ सार्धयामे प्रतिष्ठा चेत्सप्तमी याति भारती ॥ निकटे कार्त्ति-केयस्य गातुं तस्मात्प्रपूजयेत् ॥ ३७ ॥ सरस्वत्या युतं स्कन्दं तत्प्रभावाच्च धारयेत् ॥ शेषं रात्रौ पुनर्ध्यात्वा स्वागतान्तां पुनः पठेत् ॥ ३८ ॥ त्रयो-दशी चेत्पूर्वार्धे रात्रेः स्पष्टा तदा तु गीः ॥ कैलासं याति नृत्यन्ती प्रदोष-व्रतकारिणी ॥ ३९ ॥ शिवस्याराधनार्थं तु तस्मात्तत्र पठेन्न हि ॥ हठात्पठति तद्यावद्वृथात्वमुपगच्छति ॥ ४० ॥ अस्मिन्प्रदोषसमये तत्पूजाध्यानतत्परः ॥ प्राणायाम्यथ वा मौनी त्यक्त्वाच्छाक्तस्तु सिद्ध्यति ॥ ४१ ॥ सन्ध्यालोपं न कुर्वीत कदाचिदपि कुत्रचित् ॥ प्रातः सन्ध्या सनक्षत्रा ससूर्य्या सायमु-च्यते ॥ ४२ ॥ मुहूर्तपञ्चकादूर्ध्वं विंशत्यर्वाग्यथा यथा ॥ आसन्नोभिजितः कालः श्रेष्ठः श्रेष्ठस्तथा तथा ॥ ४३ ॥ सन्ध्याकालस्य लोपेन मुख्यस्या-ग्निक्रियान्तरम् ॥ प्रायश्चित्तं त्वेकमर्घ्यमधिके सम्प्रदीयते ॥ ४४ ॥ परसन्ध्या कालतोर्वाग्गते काले ततोधिके ॥ अष्टोत्तरशतं तत्र गायत्र्या जप इष्यते ॥ ॥ ४५ ॥ राज्ञा रुद्धो गतो वापि चात्यावश्यककर्म्मणि ॥ प्राणायामत्रयं कृत्वा गायत्र्यष्टोत्तरं शतम् ॥ ४६ ॥ परान्ते भोजनं चैवमनिन्द्यं निष्कृतिः स्मृता ॥ अथ वक्ष्यामि मन्त्राणां गायत्रीं वेदमातरम् ॥ ४७ ॥ यया च सगुणं ब्रह्म गीयते प्रतिपाद्यते ॥ निर्गुणं यां विना मुक्तिर्न कस्यापि प्रजायते ॥ ४८ ॥ महामायास्वरूपं यन्महाकालः स्वयं जपेत् ॥ यत्प्रभावादहं त्वञ्च जातः काल इवापरः ॥ ४९ ॥ गायत्र्या मुनिराख्यातो विश्वामित्रोति ता-पसः ॥ गायत्रीच्छन्द इत्युक्तं देवता सविता स्मृतः ॥ ५० ॥ व्याहृतीः सप्त भूराद्या हृन्मुखांसोरुयुग्मकैः ॥ जठरे चक्रमान्न्यस्य न्यासोयं प्रथमः स्मृतः ॥ ५१ ॥ पादांगुल्यंघ्रिसन्धौ च सन्धौ स्याद्गुल्फपादयोः ॥ गुल्फ-जान्वोस्तथा सन्धौ तथा जानूरुसन्धिषु ॥ ५२ ॥ लिङ्गे नाभौ च हृदये कण्ठे वर्णान्न्यसेत्क्रमात् ॥ करांगुलीमूलसन्धौ मणिबन्धे च कूर्परे ॥ ५३ ॥

भुजमूले मुखे नासिकायाश्चापि कपोलयोः ॥ नेत्रयुग्मे भ्रुवोः शीर्ष्णि चूडाधो वामकर्णके ॥ ५४ ॥ दक्षकर्णे मुखे मस्तके च वर्णान्क्रमान्न्यसेत् ॥ गायत्र्या अक्षरन्यासो द्वितीयः सम्प्रकीर्तितः ॥ ५५ ॥ पदानि दश गायत्र्याः शिरो भ्रूमध्यदृङ्मुखे ॥ कण्ठहृन्नाभिगुल्फेषु जान्वोरंघ्र्योरथ न्यसेत् ॥ ५६ ॥ शिरोदेशे तु गायत्र्याः शिरोन्यासस्तृतीयकः॥ हृदयं ब्रह्मणे प्रोक्तं विष्णवे शिर ईरितम्॥५७॥ शिखा रुद्राय कवचमीश्वराय समीरितम्॥ नेत्रे सदाशिवायोक्त- मस्त्रं सर्वात्मने स्मृतम्॥५८॥ अयं षडङ्गन्यासस्तु चतुर्थः परिकीर्तितः॥ पज्जानु- कटिनाभौ च हृदये कण्ठभालयोः ॥ ५९ ॥ क्रमाद्व्याहृतयो न्यस्याः परब्रह्म च शीर्षके ॥ पुनर्व्याहृतिन्यासोयं पञ्चमः परिकीर्तितः ॥ ६० ॥ तत्सवि- तुर्हृदयाय वरेण्यं शिरसे तथा ॥ भर्गो देवस्य च शिखा कवचं धीमहि स्मृतम् ॥ ६१॥ धियो यो नो नेत्रमुक्तमस्त्रं शेषेण कीर्तितम् ॥ अयं न्यासस्तु षष्ठः स्यात्षडेते पापहारकाः ॥ ६२ ॥ प्राणायामत्रयं कृत्वा ततो ध्यानं समा- चरेत्॥तद्ब्रवीमीह गायत्र्या ध्यानं भक्तमनोरमम् ॥ ६३ ॥ मुक्ताविद्रुमहेमनी- लधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुकलानिबद्धमुकुटां तत्त्वार्थवर्णात्मिकाम् ॥ गायत्रीं वरदाभयांकुशकशाः शुभ्रं कपालं गुणं शङ्खं चक्रमथारविंदयुगलं हस्तैर्वहन्तीं भजे ॥ ६४ ॥ ततस्तु पूजयेद्देवीमष्टावरणसंयुताम् ॥ आदौ संपूज्य देवेशीं कोणाग्रे पूजयेत्ततः ॥ ६५ ॥ त्रिकोणस्याग्निकोणैस्तु प्राद- क्षिण्येन देवताः ॥ ब्राह्मी माहेश्वरी चैव वैष्णवी प्रथमावृतिः ॥ ६६ ॥ तस्याग्रतस्त्वष्टदिक्षु क्रमादष्टौ प्रपूजयेत् ॥ आदित्यमूषां च रविं प्रज्ञां भानुं प्रभां तथा ॥ भास्करं चापि संध्यां च द्वितीयावरणं त्विदम् ॥६७॥ ततोर्च- येदष्टदलकेशरेष्वङ्गषट्ककम् ॥ गायत्र्याश्च तृतीयोक्तं दलमध्ये यजेदिमाः ॥ ॥ ६८ ॥ प्रह्लादिनीं प्रभां नित्यां बिल्वरुद्रां विलासिनीम् ॥ प्रभावतीं जयां शांतां चतुर्थावरणं त्विदम् ॥ ६९ ॥ ततो यजेद्दलाग्रेषु कांतिं दुर्गां सरस्वतीम् ॥ बिल्वरूपां विशालां च ईशानीं व्यापिनीं क्रमात् ॥ विमलां च क्रमात्प्रोक्तं पञ्चमावरणं त्विदम् ॥७०॥ तदग्रिमे त्वष्टदले एताः पूज्यास्तु शक्तयः॥तमोहारिणिका पूज्या विश्वयोनिर्जयावहा ॥७१॥ पद्मालया परा-

शोभा पद्मरूपा च षष्ठकम्॥भवेदावरणं चाग्रे ब्राह्म्याद्याः सप्त मातरः ॥अष्टमी त्वरुणा प्रोक्ताप्रोक्त मावरणं त्विदम्॥ ७२ ॥ रविः सितः कुजो राहुः शनिश्चंद्रो बुधो गुरुः ॥ अष्टमावरणं चैतच्चतुरस्रादिगष्टके ॥ ७३ ॥ दिक्पालाः सप्तमे प्रोक्तास्तदस्त्राणि तथाष्टमे ॥ एवं सम्पूजयेद्देवीं तस्या मुद्राः प्रदर्शयेत् ॥ ॥ ७४ ॥ व्याहृतित्रयसंयुक्तां गायत्रीं सर्वदा जपेत् ॥ चतुर्विंशतिलक्षाणि पुरश्चरणमुच्यते ॥ ७५ ॥ क्षीरोदनं तिलान्दूर्वां सिद्धौदनसमिद्वराः ॥ पृथग्द्रव्यं सहस्रं तु जुहुयान्मन्त्रसिद्धये ॥ ७६ ॥ तर्प्पणादि ततः कृत्वा गुरुं संतोष्य यत्नतः ॥ प्रयोगानाचरेद्विद्वांस्तदनुज्ञापुरस्सरम् ॥ ७७ ॥ तत्त्वसङ्ख्यासहस्राणि मन्त्री प्रजुहुयात्तिलैः ॥ सर्वपापविनिर्मुक्तो दीर्घमायुस्स विन्दति ॥ ७८ ॥ आयुषे चाज्यहविषा केवलेनाथ सर्पिषा ॥ दूर्वान्वितैस्तिलैर्मंत्री जुहुयात्त्रिसहस्रकम् ॥ ७९ ॥ प्रतिद्रव्यमथो मासषट्कं वै जुहुयाद्द्विजः ॥ अरुणार्कैश्च श्वेतार्कैरयुतं नियतेन्द्रियः ॥ ८० ॥ ब्रह्मश्रिये च जुहुयात्प्रसूनैर्ब्रह्मवृक्षजैः ॥ जपेन्मुमुक्षुर्गायत्रीं तुर्य्यपादेन संयुताम् ॥ ८१ ॥ परोरजसे सावदोमिति तुर्य्यः प्रकीर्तितः ॥ विमलोस्य ऋषिश्छंदो गायत्री देवता स्मृतः[1] ॥ ८२ ॥ परमात्मा प्रथमतः प्रणवन्यासमाचरेत् ॥ सप्तव्याहृतिगायत्रीन्यासाद्यान्पूर्ववच्चरेत् ॥ ८३ ॥ ब्रह्मात्मने तु हृदयं शिरो विष्णवात्मने तथा ॥ ८४ ॥ शिखा रुद्रात्मने चेति कवचं चेश्वरात्मने ॥ सदाशिवात्मने नेत्रमस्त्रं सर्वात्मने इति ॥ ८५ ॥ नातः परतरो मन्त्रो नातः परतरं तपः ॥ तृणायन्ते महाविद्यादयः सर्व्वे यदग्रतः ॥ ८६ ॥ अथ गोप्यं प्रवक्ष्यामि गोप्यं मातरि जारवत् ॥ सर्वेषां वेदमंत्राणां यच्च संसिद्धिकारकम् ॥ ८७ ॥ लोलुपाय कृतघ्नाय नास्तिकाय शठाय च ॥ सगर्वाय गुरुद्वेष्ट्रे प्रोच्यशापमवाप्नुयात् ॥ ८८ ॥ येषां वैदिकमन्त्राणां चलनं कर्म्मसूचितम् ॥ तानादिपादसहितान्गायत्र्यास्तु सदा जपेत् ॥ ८९ ॥ अष्टोत्तरसहस्रन्तु तद्व्रतपालनमन्त्रकान्[2]॥मध्यपादेन संयुक्तानन्तिमेन तु नाशकान्॥९०॥

---

१ परमात्मा देवता स्मृत इत्युत्तरत्रान्वयोस्य ॥ २ मन्त्रा इत्यस्य विशेषणमिदम् ॥



अवश्यं जायते सिद्धिर्गायत्री तेजसा इति ॥ अयं संक्षेपतः प्रोक्तो गायत्र्या गोपितो विधिः ॥ ९१ ॥ पद्ममष्टदलं लेख्यं ह्रींकारं कर्णिकास्थितम् ॥ द्वौद्वौ स्वरौ दिग्विदिशं प्रतिपत्रं समालिखेत् ॥ ९२ ॥ किञ्जल्केषु तदग्रेषु गायत्र्यर्णांस्त्रिशस्त्रिशः ॥ तद्बहिर्वृत्तयुगलान्तराले तु समालिखेत् ॥ ९३ ॥ ककाराद्यांस्तथोमापो ज्योती रसोमृतं ब्रह्म॥ भूर्भुवःस्वरोमिति च यन्त्रं सर्वार्थसिद्धिदम् ॥ ९४ ॥ मृत्योर्भयं तु सर्वेषां सर्वदा सर्वकर्म्मसु ॥ तस्मिञ्जिते तु देवादीन्मोक्षान्तं साधयेज्जनः ॥ ९५ ॥ तदर्थं सम्प्रवक्ष्यामि मन्त्रं मृत्युञ्जयाभिधम् ॥ उपासना तस्य तस्माद्दंशेल्पायुश्च नो भवेत् ॥ ९६ ॥ त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्धनम् ॥ उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात् ॥९७॥ वशिष्ठोस्य मुनिश्छन्दोनुष्टुब्देवस्तु त्र्यम्बकः ॥ त्रिचतुर्वसुगोपश्चत्रिभि-

---

१ त्र्यम्बकं हृदयाय नमः, यजामहे शिरसे स्वाहा, सुगन्धिं पुष्टिवर्धनं शिखायै वषट्, उर्वारुकमिव बन्धनात् कवचाय हुम्, मृत्योर्मुक्षीय नेत्रत्रयाय वौषट्, मामृतात् अस्त्रायफट् ॥

वेर्णैः षडङ्गकम् ॥ ९८ ॥ पूर्वपश्चिमयाम्येन्दुकोणेषु तदनन्तरम् ॥ कुर्या-न्न्यासं तथाङ्गेषु नाभिहृत्कण्ठकुक्षिषु ॥ ९९ ॥ लिङ्गे पायौ तथा चोर्वोर्मू-लयोश्चोरुमध्ययोः ॥ जान्वोस्ततो जानुवृत्तयुग्मयोः स्तनयोस्तथा ॥ १०० ॥ पार्श्वयोः पादयोः पाण्योर्नसि शीर्षे च विन्यसेत् ॥ प्रत्येकं मनुवर्णांश्च न्यासो-यन्तु द्वितीयकः ॥ १०१ ॥ पदान्येकादशान्येव शिरोभ्रूयुगलाक्षिषु ॥ वक्त्रे गण्डयुगे भूयो हृदये जठरे पुनः ॥ १०२ ॥ गुल्फोरुजानुपादेषु न्यासमेवं समा-चरेत् ॥ एवं न्यासत्रयं कुर्य्यान्मातृकान्यासपूर्वकम् ॥ १०३ ॥ हस्ताभ्यां कलश-द्वयामृतरसैरापूरयन्तं शिरो द्वाभ्यां तौ दधतं मृगाक्षवलयौ द्वाभ्यां वहन्तं परम् ॥ अंकन्यस्तकरद्वयामृतभरं कैलासकान्तं शिवं स्वच्छाम्भोजनिभं सदेन्दु-मुकुटं देवं त्रिनेत्रं भजे ॥ १०४ ॥ पञ्चाक्षरोदिते पीठे पूजयेद्वृषभध्वजम् ॥ मूर्तिं मूलेन संकल्प्य वक्ष्यमाणेन वर्त्मना ॥ १०५ ॥ पूर्वमङ्गानि सम्पूज्य मूर्तिं पश्चात्तु पूजयेत् ॥ पूर्वादिशादक्षिण्येनेशानाय सूर्य्यमूर्तये ॥ १०६ ॥ महादेवाय सोमेति मूर्तयेन्ते समुच्चरेत् ॥ भवाय क्षितिमूर्तये शर्वाय जलमूर्तये ॥ १०७ ॥ रुद्राय चाग्निमूर्तये उग्राय वायुमूर्तये ॥ भीमायाकाशमूर्तये ङेन्तं पशुपातिं तथा ॥ १०८ ॥ यजमानमूर्तयेचेति दलाग्रेषु ततो यजेत् ॥ रमा राका प्रभा ज्योत्स्ना पूर्णेषा पूरणी सुधा ॥ १०९ ॥ तृतीयावरणे चैताश्चतुर्थावरणे त्विमाः ॥ विद्या विश्वा सिता शुक्ला सारा साध्या शिवा निशा ॥ ११० ॥ आर्य्या प्रज्ञा प्रभा मोहा शान्तिः कान्तिर्धृतिर्मतिः ॥ पञ्चमावरणे चैताः षष्ठा-वरणगा अथ ॥ १११ ॥ धरा माया सती पद्मा शान्ता मायो द्वयामला ॥

---

१ त्र्यं नमः पूर्वे, बं पश्चिमे, कं याम्ये, यं उत्तरे, जां आग्नेय्याम्, मं नैर्ऋत्यां, हे वायव्ये, सुं ईशानकोणे, गं नमो नाभौ, धिं हृदये, पुं कण्ठे, ष्टिं कुक्षौ, वं लिंगे, र्द्धं पायौ, नं दक्षोरुमूले, उं वामोरुमूले, र्वां दक्षो-रुमध्ये, रुं वामोरुमध्ये, कं दक्षिणजानुनि, मिं वामजानुनि, वं दक्षजानुवृत्ते, बं वामजानुवृत्ते, न्धं दक्षस्तने, नात् वामस्तने, मृं दक्षपार्श्वे, त्योः वामपार्श्वे, मुं दक्षपादे, क्षीं वामपादे, यं दक्षपाणौ, माँ वामपाणौ मृं नासिकायाम्, तात् शीर्षे २ त्र्यम्बक नमः शिरसि यजामहे भ्रुवोः सुगन्धिमक्ष्णोः पुष्टिवर्धनं मुखे, उर्वारुकं कपोलयोः इव हृदये, बन्धनात् जठरे, मृत्योः ऊर्वोः मुक्षीयजान्वोः मागुल्फयोः मृतात्पादयोः, इति न्यासत्रयम् ।

सप्तमे लोकपालाश्च तदस्त्राणि तथाष्टमे ॥ ११२ ॥ जपेल्लक्षमिमं मन्त्रमेवं ध्यायेज्जितेन्द्रियः ॥ जुहुयाद्दशभिर्द्रव्यैरयुतं घृतसंयुतैः ॥ ११३ ॥ बिल्वं-पलाशं खदिरं वटं च तिलसर्षपौ ॥ पायसं दधि दूर्वां च तथैकेन सहस्रकम् ॥ ॥ ११४ ॥ तर्पयित्वाभिषिच्याथ ब्राह्मणांस्तर्पयेद्गुरुम् ॥ एवं कृते प्रयोगार्हो जायतेयं महामनुः ॥ ११५ ॥ अयुतं जुहुयाद्बिल्वसमिद्भिः सम्पदे सुधीः ॥ जुहुयाद्ब्रह्मवृक्षस्य समिद्भिर्ब्रह्मतेजसे ॥ ११६ खदिरैरयुतं हुत्वा शान्तिं पुष्टिमवाप्नुयात् ॥ समिद्भिर्वटवृक्षस्य जुहुयाच्च यथाविधि ॥ ११७ ॥ धनधान्यसमृद्धस्स्यादयुतेन तु साधकः ॥ तिलैस्तत्सङ्ख्यया हुत्वा सर्वपापैः प्रमुच्यते ॥ ११८ ॥ सिद्धार्थैरयुतं हुत्वा शत्रून्विजयते नृपः ॥ अनेनैव विधानेन न स्यान्मृत्युरकालतः ॥ ११९ ॥ पायसेन कृतो होमो रक्षाश्रीकीर्तिकान्तिदः ॥ गोदुग्धेन च सिद्धान्नं हुत्वा कृत्यां विनाशयेत् ॥ १२० ॥ अयमेव मतो होमः शान्तिश्रीसम्पदावहः ॥ दधिहोमेन संवादं कुर्याद्विद्वेषिणोर्मिथः ॥ १२१ ॥ प्रत्यहं जुहुयान्मन्त्री दूर्वामष्टोत्तरं शतम् ॥ आमयान्निखिलाञ्जित्वा दीर्घमायुरवाप्नुयात् ॥ १२२ ॥ जुहुयाज्जन्मदिवसे पायसान्नैर्घृतान्वितैः ॥ इच्छन्ननिन्दितां लक्ष्मीमारोग्यं विपुलं यशः ॥ १२३ ॥ गव्यदुग्धघृताक्ताभिर्दूर्वाभिर्जुहुयाद्वशी ॥ सविंशति शतं सम्यग्यज्जन्मदिवसे सुधीः ॥ आमयैः सकलैर्मुक्तो जीवेद्वर्षशतं सुखी ॥ १२४ ॥ काश्मरीसमिधः सर्पिःपयोन्नं त्रिशतं पृथक् ॥ जुहुयाद्ब्राह्मणानन्ते भोजयेन्मधुरान्वितम् ॥ ॥ १२५ ॥ प्रीणयेद्बहुधान्याद्यैरात्मनो गुरुमादरात् ॥ अनामयमवाप्नोति दीर्घमायुः श्रिया सह ॥ १२६ ॥ सघृतेन पयोन्नेन हुत्वा पर्वणि-पर्वणि ॥ राज्यश्रियमवाप्नोति षण्मासान्नात्र संशयः ॥ १२७ ॥ लाजैर्विशुद्धैर्जुहुयात्कन्या चैव वराप्तये ॥ क्षीरद्रुमसमिद्धोमाद्ब्राह्मणादीन्वशं नयेत् ॥ ॥ १२८ ॥ स्नात्वा सहस्रं प्रजपेदादित्याभिमुखो मनुम् ॥ आधिव्याधिविनिर्मुक्तो दीर्घमायुरवाप्नुयात ॥ अनेन मनुना सर्वं साधयेदिष्टमात्मनः॥ १२९॥ अथ दारिद्र्यनाशाय वक्ष्ये मन्त्रं धनेशितुः ॥ मेधातिथिर्ऋषिः प्रोक्तो गायत्रं छन्द ईरितम् ॥ १३० ॥ अङ्गन्यासकरन्यासा देवता सदसस्पतिः ॥ जपं

कुर्य्याच्च मासे तु चत्वारिंशत्सहस्रकम् ॥ १३१ ॥ देवताप्रीतये कार्य्यः षण्मासं तु मनोर्जपः॥पुरश्चरणमेतत्स्यात्स्वशक्त्या विप्रभोजनम्॥ १३२॥ अश्वारूढं कुन्तपाणिं कुबेरं चित्रिणीप्रियम् ॥ निधीश्वरं स्वर्णवर्णं वन्दे गन्धर्वनायकम्॥ ॥ १३३ ॥ अथ मन्त्रः ॥ सदस्पतिमद्भुतं प्रेयमिन्द्रस्य काम्यत्सनिं ते धामयाशिषम् ॥ ॥ १३४ ॥ चत्वारिंशत्सहस्रं यः प्रतिमासं जपेन्नरः महाभाण्डारिकः कुर्य्यात्तस्य दारिद्र्यनाशनम् ॥१३५॥ सर्वार्थसाधकं वक्ष्ये संग्रामविजयप्रदम् ॥ जलन्धरवधायाहं यत्स्मरामि शृणुष्व तत् ॥ १३६ ॥ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ॥ स नः पारिषदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥१३७॥ त्रिष्टुप्छन्दो मुनिश्चास्य मरीचिः कश्यपो मतः ॥ देवता जातवेदोऽग्निः षडङ्गानि समाचरेत्॥ १३८॥ नवागषट्सप्तनागसप्तभिर्मनुवर्णकैः॥ अंगुष्ठयोर्गुल्फयोश्च जङ्घयोर्जानुनोस्तथा ॥ १३९॥ ऊर्व्वोः कट्योर्लिङ्गनाभ्योर्हृदये स्तनयोस्तथा ॥ १४० ॥ पार्श्वयोश्च तथा पृष्ठे स्कन्धयोरन्तरे तयोः॥ बाह्वोश्चैवोपबाह्वोश्च द्वयोः कूर्परयोरपि॥ १४१॥ प्रकोष्ठद्वितये चापि मणिबन्धद्वये तथा ॥ करयोस्तलयोरास्ये नस्यक्ष्णोश्चैव कर्णयोः ॥१४२॥ भ्रुवोश्चैव तु मास्तिक्ये मूर्द्धनीति द्वितियकः । शिखायां

---

१ॐ जातवेदसे सुनवाम अंगुष्ठाभ्यां नमः, सोममरातीयतस्तर्जनीभ्यां नमः, निदहाति वेदः मध्यमाभ्यां नमः, स नः पारिषदति अनामिकाभ्यां नमः, दुर्गाणि विश्वा नावेव कनिष्ठिकाभ्यां नमः, सिन्धुं दुरितात्यग्निः करतलकरपृष्ठाभ्यां नमः ॥ एवं हृदयादिन्यासः ॥ अथाक्षरन्यासः ॥ जा दक्षपादांगुष्ठे, त वामपादांगुष्ठे, वे दक्षगुल्फे, द वामगुल्फे, से दक्षजङ्घायाम्, सु वामजघने, न दक्षजानुनि वा वामजानुनि म दक्षोरौ, सो वामोरौ, म कट्याम्, मलिङ्गे रानाभौ, ती हृदये, य दक्षस्तने, तो वामस्तने, नि दक्षपार्श्वे, द वामपार्श्वे, हा पृष्ठे, ति दक्षस्कन्धे, वे वामस्कन्धे, दः दक्षस्कन्धांतरे, स वामस्कन्धान्तरे, ना दक्षबाहौ, प वामबाहौ, रि दक्षापबाहौ ष वामोपबाहौ, द दक्षकूर्परेति वामकूर्परे, दुर्दक्षप्रकोष्ठे, गा वामप्रकोष्ठे, णि दक्षमणिबन्धे, वि वाममणिबन्धे, श्वादक्षकरतले, न वामकरतले वे मुखे' व नासिकायाम्, सिं दक्षिणनेत्रे, धुं वामनेत्रे. दु दक्षकर्णे, रि वामकर्णे, ता भ्रुवोर्मध्ये, त्यमस्तके ग्निः मूर्द्धनि॥ २अथ पदन्यासः ॐ जातवेदसे शिखायाम् सुनवाम ललाटे; सोमं नेत्रयोः अरातीयतः कर्णयोः, निदहाति ओष्ठे, वेदः अधरे, सः जिह्वायाम् नः कण्ठे, पारिषदति बाह्वोः, दुर्गाणि हृदि विश्वा कुक्षौ, नावा कटौ, इव गुह्ये, सिन्धुं ऊर्व्वोः, दुरिता जान्वोः, अति जंघयोः, अग्निः पादयोः ॥

च ललाटे च नेत्रयोः कर्णयोस्तथा ॥ १४३ ॥ ओष्ठेधरे च जिह्वायां कण्ठे बाह्वोस्तथा हृदि ॥ कुक्षौ कटौ च गुह्ये च ऊर्वोर्जान्वोश्च जङ्घयोः ॥ पादयोश्च पदन्यासः प्रोक्तोयं ध्यानमुच्यते ॥ १४४ ॥ विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम् ॥ हस्तैश्चक्रवरासिखेटविशिखां पाशांकुशा[१] तर्जनीं बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्राम्भजे ॥ १४५ ॥ कृत्वा तु सर्वतोभद्रं पूर्वोक्तं मण्डलं शुभम् ॥ तत्कर्णिकायां षट्कोणे मण्डूकाद्यान्समर्चयेत ॥ १४६ ॥ पूर्वोक्तान्परतत्वांस्तान्केशरेषु तदग्रतः ॥ जयाञ्च विजयाम्भद्रां रुद्रां कालीं च पूर्वतः ॥ १४७ ॥ सुमुखीं दुर्मुखीं चन्द्रमुखीं सिंहमुखीं तथा ॥ मध्ये दुर्गां यजेत्पश्चादासनं सिंहमन्त्रतः ॥१४८॥ तारमुक्त्वा वज्रनखदंष्ट्राय च महा ततः॥ सिंहाय हुं फट् ह्रचेति मन्त्रः सप्तदशाक्षरः ॥ १४९ ॥ मूर्तिं मूलेन सङ्कल्प्य तस्यामावाह्य पूजयेत् ॥ केशरेषु षडङ्गानि पूर्वतोष्टदले पुनः ॥ १५० ॥ जातवेदाः सप्तजिह्वो द्वितीयो हव्यवाहनः ॥ ततश्चोदरजं वैश्वानरकौमारतेजसम् ॥१५१॥ विश्वमुखं देवमुखं पीठे कोष्ठचतुष्टये ॥ धरात्मानं जलात्मानं वह्न्यात्मानं निरात्मकम् ॥ १५२ ॥ निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिश्च गौणिका ॥ पूषावाण्यौ ततो वीथी शची तोयात्मिका तथा ॥१५३॥ नित्या दयावती चैव ह्यष्टमीकारिणीमता॥तथैव नवमी नाम्ना प्रोक्ता चैव तिरस्क्रिया ॥१५४॥देवमाता च दमना प्रिया पश्चान्निरूप्यते॥समाराध्या नन्दिनी च शरीरेषुविमर्दिनी॥१५५॥पद्माख्या दण्डिनी तिग्मा दुर्गा गायत्र्यतःपरम्॥निरवद्या विशालाक्षी सौम्या सायं निरूप्यते ॥१५६॥ स्वरोद्वाहा नादिनी च वेदना वह्निगर्भिणी॥सिंहवासा च धूम्रा च दुर्विषहा रिरंसुका॥१५७॥तापहरा त्यक्तदोषानिस्सपत्नेति तद्बहिः॥ लोकपालांस्तदस्त्राणि पूजां प्राग्वत्समापयेत् ॥१५८॥ मन्त्रं वर्णसहस्राणि जपेद्धोमं पृथक्पृथक् ॥ वेदवेदाब्धिसङ्ख्याकं तिलसिद्धार्थचित्रजैः ॥ १५९ ॥ मूलैश्च समिधाभिश्च वटोदुम्बरपैप्पलैः ॥ अर्कप्लक्षोद्भवैश्चापि घृतेन हविषान्नकैः ॥ १६० ॥ सर्वैर्घृताक्तैर्जुहुयात्तिलैश्चान्ते

१ ॐ वज्रनखदंष्ट्राय महासिंहाय हुं फट् नमः इति सिंहपूजनमन्त्रः ॥ २ भागुरिमते टाप् ॥

घृताहुतीः ॥ ततस्सन्तर्प्य सतिलैः कृत्वा चात्माभिषेचनम् ॥१६१॥ समाराध्य धरादेवीं तोषयेद्गुरुमात्मनः ॥ इत्थञ्जपादिभिः सिद्धे मन्त्रेस्मिन्साधकोत्तमः ॥ १६२ ॥ आग्नेयास्त्राधिकारी स्यात्तद्विधानमितीर्य्यते ॥ आग्नेयास्त्रमिति प्रोक्तं विलोमग्रथितो मनुः ॥ १६३ ॥ पूर्वोक्ता एव मुन्याद्याः षडङ्गानि विलोमतः ॥ [1]त्यतारिदुर्गु सिं प्रोच्चार्य्यात्र हृदयं मतम् ॥१६४॥ ववेनाश्वा विणिर्गाद्दु शिरोन्यासः प्रकीर्तितः ॥ [2]एवमग्रेपि जानीहि पूर्वोक्तार्णविलोमतः ॥ १६५ ॥ पूर्वोक्तसङ्ख्यकैर्वर्णैर्वर्णन्यासस्तथैव च ॥ तथैव च पदन्यासो जपः पूजा च पूर्ववत् ॥ १६६ ॥ पञ्चगव्यसुपक्वेन चरुणा-तस्य सिद्धये ॥ चतुस्सहस्रं च शतं चत्वारिंशच्चतुष्टयम् ॥ १६७ ॥ होमयेदर्च्चनं प्राग्वज्जपश्च प्रतिलोमतः ॥ सर्वत्र देशिकः कुर्य्याद्गायत्र्या द्विगुणं जपम् ॥ १६८ ॥ क्रूरकर्म्मणि कुर्वीत प्रतिलोमविधानतः ॥ शान्तिकं पौष्टिकं कर्म्म कर्त्तव्यमनुलोमतः ॥ १६९ ॥ [3]ईयाद्यः पञ्चाक्षरः पादो ज्ञेयो ज्ञानेन्द्रियात्मकः ॥ [4]धुमाद्यः पञ्चवर्णो द्वितीयः कर्म्मेन्द्रियात्मकः ॥ १७० ॥ [5]श्वाद्यस्तृतीयः पञ्चार्णः सर्वभूतमयः स्मृतः ॥ [6]त्याद्यः सप्ताक्षरः पादश्चतुर्थो धातुरूपकः ॥ १७१ ॥ दः पूर्वः पञ्चमः पाद ऊर्म्मिरूपः षडक्षरः ॥ तो वर्णादिः षडर्णोन्त्यः षट्कौशिकमयो मतः ॥ १७२ ॥ सोपूर्वः पञ्चवर्णोन्त्यः शब्दादिमय ईरितः ॥ से वर्णाद्योष्टमो ज्ञेयः पञ्चार्णा वचनादिकः ॥१७३॥ एवं तत्त्वसमायोगार्त्परिक्लृप्तिरुदीरिता ॥ तत्तत्पादाक्षरोत्पन्नास्ताराद्या वह्निदेवताः ॥ १७४ ॥ प्रधानमूर्तिप्रतिमाः स्वस्वकर्म्मेरितप्रभाः ॥ प्रज्वलत्केशवसना भीमदंष्ट्रा भयावहाः ॥ १७५ ॥ देवता इन्द्रियोत्पन्ना ऊर्ध्वहस्तय ई-

१ तिदपरिपनः स शिखायै वषट्, ॥ २ दः वेति[illegible]नि कवचायहुम, तोयती राममसो नेत्रत्रयाय वौषट्, मयानसु सेदवेतजा अस्त्राय फट् ॥ मन्त्रस्य विलोमेन अक्षरैः पादकल्पना क्रियते ॥ ३ श्रोत्रत्वक्जिह्वाघ्राणचक्षूंषि इमानि पञ्च ज्ञानेन्द्रियाणि ॥ ४ वाक्पाणिपादपायूपस्थानीमानि पञ्च कर्मेन्द्रियाणि ॥ ५ पृथ्व्यप्तेजोवाय्वाकाशानि पंचमहाभूतानि ॥ ६ त्वग्रक्तमांसमेदोस्थिमज्जाशुक्राणि सप्त धातवः ॥ एते सप्त धातवः ॥ ७ बुभुक्षा च पिपासा च प्राणस्य मनसस्तथा ॥ शोकमोहौ शरीरस्य जन्ममृत्यू षडूर्मयः ॥ ८ पादाक्लृप्तिरुदीरितेति वा पा० ॥

रिताः ॥ देवता भूतपादोत्थास्तिर्य्यंग्नेत्र्याः[1] प्रकीर्तिताः ॥ १७६ ॥ धातुरूपाक्षरोत्पन्ना उभयात्मदृशो मताः ॥ ऊर्म्मिजा ऊर्ध्ववदनाः कोशोत्थास्तिर्य्यगाननाः ॥ १७७ ॥ अर्थसङ्ख्यासमुत्पन्ना देवता द्विदिगाननाः ॥ एताः सर्वास्स्मृताः क्लीबा इन्द्रियार्थोद्भवास्स्त्रियः ॥ १७८ ॥ याम्यो मन्त्री दहेच्छत्रो राष्ट्रं सगिरिकाननम् ॥ अस्त्रं मनुष्यनक्षत्रे प्रारभेत विचक्षणः ॥ ॥ १७९ ॥ आसुरेषु प्रयुञ्जीयाद्देवतासु शुभं हरेत् ॥ उपक्रमेत नन्दासुरिक्तास्वस्त्रं विसर्जयेत् ॥ ॥ १८० ॥ भद्रास्वाहरणं कुर्य्याज्जपादेः कार्य्यमुत्तमम् ॥ उपक्रमो भौमवारे शनिवारे विसर्जयेत् ॥ १८१ ॥ प्रतिसंहरणं वारे गुरोः शुक्रस्य वा भवेत् ॥ स्थिरेषु राशिष्वारम्भश्चरेषु स्याद्विसर्जनम्॥ ॥ १८२ ॥ अस्त्रसंहरण कुर्य्यादुभयेषु विचक्षणः ॥ कृष्णपक्षे चरेदस्त्रं विसृजेच्छशिना पुनः ॥ १८३ ॥ शुक्लपक्षक्रमादस्त्रं पुनरात्मनि संहरेत् ॥ भानुना मोक्षसंहारौ कुर्य्यात्पक्षद्वये सुधीः ॥ १८४ ॥ पश्चिमाभिमुखो भूत्वा सर्वकर्म्माणि साधयेत् ॥ नक्षत्रवृक्षसकलान्साध्याख्यान्कर्म्मसंयुतान् ॥ ॥१८५॥ राजीतैलेन सतिलान्पृथक्सप्तसहस्रकम् ॥ जुहुयात्संयतो भूत्वा रिपुर्यमपुरं व्रजेत् ॥ १८६ ॥ सप्तरात्रं प्रजुहुयात्सिद्धार्थस्नेहसंयुतैः ॥ आर्द्रवस्त्रो वृष्टिकाले मरीचैर्मनुनामुना॥ १८७॥ निगृह्यते ज्वरेणारिः प्रलयाग्निसमेन सः॥ तालपत्रे समालिख्य शत्रुनाम यथाविधि ॥ १८८॥ आग्नेयास्त्रेण संवेष्ट्य कुण्डमध्ये निखन्यते॥ मारिचैश्च हुते तस्मिञ्ज्वराक्रान्तः स जायते॥ १८९॥ तदादाय क्षिपेत्तोये शीतले स वशो भवेत्॥ सामुद्रसालिलं हिंगुं विषं जीरकलोहिते ॥ १९० ॥ क्वथिते पुत्तलिं कृत्वा नक्षत्रतरुनिर्मिताम् ॥ अधोवक्त्रां विनिक्षिप्य यष्ट्या विषतरूत्थया ॥ १९१ ॥ तच्छिरस्ताडनं कुर्य्याज्जपन्मन्त्रं विलोमतः ॥ सप्ताहान्मरणं याति शत्रुर्ज्वरविमोहितः ॥ १९२ ॥ आदित्यरथनागेन्द्रग्रस्तांघ्रिं तद्विषाततम् ॥ नग्नं तैलेन लिप्ताङ्गं दग्धं भानुमरीचिभिः ॥ १९३ ॥ अधोमुखं निजरिपुं ध्यात्वा क्वथितवारिणा ॥ तर्पयेद्भानुमालोक्य शत्रुर्मृत्युप्रियो भवेत् ॥१९४॥ बिभ्रतीं मुसलं शूलं ध्यायेत्कालघनप्र-

१ तिर्यग्वक्त्राः वेतिपाठः ॥

भाम्॥कार्पासबीजैर्निंबस्य पत्रैर्मेषीघृतप्लुतैः ॥ हुत्वा विद्वेषयेच्छत्रुं नखेनाहत्य देशिकः ॥ १९५ ॥ बिभ्राणां तर्जनीं शूलं ध्यात्वा दुर्गाम्भयङ्कराम् ॥ ॥ १९६ ॥ महिषीघृतसंसिक्तैः पल्लवैर्विषवृक्षजैः ॥ हुत्वा रिपोर्महासेनामुच्चाटयति मन्त्रवित् ॥ १९७ ॥ ध्यात्वा देवीं पुरा प्रोक्तां चरुभिर्मरिचान्वितैः ॥ अजारुधिरसंसिक्तैर्जुहुयाद्दिवसत्रयम् ॥ रिपोरुच्चाटनं कुर्यात्सेनायानात्र संशयः ॥ १९८ ॥ अग्निशूलाकुलां दुर्गां ज्वलन्तीं प्रलयाग्निवत् ॥ ध्यात्वा सर्षपतैलाढ्यैर्बीजैर्धत्तूरसम्भवैः ॥ हुत्वा विमोहयेच्छत्रुं मरिचैर्वा ससर्षपैः ॥ १९९ ॥ कालाञ्जननिभां दुर्गां शूलखड्गकरां स्मरेत् ॥ नक्षत्रवृक्षसम्भूतैर्व्रणवृक्षजसञ्ज्ञकैः ॥ समिद्वरैः प्रजुहुयाज्जयेन्मासेन वैरिणम् ॥ ॥२००॥सिंहारूढां प्रधावन्तीं धावमानं रिपुं प्रति ॥ शरान्कार्मुकनिर्मुक्तान्वह्निज्वालामुखाकुलान् ॥ २०१ ॥ मुञ्चंतीं संस्मरन्दुर्गां तर्पयेदुष्णवारिणा ॥ भानुबिम्बं समालोक्य शत्रोरुच्चाटनं भवेत् ॥ २०२ ॥ अतिदुर्गाममोघर्ष्टिगदाहस्तां विचिन्तयेत् ॥ विद्युद्दामसहस्राभां महिषीघृतसम्प्लुतैः॥ पुरोक्तैर्जुहुयान्निम्बविभीतकसमिद्वरैः ॥ कोद्रवैरथ शत्रोश्च सेनायास्स्तम्भनं भवेत् ॥ ॥ २०३ ॥ इषुजालाङ्कुशाढ्यांगां नित्यं दुर्गामनुस्मरेत् ॥ लवणैर्मधुरैस्साध्यकाष्ठैर्वा ह्येधितेनले ॥ जुहुयान्निशि सप्ताहान्मंत्रविद्वशयेन्नृपान् ॥ २०४ ॥ पाशांकुशधरां रक्तां विश्वदुर्गां विचिन्तयेत् ॥ फलिनीकुसुमैः फलैश्चन्दनाम्भस्समुक्षितैः ॥ जुहुयान्निशि यो मन्त्री तस्य विश्वं वशं भवेत् ॥२०५॥ शरच्चंद्रनिभां देवीं विराजत्परमामृताम् ॥ पाशांकुशकरां ध्यात्वा सिन्धुदुर्गां समिद्वरैः ॥ वेतसैर्मधुरासिक्तैर्जुहुयाद्वृत्तिसिद्धये ॥ २०६ ॥ जपाकुसुमसंकाशामग्निदुर्गां विचिन्तयेत ॥ हुनेल्लवणपुत्तल्या मधुरत्रययुक्तया ॥ आकर्षेद्वाञ्छितां साध्यां मन्त्रविन्नात्र संशयः ॥ २०७ ॥ अतिदुर्गेयमत्याद्या षडंतादिस्समीरिता ॥ दुवर्णांता तथान्याद्या गानि दुर्गा प्रकीर्तिता ॥ २०८ ॥ विश्वाद्या चैव मंत्रेस्मिन्विश्वदुर्गा समीरिता ॥ २०९ ॥ सिन्ध्वाद्या सावकारांता सिंधुदुर्गा निगद्यते ॥ त्यांतामग्न्यादिकामेवमग्निदुर्गां विदुर्बुधाः ॥ २१० ॥ अङ्गणे स्थंडिलं कृत्वा सुगन्धिकुसुमादिभिः ॥ देवीं तत्रार्चये-

१ क्षणात्सेनामुच्चाटयति वा पा० । २ विगलदिति पा० ॥

न्नित्यं प्रागुक्तेनैव वर्त्मना ॥ २११ ॥ आहरेद्रात्रिषु बलिं चरुणा सर्वसिद्धिदम् ॥ कृत्यारोगभयद्रोहभूतानि नाशयेदयम् ॥ २१२ ॥ यथावदग्निमाराध्य गन्धैः पुष्पैर्मनोहरैः ॥ स्थित्वा तस्याग्रतो मंत्री जपेन्मन्त्रमनन्यधीः ॥ जपोयं सर्वसिद्ध्यै स्यान्नात्र कार्या विचारणा ॥२१३ ॥ लवणैर्मधुरासिक्तैर्जुहुयात्पश्चिमामुखः ॥ मन्त्रार्णसंख्यया मंत्री रिपुमात्मवशं नयेत ॥२१४॥ शालीन्प्रक्षाल्य संशोध्य शुद्धान्कुर्वीत तण्डुलान् ॥ निवास्य पञ्चगव्येषु संस्कृते हव्यवाहने ॥२१५॥ पाचयेच्च जपन्मन्त्रमवतार्य पुनः सुधीः ॥ अर्चयित्वा विशदधीः समिद्धेग्नौ यथा पुरा ॥ २१६ ॥ जुहुयाच्चरुणाज्येन तथा चाष्टसहस्रकम् ॥ पत्रे संतापनं कुर्यात्साध्यं तत्प्राशयेद्गुरुः ॥२१७॥ शिष्यं तं पूजयेद्वारि संपातं प्राङ्गणांतरे ॥ कृत्यावेगा विनश्यन्ति सहभूतग्रहामयैः ॥ परैरुत्सादिता कृत्या पुनस्तानेव भक्षयेत् ॥ २१८ ॥ व्रीहिभिर्हविषा क्षीरैः पयोवृक्षसमिद्वरैः ॥ आज्यैर्मधुत्रयोपेतैर्मन्त्रैर्दशशतं पृथक् ॥ जुहुयात्सम्पदां भूमिः साधको भवति ध्रुवम् ॥ २१९ ॥ भास्करे मेषराशिस्थे मंत्रज्ञानगुणे दिने ॥ गत्वा नद्यां जपन्मन्त्रं सततं पुष्कलाम्भसि ॥ ॥ २२० ॥ उद्धृत्यादाय सिकताः संशोध्य परिशोधयेत् ॥ न्यस्य ताः पञ्चगव्येषु संभूते हव्यवाहने ॥ भर्जयेन्मनुना सिद्ध्यै दर्व्या ब्रह्मतरूत्थया ॥ २२१ ॥ सिंहमेषधनुःस्थेर्के कृष्णपक्षेष्टमीतिथौ ॥ विशाखाकृत्तिकामूलहस्तोत्तरमघास्वथ ॥ २२२॥ रोहिण्यां श्रवणे वारे मन्दवाक्पतिदैवते ॥ विहायान्येषु कुर्वीत सिकतास्थापनं सुधीः ॥ २२३ ॥ गृहग्रामादिराष्ट्राणां रक्षार्थं सिकताः शुभाः ॥ प्रस्थाढकघटोन्माना मध्यादिष्ववरेष्विमाः ॥ ॥ २२४ ॥ नवसु प्रक्षिपेज्जप्त्वा तेषु सम्पूजयेत्क्रमात् ॥ मध्यादिदेवीमन्त्राणि कपालान्तानि देशिकः ॥ २२५ ॥ चक्रं शङ्खमसिं खेटं बाणांश्चापं त्रिशूलकम् ॥ कपालं स्वस्वमन्त्रेण सम्पूज्यान्ते बलिं हरेत् ॥२२६॥ नक्षत्रग्रहराशीनां लोकेशानां बलिं हरेत् ॥ विहिता यत्र रक्षा या वर्धन्ते तत्र सम्पदः ॥ २२७ ॥ क्षुद्रग्रहमहारोगभयभूतसरीसृपाः ॥ अमुना विलयं यान्ति विधिना नात्र संशयः ॥ २२८ ॥ सिकातानां विशुद्धानां कुडवाश्चापि

१ चतुर्भिः पलैः कुडव उच्यते ॥

षोडश ॥ पञ्चगव्ययुते पात्रे ब्रह्मवृक्षेण निर्मिते ॥ २२९ ॥ निक्षिपेद्विधिना यत्र तत्र तिष्ठन्ति सम्पदः ॥ दिनेदिने प्रवर्धन्तेऽकालवृष्ट्यादिभिः सह॥२३०॥ महोत्पाता विनश्यन्ति कृत्याद्रोहामयग्रहाः ॥ चरुगव्याश्मनां कुर्य्यात्स्थापनं विधिनामुना ॥ २३१ ॥ गोमूत्रं प्रस्थमात्रं स्याद्गोमयंस्यात्तदर्धकम् ॥ आज्यात्सप्तगुणं क्षीरं गोमूत्रात्त्रिगुणं दधि ॥ २३२ ॥ गोमूत्रेण समं सर्प्पिः सर्वं वा सममुच्यते ॥ गावः स्युः कपिलाः श्वेताः सितधूम्रारुणप्रभाः॥२३३॥ अभावे च सिताः सर्वाः सर्वं वा कपिलोद्भवम् ॥ एकोनपञ्चाशत्कोष्ठे फलके ब्रह्मशाखिनः ॥ २३४ ॥ विहाय कोणकोष्ठानि मध्यकोष्ठे लिखेच्च ह्रीम् ॥ तदूर्ध्वकोष्ठमारभ्य प्रादक्षिण्येन संलिखेत् ॥ २३५ ॥ देवीं तत्र समावाह्य पूजयेदुपचारकैः ॥ कृत्वा होमन्तु सम्पातं निखनेत्तद्यथा पुरा ॥ दद्याद्बलिं यथापूर्वं तस्य पूर्वोदितं फलम् ॥ २३६ ॥ नवकोष्ठान्वितं लेख्यं चतुरस्रं सुशोभनम् ॥ साध्यनामान्वितां मायां मध्यकोष्ठे तु संलिखेत् ॥ २३७ ॥ तदधःकोष्ठमारभ्य प्रादक्षिण्येन संलिखेत् ॥ मूलमन्त्रस्य पूर्वोक्तानष्टौ पादांश्च तद्बहिः ॥ २३८ ॥ वृत्तद्वयान्तराले तु मातृकार्णैः प्रवेष्टयेत् ॥ तद्बहिश्च-तुरस्रं स्याद्धारणामन्त्रमद्भुतम्॥सर्वभूतभयहरं श्रीकीर्त्यायुःप्रदं शुभम्॥२३९॥ आग्नेयास्त्रस्य जानाति विसर्गादानकर्म्मणी ॥ यः पुमान्सगुणैः श्रेष्ठस्तस्याधीनं जगत्त्रयम् ॥ २४० ॥ अतिदुर्गामनुं वक्ष्ये यद्दिनास्त्रमितीर्यते ॥ प्रतिलोम-मिमं मन्त्रं कृत्यास्त्रं परिचक्षते ॥ २४१ ॥ अतिदुर्गाणि विश्वानावेव सिन्धुं दुरितात्यग्निः ॥ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः स नः परिषत् ॥ २४२ ॥ अङ्गन्यासस्तु पूर्वोक्तो वर्णन्यास इतीरितः ॥ क्रमेणा-नेन वर्णानाम्पदानां न्यास इष्यते ॥ २४३ ॥ ध्यानं चैव पुरा प्रोक्तं कृत्या-स्त्रस्य विलोमतः ॥ न्यासादिकं तथा ध्यानं मुनिश्छन्दश्च पूर्ववत् ॥२४४॥ पुरश्चर्य्यादिकं सर्वं प्रयोगान्कीर्त्तयाम्यहम् ॥ भानुबिम्बगतं शत्रुं मध्ये वक्रं विषाहतम् ॥ २४५ ॥ मूलादुत्थितया ग्रस्तं कुण्डल्या भावयेत्सुधीः ॥ मूलाधारेपि चेत्सद्यस्तस्य कालं स भावयेत् ॥ दिनद्वयाज्ज्वराक्रान्तो रिपुः

१ षोडशपलैः प्रस्थः ।

प्राणान्विमुञ्चति ॥ २४६ ॥ दिनास्त्रेण प्रविद्धाङ्गं स्वाधिष्ठानगतं रिपुम् ॥ पञ्चवायुसमिद्धेन चाग्निना दग्धविग्रहम् ॥ ध्यायेन्मनुं जपेत्सद्यः स भवेद्यमवल्लभः ॥ २४७॥ मणिपूरगतं शत्रुमग्निना दीप्तविग्रहम्॥ध्यायन्दिनास्त्रं प्रजपेत्स मृत्युवशतां व्रजेत् ॥ २४८ ॥ अनाहितो हतः शत्रुर्निर्दग्धो मन्त्रवह्निना ॥ पाशेन बद्ध्वा शीघ्रं स नीयते यमकिङ्करैः ॥ २४९ ॥ विशुद्धस्थानगो वैरी दिनबाणेन पूरितः ॥ अधोमुखः स्मृतस्तूर्णम्परासुः स्याद्दिनत्रयात् ॥ २५० ॥ आज्ञायां निहितं शत्रुं दहेद्बाणाग्निना धिया ॥ पुत्रमित्रकलत्रादिसहितो मृत्युमाप्नुयात्॥ ॥ २५१ ॥ नाभिमात्रे जले स्थित्वा ध्यायेद्बिम्बं दिनेशितुः ॥ वैरिणं दग्धसर्वाङ्गं मन्त्रमष्टोत्तरं शतम् ॥ जपेत्सप्त दिनादर्वाग्यमलोकं स गच्छति॥ ॥ २५२ ॥ आरवारं समारभ्य सप्ताहं प्रजपेन्मनुम् ॥ सूर्य्योदयं समारभ्य यावदस्तमयो भवेत् ॥ सन्निपातपराविष्टो यमग्रस्तो भवेदरिः ॥ २५३ ॥ स्थित्वा दुर्गालये मन्त्री त्रिरात्रं वर्जिताशनः ॥ दिने वा मन्त्रविद्धाङ्गं वैरिणं प्रविचिन्तयेत् ॥ जपेन्मनुमिमं शत्रुर्ज्वरितो मरणं व्रजेत् ॥ २५४ ॥ दृष्ट्वा-दुर्गां जपेन्मन्त्रमजस्रं स्वरिपुं स्मरन्॥शूलप्रोतशरीरन्तु दिनास्त्रेण प्रपीडितम् ॥ ज्वरेण महताविष्टो जायतेऽसौ यमातिथिः ॥ २५५ ॥ रविमण्डलगं शत्रुं दष्टं तद्रथपन्नगैः ॥ विषाग्निदग्धसर्वाङ्गं ध्यायेदुष्णेन वारिणा ॥ तर्प्पयेद्दिनबाणेन स्यादसौ यमवल्लभः ॥ २५६ ॥ रविबिम्बादागतया ज्वालया ग्रस्तविग्रहम् ॥ रिपुं ध्यात्वा जपेन्मन्त्रं स प्रयाति यमान्तिकम् ॥ २५७ ॥ ग्रहग्रस्ताग्रबिम्बस्थं विद्धं मन्त्रमयैः शरैः ॥ प्रतिपद्घातितं शत्रुं जपेदयुतमन्त्रवित् ॥ रिपुन्नयति शीघ्रं तं यमदूतो यमालयम् ॥ २५८॥ प्रलयानलसंकाशां कालरात्रिमिवापराम् ॥ शूलपाशधरां घोरां सिंहस्कन्धं निषेदुषीम् ॥ २५९ ॥ सवितुर्मण्डलान्तःस्थां रक्तनेत्रत्रयोद्भवैः ॥ विस्फुलिङ्गैर्निर्दहन्तीं रिपुमाकुलविग्रहम् ॥ २६० ॥ स्वेष्टदंष्ट्राधरां नृत्यद्भ्रुकुटीभीषणाननाम् ॥ तर्जयन्तीं निजं शत्रुं तर्जन्या भीमरूपया ॥ २६१ ॥ दंष्ट्रामयूखजालेन द्योतयन्तीं दिगन्तरम् ॥ शूलेन वैरिणो वक्षो दारयन्तीं भयंकराम् ॥ २६२ ॥ जपेद्दिनत्रयं धीमान्मारयेद्रिपुमात्मनः ॥ अस्त्रमन्त्रकृतन्यासः प्रलयाग्निसम-

---

१ मंगलवारम्।

प्रभः ॥ २६३ ॥ रक्तवस्त्रधरां क्रुद्धां रक्तनेत्रत्रयावृताम् ॥ सिंहाधिरूढा धावन्तीं धावमानं रिपुं प्रति ॥ खड्गेन तच्छिरश्छित्त्वा क्षणाद्व्योमस्थलं गताम् ॥ २६४ ॥ ध्यात्वा दुर्गां जपेन्मन्त्रं त्रिदिनं वर्जिताशनः ॥ अनेनैव विधानेन रिपुर्मृत्युप्रियो भवेत् ॥ कर्म्माण्येतानि कुर्वीत दिवसे न तु रात्रिषु ॥ २६५ ॥ तस्माद्दिनाख्यमित्युक्तमथ रात्र्यस्त्रमुच्यते ॥ पश्चिमाभिमुखं न्यस्य सजीवं माहिषं पुरः ॥ २६६ ॥ निखाय तस्य शिरसि कुण्डं कृत्वा त्रिकोणकम् ॥ तस्मिन्समेधिते वह्नौ यथावद्देशिकोत्तमः ॥ २६७ ॥ सत्रिकोणाः मन्त्रवर्णाः साध्यनामसमन्विताः॥भुजरक्तेन संसिक्ताः कारस्करसमिद्वराः ॥ सहस्रं जुहुयाद्ध्यात्वा देवीं सवितृमण्डले ॥ २६८ ॥ प्रलयाग्निसमां घोरां द्वात्रिंशद्भुजशोभिताम् ॥ उद्यदायुधसन्दीप्तां नृत्यन्तीं सिंहमस्तके ॥ २६९ ॥ महादंष्ट्रां महाभीमां ज्वलत्केशां नदन्मुखीम् ॥ रक्तार्द्रमांसवसनां घूर्णितोग्रत्रिलोचनाम् ॥ २७० ॥ अनेन विधिना शत्रुर्महाज्वरनिपीडितः ॥ विमुञ्चति निजं देहं पुत्रमित्रादिभिः सह ॥ २७१ ॥ ऊर्ध्ववक्त्रांस्ततो मन्त्री लम्बयित्वा भुजङ्गमान् ॥ भानुबिम्बगतां दुर्गां सहस्रादित्यसन्निभाम् ॥ २७२ ॥ सहस्रपाणिचरणां सहस्राक्षिशिरोमुखीम् ॥ सहस्रनागबद्धाङ्गीं त्रासयन्तीं जगत्त्रयम् ॥ २७३ ॥ ध्यायन्मन्त्रेण तेनैव तर्प्पयेदुष्णवारिणा ॥ संयतः कालपाशेन वैरी मुञ्चेत्स्वजीवितम् ॥ २७४ ॥ मध्याह्नार्कायुतप्रख्यां नदन्तीं नरसिंहवत् ॥ घोरसिंहासनासीनां महाभीषणदारिणीम् ॥ २७५ ॥ शूलप्रोताहितां ध्यायञ्जपेन्मन्त्रमनन्यधीः ॥ तर्पयेदुष्णतोयेन सर्प्पवक्त्रे दिनत्रयम् ॥ यमस्य भवनं गच्छेदरातिर्नात्र संशयः ॥ २७६ ॥ ऋक्षवृक्षैः प्रतिकातिं प्रतिष्ठितसमीरणाम् ॥ उष्णोदके विनिःक्षिप्य निष्पीड्य विधिना ततः ॥ २७७ ॥ अर्केन्द्वनलसङ्काशां खड्गखेटकधारिणीम् ॥ नयनत्रयसञ्जच्छद्विस्फुलिङ्गशताकुलाम् ॥ २७८ ॥ सिंहस्थां सर्प्पभूषाढ्यां त्रैलोक्यभयदायिनीम् ॥ खड्गकृत्ताहितां ध्यायन्प्रजपेदयुतं मनुम् ॥ विधानेनामुना शत्रुर्युक्तो भवति मृत्युना ॥ २७९ ॥ प्रकल्प्य दुर्गायतने त्रिकोणं कुण्डमुत्तमम् ॥ तत्र संज्वालिते वह्नौ महिषीशकृता कृताम्॥ २८० ॥

पुत्तिलीं सर्जतां रक्तां प्रतिष्ठितसमीरणाम् ॥ छित्त्वा छित्त्वा प्रजहुयादजर-क्तान्वितां निशि ॥ २८१ ॥ ध्यात्वा दुर्गां प्रनृत्यन्तीं महिषोरःस्थलान्तरे ॥ शूलेन महिषस्याङ्गं भिन्दतीं घोरदर्शनाम् ॥ २८२ ॥ अट्टहासैरजस्रोत्थै-र्भीषणां सुरसेविताम् ॥ प्रदीप्तानलसङ्काशां भ्रमन्नेत्रत्रयान्विताम् ॥ २८३ ॥ सदष्टाधरसम्भिन्नां दंष्ट्राभीममुखाम्बुजाम् ॥ खड्गखेटकयुक्ताभिः कन्य-काभिः समावृताम् ॥ २८४ ॥ अनेन विधिना शत्रुः प्रयाति यममन्दिरम्॥ दिनास्त्रमेवं कथितं रात्रौ कृत्यास्त्रमुच्यते ॥ २८५ ॥ आधारादुद्गतां देवीं कुण्डलीं सर्परूपिणीम् ॥ तां ब्रह्मरन्ध्रमार्गेण गतां व्योमस्थलं ततः ॥२८६॥ मुखेन शत्रुमादाय निवृत्तां स्वगृहं प्रति ॥ ज्वलत्कालानलोद्दीप्तां विचिन्त्य प्रजपेन्मनुम् ॥ सप्तभिर्वासरैः शत्रुर्मृत्युमाप्नोति मोहितः ॥ २८७ ॥ अङ्गा-रवारे चित्यग्नौ सर्षपस्नेहलालितम् ॥ सिद्धार्थकुडवं जप्तं जुहुयात्पशुमन्त्रतः ॥ कृत्यास्त्रज्वालया सद्यो रिपुर्यमपुरं व्रजेत् ॥ २८८ ॥ चतुर्दश्यामर्धरात्रे चितास्थीन्यत्र साधकः ॥ व्रणतैलविलिप्तानि चिताग्नौ जुहुयात्ततः ॥ अनेन विधिना शत्रुर्मृत्युमेष्यति कातरः ॥ २८९ ॥ धान्यस्य तु तुषान् पिष्ट्वा शत्रोश्चैव विनिर्मिताम् ॥ प्रतिमां व्रणतैलाक्तां कृतप्राणां हुनेन्निशि ॥ छित्त्वा-छित्त्वाजरकेन सप्ताहान्म्रियते रिपुः ॥ २९० ॥ श्मशानवालुकां स्पृष्ट्वा सा-क्षतां नियुतं जपेत् ॥ विविक्तस्तु तडागादौ जपेन कथितं जलम् ॥ तदीयं पीतमचिरान्निहन्ति सकलाञ्जनान् ॥ २९१ ॥ कृष्णाङ्गारचतुर्दश्यां जपितैः प्रेतभस्मभिः ॥ माहिषाज्येन संयुक्तैस्तन्मन्त्राक्षरसंख्यया ॥ २९२ ॥ नि-र्माय प्रतिमामेतां सम्यग्जप्तसमीरणाम् ॥ चितिकाष्ठेधिते वह्नौ जुहुयाद्दृढ-मानसः ॥ चतुर्दशीत्रयादर्वाक्छत्रुर्मृत्युवशो भवेत् ॥ २९३ ॥ श्मशानभस्म-सिद्धार्थान्पञ्चगव्ये विनिक्षिपेत् ॥ महिषं संस्मरेद्देवीं ज्वालाग्निसदृशप्रभाम् ॥ ॥ २९४ ॥ भर्जयेत्प्रजपन्मन्त्रं विषकाष्ठेधितानले ॥ दुर्गागारे प्रजुहुयादने-नायुतमस्त्रवित् ॥ २९५ ॥ पुनरादायतद्भस्म सेनायां वैरिणः क्षिपेत् ॥ सा सेना बहुधा भिन्ना ज्वरेणापि विमोहिता ॥२९६॥ आयुधानि परित्यज्य युद्धकाले पलायते॥गेहग्रामादिषु क्षिप्तं कुर्य्यादुच्चाटनं द्रुतम्॥ ३९७॥सप्तवारेषु

कुलिके दुर्गावेश्मसु शर्कराः॥सप्तमाहेन्द्रदिग्वर्जं गृहीत्वा प्रजपेन्मनुम्॥ २९८॥ महिषीपञ्चगव्येन महिषं तर्पयेत्पुरा॥ भूयो जपित्वा विकिरे द्गेहे ग्रामपुरे त्विमाः॥ स देशो नश्यति क्षिप्रं दग्धो मन्त्रदवाग्निना ॥ २९९ ॥ ब्रह्मदण्डी मर्कटिका वज्रकण्टकिका त्रयम् ॥ भौमवारस्य कुलिके गृहीत्वा प्रजपेन्मनुम् ॥ सार्धं पुत्रकलत्राद्यैरुत्सादो जायते रिपोः ॥ ३०० ॥ एकत्रैवाखनेन्मन्त्री मण्डलान्तस्स्थलं भवेत् ॥ षड्बिन्दुषट्कपुत्तल्यां निखनेदोदनान्वितम् ॥ ३०१ ॥ स्पृष्ट्वा तां प्रजपेन्मन्त्रं कृष्णाष्टम्यां दिनार्धतः ॥ शत्रुनामसमायुक्तां श्मशाने निखनेदिमाम् ॥ प्रणश्यति रिपुः शीघ्रं सकुटुम्बः सबान्धवः ॥ ३०२ ॥ कपालशकलान्मन्त्री कृत्यास्त्राक्षरसंख्यया ॥ स्पृष्ट्वा तां प्रजपेदस्त्रं प्राणस्थापनपूर्वकम् ॥ ३०३ ॥ कृष्णाङ्गारचतुर्दश्यां श्मशाने निम्बवृक्षजे ॥ जुहुयादजरक्ताक्तां कृत्यास्त्रज्वालया ततः ॥ रिपुर्यमपुरं गच्छेन्महाज्वरविमोहितः ॥ ३०४ ॥ अजरक्तेन सम्पूर्णे कलशे निक्षिपेदहिम् ॥ कपालेन पिधायैनं छादयेद्रक्तवाससा ॥ ३०५ ॥ पूजयेद्रक्तपुष्पाद्यैः स्पृष्ट्वा तं त्वयुतं जपेत् ॥ भौमवारे दिशो मध्ये यथापूर्वं समाहितः ॥ ३०६॥ कारस्करैधिते वह्नौ कृत्यास्त्रेण समेधिते ॥ अयुतं व्रणतैलेन हुत्वान्ते तं घटं पुनः ॥ ३०७ ॥ आमस्तकं समुद्धृत्य त्वभिचाररतः सुधीः ॥ जुहुयाद्विधिना तेन त्रिदिनैर्म्रियते रिपुः ॥ ३०८॥ सुन्दरं महिषीसर्पिः प्रस्थं मन्त्रेण मन्त्रितम् ॥ कुशैराबद्धसर्वाङ्गं स्थापितं प्राणतेजसा ॥ ३०९ ॥ कारस्करैधिते वह्नौ व्रणतैलेन मन्त्रवित् ॥ होमं कृत्वा पुनर्वस्त्रं जुहुयाद्यतमानसः ॥ एकेन दिवसेनारिर्गच्छेद्यमपुरं प्रति॥ ॥ ३१० ॥ त्रिकोणकुण्डनिहिते वह्नौ मन्त्रेण दीपिते ॥ अर्चिते गन्धपुष्पाद्यैरयुतं जुहुयात्सुधीः ॥ ३११ ॥ राजिभक्ततिलैस्तैलैर्नित्यं सप्तदिनं ततः॥ प्रसूतिसमयप्राप्तां महिषीं स्थापितानिलाम् ॥ अर्चितां गन्धपुष्पाद्यैः स्पृशन्मन्त्रं तु तं जपेत् ॥ ३१२ ॥ मस्तकाद्योनिपर्यन्तं जुहुयादेधितेनले ॥ एवंकृते समुत्पन्ना कृत्या दीप्ता हुताशनात्॥ भक्षयेदचिराच्छत्रुमीश्वरेणाभिरक्षितम् ॥ ३१३ ॥ पुनरग्नौ विशत्येषा कर्त्तारमपि काङ्क्षिणी ॥ एवंविधानि कर्म्माणि यः कुर्यान्मन्त्रवित्तमः ॥ स जपेदात्मरक्षार्थं मन्त्रान्मृत्युञ्जयादि-

कान् ॥ ३१४ ॥ अथ त्रिशक्तिमन्त्रस्य साधनार्थं पुरश्चरेत् ॥ जपं महाव्याहृतीनां होमं तर्प्पणमेव च ॥ ॐकारपूर्वकञ्जप्त्वा मन्त्रं त्वयुतसंख्यया ॥ सहस्रं जुहुयादाज्यैस्तर्प्पणादि ततश्चरेत् ॥ ३१५ ॥ एवंकृते सर्वदेवाराधनं स्यात्समर्थता ॥ विनानेन त्रिशक्तेस्तु मन्त्रसिद्धिर्न जायते ॥ ३१६ ॐ भूरग्नये च पृथिव्यै महते च स्वाहा ॥ ॐ भुवो वायवे चान्तरिक्षाय च महते च ॥ ३१७ ॥ ॐ सुवरादित्याय च दिवे च महते च ॥ ॐ भूर्भुवस्सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते स्वाहा॥ ३१८॥वक्ष्यमाणफलावाप्तिः सामान्या तु सहस्रशः ॥ देशकालानुरूपेण श्रेष्ठा त्वयुतहोमतः ॥ ॥ ३१९ ॥ यथामनोरथस्तादृग्लक्षहोमात्प्रजायते ॥ अथ क्रमेण तद्वक्ष्ये तेजस्वी घृतहोमतः ॥ ३२० ॥ उदुम्बरसमिद्भिस्तु सर्वकर्म्मसमर्थता ॥ पश्वादिकामो जुहुयाद्दुग्धं वाप्यथ वा दधि ॥ ३२१ ॥ समस्तोत्पातशान्त्यर्थमपामार्गस्य तण्डुलान् ॥ अर्कस्य समिधो हुत्वा यथेष्टं कनकं लभेत् ॥ ॥ ३२२ ॥ जात्यास्तु वल्लिकायुग्मं ग्रन्थयित्वा घृतान्वितम् ॥ जुहुयादयुतसङ्ख्याकं सम्पदं स सदा लभेत् ॥ ३२३ ॥ कन्याकामस्तु जुहुयात्तिलतण्डुलमुष्टिभिः ॥ अपामार्गस्य समिधो जुहुयाद्ग्रामकामुकः ॥ ३२४ ॥ वशीकर्त्तुं तु समिधः पलाशाशोकयोर्हुनेत् ॥ आयुष्कामस्तु दूर्वाभिः पुष्पैस्तु धनकामुकः ॥ ३२५ ॥ समिधो व्याधिघातस्य रुधिरेणाजकेन च ॥ संयोज्य जुहुयान्मन्त्री त्वभिचारः प्रसिध्यति ॥ ३२६ ॥ जातानां जायमानानां प्रभोः सर्वत्रकोपनम् ॥ मरणं वा तत्र हुनेत्सर्वव्रीहिभिरादरात् ॥ ३२७ ॥ प्रभूतव्रीहिदूर्वाभिर्होमान्सम्पत्तिर्भवेत् ॥ उल्लूककाकपक्षाभ्यां होमो विद्वेषकारकः ॥ ३२८ ॥ स्वगृहे तु कपिलाघृतहोमं सहस्रकम् ॥ सम्पातस्य घृतं स्थाप्यं वचान्तेनैव लोलयेत् ॥ मन्त्रयित्वा पुत्रवतीं मेधावी चैव जायते॥ ॥ ३२९ ॥ प्रत्यहं मासमात्रं तु स्थित्वा सूर्यस्य सम्मुखम् ॥ अयुतं प्रजपेन्नित्यं गुणिनं लभते सुतम् ॥ ३३० ॥ यद्यदिष्टतमं वस्तु तत्तद्धोमं समाचरेत् ॥ अयुतं घृतसंयुक्तं तस्य प्राप्तिः प्रजायते ॥ होमयोग्यं तु यत्तस्य पुत्रवत्सिद्धिसाधनम् ॥ ३३१ ॥ अथ त्रिशक्तिमन्त्रस्य साधनं कथयाम्यहम् ॥

ब्रह्मविष्णुशिवाः सिद्धा यत्प्रसादाद्धरिस्तथा ॥ ३३२ ॥ गायत्री[1] च तथाग्नेयमन्त्रं त्रैयम्बको मनुः ॥ एतत्त्रयं त्रिशक्त्याख्यो मन्त्रः प्रोक्तः शताक्षरः ॥ ३३३ ॥ उक्तास्त्रयोस्य मुनयश्छन्दांस्यपि च तानि तु ॥ अगोचरं वेदगम्यं परन्तेजोस्य देवता ॥ ३३४ ॥ विश्वै[2]रुद्रै[3]स्तथा कृत्या[4] चाकृत्या[5] ति[6]थिभिर्वनैः ॥ मन्त्रवर्णैः षडङ्गानि प्राङ्न्यासांश्च समाचरेत् ॥ ३३५ ॥ सस्यं मानविवर्जितं श्रुतिगिरामाद्यं जगत्कारणं व्याप्तं स्थावरजङ्गमे मुनिवरैर्ध्यातं निरुद्धेन्द्रियैः ॥ अर्काग्न्युग्रमयं शताक्षरवपुस्तारात्मकं सन्ततं नित्यानन्दगुणालयं परतरं वन्दामहे तन्महः ॥ ३३६ ॥ सौरपीठे यजेत्तत्र षडङ्गैः प्रथमावृतैः ॥ गायत्री शक्तिभिः पश्चात्पूजयेदावृतित्रयम् ॥ ३३७ ॥ पञ्चमावरणं कार्यं वीथीरूपं तु तत्र च ॥ चतुश्चत्वारिंशत्सङ्ख्या जातवाद्यास्तु शक्तयः ॥ ३३८ ॥ आग्नेयास्त्रोदिता ह्येव प्रोक्तं शक्तिचतुष्टयम् ॥ आवृतीना तु संपूजा मृत्युञ्जयोक्तशक्तिभिः ॥ ॥ ३३९ ॥ दिक्पालांश्च तदस्त्राणि दशकैकादशावृतौ ॥ लक्षं जपेद्धुनेत्क्षीरं भक्ताद्यैस्तर्प्पयेत्ततः ॥ ३४० ॥ एवं सिद्धे मनौ मन्त्री भवेद्भास्करसन्निभः ॥ सुधालतो[7]द्भवैः खण्डैर्जुहुयात्क्षीरसंयुतैः ॥ ३४१ ॥ दीर्घमायुरवाप्नोति ह्याधिव्याधिविवर्जितः ॥ दूर्वाभिर्धृतसिक्ताभिस्तदेव फलमाप्नुयात् ॥ ३४२ ॥ मधुरत्रयसंयुक्तैर्जुहुयादरुणाम्बुजैः ॥ महालक्ष्मीमवाप्नोति मासैः षड्भिर्विधानवित् ॥ ३४३ ॥ रक्तोत्पलैस्त्रिमध्वक्तैर्जुहुयात्सर्वसम्पदे ॥ श्रीप्र[8]सूनैः प्रजुहुयाद्रमाया वसतिर्भवेत् ॥ ३४४ ॥ सहस्रं जुहुयान्नित्यं पायसेन तिलैः शुभैः ॥ भानुसङ्ख्यान्द्विजान्नित्यं भोजयेन्मधुरान्वितैः ॥ ३४५ ॥ सर्वपापविनिर्मुक्तः सर्वरोगविवर्जितः ॥ कृत्याद्रोहग्रहान्सर्वाञ्जित्वा दीर्घं स जीवति ॥ ॥ ३४६ ॥ प्रातःस्नानरतो नित्यं जपन्नित्यं शतं शतम् ॥ भानुमालोक-

---

१ गायत्री—तत्सवितुरिति । आग्नेयमन्त्रं जातवेदसे इति त्रैयंबकं—त्र्यम्बकं यजामेति । एतच्छ्रुतित्रयमेलनेन शताक्षरो मन्त्रो जायते । अस्य त्रिशक्तीति नाम गायत्रीमन्त्रस्य जपसमये वरेण्यमिति स्थाने पठनेन मन्त्रस्य शताक्षरत्वपूर्तिः ॥ २ त्रयोदशभिः । ३ एकाधिकदशभिः । ४ द्व्यधिकविंशतिभिः । ५ पञ्चाधिकदशभिः । ६ सप्ताधिकदशभिः । ७ गुडूचीभिः । ८ बिल्वप्रसूनैः ।

येत्सम्यक्स जीवेच्छरदा शतम् ॥ ३४७ ॥ नित्यमष्टोत्तरशतं निःश्रेय-सफलाप्तये गायत्र्याद्यं जपेन्मन्त्रं सर्वपापविमुक्तये ॥ ३४८ ॥ सर्वशत्रु-विनाशाय त्रिष्टुबाद्यं जपेदिमम् ॥ त्र्यम्बकाद्यं प्रजपेदायुरारोग्यवृद्धये ॥ ॥ ३४९ ॥ ॥ अथ त्वरितरुद्रस्य विधानमभिधीयते ॥ न वेदे नागमे चेदङ्मन्त्रस्त्वरितसिद्धिदः ॥ ३५० ॥ यो रुद्रो अग्नौ यो अप्सु य ओष-धीषु ॥ यो रुद्रो विश्वा भुवनाविवेश तस्मै रुद्राय नमो अस्तु ॥ ३५१ ॥ अथर्वणो मुनिः प्रोक्तश्छन्दोनुष्टुबुदाहृतम् ॥ अस्त्यस्य देवता रुद्रः षडङ्गानि न्यसेत्क्रमात् ॥ ३५२ ॥ अत्र न्यासस्तु पञ्चाङ्गः पञ्चत्रीषूग्रगोमितैः ॥ वर्णान्देहादिषु न्यस्यांगुष्ठादौ ध्यानमाचरेत् ॥ ३५३ ॥ चतुर्भुजं त्रिनेत्रं च शुद्धस्फटिकसन्निभम् ॥ अमृतेन च सम्पूर्णौ कलशौ हस्तयोर्द्वयोः ॥ ॥ ३५४ ॥ हस्तद्वयेन योगस्य कृतमुद्रं स्थिरासनम् ॥ सर्वकामफलेशानं शङ्करं करुणानिधिम् ॥ ३५५ ॥ उग्रकर्म्मण्युग्रमूर्तिं ज्वलत्पावकलोचनम् ॥ द्विभुजं नागहस्तं च शूलपाणिं जटाधरम् ॥ ३५६ ॥ अधःशय्यां त्वेकवारं हविष्यान्नस्य भोजनम् ॥ ब्रह्मचर्य्यं सत्यवाणीं पुरश्चर्य्याविधौ चरेत् ॥ ॥ ३५७ ॥ लक्षमेकं जपेन्मन्त्रं होमैकंसमिधो घृतम् ॥ तर्प्पणं मार्जनं विप्रभोजनं मन्त्रसिद्धये ॥ ३५८ ॥ पूजांपार्थिवलिङ्गस्य प्राग्वन्नित्यं समा-चरेत् ॥ एवं सिद्धे मनौ मन्त्री प्रयोगान्कर्तुमर्हति ॥ ३५९ ॥ अयुतद्वय-होमेन या सिद्धिः सा निगद्यते ॥ औदुम्बरैरन्नकामस्तेजस्कामस्तु खादिरैः ॥ ॥ ३६० ॥ अपामार्गसमिद्धोमाद्भूतबाधा विनश्यति ॥ ग्रहबाधाविनाशाय

---

१ ॐ जातवेदसे इति मन्त्रस्य प्रथमकथनमुचितम् । २ ॐ यो रुद्रो अग्नौ अंगुष्ठाभ्यां नमः, यो अप्सु तर्जनीभ्यां नमः; य ओषधीषु मध्यमाभ्यां नमः; यो रुद्रो विश्वा भुवना विवेश अनामिकाभ्यां नमः, तस्मै रुद्राय नमो अस्तु कनिष्ठिकाभ्यां नमः, एवं हृदयादिन्यासोपि ॥ अथाक्षरन्यासः ॥ ॐ यो नमः शिरसि, रु भाले, द्रो भ्रूमध्ये, अ दक्षनेत्रे, प्सु वामनेत्रे, यः दक्षकर्णे, ॐ वामकर्णे ष नासिकायाम्, धी दक्षकपोले, षु वामकपोले यो मुखे, रु कंठे, द्रो दक्षबाहौ, वि वामबाहौ, श्वा दक्षकरतले, भू वामकरतले व पृष्ठे, ना वक्षःस्थले, वि उदरे, वे नाभौ, श कट्याम्, त दक्षोरौ, स्मै वामोरौ, रु दक्षजानुनि, द्रा वामजानुनि, य दक्षजंघायाम्, न वामजंघायाम्, मो दक्षपादे, अ वामपादे, स्तु सर्वांगे॥ इत्यक्षरन्यासः । ३ पार्थिवपूजायां यत्कामनायै या पूजोक्ता तां तत्र तयैव रीत्या विदधीत ॥

जपेदश्वत्थसन्निधौ ॥ ३६१ ॥ लवणान्वितदध्यक्तास्त्वयत्राश्वाबोधिवृक्षजाः ॥ हूयन्ते समिधः शुष्काः स्वाहान्तं मन्त्रमुच्चरेत् ॥ ३६२ ॥ दशपञ्चाहुतीर्हुत्वा गच्छगच्छेत्युदीरयेत् ॥ यावद्धोमं बलिं दद्यात्पुरुषाहारसंमितम् ॥ एवंकृते तु वा सम्यक्पुरुषं तं स मुञ्चति ॥ ३६३ ॥ जुहुयाच्छतपत्राणि संहृष्टो-भीष्टमाप्नुयात् ॥ लाजहोमेन कन्यार्थी कन्यां प्राप्नोति रूपिणीम् ॥ ३६४ ॥ लाजाश्च चरुणा युक्ताः श्वेतपुष्पाणि वा पुनः॥ हूयन्ते हरिते देशे तस्य विश्वं वशीभवेत् ॥ ३६५॥ वामे तदुन्नतं कार्य्यं स्त्रीवश्यं नतु दक्षिणे ॥ आरिसैन्य-प्रशान्त्यर्थं तिलानाज्येन सम्मितान् ॥ ३६६ ॥ होमस्थाने च संस्थाप्य कुम्भमेकं जलान्वितम् ॥ मन्त्रयित्वाष्टसाहस्रं शरावांस्तत्र विक्षिपेत् ॥ ॥ ३६७ ॥ अभिषेकैश्च तैस्तेषां शाला प्रोक्ष्य प्रदक्षिणम् ॥ ग्रहग्रामा-दिशान्त्यर्थं राज्यस्याप्येवमाचरेत् ॥ ३६८ ॥ वास्तुपूजा प्रकर्तव्या चतुष्षष्टिपदैः शुभैः ॥ ३६९ ॥ ईशानाय बलिः कार्य्यो भूतानां पतये तथा ॥ एवंकृते पशूनान्तु प्रजानां शान्तिमाप्नुयात् ॥ ३७० ॥ उत्पा-तेषु च सर्वेषु निशायां ग्रामबाह्यतः ॥ उपविश्य जपेद्रुद्रं त्वरितं बहुभिःसह ॥ ३७१ ॥ होमः पलाशकाष्ठैस्तु कर्तव्यो घृतसंयुतैः ॥ ईशानाय बलिं कुर्य्यात्तस्यां दिशि तदद्भुतम् ॥ ३७२ ॥ ततो दिशाम्पतेस्तत्र पशूनाम्पतये तथा ॥ वृद्धिकामो जपेल्लक्षं तिलहोमो घृतान्वितः ॥ ३७३ ॥ बलिपूजा च कर्त्तव्या शिवस्य वरुणस्य च ॥ यस्य कस्यापि कार्य्यस्य लभ्यते योग्य-ता यदि ॥ ३७४ ॥ तदा लक्षार्धतो लक्षपर्य्यन्तं त्वरितं जपेत् ॥ सर्वान्का-मानवाप्नोति त्वरितस्य प्रसादतः ॥ ३७५ ॥ श्रीकामः शान्तिकामो वा जपे-ल्लक्षमिदं ततः ॥ श्रीकामो बिल्वसमिधा शान्तिकामः शमीमयैः ॥ ४७६ ॥ जुहुयादाज्यसम्मिश्रैस्तर्पणं मार्जनं तथा ॥ एवं सर्वेषु कार्य्येषु होमः कार्य्य-स्तथा यवैः ॥ ३७७ ॥ जुहुयाल्लक्षमेकन्तु पुत्रार्थी पायसेन च ॥ विद्यार्थी श्रीफलैस्तद्वदायुष्कामस्तु दूर्वया ॥ ३७८ ॥ तिलैरथाज्यसम्मिश्रैस्तेजस्कामो घृतेन वा ॥ व्रीहिभिः पुष्टिकामस्तु तुष्टिकामस्तथा हि तैः ॥ ३७९ ॥

१ काष्ठैरिति शेषः ।

पायसं सर्वकामेषु होतव्यं शर्करान्वितम् ॥ मध्वब्जाज्याम्रपर्णानि तीव्रज्वर-विनाशने ॥ ३८० ॥ सर्वरोगविनाशाय सूर्य्यस्याभिमुखो जपेत् ॥ सहस्रम-युतं लक्षं रोगिणान्तारतम्यतः ॥ ३८१ ॥ जपान्ते तु षडङ्गानां न्यासश्चा-पि पराह्वयम् ॥ पँञ्चत्रिपश्चरुद्रेषु चतुर्वर्णैः षडङ्गकम् ॥ ३८२ ॥ पादयोर्जं-घयोर्जान्वोरूर्वोर्गुह्ये च मेढ्रके ॥क्रमान्नाभौ च जठरे हृदि कण्ठे मुखे नसि ॥ ॥ ३८३ ॥ नेत्रयोश्च भ्रुवोर्मध्ये ललाटे मूर्ध्नि विन्यसेत् ॥ पदानि षो-डश मनोरिति त्वरितरुद्रियम् ॥ ३८४ ॥ ऋचो विधानं वारुण्या यथावद-भिधीयते ॥ अस्या उपासको यत्र तत्रावृष्टिर्न जायते ॥ ३८५ ॥ ध्रुवा-सु त्वासु क्षितिषु क्षियन्तो व्यस्यत्या स वरुणो मुमो नरत् ॥ अवोचन्वाना अदितेरुपस्था यूयं यात स्वस्तिभिः सदा नः ॥ ३८६ ॥ ऋषिर्वशिष्टोनुष्टु-प्चच्छन्दो वरुणदैवतम् ॥ अष्टाङ्गैवसुवस्वद्रिषडर्णैरङ्गकल्पनम् ॥ ३८७ ॥ पादाग्रयोस्तथा पादांगुलिमूलद्वयोरपि ॥ गुल्फयोश्च तथा जान्वोरूर्वोश्च गुदलिङ्गयोः ॥ ३८८ ॥ मूलाधारे तथा नाभौ कुक्षौ पृष्ठे तथा हृदि ॥ वक्षः स्थले गले हस्ताग्रयोरंगुलिमूलयोः ॥३८९ ॥मणिबन्धयुगे चैव कूर्प्प-

---

१ अष्टाष्टषडष्टाष्टसप्तषडक्षरैरंगन्यासः । यथा—ध्रुवासु त्वासु क्षितिषु अंगुष्ठाभ्यां नमः इत्थं पूर्वोक्तरीत्या सर्वन्यासान्कुर्यात् २ अथाक्षरन्यासः कथ्यते यथा—ध्रु दक्षपादाग्रे, वा वामपादाग्रे सु दक्षपादांगुलिमूले, त्वा वामपादांगुलिमूले, सु दक्षगुल्फे, क्षि वामगुल्फे, ति दक्षजानुनि, षु वा-मजानुनि, क्षि दक्षोरौ, यं वामोरौ, तो गुदे व्य लिंगे, स्य मूलाधारे, त्या नाभौ, स दक्षकुक्षौ, व वामकुक्षौ, रु पृष्ठे, णो हृदि, मु बक्षःस्थले, मो गले, न दक्षहस्ताग्रे, रत् वामहस्ताग्रे, अ दक्षहस्तां-गुलिमूले, वो वामहस्तांगुलिमूले च दक्षमणिबन्धे, न्वा वामनाणिबन्धे’ ना दक्षकूर्परे, दि दक्षबाहौ’ तेवामबाहौ रु मुखे प दक्षकपोले, स्था वामकपोले, यू दक्षनासापुटे, यं वामनासापुटे, या दक्षनेत्रे, त वामनेत्रे, स्व दक्षकर्णे, स्ति वामकर्णे, भिः भ्रुवोर्मध्ये, स भाले, द मूर्द्धनि, नः सर्वांगे ॥ इति न्यासः ॥ ॐ यो रुद्रो अग्नौ हृदयाय नमः, यो अप्सु शिरसे स्वाहा, य ओषधीषु शिखायै वषट्, यो रुद्रो विश्वा भुवना विवेश कवचाय हुम्, तस्मै रुद्राय नेत्रत्रयाय वौषट्, नमो अस्तु अस्त्राय फट् ३ पुनरस्यैव मन्त्रस्य षोडशपदैः क्रमान्मूलोक्तस्थानेषु न्यासं कुर्य्यादिति शेषः ॥ यः पादयोः, रुद्रः जंघयोः, अग्नौ जान्वोः, यः ऊर्वोः, अप्सु गुह्ये, यः लिंगे, ओषधीषु नाभौ-यः जठरे, रुद्रः हृदये, विश्वा कण्ठे, भुवना मुखे, विवेश नासिकायाम्, तस्मै नेत्रयोः, रुद्राय भ्रुवोर्मध्ये, नमः ललाटे, अस्तु मूर्ध्नि, इति पदन्यासः ॥

मतः ॥४२॥ यो मे करालि प्रद्वारे योगारे यो निवेशने॥ये मे केशा नखेनैव रंजने दन्तधावने ॥४३॥ प्रतिसहस्त्रतिधावकुमार इव पितृगृहान् ॥ मूर्द्धानमेषां स्फोटय पदमेषां कुलाजलि ॥ ४४ ॥ एतेन संजस नूनवेमधुनग्ने-सनासः ॥ आविर्धतानुच्छो विधं भूम्नैवस्यमस्यदनं परमस्य ॥४५॥ ये नोरविन्दश्चारितासो अग्ने जहुर्मर्त्यासो अमृतं वदन्तः ॥ तेषां चायू१ंष्यर्चिषा जातवेदः शुष्कं तुष्टं क्षमभिसंदस्व ॥ ४६ ॥ रुद्रस्वरूपे रुद्रेशि कृष्णवर्णे भयंकारि ॥ देविदेवि महादेवि महाशत्रुर्विनश्यतु ॥४७॥ स्पृष्ट्वाश्वत्थस्य वृक्षं तु चाष्टोत्तरशतं जपेत् ॥ शनैश्चरदिने चायुरारोग्यैश्वर्य्यमाप्नुयात ॥ ४८ ॥ संस्मृत्य च मुनिच्छन्दोदेवतादि ततः परम् ॥ न्यासश्चापि प्रकर्त्तव्यो मन्त्राणामिति निर्णयः ॥ ४९ ॥ खं फट् जहि मम कृत्ये विधूमाग्निसमप्रभे ॥ देविदेवि महादेवि ममशत्रुर्विनश्यतु ॥ ५० ॥ आदौ पादेन चार्धेन नामयुक्तेन चाचरेत् ॥ षडङ्गान्यंगुलिन्यासं वक्ष्ये नामान्यनुक्रमात् ॥ ५१ ॥ कृष्णाम्बरे च हृदये सिंहवाहिनि शीर्षके ॥ महाबले शिखायां च महाभैरवि वर्म्मणि ॥ ५२ ॥ सर्वकृत्योच्छेदिनीति नेत्रयोरीरितं सुराः ॥ तथा सर्वपरोन्मुक्तमन्त्रच्छेदिन्यथास्त्रके ॥ ५३ ॥ आत्मरक्षां च दिग्बन्धं भूतशुद्ध्यसुसंस्थितिम् ॥ सर्वाश्च मातृकान्यासान्पूर्वमेव समाचरेत ॥ ५४ ॥ पठेदादौ च गायत्रीं पश्चादेन१म्मनुं जपेत ॥ ततः पठेज्जात२वेदं पुनर्गायत्रिकां पठेत् ॥ ५५ ॥ पुनर्मूलं३ ततस्तामग्निवर्णां तपसेत्यृचम् ॥ गायत्रीपूर्वकं मूलमग्ने त्वं५ पारयेति च ॥ ५६ ॥ पुनस्तामृ६चिकां मूलं विश्वानरो दुर्जुहोति ॥ गायत्रीपूर्वकं मूलं यजनाजिनमित्यृचम् ॥ ५७ ॥ अनेन तु प्रकारेण सहस्रान्नियुतावधि ॥ जपेन्मन्त्रं तारतम्ये कामनाया विचार्य्य च ॥ ५८ ॥ यंयं कामयते कामं तंतं प्राप्नोति सर्वथा ॥ प्रयोगस्य विधौ

---

१ त्र्यम्बकं यजामहे इति॥२ जातवेदसे सुनवाम सोमम् इति॥३ मूलं त्र्यम्बकम् इति॥४ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्म्मफलेषु जुष्टाम्॥ दुर्गां देवीं शरणमहं प्रपद्ये सुतर सितरसे नमः। ५ त्वं पारयानव्य इति मन्त्रः ६ तामग्निवर्णाम् इति ॥

कामः सिद्ध्यत्येव न संशयः ॥ ५९ पञ्चर्चस्यानुवाकस्य प्रयोगाः पूर्वमीरिताः ॥ पञ्चर्चभिश्च पञ्चाङ्गं पञ्चम्या नरस्त्रकम् ॥ ६० ॥ सर्वत्रापि जपस्यादौ चाष्टोत्तरशतं जपेत् ॥ इमामं न वै सोपि बाध्यते मदनादिकैः ॥ ६१ ॥ उत्कामदन्तु स्तोमाः कृणुष्वोषे आद्रिवः ॥ अवब्रह्म द्विषो जहि ॥ ६२ ॥ स्वेच्छादयोत्र दुष्टाश्च धर्मविघ्नं प्रकुर्वते ॥ स्वास्थ्येन जपतस्तस्य शत्रुनाशोस्ति तत्र च ॥ ६३ ॥ ग्रन्थिकर्णे विरूपाक्षि स्तम्बस्तनि महोदरि ॥ जहि शत्रूंस्त्रिशूलेन कुप्यस्व पि शोणितम् ॥ ६४ ॥ अङ्गिरास्तु मुनिश्छन्दोनुष्टुप्कृत्या च देवता ॥ मस्तरोगनाशार्थे नियोगो नन्दिवृद्धये ॥ ६५ ॥ कुबेरन्ते मुखं रौद्रं नन्दिम्नन्दिमावह ॥ द्वारं मृत्युं भयं क्रोधं विषं नाशय नोक्षरे ॥ ६६ ॥ पारथ द्वयेनापि कृष्णाम्बरादिनामभिः ॥ युक्तैश्च पूर्वतत्कुर्य्यादंगुल्यादिषडङ्गकम् ॥ ६७ ॥ धार्य्यं पूर्ववदेव स्यादात्मरक्षादिकं तथा ॥ गायत्र्यादिमतैस्तत्तु ागवत्संदर्भितं मतम् ॥ ६८॥ जपेद्दशशतं चाष्टसहस्रं कार्य्यगौरवात् ॥ अवश्यं जायते कार्य्यसिद्धिः पुण्या गिरां त्वियम् ॥ ६९ ॥ विक्षिप्तता मनोर्दोषेगुरुदोषे कदर्थिता ॥ आधिव्याधी देवदोषे तस्मात्तं परिवर्जयेत् ॥ ७० ॥ पूर्वमुक्तो मनुत्यागो गुरुत्यागस्तथोच्यते ॥ मन्त्रो यद्देवतायाः स्यात्तिथौ तस्यां भवेद्भुवि ॥ ७१ ॥ गुरुत्यागस्य संकल्पं कुर्य्यात्तद्दोषपूर्वकम् ॥ गुर्वन्तरं करोमीति नरं वा देवमेव च ॥ ७२ ॥ राशिकूटेन संशुद्धं देवताष्टकमध्यतः ॥ कुर्य्यादेकं गुरुं तत्र पूर्वाभावे परं परम् ॥ ७३॥ आपो हि दक्षिणामूर्तिः सूर्य्यश्चन्द्रो हुताशनः ॥ मन्त्रावरणदेवाश्च जातिदेवः कुलेश्वरः ॥ ७४ । देशदेव इमे त्वष्टौ नरो वा लक्षणान्वितः ॥ गुरोर्युग्मं पूजयित्वा प्रणमेद्दण्डवत्क्षितौ ॥ ७५ ॥ देवतानाम सम्प्रोच्य द्रव्यं तन्नामतो यजेत् ॥ त्रिपर्णस्य पलाशस्य प्राग्रे मुष्टेस्तु दक्षिणे ॥ ७६ ॥ प्रादेशप्रमिते चात्र कुशानास्तीर्य्य मूर्द्धनि ॥ तोयपूर्णं घटं प्राच्यां दुग्धपूर्णन्तु पश्चिमे ॥ ७७ ॥ उत्तरे तु सुरापूर्णं क्रमादेतत्प्रकीर्तितम् ॥ प्राग्गुरोश्चापि चैतन्यं प्रविष्टं नूतने गुरौ ॥ इति सञ्चिन्त्य शिष्यस्तु वेदिकां कारयेत्सुधीः ॥ ७८ ॥ तत्र मन्त्राक्षरोपेतं यच्च कोणचतुष्टयम् ॥

विहाय देवीमावाह्य सम्पूज्य हवनंचरेत् ॥ ७९ ॥ आज्येन मूलमन्त्रेण सम्पातं यन्त्रकें क्षिपेत् ॥ अष्टोत्तरशतं पश्चात्तद्यन्त्रं निखनेद्भुवि ॥ ८० ॥ गृहग्रामादिराष्ट्राणां रक्षार्थं तत्रतत्र च ॥ नक्षत्रग्रहराशीनां लोकेशानां बलिं हरेत् ॥ ८१ ॥ विहिता यत्र रथं वर्धन्ते तत्र सम्पदः ॥ क्षुद्रग्रहमहारोग-चौर[illegible]रीसृपाः ॥ अमुना विलयं यान्ति विधिना नात्र संशयः ॥ ८२ ॥ जा[illegible]वेदसमन्त्रस्य यन्त्रमेतदुदीरितम् ॥ वैदिकैरेव कर्तव्यमन्यथा दुःखदं भवेत् ॥ ८३ ॥ जातवेदसमन्त्रस्य [१]परीतस्य ये सुराः ॥ अंशैः पादाः समुद्दिष्टास्तेषां यन्त्रं वदाम्यहम् ॥ ८४ ॥ नवकोष्ठयुतं कुर्य्याच्चतुरस्रं तु मण्डलम् ॥ ससन्ध्यां विलिखेन्मध्यां मध्यकोष्ठे त्वधः स्थितात् ॥ ८५ ॥ कोष्ठात्क्रमेण मन्त्रस्य लिखेत्तदाष्टकं ततः ॥ प्रादक्षिण्येन तद्बाह्ये वृत्तयुग्मान्तरे लिखेत् ॥ ८६ ॥ मातृकार्णैः सुसंवेष्ट्य बहिर्भूपुरमालिखेत् ॥ भुवि चाखमिदं यन्त्रं भूतरोगनिवारणम् ॥ ८७ ॥ रक्षायुःकीर्तिधीश्रीदं लिखेत्स्वर्णादिपत्रके ॥ धारयेद्बाहुमूलेच कण्ठे वा मस्तकेपि वा ॥ ८८ ॥ अथातः सम्प्रवक्ष्यामि गायत्र्यादित्रिशक्तिकम् ॥ यन्त्रं सर्वार्थदं तत्र पद्ममष्टदलं लिखेत् ॥ ८९ ॥ तस्य मध्ये तु षट्कोणं तन्मध्ये साध्यसंयुतम् ॥ लिखेत्तारं ततः कुर्यात्सप्तव्याहृतिवेष्टितम् ॥ षट्कोणेष्वेवताराद्दि शिवपञ्चाक्षरस्य तु ॥ ९० ॥ एकैकमक्षरं लेख्यं तदग्रेषु च शुद्धिः ॥ पूर्वार्धंश्चैव गायत्र्याः प्रथमे पत्रके लिखेत् ॥ जातवेदसमन्त्रस्य पूर्वार्धन्तु द्वितीयके ॥ ९१ ॥ त्र्यम्बकस्य तु पूर्वार्धे तृतीये तु दले लिखेत् ॥ ॐ ह्रीं ठं वं कं समिति ह्रौं यं मं ततः पचम् ॥ ९२ ॥ सोहं वं ठं नमः प्रोच्य शिवायेति पदं वदेत् ॥ माया लं येति सं कण्ठं तारो माया ध्रुवस्तथा ॥ ९३ ॥ एकोनत्रिंशदर्णोयं मन्त्रः कोष्ठे चतुर्थके ॥ त्र्यम्बकस्योत्तरार्धन्तु पञ्चमेथोत्तरार्धकम् ॥ ९४ ॥ जातवेदसमन्त्रस्य षष्ठेथो ह्युत्तरार्धकम् ॥ गायत्र्या, सप्तमे लेख्यमोमापोज्योतिरीत्यपि ॥ ९५ ॥ गायत्र्यास्तु शिरस्त्वेतद्भवेत्सप्तदशाक्षरः ॥ लिखेदष्टमपत्रे तु बहिर्वृत्तद्वयं लिखेत् ॥ ९६ ॥ तदन्तरे मातृकार्णैर्वेष्टयेद्भूपुरं बहिः ॥ भूपुरस्य तु कोणेषु कूटं चिन्तामणिं लिखेत् ॥

१ इदमुत्तरान्वयि ॥

॥ ९७ ॥ अग्निर्ब्रह्मा वृषो निद्रा पुनरक्षिगतं तथा ॥ शक्रं ततः परं चन्द्रैः कूटं चिन्तामणेर्महत् ॥ ९८ ॥ केशरेषु द्वन्द्वशश्च स्वरान्प्रागादितो लिखेत्॥ शताक्षरमनोर्यन्त्रं भवेदीदृशमेव च ॥९९॥ धारयेद्योयमारोग्यधराधान्यधनादिकम् ॥ लब्ध्वा च निश्चलां लक्ष्मीं स जीवेच्छरदां शतम्॥ १००॥ताम्रादिपत्रेथालिख्य जप्त्वा चाष्टोत्तरं शतम् ॥ हुत्वा घृतेन तावत्तु कृत्वा सम्पातमेव च ॥ १०१॥तावद्भूयो जापित्वा च पुरग्रामाकरादिषु ॥स्थापितं यन्त्रमेतत्तु गोसत्यारोग्यपुष्टिदम्॥ १०२॥कण्ठे वा दक्षिणे बाहौ धारितं यन्नरैः सदा ॥ कुर्य्याच्च रक्षणं तेषां वैरिव्याघ्रादिभीतितः॥ १०३॥अथातः सम्प्रवक्ष्यामि वारुणं यन्त्रमुत्तमम् ॥ अष्टपत्रस्य पद्मस्य षट्कोणं कर्णिकान्तरम् ॥ कृत्वा षट्कोणमध्ये तु ससाध्यं प्रणवं लिखेत् ॥ १०४ ॥ वरुणाय नमः प्रोक्तो वरुणस्य षडक्षरः ॥ एकैकमक्षरं चास्य कोणषट्के लिखेन्मनोः ॥१०५॥ केशरेषु द्वन्द्वशश्च स्वरान्प्रागादितो लिखेत ॥ पूर्वपत्रे ध्रुवं दत्त्वा स्ववर्णान्पञ्च संलिखेत् ॥ १०६ ॥ द्वितीये क्षितिषु क्षिप्तं तोवर्णांश्च तृतीयके ॥ विस्मृत्याशं चतुर्थे तु लिखेद्वरुणमुमोच तत् ॥ १०७ ॥ अवोचन्पञ्चमे षष्ठे आदिमे रूप इत्यपि॥यूयं प्रातः सप्तमे तु अन्ते स्वस्तिभिः सदा नः॥ १०८ ॥ बहिर्वृत्तद्वयं कृत्वा तयोर्मध्ये लिखेद्ध्रुवम् ॥ ऋणमोचनमेतत्तु यन्त्रं सर्वसमृद्धिदम् ॥ १०९ ॥ सर्वरक्षाकरं वश्यं शत्रुसङ्घविनाशनम्॥ किमत्रबहुनोक्तेन वाञ्छितार्थप्रदं नृणाम्॥ ॥ ११० ॥ यदद्यकच्चेति ऋचा यन्त्रं वक्ष्यामि भाग्यदम् ॥ कर्णिकायां साध्यगर्भं तारं पत्रेषु चाष्टसु ॥ १११ ॥ यदद्य प्रथमे कच्च द्वितीये नत्रवृत्रह ॥ चतुर्थे नुदगाग्रे तु अभिसूर्य्याथ षष्ठके ॥ ११२ ॥ शर्वन्तु सप्तमे त्विन्द्रमष्टमे च वशे लिखेत् ॥ बाह्ये वृत्तद्वयं कृत्वा मातृकार्णास्तदन्तरे ॥ वेष्टयेद्भूपुरेणाथ वश्यसौभाग्यकारकम् ॥ सुवर्णरत्नधान्यादिसर्वसम्पत्करं परम् ॥ ११४ ॥ बाहुमूले गले वापि धारयेत्स्वर्णवेष्टितम् ॥ गणेशस्य प्रियं चैतत्तथा वाग्विभवप्रदम् ॥ ११५ ॥ मन्त्रमादौ प्रवक्ष्यामि महासम्पत्तिकारकम् ॥ वैदिकं विष्णुगृहिणी भक्तानां तु विशिष्यते॥ ११६॥ चतुर्दलं लिखेत्पद्मं कर्णिकायां लिखेत्ततः॥तारगर्भसाध्यनाम दलेष्वेवेत्पूर्चं तथा

स्वाग्रादि प्राग्दक्षिणेन लिखेद्दलचतुष्टये ॥ ११७॥ वामदेवो मुनिश्छन्दस्त्रिष्टुब्देवो बृहस्पतिः ॥ अभीष्टसिद्धये चास्य मन्त्रस्य विनियोजनम् ॥ ११८॥ श्वापित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ॥ बृहस्पतेस्तु प्रजा वीरवन्तो वयं स्याम पतयो रयीणाम् ॥ ११९॥ तद्बाह्येष्टदले दिक्षु यूयमस्माद्दचोङ्घ्रयः एवेन्द्राग्नीत्यृचः पादा लेख्यास्तत्र विदिक्षु च ॥ १२०॥ गौतमो मुनिराद्याया-यास्त्रिष्टुप्छन्दोऽग्निर्देवता ॥ इन्द्राग्नी देवते त्रिष्टुप्छन्दश्चन्द्रो मुनिर्मतः॥ १२१॥ यूयमस्मान्नवत वस्यो अच्छानि रंहतिभ्यो मरुतो मृगृवानाः ॥ जुषध्वं नो हव्यदाति जयत्रा वयं स्याम पतयो रयीणाम् ॥ १२२ ॥ एवेन्द्राग्निपपिवी-त्सा सूतस्य विश्वास्मभ्यं सञ्जपतं जनामि॥ तन्नो मित्रो वरुणो मामहन्तामदि-तिः सिन्धुः पृथिवी उत द्यौः ॥ १२३ ॥ तद्बाह्येष्टदलं कृत्वा क्रमात्तत्र तु संलिखेत्॥ त्वं सोमेतिऋचो वर्णाचोन्पञ्चाङ्गाब्धिशरर्तवः॥ १२४॥ वेदाः षट् षट् तदग्रेषु प्रजायतं ऋचस्तथा ॥ लिखेद्वर्णान्वेदपञ्चसततसप्तगवेन्द्रषट् ॥ १२५ ॥ अग्निर्मे गौतमः सोमस्त्रिष्टुबग्न्यादयो मताः ॥ हिरण्यगर्भकस्त्रिष्टुम्मुन्याद्यास्त-दग्निमे ॥ १२६ ॥ त्वं सोम प्रचिकित्तो मनीषा त्वं रचिष्ठमननेषि पन्थाम तवप्रणीति पितरो न इन्द्रो देवोघरत्नमभजन्त धीराः ॥ १२७ ॥ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव ॥ यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्यामपतयो रयीणाम् ॥ १२८ ॥ वृत्तद्वयं बहिष्कृत्य तयोर्मध्ये च मातृकाः ॥ लेख्याः सबिन्दुकास्तस्य वेष्टनाकारतां गताः ॥ १२९ ॥ तद्ब-हिश्चैव कोणेषु श्रीं—श्रीं—बीजमिदं लिखेत् ॥ बाहुमूलेथ वा कण्ठे मूर्ध्नि वा यदि धारयेत ॥ १३० ॥ गोगजाश्वादिर्महिषसस्यसम्पद्व-सुन्धराम् ॥ लभते पुत्रपौत्रादिशालिनीं सन्ततिं तदा ॥ १३१ ॥ अथा-न्यत्सम्प्रवक्ष्यामि यन्त्रं लक्ष्मीप्रदं सुराः ॥ षट्कोणमध्ये साध्यस्य नामयुक्प्रणवं लिखेत् ॥ १३२ ॥ लिखेत्कोणेषु श्रीबीजं बहिरष्टदलं लिखेत् ॥ तत्केशरेषु विलिखेद्द्वन्द्वशश्च स्वरान्क्रमात् ॥ १३३ ॥ या लक्ष्मीः सिन्धुसम्भूता भूतधेनुः पुरावसुः ॥ या मा विश्वावसुर्देवी सदा नो जुषतां गृहे ॥ १३४ ॥ चतुरश्चतुरो वर्णान्दलेष्वस्या ऋचो लिखेत् ॥ बहिर्वृत्तद्वयं कृत्वा तयोर-

न्तश्च वेष्टयेत् ॥१३५॥ अश्वदायेति ऋचा च वृत्तमेकं च तद्बहिः ॥ अकारादिक्षकारान्तवर्णैर्मध्यं प्रवेष्टयेत् ॥ १३६ ॥ तद्बहिश्चतुरस्रं च श्रीबीजं कोणगं लिखेत् ॥ श्रियश्चैतत्प्रियं यन्त्रं स्थापितं यत्र मन्दिरे ॥ १३७ ॥ धनैर्धान्यैश्च विविधैरन्यैश्चाश्वगवादिभिः ॥ आपूर्य्य सततं चैव तत्रैव रमते रमा ॥ १३८ ॥ अथ यन्त्रं प्रवक्ष्यामि भारत्याः सर्वकामदम् ॥ षट्कोणमध्ये प्रणवं साध्यनामाभिगर्भितम् ॥ १३९ ॥ पूर्वादिकोणषट्के च ऐं क्लीं सौं विलिखेत्क्रमात्॥सौं क्लीं ऐमथ तद्बाह्ये लिखेदष्टदलं पुनः ॥१४०॥ वक्ष्यमाणऋचोः पादांल्लिखेत्प्रतिदले ततः ॥ सो मो मुनिर्देवता वात्रिष्टुप्छन्दः प्रकीर्तितम् ॥ १४१ ॥ यद्वाग्वदन्त्यपि चेतनानि राष्ट्री देवानां निषसाद मन्दा ॥ चतस्र ऊर्ज्जन्दुदुहे पयांसि क्वश्चित्स्विदस्याः परमञ्जगाम ॥ १४२ देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो नुदन्ति ॥ सा नो मन्द्रेषमूर्ज्जं दुहाना धेनुर्वागस्मानुपष्टुतैतु ॥ १४३ ॥ वृत्तानां पञ्चकं बाह्ये कृत्वा वीथीचतुष्टयम् ॥ ऋषिर्दीर्घतमास्त्रिष्टुप्छन्दो वाणी च देवता ॥ १४४ ॥ चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ॥ गुहा त्रीणि निहितानेङ्गयान्ति तुरीयां वाचो मनुष्या वदन्ति ॥ ॥ १४५ इमामृचं चाद्यवीथ्यां द्वितीयायां लिखेत्ततः ॥ विश्वामित्रो मुनिस्त्रिष्टुप्छन्दो वाग्देवता मता ॥ १४६ ॥ ससर्परीरमतिं बाधमाना बृहन्मिमाय यमदग्निदत्ता ॥ आसूर्य्यस्य दुहिता ततान्श्रवो देवेष्वमृतमजुर्या ॥ ॥ १४७ ॥ लिखेदिमामृचं पश्चात्तृतीयायां लिखेदथ ॥ प्रागवन्मुन्यादिसर्वासां नियोगो वास्तुसिद्धये ॥ १४८ ॥ ससर्परीरभरत्तूयमेभ्योऽधिश्रवः पाञ्चजन्यासु कृष्टिषु ॥ सापक्ष्याऽनव्यमायुर्दधाना यां मे पलस्तियमदग्नयो ददुः ॥ १४९ ॥ मातृकार्णैश्चतुर्थीन्तु वेष्टयित्वाथ तद्बहिः ॥ भूपुरस्तस्य कोणेषु वाग्भवं बीजमालिखेत् ॥ १५० ॥ एवं स्वर्णादिके पत्रे लिखेद्वा यन्त्रमुत्तमम् ॥ तत्र वाचं समावाह्य पूजयित्वा विधानतः ॥ १५१ ॥ ऋष्यादिकं तु संयोज्य धारयेच्च शुभे दिने ॥ कवीनां तार्किकाणां च चक्रवर्त्ती भवेदसौ ॥ १५२ ॥ वचां पिष्ट्वा लिखेदेतन्ना-

स्वाग्रादिसन तु ॥ घुसरिल्लोलकल्लोलनिभा निर्याति भारती ॥ १५३ ॥ बृहद्ये कद्दचो यन्त्रं वक्ष्ये वश्यकरं परम् ॥ अष्टपत्रस्य पद्मस्य कर्णिकान्तु संल्लिखेत् ॥ १५४ ॥ षट्कोणं तस्य मध्ये तु ससाध्यं ह्रीं समालिखेत् ॥ षट्सु पूर्वादि सुकोणेषु अंश्रीं ह्रीं क्लीं क्रमेण च ॥ १५५ ॥ ग्लौंगंबीजानि संलिख्य पद्मस्य प्रथमे दले ॥ श्रीविद्याप्रथमं कूटं कएईल च ह्रीमिति ॥ १५६ ॥ लिखेद्द्वितीयपत्रे तु यदद्य कच्च वृत्रहन् ॥ श्रीविद्यायां द्वितीयन्तु लिखेत्कूटं तृतीयके ॥ १५७ ॥ असकदलह्रीमिति तदेतत्परिकीर्त्तितम् ॥ उदगा अधिसूर्य्येति लिखेत्पत्रे चतुर्थके ॥ १५८ ॥ श्रीविद्यायास्तृतीयं तु कूटं पञ्चमपत्रके ॥ सकलह्रीमिति प्रोक्तं लिखेत्षष्ठदले पुनः ॥ १५९ ॥ सर्वन्तदिन्द्र ते वशे सप्तमे गणपतये ॥ वर वरद इदं लेख्यं ततश्चाष्टमपत्रके ॥ १६० ॥ सर्वजनं मे वशमानय स्वाहेति सँल्लिखेत् ॥ तद्बाहिर्वृत्रयोरन्तर्वेष्टयेन्मातृकाक्षरैः ॥ १६१ ॥ ततो भूपुरकोणेषु श्रींह्रींक्लींग्लौमिति क्रमात् ॥ लिखेद्धेमपटादौ च हेमसूच्या वशङ्करम् ॥ ॥ १६२ ॥ अथ संवादसूक्तस्य यन्त्रं वक्ष्ये गणेशितुः ॥ चतुर्दले तु कमले कर्णिकायाञ्च षड्दलम् ॥ १६३ ॥ ससाध्यं प्रणवन्तत्र मध्यकोष्ठे च संलिखेत् ॥ अं श्रींह्रींक्लींग्लौंगञ्च ततः पूर्वदले लिखेत् ॥ १६४ ॥ गणपतये याम्ये तु वर वरदेति संल्लिखेत् ॥ तृतीये सर्वजनं मे(ऽधौ) वशमानय स्वाहा ॥ १६५ ॥ तद्बाह्येष्टदलं कुर्य्यादर्धमर्धमृचां लिखेत् ॥ तत्र संवादसूक्तस्य तदिदानीं निगद्यते ॥ १६६ ॥ सतसिद्युवरोवरोवृषं नग्ने विश्वान्यर्य्यआ ॥ रन्तस्य देव समिध्यसमनो वसून्या भव ॥ १६७ ॥ संगछध्वं संवदसध्वं सं वो मनांसि जानताम् ॥ देवा भागं यथा पूर्वे शञ्जानाना उपासते ॥ १६८ ॥ समा नो मन्त्राः समितिः समाना ॥ समानं मनः सहवितमेषां समनिमात्रं अभिमन्त्रये वः ॥ १६९ ॥ समानेन वो हविषा जुहोमि समानीव ञ्याकूतिः समाना ॥ हृदयानि वः समानि वस्तु वो मनो यथावत्सुसहा सति ॥१७०॥ एतत्संवादसूक्तस्य मुनिः संवर्त्तनः स्मृतः ॥ अग्निर्देवस्तथाजायसञ्ज्ञानमितरासु च ॥ १७१ ॥ छन्दस्त्रिष्टुप् तृतीयाया अन्यासां

स्यादनुष्टुभम् ॥ वृत्तत्रयन्तु तद्वाह्ये कृत्वीथिद्वयं लिखेत् ॥ आद्यवीथ्यां जातवेदसे सुनवेत्यृचा पुनः ॥ १७२। आवेष्टयेन्मातृकार्णैः परवीथीन्प्र-वेष्टयेत् ॥ तद्वहिर्भूपुरं कृत्वा तत्र पात्तुष्टयम् ॥ १७३ ॥ कोणेषु च विकोणेषु लिखेद्यच्च तदुच्यते ॥ १७४ भद्रं नो अपि वाताय मनः मरु-तामोनसे स्वाहा ॥ इन्द्रो विश्वस्य राते ॥ शन्नोभवद्विपदे शञ्चतुष्पदे ॥ ॥ १७५ ॥ सङ्घातभेदे मर्त्यानां स्त्रीकरणमुत्तमम् ॥ जगत्सम्मोहनं वश्यं कान्तिसौभाग्यपुष्टिदम् ॥ १७६ गायत्रीभुवनेश्वर्य्या योगयन्त्रमथो-च्यते ॥ लिखेदष्टदलं मध्ये तत्र कोणेषुँल्लिखेत् ॥ १७७ ॥ रमणीयत्रिको-णानि षट्के षड्गुरुमार्गतः ॥ षट्कोणा तु तन्मध्ये साध्यं साधककर्म्मयुक् ॥ १७८ ॥ ह्रींबीजमालिख्य विलोमाभिः प्रवेष्टयेत् ॥ त्रिभिर्व्याहृतिभिश्चैवं मन्त्रं मध्येथऽ पुनः ॥ त्रिभिर्व्याहृतिभिश्चैवं लि-खेन्मनुमथो सुधीः ॥ १७९ ॥ कोणद्वादशदले खंईबीजद्वयं तथा ॥ त्रिकोणानां बहिश्चापि लिखेत्पार्श्वद्वं पुनः ॥ १८० ॥ प्रादक्षिण्येन गायत्र्या देवमातुर्विलोमतः ॥ वर्णद्वयं बिन्दुरलिखेदथ लिखेत्पुनः ॥ १८१ ॥ शनिबीजं त्रिकोणानामग्रे तारयुतं ग्रंत् ॥ श्रृंखलाकाररेखाभिरेकैकेनान्त-राणि च ॥ १८२ ॥ भवत्येवं षड्बीजं श्रृंखलाद्वितयं बहिः ॥ वृत्तद्वयं लिखेत्तत्र वीथ्या लेख्यं विलोमतः १८३ ॥ प्रत्यक्षरं बिन्दुयुतं जातवेद-समन्त्रकम् ॥ वृत्तद्वये तु तद्बाह्ये वीथीचतुष्टयम् ॥ १८४ ॥ मातृकार्णा-नाद्यवीथ्यां सबिन्दूंन्वै लिखेत्क्रमात् द्वितीयायां विलोमेन कुर्य्याद्वाह्येष्टको-णकम् ॥ १८५ ॥ कोणाष्टकेषु लेखेच्चिन्तामणिककूटकम् ॥ तस्य बाह्ये त्रिशूलानि कुर्यात्षोडशसंख्यया ।८६ ॥ एतद्वेदविदां यन्त्रं सर्वकार्य्यप्र-सिद्धिकृत् ॥ सर्वसौभाग्यजननं स्तुविनाशकृत् ॥ १८७ ॥ भुवनेशीम-न्त्रपूजा यन्त्रेस्मिश्च परा भवेत् ॥दिकैस्तेन कर्तव्या पूजा यन्त्रस्य सिद्धये ॥ १८८ ॥ तद्विधिं सम्प्रवक्ष्ये स्वर्णादिकृतपत्रके ॥ एतद्यन्त्रं वैदिकेन सुलेख्यं कुंकुमादिभिः ॥ १८ ॥ यन्त्रमन्ये यजेद्देवीं कुर्य्याद्वीथित्रयं

---

१ तिल्लादेशाभाव आर्षः ॥

बहिः ॥ आद्यायां तु षडङ्गानि पद्यां दिक्चतुष्टयम् ॥ १९० ॥ हृल्लेखां गगनां रक्तां पूजयेच्च करालिकाम् ॥ तृतीयवीथ्यां ब्राह्माद्याः पूजनीया दिगष्टके ॥ १९१ ॥ तद्बाह्ये षोडदलं कृत्वा तत्र यजेदिमाः॥करालीं विकरालीं च धूम्रां सरस्वतीं श्रियम् ॥९२॥ दुर्गामुखीं तथा लक्ष्मीं श्रुतिस्मृतिश्रियो ह्यपि॥श्रद्धां मेधां मतिं कान्ति चार्च्या तस्य बहिः पुनः॥१९३॥ द्वात्रिंशद्दलपद्मं तु कृत्वा तत्र यजेदिमाः। विद्याह्रीपुष्ट्यः प्रज्ञा सिनीवाली तथा कुहूः ॥१९४॥रुद्रवीथ्याप्रभानन्दादायिनी सिद्धिदा शुभा॥कालरात्रिर्भद्रकाली महारात्रिः कपालिनी ॥ १९५ ॥ विकृतिर्दण्डमुण्डिन्यौ दुःखण्डा च शिखण्डिनी ॥ निशुम्भशुम्भमथनी महासुरमर्दिनी ॥१९६ ॥ इन्द्राणी चैव रुद्राणी शङ्करार्धशरीरिणी॥नारी नारणी चैव त्रिशूलिन्यपि पालिनी ॥ अम्बिका ह्लादिनी चैव द्वात्रिंशच्छक्तयस्त्विमाः ॥ १९७ ॥ तद्बाह्ये तु चतुष्षष्टिदलं कृत्वा यजेदिमाः ॥ पिङ्गाक्षीं विशालाक्षीं समृद्धिं वृद्धिमेव च ॥ १९८ ॥ श्रद्धां स्वाहां स्व मायां निद्रां चैव वसुन्धराम् ॥ त्रिलोकधात्रीं गायत्रीं सावित्रीं त्रिदशेश्वरीम्॥ १९९ ॥ सुरूपां बहुरूपां च स्कन्दमात्रच्युतप्रिये ॥ विमलां मलां पश्चादरुणीमारुणीं तथा ॥ २०० ॥ प्रकृतिं विकृतिं सृष्टिं स्थितिं संहृतिमेव च ॥ २०१ ॥ सन्ध्यां च मातृकां हंसीं सतीं सोमगां पराम् ॥ देवमातृभगवत्यौ देवकीं कमलासनाम् ॥ २०२ ॥ त्रिमुखींसप्तकमुखीं सुरासुरविमर्दिनीम् ॥ लम्बोष्ठीं चार्धमुण्डिकां बहुशिश्नां कृशीम् ॥ २०३ ॥ रथरेखा शशिरेखां परां गगनवेगिनीम् ॥ क्षिप्रां च पातालवेगां च मदनातुराम् ॥ २०४ ॥ अनङ्गां च तथानङ्गमानङ्गमेखले ॥ अनंगकुसुमां विश्वरूपां दैत्यभयङ्कराम् ॥ २०५ ॥ क्षोभ्यां सत्यवादां च तन्द्रारूपा शुचिव्रताम् ॥ वरदां चापि विश्वेशीं तद्बाह्ये दिगीश्वरान् ॥ २०६ ॥ तदायुधानां पूजाग्रे प्रोक्तोयं पूजने विधिः ॥ इच्छतं काममाप्नोति तान्त्रिकोप्यनयेज्यया ॥ २०७ ॥ अथ वक्ष्ये जगद्दुर्गायन्त्रमभीष्टदम् ॥ कृत्वा चाष्टदलं पद्मं कर्णिकायां लिखेद्ध्रुवम् ॥ २ ॥ तस्य मध्ये तु ह्रींकारं

तन्मध्ये साध्यनामकम् ॥ क्रमाद्दलेषु सुलिखेत्तारंह्रीमीं तथैव च ॥ २०९ ॥ दुर्गायै नम एतस्य मन्त्रस्यैकैकमक्षरम् ॥ बहिर्वृत्तत्रयं कृत्वा पूर्ववीथ्यां समालिखेत् ॥ २१० ॥ जातवेदसमन्त्रस्य मातृकार्णान्द्वितीयके ॥ तद्बहिश्चतुरस्रं च दौर्गं यन्त्रमिदं स्मृतम् ॥ २११ ॥ अपस्मार-महाभूतक्षुद्रग्रहनिवारणम् ॥ नृणां विजयदं स्त्रीणां पुत्रदं नात्र संशयः ॥ ॥ २१२ ॥ अथातः सम्प्रवक्ष्यामि यन्त्रं श्रीसूक्तजं परम् ॥ कृत्वाष्टपत्रं कमलं श्रीं बीजं कमलान्तरे ॥ २१३ ॥ साध्यनामान्वितं लेख्यं दले-ष्वष्टसु संलिखेत् ॥ कर्दमेत्यादिपञ्चर्चामर्द्धमर्द्धं दश त्वथ ॥ २१४ ॥ श्रिये जनः श्रिय आनिर्याय श्रियञ्च यो जरितृभ्यो ददाति ॥ श्रियं वसाना अमृ-तत्वमायां भवन्ति सत्या समधास्मै तद्गो ॥ २१५ ॥ श्रिय एवेति ऋचोस्तत्र चतुर्थार्द्धं समालिखेत्॥श्रीश्च ते इति मन्त्रस्य द्वयोः स्यादर्धमर्धकम् ॥२१६॥ वृत्तद्वयं तद्बहिश्च कुर्यात्प्रथमवीथिकाम्॥वक्ष्यमाण ऋचा चाद्या मातृकार्णैश्च तत्परा ॥ २१७ ॥ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ॥ श्रियः पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥ २१८ ॥ तद्बहिश्चतुरस्रं च लिखेच्छ्री-बीजमालिखेत् ॥ तस्य कोणचतुष्केषु श्रियो मन्त्रं तु वैदिकम् ॥ २१९ ॥ मया यन्त्रमिदं प्रोक्तं धारयेद्यो यथाविधि ॥ पुत्रारोग्यधराधान्यधनगोसस्यशा-लिनीम् ॥ लब्ध्वातिबहुलां लक्ष्मीं जीवेच्च शरदां शतम् ॥ २२० ॥ ताम्र-पात्रे लिखित्वेदं जपेदष्टोत्तरं शतम् ॥ अष्टाविंशतिसंख्याकं हुत्वा सम्पातसेचि-तम् ॥ २२१ ॥ संस्थाप्याङ्गणमध्ये तु लक्ष्मीमावाह्य पूजयेत् ॥ परिवार-युतां लक्ष्मीं बलिदानेन तोषयेत् ॥२२२॥ एवंकृते तु तत्स्थाने वर्धन्ते सर्व-सम्पदः ॥ पुत्राः स्त्रियश्च सुहृदो भृत्या धान्यं रथा गजाः ॥ गावश्च वृषभाः सौख्यं त्वसंख्यन्तत्र जायते ॥ २२३ ॥ अथातः सम्प्रवक्ष्यामि यन्त्रं पौरुष-सूक्तजम् ॥ षट्कोणकर्णिकामध्ये तारं साध्यसमन्वितम् ॥ २२४ ॥ सहस्रा-रहुंफडिति वर्णैकैकं दलेदले ॥ स्वाग्रादिप्रादक्षिण्येन लिखेत्तत्रैव सन्धिषु ॥ ॥२२५॥ षण्णाममन्त्रान्स्वाहान्तानचक्रायेति चादिमः ॥ विचक्राय सुच-क्राय धीचक्राय चतुर्थकः ॥ २२६ ॥ सञ्चक्रायेति च ज्वालाचक्रायेति च

षष्ठकः ॥ चतुर्दलं तु कमलं तद्बहिष्केशरेषु च ॥२२७॥ चतुर्दिक्षु क्रमाल्लेख्यं क्लींकृष्ण क्लीं तथाक्षरम्॥वासुदेवस्य मन्त्रस्य त्रीणित्रीण्यक्षराणि च ॥२२८॥ तत्पत्रेषु लिखेन्मन्त्रं वदेत्तारं तथा नमः ॥ भगवते वासुदेवायेत्यणुर्द्वादशाक्षरः ॥ ॥ २२९ ॥ तद्बाह्येष्टदलं पद्मं केशरेष्वस्य सँल्लिखेत् ॥ एकैकमक्षरं तारो नमो नारायणाय च ॥ २३० ॥ दलेषु चतुरो वर्णान्नारसिंहमनोर्लिखेत् ॥ श्रीं ह्रीं श्रीं जयलक्ष्मीति प्रियाय नित्यमुदितम् ॥ २३१ ॥ मनसे लक्ष्मीसितार्धदेहायेति वै वदेत्॥श्रींह्रींश्रीं नमो मन्त्रस्स्यान्नृसिंहस्य रदाक्षरः ॥२३२॥ तद्बहिः षोडशदलं केशरेषु क्रमाल्लिखेत् ॥ तारं नमो भगवते महासुदर्शनाय च ॥ २३३ ॥ हुंफट् षोडशवर्णोयं दलेषु क्रमतो न्यसेत् ॥ ऋचः पुरुषसूक्तस्य बहिर्वृत्तद्वयं चरेत् ॥ २३४ ॥ तदन्तरालवीथ्यान्तु मातृकार्णैः प्रवेष्टयेत् ॥ सबिन्दुकैर्बहिस्तस्य भूपुरं तच्चतुर्ष्वपि ॥ २३५ ॥ कोणेषु सुलिखेत्तारं यन्त्रं पौरुषमुच्यते ॥ सर्वपापहरं पुण्यं पुत्रायुष्कान्तिकीर्त्तिदम् ॥ २३६ ॥ यन्त्रं हैयङ्गवीनेन लिप्त्वा पुरुषसूक्तकम् ॥ अष्टोत्तरशतं जप्त्वा त्वृतुस्नातां तु भोजयेत् ॥ २३७ ॥ तद्यन्त्रनवनीतं च गर्भं धत्ते तदाङ्गना ॥ सुपुत्रो जायते वाग्मी सर्वागमविशारदः ॥ एवं हैयङ्गवीनं च विषार्त्ते सन्निपातिके ॥ २३८ ॥ शूले क्षये च पाण्ड्वादौ नीरुग्भक्षणतो भवेत् ॥ कुष्ठोपकुष्ठरोगेषु व्रणे भग्ने भगन्दरे ॥ फिरङ्गशीतलाद्येषु लेखनात्सुखमाप्नुयात् ॥ ॥२३९॥ अथातः सम्प्रवक्ष्यामि क्षेत्रस्य च पतेरिति ॥ पञ्चर्चस्य च सूक्तस्य यन्त्रं सर्वार्थसिद्धिदम् ॥ २४० ॥ कृत्वाष्टदलपद्मस्य कर्णिकायां तु षड्दलम् ॥ तन्मध्ये प्रणवं लेख्यं स्तस्मिन्हुं बीजमालिखेत् ॥ २४१ ॥ साध्यनाम च बीजे लिखेत्कोणेषु चैककम् ॥ सहस्रारहुंफडस्य चक्रमन्त्रस्य चाक्षरम् ॥ २४२ ॥ षण्नाममन्त्रान्पूर्वोक्ताँलिखेत्षट्कोणसन्धिषु ॥ चतुरश्चतुरो वर्णाँल्लिखेदष्टदले पुनः ॥ २४३ ॥ वराहमन्त्रस्यान्ते तु पत्रके वर्णपञ्चकम् ॥ तारो नमो भगवते वराहरूपमुच्यते॥ ङेन्तं व्याहृतयः प्रोक्ताः पतये पदमुच्चरेत् ॥ २४४ ॥ भूपतित्वं मे देहीति दापयान्तेऽग्निगेहिनी ॥ त्रय-

१ इदमुत्तरत्र संबध्यते ॥

स्त्रिंशद्वर्णकोयं वराहस्य मनुः स्मृतः ॥ २४५ ॥ तद्बाह्ये षोडशदले चार्धा-मर्धां लिखेदृचम् ॥ ऋचस्ता अत्र वक्ष्यामि सावधानतया शृणु ॥ २४६ ॥ क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व॥ मधुश्च्युतं घृतमिव सुपूत-मृतस्य नः पतयो मृडयन्ति ॥ २४७ ॥ क्षेत्रस्य पतिना वयं हितेनेव यजा-यसि ॥ गामश्वं योषयित्नवा सनो मूलतीदृशे ॥ २४८ ॥ मधुमतीरोषधीर्द्याव आपो मधुमन्नो भवत्वन्तरिक्षम् ॥ क्षेत्रस्य पतिर्मधुमान्नो अस्य रिष्यं अन्वेनं चरेम ॥ २४९ ॥ शुनं वाहाः शुनं नाराः शुनं कृषतु लाङ्गलम् ॥ शुनं वरत्रा वध्यन्तां शुनमष्ट्रामुदिङ्गया ॥ २५० ॥ शुनासीराविमां वाचं जुषेथां यदि विचक्रथुः ॥ पयो यमस्ते न मामुपसिञ्चतम् ॥ २५१ ॥ अर्वाची सुभगे भव सीते वन्दामहे त्वा ॥ यथा न सुभगा स य-था न सुफलासति ॥ २५२ ॥ इन्द्रसीतां गृह्णातु तां पूषा नियच्छतु ॥ सा नः पयस्वती दुहामुत्तरां समाम् ॥ २५३ ॥ शुनं नः फाला विकृषन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः ॥ शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तम् ॥ २५४ ॥ क्षेत्रस्य तु पतिर्देवो वामदेवो मुनिः स्मृतः ॥ पुलस्त्यर्षिरनुष्टुप् च त्रिष्टुप्छन्दोस्ति सूक्तके ॥ २५५ ॥ बहिर्वृत्तत्रयं कृत्वा तत्र वीथीद्वयं भवेत् ॥ ग्लौंबीजेनाद्यवीथ्यां तु वेष्टयेन्मातृकार्णकैः ॥ ॥ २५६ ॥ द्वितीयं भूपुरं तस्य बाह्ये कोणेषु ग्लौमिति ॥ लिखेद्दिक्षु च हुंबीजं यन्त्रमेतच्छुभे दिने ॥ २५७ ॥ ताम्रपत्रे समालेख्य स्वर्णसूच्या यथाविधि ॥ स्थापितं भवने द्वारे क्षेत्रे वा नगरेपि वा ॥ २५८ ॥ देशे वा तत्र वर्धन्ते दिनशः सर्वसम्पदः ॥ गजाश्वधेनुमहिषवृषोष्ट्राश्वतरादिभिः ॥ ॥ २५९ ॥ धनधान्यधराशस्यवासोरत्नविभूषणैः ॥ आह्लादयन्ति विभवै-रन्यैश्च स्यात्समागमः ॥ २६० ॥ अथातः सम्प्रवक्ष्यामि यन्त्रमागावसू-क्तकम् ॥ षट्कोणे सुलिखेत्कामबीजं साध्यसमन्वितम् ॥ २६१ ॥ एकैक-मक्षरं लेख्यं षट्कोणेषु ध्रुवो नमः ॥ कृष्णायेति लिखित्वाग्रे कुर्य्यात्पद्मं चतु-र्दलम् ॥ २६२ ॥ वृत्तेषु सुलिखेत्क्लीं च कृष्ण क्लीमिति वर्णकान् ॥ वासु-देवमनोवर्णा दले लेख्यास्त्रयस्त्रयः ॥ २६३ ॥ तद्बहिर्दिग्दलं कृत्वा पद्मं

तत्केशरेषु च ॥ गोपीजनवल्लभाय स्वाहा मन्त्रं दशाक्षरम् ॥ २६४ ॥ आलिख्य तस्य पत्रेषु नखार्णार्णं द्वयं द्वयम् ॥ माया रमाथ गोपाल ततो विषधराय च ॥ २६५ ॥ वासुदेवाय हुंफट् च स्वाहा विंशार्णको मनुः ॥ तद्बहिः षोडशदलं कृत्वा तत्र लिखेत्स्वरान् ॥ २६६ ॥ केशरेष्वथ पत्रेषु वक्ष्यमाणा ऋचो लिखेत् ॥ अर्धमर्धं प्रतिदलं रमणीयं यथा भवेत् ॥ २६७॥ आ गावो अग्मन्नुत भद्रमकरन्त्सीदन्तु गो एरणयन्त्वस्मे ॥ प्रजावतीः पुरुरूपा इहस्युरिंद्राय पूर्विरुषसो दुहानाः ॥ २६८ ॥ इन्द्रो यज्वने पृणतेश्च शिक्षत्फलं मे ददाति नस्त्वं मुषायति ॥ भूयोभूयो रयिमिदस्य वार्धयन्नभिन्ने खिल्ये निदधाति देवयम् ॥ २६९ ॥ नता नशन्ति तस्करो नासामामित्रो व्यथिरादधर्षति ॥ देवांश्च याभिः स च ते ददाति च ज्योगिताभिः स च ते गोपतिः सह ॥ २७० ॥ न ता अर्वा रेणुकाकाटोअस्तु तेन संस्कृत्तत्र मुच्यन्ति ता अभि ॥ उरुगायमभयं तस्य ता अनुगावो मर्त्तस्य विचरन्ति यज्वनः ॥ २७१ ॥ गावो भगो गाव इन्द्रो मे अच्छानागवः सोमस्य प्रथमस्य भक्षः ॥ इमा या गावः सजनास इन्द्र इच्छामीधृदा मनसा चिदिन्द्रम्॥ २७२यूयं गावो मे दयथा कृशं चिदश्रीरंचित्कृणुथा सुप्रतीकम्॥भद्रं गृहे कृणुथ भद्रवाचो बृहद्वो वय उच्यते सभासु॥२७३॥प्रजावतीः सूयवसं रिसन्तीः सुप्रयाणे पिबन्तीः ॥ मावस्तेन ईशतमाघशंसः पारवोहेतीरुद्रस्यवृज्याः ॥ ॥ २७४ ॥ उपेदमुपपर्चनमाशुगो यूयमृच्यताम् ॥ उप ऋषभस्य रेतः स्युपेन्द्र तव वीर्य्ये ॥ २७५ ॥ वृत्तद्वयं बहिष्कृत्यतद्वीथ्यां कादिकाँल्लिखेत् ॥ अकारान्तांस्तद्बहिश्च भूपुरं सम्यगालिखेत् ॥ २७६ ॥ कोणेषु ग्लौं समालिख्य लिखेद्भूरिति दिक्षु च ॥ गोपालयन्त्रमेतद्धि विधिना स्थापितं गृहे ॥ २७७ ॥ तत्र गावः पयस्विन्यः सवृषाश्च निरामयाः ॥ पीनोध्न्यो बहुरूपाश्च विशालाश्च भवन्ति हि ॥ २७८ ॥ धनधान्यधरारत्नशालिनी तस्य मन्दिरे ॥ लक्ष्मीः कीर्तिः स्थिरा भूत्वा निवसेत्सततं तदा ॥ ॥ २७९ ॥ अथान्यद्वक्ष्यते यन्त्रं गवादेर्बहुभूतिकृत् ॥ मध्येष्टदलपद्मस्य ससाध्यं प्रणवं लिखेत् ॥ २८० ॥ आ गाव इति सूक्तस्य एकैकां च दले

ऋचम् ॥ वृत्तद्वयं बहिष्कृत्य तद्वीथ्यां मातृवेष्टनम् ॥ २८१ ॥ तद्बहिश्चतुरस्रं च कुर्य्याद्यन्त्रमिदं गृहे ॥ स्थापितन्तत्तु गोश्वादिवृषैः पूर्णं सदा भवेत् ॥ ॥ २८२ ॥ अथ वक्ष्ये दिनेशस्य यन्त्रं रोगनिवारणम् ॥ षट्कोणमध्ये तुलिखेत्साध्यं सप्रणवं ततः ॥ २८३ ॥ कोणेषु तारं ह्रींसोहंहंसोवर्णान्क्रमाल्लिखेत् ॥ चतुर्दलन्तु कमलं तद्बहिः केशरेषु च ॥ २८४ ॥ ह्रींह्रींहंसश्च पूर्वादौ लिखेत्पत्रेषु सर्वतः ॥ उद्यन्नद्य ऋचः पादा लेख्यास्तद्बाह्यतो लिखेत्॥ ॥ २८५ ॥ अष्टपत्रं तु कमलं केशरेषु लिखेत्क्रमात् ॥ घृणिः सूर्यस्तथादित्य इदमेकैकमक्षरम् ॥ २८६ ॥ शुकेषुमेत्यादि ऋचः प्रापयेके दले दले ॥ वृत्तद्वयन्तु तद्बाह्ये वीथ्यां मातृप्रवेष्टनम् ॥ २८७ ॥ तद्बहिर्भूपुरास्त्रेषु अंह्रीं ह्रींसः इदं लिखेत् ॥ एतद्यन्त्रं तु सूर्य्यस्य नाशयेत्सकलान्ग्रहान् ॥ ॥ २९८ ॥ तेजो लक्ष्मीं च भोगञ्च प्रतापं वर्द्धयेद्धृतिम् ॥ एतद्गोमयलिप्तायां लिखेदारक्तचन्दनैः ॥ २८९ ॥ धरायां ताम्रसूच्या तु सम्यगावाह्य पूजयेत्॥ पूजान्ते च विशिष्टार्घ्यं प्रकल्प्यास्मै प्रदीयते ॥ २९० ॥ कुष्ठयक्ष्मादिशान्त्यै च क्षुद्ररोगविनाशनम् ॥ इदं यन्त्रं ताम्रपात्रे लिखित्वा स्थापितं गृहे ॥२९१॥ विधिवत्पूजयन्नित्यं हन्यात्कुष्ठमुखान् गदान् ॥ अपस्मारं विस्मृतिं च रोगांश्चैवाभिचारिकान् ॥ २९२ ॥ सुवर्णपत्रे चालिख्य तैलमध्ये विनिःक्षिपेत् ॥ सहस्रसंख्यं प्रजपेदुद्यन्नद्यमिति त्र्यृचम् ॥ २९३ ॥ तत्राशक्तशरीरस्य कुष्ठरोगविनाशनम् ॥ इदमेव लिखेद्यन्त्रं नवीने नवनीतकम् ॥ २९४ ॥ अष्टोत्तरशतं जप्त्वा त्र्यृचं निष्कास्य भक्षयेत् ॥ गदिनो रोगशान्तिः स्यात्सत्यमेतन्न संशयः ॥ २९५ ॥ अथान्यत्सम्प्रवक्ष्यामि गायत्रीसौरमन्त्रयोः ॥ यन्त्रं समस्तरोगाणां नाशनं सूर्य्यवल्लभम् ॥ २९६ ॥ वृत्तं कृत्वा तु तन्मध्ये ससाध्यं प्रणवं लिखेत्॥ बहिस्तस्य त्रिकोणं तु मन्त्रागारेति संलिखेत्॥ २९७॥ एकैकमक्षरं कोणे बहिर्वृत्तं पुनर्लिखेत् ॥ यक्षराजायेति तत्र लिखेत्पञ्चाक्षराणि तु ॥ २२८ ॥ बहिस्तस्य तु षट्कोणे लिखेदेकैकमक्षरम् ॥ सहस्रारं हुंफडिति अष्टकोणे ततो लिखेत् ॥ २९९ ॥ घृणिं सूर्य्यं तथादित्यं लिखेदेकैककोष्ठके ॥ पत्राग्रेषु लिखेच्छ्रीह्रींमिति बीजद्वयं पुनः ॥ ३००॥ सौरं यन्त्रमिदं

प्रोक्तमायुरारोग्यवृद्धिदम् ॥ वन्ध्यानां पुत्रजननं स्त्रीणां सौभाग्यदायकम्॥ ॥ ३०१ ॥ राज्ञां विजयदं सम्यग्रोगिणां रोगनाशनम् ॥ किं बहूक्तेन विधिना धृते हस्ते फलप्रदम् ॥ ३०२ ॥ तथैव संप्रवक्ष्यामि सारात्सारतरं परम् ॥ यद्बुद्ध्वा च मया प्रोक्तं सारमाथर्वणस्य च ॥ ३०३ ॥ शाबरं रूपमास्थाय पृथ्वीं पर्य्यटता मया ॥ कलौ लोका भविष्यन्ति सर्वे कामार्थ-साधकाः ॥ ३०४ ॥ असद्गुरूणां तन्मन्त्रैर्दृष्टैर्वा पुस्तकादिषु ॥ समयाचार-विभ्रष्टा विक्षिप्तास्ते च निर्धनाः ॥ ३०५ ॥ अधर्मेण भविष्यन्ति भूताक्रा-न्तास्तथापरे ॥ अभिचारिककृत्यादिरोगैर्ग्रस्तमहाग्रहैः ॥ तेषामर्थे मया देवा-यन्त्रं तु प्रकटीकृतम् ॥ ३०६ ॥ मृदङ्गसदृशं कुर्य्याच्छीर्षं प्रेतस्य वर्जितम्॥ घ्राणादिकं चतुर्भिश्च इन्द्रियैस्तस्य मध्यगम् ॥ ३०७ ॥ तिर्य्यग्रेखां प्रकुर्वीत मुण्डमित्या बहिर्गताम् ॥ पार्श्वद्वयेपि कर्तव्यमग्रयोः शूलकद्वयम् ॥ ॥ ३०८ ॥ शूलविस्तारतुल्या च तदधस्तूर्ध्वरेखिका ॥ मुण्डो हस्ताभिधः प्रोक्तो मध्यं कुर्य्याच्च शूलवत् ॥३०९॥ गुह्येन्द्रियस्थले कुर्य्यात्पश्चाकारान्तु रेखिकाम्॥त्रिशूलौ पीठिकायुक्तौ पादयोस्तत्स्थले न्यसेत्॥३१०॥एवं कृत्वा प्रेतरूपं बीजान्येतानि संलिखेत् ॥ शीर्षे हस्ते दक्षबाहावूर्ध्वमष्टदलं लिखेत् ॥ ॥ ३११ ॥ रेखार्धभागमुण्डन्तु ङेन्तं डं नं लिखेत्तथा ॥ वामबाहूपरिष्टाच्च हामो इत्यक्षरद्वयम् ॥ ३१२ ॥ अर्धे भागे तु मुण्डस्य सस्मिवाष्टाश्च संलिखेत् ॥ शिखा कार्य्या हृदस्थानं तिर्य्यगूर्ध्वं तु सं सदा ॥३१३॥ लिखे-त्ततो मध्यभागे पार्श्वयोश्च लिखेदिदम् ॥ क्रमान्नव विभागेषु अलीयं प्रथमा भवेत् ॥ ३१४ ॥ भूबीजं च द्वितीये स्यादहीनञ्च तृतीयके ॥ सराहीयं चतुर्थन्तु विहकस्तत्तु पञ्चमम् ॥ ३१५ ॥ त्रैयाक इति षष्ठं स्यात्तथा नाम्बु-दसप्तमम् ॥ त्रैयाक इत्यष्टमञ्च नस्तरं न तथान्तिमम् ॥ ३१६ ॥ बहिः स्थाने प्रकर्त्तव्यं द्विकाद्यं कोष्ठपट्ककम् ॥ ऊर्ध्वपंक्तौ क्रमाल्लेख्यं पङ्क्त्राद्वि-तयं तथा ॥ ३१७ ॥ अधःपंक्तौ सप्तगोष्ठौ पेश्यां लेख्यं त्रसे सदा ॥ पेश्या-बहिर्मम हृदपेश्यधस्तात्तु दक्षिणे ॥ ३१८ ॥ पादपार्श्वे साध्यनाम वामे तन्मन्त्रमालिखेत् ॥ एतद्यन्त्रं दले लेख्यं मस्या तन्नीलकर्पटे ॥ ३१९ ॥

सम्यक्संवेष्टयेत्सा तु वर्त्तिभूता कुशाभिधा ॥ आदित्यवासरे सायं गोमयेनो-पलेपयेत् ॥ ३२० ॥ स्थाने श्वेताक्षतैस्तत्र पद्ममष्टदलं लिखेत् ॥ तत्कर्णि-कायां प्रथमं पूजयेच्च गणाधिपम् ॥३२१॥ तस्यैव दक्षिणे पार्श्वे क्षेत्राधिपति-मर्चयेत् ॥ पत्रेष्विन्द्रादिकानर्चेत्कर्णिकायां तु दीपिकाम् ॥ ३२२ ॥ सम्य-ग्न्यसेत्तदूर्ध्वन्तु स्थापयेत्तैलपात्रकम् ॥ तैलन्तु कुडवोन्मानं तिलानां तत्र ति-ष्ठति ॥३२३॥ तादृशे मृण्मये पात्रे धातुजे वा प्रकल्पयेत् ॥ पूजयित्वा दीपि-कादि सायं तत्रोपवेशयेत् ॥ ३२४ ॥ तद्दर्शयन्निष्टयन्त्रं ध्यायेद्दीपं विलो-कयन् ॥ दीपाधिष्ठातृदेवस्य तुष्ट्यै सावरणस्य च ॥ ३२५ ॥ दद्यादामान्न-मर्कन्तु वैदिकाय कुटुम्बिने ॥ यावच्च प्रज्वलेद्दीपः पश्येत्तावदतन्द्रितः॥ ३२६॥ देवदोषे समुत्पन्ने दीपो वदति स स्वयम्॥यत्किञ्चित्त्वरितं कार्य्यं शान्तिर्भवति निश्चितम् ॥ ३२७ ॥ दोषा यदा राक्षसादेः शरीरे सत्यवादिनि ॥ तदा तदैव कर्तव्यं रोगी सुखमवाप्नुयात् ॥ ३२८ ॥ अभिचारिककृत्यादौ दीप-कम्पः प्रजायते ॥ कम्पते तु क्षणेनैव महांश्चापि क्षणेक्षणे ॥ ३२९ ॥ एकेन भानुवारेण क्षुद्रदोषः प्रणश्यति ॥ भानुवारद्वयं कृत्याकृतदोषविनाशनम् ॥ ॥ ३३० ॥ साधकेनाप्यचरितं त्रिभिर्दोषः क्षयं व्रजेत् ॥ मन्त्रभक्षणदोषोथ चतुर्दीपैर्विनश्यतु ॥ ३३१ ॥ कुगुरुप्राणमन्त्रेण षड्भिर्दोषो विनश्यति ॥ रोगोपि सप्तदीपेन नश्येदेतन्महाद्भुतम् ॥ ३३२॥ त्रिनिमितं स्वयं गच्छे-द्वेधे वातायने त्रयः ॥ अभ्यन्तरे कालिमवाच्छिद्रं वापि प्रदृश्यते ॥ ॥ ३३३ ॥ त्रिशिखो वा द्विवर्णो वा निस्तेजा यदि जायते ॥ पूर्णमा-युर्विनिर्देश्यं स रोगी नैव जीवति ॥ ३३४ ॥ सिद्धयन्त्रमिदं प्रोक्तं तांत्रि-काणां तु सिद्धिदम् ॥ स्वधर्म्मत्यागिनां नैव यन्त्रं कार्य्यं तु पण्डितैः॥ ६३५॥ ब्राह्मं धर्म्ममुपातिष्ठेत्तस्य नास्ति पुरस्क्रिया ॥ स्वयं यंत्राणि मन्त्राश्च सिद्ध्य-न्त्यत्र न संशयः ॥ ३३६ ॥ अष्टादशपुराणानि व्यासेन रचितानि तु ॥ गौतमेन प्रणीतो यो न्यायोसौ धर्म्मसाधनम् ॥ ३३७ ॥ भविष्यन्ति कलौ नानाकुतर्का वेदनाशकाः ॥ तानधीत्य द्विजो भूयः प्रेतो वा ब्रह्मराक्षसः ॥ ॥ ३३८ ॥ मीमांसा सेश्वरा या तु पुरुषार्थप्रसाधिका ॥ निरीश्वरा कर्म्म-

परा भोगं स्वर्गं प्रयच्छति ॥ ३३९ ॥ स्मृतयोष्टादश प्रोक्ताः पंक्तौ चाद्यः पराशरः ॥ शङ्खश्च लिखितो व्यासो वशिष्ठः कश्यपो मुनिः ॥ ३४० ॥ अगस्त्ययमहारीता दिवोदासः प्रजापतिः ॥ पैठीनसिश्च भगवाञ्जमदग्निश्च गौतमः ॥ ३४१ ॥ भारद्वाज इमे प्रोक्ता धर्म्मशास्त्रप्रवर्त्तकाः॥ मतभेदस्तथा तेषां विज्ञेयो दशभेदतः ॥ ३४२ ॥ क्वचित्कालविभेदेन विद्यते तु मुनेर्वचः॥ तस्माज्जातिं कुलं देशं ज्ञात्वा धर्म्मं समादिशेत् ॥ ३४३ ॥ शिक्षा कल्पो व्याकरणं निरुक्तं छन्द एव च ॥ गणितं संहिता होरा त्रिविधं ज्यौतिषं तथा ॥ ३४४ ॥ वेदाङ्गानि षडेतानि वेदाश्चत्वार एव च ॥ चतुर्दश तु वै यद्य-त्प्रोक्तन्धर्म्मसाधनम् ॥ ३४५ ॥ सिद्धे यस्मिंस्तु सिद्धाश्च ऋष्याद्याः स्वयमेव हि ॥ एतद्विरुद्धं वर्णानाम्भवेन्नो धर्म्म साधनम् ॥ ३४६ ॥ आयु-र्वेदो धनुर्वेदो गान्धर्वो नीतयस्तथा ॥ शिल्पविद्याश्च गणितं शकुनं चेति सप्त च ॥ ३४७ ॥ प्रोक्तानि चार्थशास्त्राणि यथोक्ताचरणाद्ध्रुवम् ॥ यद्दर्शित-म्भवेत्तत्र समर्थं पुरुषार्थकृत ॥ ३४८ ॥ साहित्यमागमो वाजीकरणं काम-चारणम् ॥ चतुर्धा कामशास्त्रं स्यात्प्राप्त्यर्थं गुरुशासनतः ॥ ३४९ ॥ धर्म्मा-र्थाद्यविरोधेन भवेत्तत्कामसाधनम् ॥ विना गुरुं विना बुद्धिं पुरुषार्थः प्रणश्यति ॥ ३५० ॥ योगशास्त्रञ्च वेदान्तं द्वयम्मोक्षस्य साधनम् ॥ अन्ये ये प्राकृता ग्रंथा धर्म्माभासाश्च ते सुराः ॥ ३५१ ॥ अस्मिन्कलियुगे घोरे शिश्नोदर-परायणे ॥ कश्चिदेकः कोटिमध्ये सर्वकर्म्मविवर्धनः ॥ ३५२ ॥ बुधो धर्म्मपरो भूयात्तदर्थमिदमुच्यते ॥ उत्पादयेत्सुपुत्रन्तु कुलदीपं तदुच्यते ॥ ॥ ३५३॥ गर्भाधानाख्यसंस्कारं कुर्वीत प्रथमार्तवे॥ सीमन्तोन्नयनं कार्य्यं तथा पुंसवनं स्मृतम् ॥ ३५४॥ एते त्रयस्तु संस्कारा ब्राह्मगर्भत्वकारकाः ॥ एतैरेव तु यो जातः संस्कृतो ब्रह्मबीजतः ॥ ३५५ ॥ जातकर्म्मादयस्तस्य चान्न-प्राशनमेव च ॥ चत्वारस्ते बालकस्य संस्कारा ब्राह्मसिद्धये ॥ ३५६ ॥ व्रतबंधः समावर्तो वेदपाठो विधानतः ॥ एते त्रयस्तु संस्काराः कौमारे ब्रह्म-कारकाः ॥ ३५७ ॥ एवं यो दशसंस्कारैः संस्कृतो दशकर्म्मकृत ॥ स एव

१ विधानमिति शेषः । २ ब्रह्मतेजोवर्द्धनाय ॥

ब्राह्मणो ज्ञेयो मंत्राः सर्वेपि तद्वशाः ॥ ३५८ ॥ तद्दृष्ट्वा राक्षसा वीरा म्लेच्छा बाधितुमक्षमाः ॥ कर्म्माणि दश ते दृष्ट्वा पलायन्ते तु दूरतः ॥ ॥ ३५९ ॥ दशप्रकारान्यतरप्रकारेण धनार्जनम् ॥ निर्वाहाय कुटुम्बस्य प्रथमं कर्म्म चोच्यते ॥ ३६० ॥ याज्यस्य याजनं कृत्वा साधयेत्प्रथमं धनम् ॥ पाठयित्वा योग्यशिष्यं द्वितीयं पारितोषिकम् ॥ ३६१ ॥ दुर्दातारं च दुष्कालं दुर्दानं दुष्टभूमिकाम् ॥ हित्वा प्रतिग्रहं कुर्य्यात्तृतीयन्धनसाधनम् ॥ ३६२ ॥ दायादक्रमतः प्राप्तं सञ्चितं तत्तुरीयकम् ॥ एतद्वंशे तु यद्दिनं तल्लब्धं पञ्चमं स्मृतम् ॥ ३६३ ॥ अर्थोपायास्तु ये प्रोक्तास्साधितं तैस्तु षष्ठकम् ॥ सन्मंत्रस्योपदेशेन यल्लब्धन्तत्तु सप्तमम् ॥ ३६४ ॥ कृषिं यथोक्तमार्गेण कुर्य्यात्तच्चाष्टमं मतम् ॥ कालानुगुणतः प्राप्तं नवमं पारितोषिकम् ॥ ३६५ ॥ विशिष्टं पूर्वपूर्वं तु दानं स्याद्द्विगुणं भवेत् ॥ धनार्जनाख्यं कर्म्मैतत्प्रथमं परिकीर्त्तितम् ॥ ३६६ ॥ पोष्यकर्म्म द्वितीयं स्यादादौ स्वीये कलेवरे ॥ ततः पतिव्रता भार्य्या माता जनयिता ततः ॥ ३६७ ॥ भ्रातरो गुरवः पुत्राः कन्या मातामहस्तथा ॥ श्वश्रूश्चायं पोष्यवर्गो विपत्तौ यत्र लभ्यते ॥ ३६८ ॥ एकांशमंशान्समीकृत्य भागन्तेभ्यः प्रदापयेत् ॥ अत्र पुत्रस्य यो भागस्तस्य पोष्यसमीकृतिम्[1] ॥ कृत्वा विप्रेण रज्येत ब्राह्मण्यान्न तु हीयते ॥ ३६९ ॥ नित्यस्नानं तृतीयं स्यादस्नायी शूद्रतां व्रजेत् ॥ दशस्नानानि चैतानि गुणेनोपचितानि च ॥ आदौ वर्णतरुस्नानं साम्यजं च द्वितीयकम्॥ ३७० ॥ हैमोदकं च मात्रं च भौमाख्यं च विभूतिमत् ॥ गायत्रं चापि वायव्यं कायिकं मानसं तथा ॥ ३७१ ॥ सन्ध्याकर्म्म चतुर्थं स्याद्दशधा तत्प्रकीर्तितम् ॥ प्रागुक्तविधिना पूजा मुद्रा दर्शनपूर्विका ॥ अष्टाधिकसहस्रं च जपो मुख्यमिदं स्मृतम् ॥ ३७२ ॥ द्व्येकयोरेवमाचारात्सन्ध्याभेदत्रयं मतम् ॥ सार्चना मुद्रिकायुक्ता तथा चान्या विमुद्रिका ॥ ३७३ ॥ अष्टोत्तरसहस्रन्तु तथा चाष्टोत्तरं शतम् ॥ अष्टाविंशतिरष्टौ वा जपे भेदचतुष्टयम् ॥ जपाभावे न सन्ध्यार्घ्यं गा-

---

१ इदमुत्तरान्वयि ॥

श्रीपर्णादिकृते पीठे पूजयेत्कुंकुमादिना॥ यन्त्रमेतद्बुधः कुर्य्याच्चतुरस्रत्रयं शुभम्॥ ॥ १९ ॥ तन्मध्येष्टदले कार्यः पूजापीठं गणेशितुः ॥ तत्र पूर्वोक्तविधिना मण्डपादि प्रकल्पयेत् ॥ २०॥ पृथिव्यन्तं समुद्रादि लिखेदिक्षुरसात्मकम् ॥ रत्नद्वीपादि च परं त्वचोंद्दिष्टदलात्मके ॥ २१॥ अर्चयेत्कर्णिकायां तु देवं पत्रेषु वै क्रमात् ॥तीव्रा च ज्व[illegible]ली नन्दाभोगदा कामरूपिणी ॥ २२ ॥ उग्रा तेजस्वती सत्या नवमी विघ्ननाशिनी॥आद्या मध्यातथा चान्तमनाः पीठमनुं शृणु ॥२३॥ॐ सर्वशक्तिकमलासनाय नम इत्यमुम् ॥ पूर्वादिषु चतुर्दिक्षु यजेत्पीठं गणाधिपम्॥ २४॥गणेशानं गौरवर्णं रक्तं च गणनायकम् ॥ गणक्रीडं नीलवर्णं केशरेषु ततो यजेत् ॥२५॥ अग्नीशासुरवायव्यमध्ये चान्तरदिक्षु च ॥ मन्त्रस्यास्य षडङ्गानि ध्यातव्यास्ताश्च देवताः ॥ २६ ॥ तुषारस्फटिकश्यामनीलकृष्णारुणत्विषः ॥ वरदाभयधारिण्यः प्रधानतनवः स्त्रियः ॥ २७ ॥ वक्रतुण्डैकदंष्ट्रौ च महोदरगजाननौ ॥ लम्बोदराख्यविकटौ विघ्नराड्धूम्रवर्णकौ ॥ ॥ २८ ॥ पूर्वादिषु दलेष्वर्च्या ब्राह्म्याद्याश्च दलाग्रतः ॥ ध्यानं तासां प्रवक्ष्यामि प्रोक्तं सव्यक्रमेण तु ॥ २९ ॥ ब्राह्मी वर्णसिता ध्येया मृगचर्म्मविभूषिता॥अक्षमालामयोदण्डं कुण्डिकां दधती करैः ॥३०॥ त्रिशिखं परशुं हस्तैर्डमरुं नृकपालकम् ॥ बिभ्राणां चन्द्रगौराङ्गीं महेशीं भावयेच्छुभाम् ॥ ॥ ३१ ॥ गुणं खट्वाङ्गकं दण्डमंकुशं दधतीं करैः ॥ इन्द्रगोपारुणां ध्यायेत्कौमारीं करुणालयाम् ॥३२॥ अरिशङ्खकपालानि घण्टां च करपङ्कजैः॥ बिभ्राणां वैष्णवीं ध्यायेन्नीलमेघसमप्रभाम् ॥ ३३ ॥ तोमरांकुशवज्राङ्कविद्युद्युक्तकराम्बुजाम् ॥ इन्द्राणीं भावयेन्मन्त्री नीलवर्णां सुभूषणाम् ॥ ॥ ३४ ॥ हलं च मुसलं दोर्भिर्दधानां खड्गखेटकौ ॥ वाराहीं भावयेच्छक्तिमञ्जनाचलसंनिभाम् ॥ ३५ ॥ धारयन्तीं शूलखेटौ कपालं नृशिरः करैः ॥ चामुण्डां शोणवर्णां च मुण्डमालायुतां स्मरेत् ॥ ३६ ॥ स्वर्णाभामक्षमालां च बीजपूरकपालके ॥ पद्मं च दधतीं हस्तैर्महालक्ष्मीं स्मरेत्सुधीः ॥ ३७ ॥ चतुरस्रत्रयान्तस्थवीथिद्वन्द्वे समर्चयेत् ॥ दिक्पालांश्च तदस्त्राणि पूजाविघ्नहरस्य तु ॥ ३८ ॥ यश्चैवं पूजयेदेवं गणेशं विघ्ननाशनम् ॥ असिद्धादपि सम्प्राप्तो

मन्त्रोसौ सिद्धिकृद्भवेत् ॥ ३९ ॥ लक्षमेकं मनुं जप्त्वा जुहुयात्तद्दशांशतः॥ मोदकैः पृथुकैर्लाजैः सक्तुभिश्चेक्षुपर्वभिः ॥ ४० ॥ नारिकेरैस्तिलैर्मोचैर्होमं कुर्य्यात्पृथक्पृथक् ॥ सहस्रमेकं द्विशतं पञ्चाशत्प्रमितं तथा ॥ ४१ ॥ तिलै-स्त्रिमधुराक्तैश्च होमः कार्य्योंथ कथ्यते ॥ दौग्धान्नेन घृताक्तेन होमोभीष्ट-फलप्रदः ॥ ४२ ॥ लक्ष्मीकामो नारिकेरैश्चतुर्थ्यां तु चतुश्शतम् ॥ सित-पक्षादिमारभ्य प्रत्यहं जुहुयात्क्रमात् ॥ ४३ ॥ चतुर्थ्यन्तं ततः सर्वप्राणिनो वशगा नृणाम् ॥ तिलैश्च घृतसंयुक्तैर्होमः श्रीवश्यकीर्त्तिदः ॥ ४४ ॥ स्वादुत्रययुतैर्लाजैर्हुनेत्सप्तदिनावधि ॥ कन्यार्थी लभते कन्यां पुत्रार्थी लभते सुतम् ॥ ४५ ॥ दधिसंसिक्तलवणैर्जुहुयाच्च चतुर्दिनम् ॥ निशीथिन्यां च वश्यादौ भवेद्वश्यं तथेप्सितम् ॥ ४६ ॥ गौरवं लाघवं साध्यं जाप्यं चासा-ध्यमेव च ॥ कार्य्यं ज्ञात्वा होमसंख्यां कल्पयेच्च सहस्रतः ॥४७॥ कोट्यन्त-मेवं विज्ञेयं यत्र संख्या तु नोदिता ॥ सितार्कद्रुममूलेन कुचन्दनसुदारुभिः ॥ ४८ ॥ गजाक्षत्रोटिनं चैव दन्तकेनापि दन्तिनाम् ॥ विधाय विघ्नं सम्पूज्य तं पृष्ट्वा प्रजपेन्मनुम् ॥ ४९ ॥ उपोषितः शुचिश्चन्द्रग्रहणे तं समुद्धरेत् ॥ शिखायां व्यवहारादौ समरे विजयी भवेत् ॥५०॥ रोचनारजसानेन कृतं च मनुना ततः ॥ तिलकं सर्वराजानो लोकाः स्युर्वशगास्सदा ॥ ५१ ॥ नव-नीतेन वै साध्यनामालिख्यानुलोमगम् ॥ विलोमं विघ्नबीजं च तद्वृतं स्थापितं जले ॥ ५२ ॥ जपित्वाष्टोत्तरशतं तूष्णीं तद्भक्षयेत्तदा ॥ सप्ताहाद्वशगः साध्यः साधकस्य भवेद्ध्रुवम् ॥ ५३ ॥ गणेशं तर्प्पयेत्तोयैः भग्नवत्कार्यवशेन तु ॥ मण्डादिभिरवाप्नोति मन्त्रोयं प्रणवादिकः ॥ ५४ ॥ संन्यासिने च पूजायां हृदन्तः परिकीर्तितः ॥ वक्ष्येथ दक्षिणाम्नाये लक्ष्मीगणपतिं सुराः ॥ ५५ ॥ गजलक्ष्मीसमायुक्तमयं योगोति दुर्लभः ॥ श्रीं गं सौम्याय चोच्चार्य्य महागणपतिं तथा ॥ ५६ ॥ ङेन्तमुक्त्वा वरव-रदोक्त्वा सर्वजनं वदेत् ॥ मे वशमानय स्वाहेत्येकोनत्रिंशदक्षरः ॥ ५७ ॥ अन्तर्यामी मुनिश्छन्दो गायत्री त्रिवृदन्विता ॥ देवो लक्ष्मीगणेशो-त्राथाद्यबीजद्वयेन तु ॥ षड्दीर्घयुक्तेनांगानि जातियुक्तानि कारयेत् ॥ ५८ ॥

हेमाभं पीतवसनं शंखचक्रगदाभयान् ॥ दक्षोर्ध्वकरमारभ्य दक्षिणेधः करावधि ॥ ५९ ॥ दधतं शुण्डया स्वर्णघटं पद्मोपरि स्थितम् ॥ पार्श्वेविष्णुलक्ष्म्या चाश्लिष्टं दक्षभुजेन तु ॥ ६० ॥ प्राक्प्रोक्ते पूजयेत्पीठे ना मादिनवशक्तिके ॥ अष्टपत्राम्बुजद्वन्द्वे कर्णिकाकेशरोज्ज्वले ॥ चतुर्द्वारयुक्तचतुरस्रत्रयावृते ॥ ६१ ॥ मूलेन मूर्तिं संकल्प्य तस्यामावाह्य पूजयेत् ॥ प्रथमावृत्तिरङ्गैः स्याद्वक्रतुण्डादिभिः परा ॥ ६२ ॥ अणिमा महिमा चैव लघिमा गरिमा तथा ॥ ईशित्वं च वशित्वं च प्राकाम्यं प्राप्तिरग्रतः ॥ ६३ ॥ चतुर्थी मातृभिश्चाग्रे लोकेशानायुधानि च ॥ लक्षं जपेद्धुनेद्बिल्वसमिधो मधुरप्लुताः ॥ तर्प्पणादि ततः कृत्वा काम्यकर्माणि साधयेत् ॥ ६४ ॥ हुनेच्चैव सहस्राणि श्रीफलैर्मधुरान्वितैः ॥ महालक्ष्मीकरो होमः पुत्रमित्रकलत्रदः ॥ ६५ ॥ शुद्धतोयेन सन्तर्प्य चत्वारिंशच्चतुःशतम् ॥ चत्वारिंशद्दिनान्मन्त्री वाञ्छितां लभते श्रियम् ॥ ६६ ॥ ताराद्योयं रमाहीनस्तथाष्टाविंशदक्षरः ॥ न्यासध्यानादिकं प्राग्वत्पूजाभेदो निगद्यते ॥ ६७ ॥ आदावङ्गानि च ततो बलाका विमला तथा ॥ कमलावनमाला च बिभीषिका च मालिका ॥ ६८ ॥ वशङ्करा वसुमाला पार्श्वयोः शङ्खपद्मकौ ॥ लोकेशांश्च तदस्त्राणि पूजयेत्काम्यमुच्यते ॥ ६९ ॥ उरोमात्रे जले स्थित्वा ध्यात्वा सवितृमण्डले ॥ देवं त्रिलक्षं जपतो धनवृद्धिः प्रजायते ॥ ७० ॥ बिल्वमूलं समास्थाय तावज्जप्ते फलं हि तत् ॥ अशोककाष्ठैर्ज्वलिते वह्नावाज्याक्ततण्डुलैः ॥ ॥ ७१ ॥ होमतो वशयेद्विश्वमर्ककाष्ठे तथापि वा ॥ खादिराग्नौ नरपतिर्लक्ष्मीं[1] पायसहोमतः ॥ ७२ ॥ श्रीमित्येकाक्षरः प्रोक्तो मन्त्रश्छन्दो निवृन्मतम् ॥ भृगुर्मुनिर्देवता तु लक्ष्मीः सर्वप्रदा मता ॥ षड्दीर्घबीजयुक्तेन षडंगानि समाचरेत् ॥ ७३ ॥ पद्मारूढां सुवर्णाभां सपद्मोर्ध्वकरद्वयाम् ॥ अधोदक्षेणाभयदां वामेन वरदायिनीम् ॥ ७४ ॥ हिमाचलनिभैर्नागैः शुण्डाग्रामृतकुम्भकैः ॥ चतुर्भिः सिच्यमानां च क्षौमवस्त्रां किरीटिनीम् ॥ ७५ ॥ ध्यायेद्धारिप्रियां देवीं भक्तानुग्रहकातराम् ॥ धर्म्मा-

१ लभते इति शेषः ॥

दिकल्पिते पीठे भूपुराढ्ये दलाष्टके ॥७६॥ रमामावाह्य गन्धाद्यैः कर्णिकायां यजेत्ततः ॥ विभूतिरुन्नतिश्चैव हृष्टिः कीर्त्तिश्च सन्नतिः ॥ ७७ ॥ व्युष्टिरुत्कृष्टिर्ऋद्धिश्च क्रमात्पूज्या दिगष्टके ॥ मध्ये सिंहासनं पूज्यं सर्वशक्तिमयं तथा ॥ ७८ ॥ बीजाद्यमासनं दद्यान्मूर्तिं मूलेन कल्पयेत् ॥ षडङ्गानि च सम्पूज्य पुनरष्टदलेर्चयेत् ॥ ७९ ॥ चतुर्दिक्षु च देव्यग्राद्वासुदेवं हलायुधम् ॥ प्रद्युम्नं चानिरुद्धं च विदिशासु तथा क्रमात् ॥ ८० ॥ दमकं सलिलं चैव गुग्गुलुं च कुरण्टकम् ॥ देवीदक्षिणहस्ताग्रे शङ्खाख्यं निधिमर्चयेत् ॥ ॥ ८१ ॥ वामे पद्मनिधिं चैव द्वितीयेष्टदले ततः ॥ बलाकां विमलां चैव कमलां वनमालिकाम् ॥ ८२ ॥ बिभीषिकां मालिकां च शाङ्करीं वसुमालिकाम् ॥ लोकपालानायुधानि प्रोक्तमेतच्छ्रियोर्चनम् ॥ ८३ ॥ जपेद्भास्करलक्षं तत्सहस्रं जुहुयात्पुनः ॥ पद्मैस्त्रिस्वादुसंयुक्तैस्त्रिनवैः श्रीफलैरपि ॥ ॥८४ ॥ त्रिभिर्वा मधुराक्तैश्च तर्प्पणादि ततश्चरेत् ॥ एवं सिद्धमनुर्मन्त्री साधयेन्निजवाञ्छितम् ॥ ८५ ॥ वक्षोजदघ्ने पयसि तिष्ठन्नर्कगतां श्रियम् ॥ संस्कृत्य मनुमेनं च जपेल्लक्षत्रयावधि ॥ सोचिरेणैव कालेन दारिद्र्यात्परिमुच्यते ॥ ८६ ॥ मधुसूदनगेहे च बिल्वाध उपविश्य च ॥ त्रिलक्षं प्रजपेन्मन्त्रीवत्सराद्वाञ्छितार्थदः ॥ अधिकं वसुसंवातं लभते नान्यथाचिरात् ॥८७॥ अशोकैधश्चिते वह्नौ सघृतैस्तण्डुलैर्हुनेत् ॥ मन्त्री त्रिभुवनं सर्वं वशं कुर्य्यान्न चान्यथा ॥८८॥ खादिरैः कमलैः सम्यगेधितेग्नौ यथाविधि॥ तण्डुलैस्त्रिस्वादुयुक्तैर्जुहुयान्मन्त्रवित्तमः॥ तेन राजकुलं वश्यं धनवानर्थवान्भवेत् ॥ ८९ ॥ अर्कवह्नौ हुनेन्मन्त्री सुशुद्धैः शालितण्डुलैः॥ नियतं राज्यलक्ष्मीं स चायुष्पुत्राँल्लभेत कम्[1] ॥९०॥ त्रिस्वादुयुक्तैर्नलिनैर्लक्षमेकं हुनेत्सुधीः॥ अलक्ष्मीसहितो मर्त्योलक्ष्मीमाप्नोति निश्चितम्॥ धनधान्यादिसम्पत्त्या तुष्टो भवतिसाधकः ९१॥ ब्राह्मणस्य गृहे बिल्वं समारोप्य विवर्धयेत् ॥ श्रीसूक्तं च पठन्नेव तत्रैव जुहुयात्पुनः॥९२॥ त्रिस्वादुयुक्तैः कुसुमैः फलैश्चापि:समिद्वरैः॥ स्कन्धभेदैस्तस्य नरस्तिष्ठन्मूलेपि संहुनेत॥९३॥ बिल्वाभिमिश्रहविषा हविष्याण्यचिरं रमा॥ प्रत्यक्षा

१ तस्मा अयं मन्त्रो भवेदिति शेषः ॥ २ सुखम्॥

च भवेत्तस्य कथमश्रीः कुले भवेत् ॥९४॥ वक्ष्येथ शक्तिगणपमन्त्रं ह्लीं तत-श्च ह्रीम् ॥ त्र्यक्षरोयं विराट् छन्दो मुनिर्भार्गव ईरितः ॥ ९५ ॥ देवता शक्तिगणपः षडङ्गानि समाचरेत् ॥ षड्दीर्घयुग्गकारेण ततो ध्यायेद्गजा-ननम् ॥ ९६ ॥ दक्षोर्ध्वे चांकुशं वामे पाशं वामे त्वधः करे ॥ बीजपूरं स्वयं तनु दक्षिणे स्वर्णवर्णकम् ॥ ९७ ॥ पुष्करं मोदकान्बिभ्रत्कर्णयोर्दीर्घचामरे॥ पूर्वोक्ते पूजयेत्पीठे पूर्वादिनवशक्तिके ॥ ९८ ॥ अष्टपत्राम्बुजे देवं चतुरस्रत्र-यावृते ॥ प्रथमाङ्गावृतिः प्रोक्ता द्वितीया चापि मातृभिः ॥ ९९ ॥ तृतीया लोकपालैः स्याच्छस्त्रौघैश्च चतुर्थ्यपि ॥ लक्षमेकं जपेन्मन्त्रं हविष्याशी जितेन्द्रियः ॥१००॥ तद्दशांशं १जुहुयादपूपैर्घृतसम्प्लुतैः ॥ एवं सिद्धमनुर्मन्त्री काम्यकर्माणि साधयेत्॥१०१॥शुक्लपक्षे चतुर्थ्यां च पूजयित्वा विनायकम् ॥ अपूपैर्गुडसंमिश्रैः पक्वान्नैश्च घृतप्लुतैः ॥ १०२ ॥ मरिचैः क्षुरकैश्चैव सैन्ध-वेनापि मिश्रितैः ॥ देवस्य सन्निधौ मन्त्री जुहुयात्त्रिसहस्रकम् ॥ १०३ ॥ गद्यपद्यमयी वाणी सप्ताहाद्भवति ध्रुवम् ॥ वश्यार्थी मधुहोमेन राजानं वशमा-नयेत् ॥ १०४ ॥ कन्यार्थी जुहुयाल्लाजैस्तन्नामपुरमन्त्रतः ॥ सप्त सम्भो-जयेत्कन्या यद्वैकां स लभेत ताम् ॥ १०५ ॥ कर्षमात्रं च वा स्वर्णं पलमात्रं तथैव च ॥ सूर्य्यग्रहे तथा चन्द्रग्रहणे चाभिमन्त्रयेत् ॥ १०६ ॥ अष्टोत्तरसहस्रन्तु सप्तधा विभजेत्ततः ॥ एकं भागं गृहे स्वीये देवताध्यानपूर्वकम् ॥ १०७ ॥ शेषान्भागान्द्वितीयेऽह्नि क्रमाच्चैकैकशः पिबेत् ॥ ध्यानपूर्वं देवतायाः प्रातः प्रातस्तदा भवेत् ॥ १०८ ॥ बुद्ध्या बुधेन सदृशः पण्डितो गुरुणा समः ॥ कविना च कवित्वेन श-निना प्रतिवादकः ॥ १०९ ॥ बन्ध्यर्तुस्नानदिवसे पूजयित्वा विनायकम्॥ निष्कार्धपादमानेन हरिद्राश्च वचान्तथा ॥ ११० ॥ गोमूत्रे कुष्ठकं पिष्टं सहस्रमभिमन्त्रितम् ॥ वन्ध्या कन्या भक्ष्यभोज्यैर्भुक्त्वा संभोज्य स्वं गुरुम्॥ गुरवे दक्षिणां दत्त्वा पिबेन्नारी तदौषधम् ॥ १११ ॥ ततस्सा लभते पुत्रं सर्व-लक्षणसंयुतम् ॥ आयुष्मन्तं सुरूपं च बुद्धिमन्तं श्रिया युतम् ॥ ११२ ॥

१ त्रियामत्रास्य शक्तिः ।

ताराद्योयं चतुर्वर्णो गायत्रं छन्द उच्यते ॥ पूर्ववच्च षडङ्गानि हेमाभो हेमव-स्त्रवान् ॥ ११३ ॥ बृहज्जानुस्तुन्दिलश्च लम्बबाहुर्विलोचनः ॥ दक्षोर्ध्व-हस्तपाशं चाधोवामे चाक्षसूत्रकम् ॥ ११४ ॥ दक्षिणाधो निजं दन्तमूर्द्ध्वे बाहौ तथा सृणिम् ॥ पुष्करेण तु बिभ्राणं मोदकं हेमभूषणम् ॥ शक्तियुक्तं विश्ववन्द्यं गणेशं चिन्तयाम्यहम् ॥ ११५ ॥ प्राग्वत्पूजा समुद्दिष्टा जपे-ल्लक्षत्रयम्मनुम् ॥ घृताक्तैश्च तिलैर्होमं तर्पणादि ततश्चरेत् ॥ ११६ ॥ आज्यान्नैर्जुहुयान्नित्यमन्नवान्स नरो भवेत् ॥ पायसान्नेन महतीं श्रियमाप्नोति मानवः ॥ ११७ ॥ गं क्षिप्रप्रसादनाय हृदन्तोयं दशाक्षरः ॥ ऋषिर्गणक आख्यातश्छन्दः प्रोक्तं विराडिति ॥ ११८ ॥ देवता कथितः क्षिप्रप्रसादनवि-नायकः ॥ षड्दीर्घभाजा बीजेन कुर्य्यादङ्गक्रियां बुधः ॥ ११९ ॥ ध्यानं सर्वत्रायुधानां वामोर्ध्वात्तु प्रदक्षिणम् ॥ पाशांकुशौ विलसतां पत्राग्रं च दध-त्करैः ॥ १२० ॥ बीजपूरं पुष्करे च त्रिनेत्रो रक्तवस्त्रवान् ॥ भक्तं सदा पूर्णचन्द्रमौलिरव्याद्गणेश्वरः॥ १२१ ॥ पूर्वोक्ते पूजयेत्पीठे नवशक्तिसमन्विते ॥ मूर्त्तिं मूलेन सङ्कल्प्य तस्यां विघ्नेश्वरं यजेत् ॥ प्रथमावृत्तिरङ्गैः स्याद्द्वितीया चाष्टभिर्गणैः ॥१२२॥ विघ्नो विनायकः शूरो वीरश्च वरदस्तथा ॥ इभ-वक्रश्चैकदन्तो लम्बोदर इति क्रमात् ॥ १२३ ॥ मातृपूजा दलाग्रे स्याल्लो-केशास्त्राणि चाग्रतः ॥ लक्षमेकं जपेन्मन्त्रं त्रिस्वाद्वक्तैस्तिलैर्हुनेत् ॥१२४॥ पूर्वोदिताष्टद्रव्यैर्वा तर्पणादि ततश्चरेत् ॥ शर्कराघृतयुक्तेन हविषा जुहुया-त्सुधीः ॥ १२५ ॥ लक्ष्मीवान्केवलाज्येन होमो लोकवशीकरः ॥ घृताक्तं तत्प्रजुहुयाल्लक्ष्मीवान्साधको भवेत् ॥ १२६ ॥ चत्वारिंशद्दिनं मन्त्री नारि-केलं हुनेत्ततः ॥ सर्वसम्पत्समृद्धिः स्यात्प्रत्यहं वाञ्छितार्थकृत् ॥ १२७ ॥ सलाजकैः कंगुभिश्च पृथुकैर्वाञ्छितान्नये ॥ होमो भवेदष्टभिश्च द्रव्यैस्त्रिमधु-रप्लुतैः ॥ १२८ ॥ हुनेत्ततश्च वशयेद्राज्ञस्तत्प्रमदा अपि ॥ चतुश्चत्वारिंश-दाख्यं चतुःशतमतन्द्रितः ॥ १२९ ॥ प्रातःप्रातस्तु सलिलैर्विघ्नेशस्य तु मन्त्रकैः ॥ तर्पयेत्सुसमिद्धिश्च भवेत्तस्य न संशयः ॥१३०॥ पूर्वादिगं गणे-

१ कार्य्यमिति शेषः ॥

शानमायातं रविबिम्बतः ॥ पूर्वोक्तचक्रमध्यस्थं चिन्तयित्वा तु तर्पयेत् ॥ त्र्यक्षरोक्तप्रयोगांश्च कुर्य्यादत्रापि साधकः ॥१३१॥ ॐठांनमश्चतुर्वर्णो हेरम्बस्य मनुर्मतः ॥ मुनिर्गणक आख्यातो गायत्री छन्द ईरितम् ॥ १३२ ॥ पञ्चवक्रोस्य हेरम्बो देवता सिंहवाहनः ॥ षड्दीर्घबीजयुक्तेन षडङ्गविधिरीरितः ॥ १३३ ॥ मुक्ताविद्युन्मेघदुग्धकाश्मीरीसन्निभैर्मुखैः ॥ गजवत्पंचभिर्युक्तः किरीटी चासिहस्तकः ॥ १३४ ॥ अंकुशं च त्रिशूलं च मुद्गरं च कपालकम् ॥ स्वयन्तमभयं चापि वरं मोदकमेव च ॥१३५॥ परशुं चाक्षमालां च दधतं करपङ्कजैः ॥ कोटिसूर्य्यप्रतीकाशं ध्यायेद्धेरम्बमव्ययम् ॥ ॥ १३६ ॥ पद्ममष्टदलं कृत्वा चतुरस्रत्रयावृतम् ॥ चतुर्द्वारसमायुक्तं तत्रादावासनं यजेत् ॥ १३७ ॥ ॐहुंहूं च महासिंहाय गं हेरम्बमुच्चरेत् ॥ आसनाय नमश्चेति प्रोक्तः सप्तदशाक्षरः ॥ १३८ ॥ अनेन चासनं दद्यादनेनैव प्रपूजयेत् ॥ ध्रुवयुक्तेन बीजेन कुर्य्यान्मूर्तिप्रवर्त्तनम् ॥१३९॥ आदावङ्गानि सम्पूज्य लोकपालान्यजेत्पुनः ॥ तेषामस्त्राणि तद्बाह्ये हेरम्बार्चनमीरितम् ॥ १४० ॥ लक्षत्रयं जपं कृत्वा तिलैर्हुत्वा दशांशतः ॥ मधुरत्रयसंयुक्तैस्तर्पणादि समाचरेत् ॥ १४१ ॥ एवं सिद्धमनुर्मन्त्री प्रयोगानाचरेत्ततः ॥ चतुर्दश्यष्टमी षष्ठीष्वेकैकं जुहुयाद् बुधः॥ अपूपैः कृशरैश्चापि मोदकैरिष्टसिद्धये ॥ १४२ ॥ पूर्वोक्तैर्जुहुयाद्द्रव्यैः पर्वस्वपि च मन्त्रवित् ॥ यद्यदिच्छति तत्सर्वं साधकस्तत्र साधयेत् ॥ क्षिप्रप्रसादनप्रोक्तान्प्रयोगान्वा समाचरेत् ॥ ॥ १४३ ॥ तारो ङेन्तो गणेशो हृत्प्रोक्तः सप्ताक्षरो मनुः ॥ प्रणवान्तोष्टवर्णोयं शक्तिबीजादिकोपि वा ॥ १४४ ॥ ऋषिरग्निः समाख्यातो गायत्री छन्द उच्यते ॥ सुब्रह्मण्यो मनोरस्य देवता तु विनायकः ॥ दीर्घभाजाग्निबीजेन षडङ्गानि समाचरेत् ॥ १४५ ॥ रक्ताम्बरं रक्तवर्णं रक्तगन्धानुलेपनम् ॥ रक्तपुष्पैः पूज्यमानं भक्तपातकहारिणम् ॥ १४६ ॥ मुद्गरं च तथा शक्तिं कमलं चांकुशं तथा ॥ हस्तैर्दधानं चन्द्रास्यं नानाभूषणभूषितम् ॥१४७॥ रिपुक्षयकरं देवं सुब्रह्मण्यगणाधिपम् ॥ ध्यात्वैवं पूजिते पीठे पश्चात्सम्पूजयेद्विभुम् ॥ १४८ ॥ केशरेषु षडङ्गानि पूर्वाद्यष्टदले ततः ॥ जय-

न्तश्चाग्निवेषश्च कृत्तिकापुत्र एव च ॥ १४९ ॥ तथा भूतपतिस्सेनानीर्गुहो हेमसूत्रकः ॥ विशालाक्षश्च सम्प्रोक्ताः शक्तिशूलकरा इमे ॥ १५० ॥ दला- ग्रेषु च पूर्वादि यजेदेताननन्तरम् ॥ देवसेनापतिं शक्तिं विघ्नं कुक्कुटमेव च ॥ ॥ १५१ ॥ मेधां मयूरं वज्रं च धियं लोकेश्वरांस्ततः ॥ तदस्त्राणि च सम्पूज्य सुब्रह्मण्यार्चनं त्विदम् ॥ १५२ ॥ लक्षमेकं जपेन्मन्त्रं सर्पिषा पयसान्धसा ॥ अयुतं जुहुयान्मन्त्री तर्पयेद्विप्रपुङ्गवान् ॥ १५३ ॥ एवंसिद्धे मनौ मन्त्री कुर्य्यात्कामान्यथेप्सितान् ॥ दिनेदिने स मधुरैर्भक्ष्यभोज्यैः प्रतोषयेत् ॥ देवं देवधिया सम्यगर्चयेद्ब्रह्मचारिणम् ॥ १५४ ॥ सुब्रह्मण्यमनोः सम्यगुपास्ति ये प्रकुर्वते॥ऐहिकामुष्मिकान्भोगाँल्लभन्ते नात्र संशयः ॥ १५५ ॥ ॐ हुं गं ग्लौं ह- रिद्रेति चोक्त्वा गणपतये वदेत् ॥ वर वरद इत्युक्त्वा सर्वजनपदं वदेत् ॥ ॥ १५६ ॥ हृदयं स्तम्भय द्वन्द्वं स्वाहा द्वात्रिंशदर्णकः ॥ ऋषिर्मदन आख्या- तश्छन्दोऽनुष्टुप्समीरितम् ॥ १५७ ॥ हरिद्रागणपो देवः षडङ्गानि समाचरेत् ॥ षड्दीर्घयुक्तबीजेन विप्रादीनां प्रकीर्तितः ॥ १५८ ॥ विधिना येन मन्त्रोयं गृह्यते तदहम्ब्रुवे ॥ चतुर्थीदिवसे प्राप्ते शुक्लपक्षस्य मन्त्रवित् ॥ १५९ ॥ शुद्धां हरिद्रामानीय सुपिष्टं कन्यया शुभाम् ॥ सर्वाङ्गे तां समालिप्य स्नाया- च्छुद्धजलैस्ततः ॥ १६० ॥ भक्त्या परमयोपेतः प्रसन्नेनान्तरात्मना ॥ प्रथमं गुरुपादाब्जमर्चयित्वा विधानतः ॥ स्वर्णाङ्गुलीयहारांवैर्भूषणैश्च शुभाम्बरैः ॥ ॥ १६१ ॥ पूर्वोक्तविधिना तस्माद्गृह्णीतेमं मनुं शुभम् ॥ सुगन्धैः सुमनोभिस्तं यजेद्देवधिया पुनः ॥ १६२ ॥ पीताम्बरं पीतवर्णं पीतगन्धानुलेपनम् ॥ पीत- पुष्पैः पूज्यमानं मणिसिंहासनस्थितम् ॥ १६३ ॥ पीतभूषं त्रिनेत्रञ्च ॥ षड्भुजं च वराभयम् ॥ क्रोधमुद्रां सृणिं पाशं परशुं बिभ्रतं करैः ॥ ॥ १६४ ॥ ध्यायेच्छुद्धमना मन्त्री हरिद्रागणपं प्रभुम् ॥ पूर्वोक्तपीठे प्रयजेदङ्गमातृदिगीश्वरैः ॥ १६५ ॥ वेदलक्षं जपित्वान्ते हरिद्राचूर्णमि- श्रितैः ॥ दशांशं तण्डुलैर्हुत्वा ब्राह्मणानपि भोजयेत् ॥ १६६ ॥ सार्धं स- हस्रं सञ्जप्य दशांशं हव्यवाहने ॥ सर्पिर्गुडपुटैः सम्यगपूपैर्जुहुयाद्बहिः ॥

---

१ एकार्णेति वा, ॥

॥ १६७ ॥ हरिद्रागणपं तावत्तर्पयेद्भक्तितत्परः ॥ कुमारीं भोजयेत्तावद्ब्रह्मचारिणमेव च ॥ १६८ ॥ अभीष्टफलमाप्नोति नात्र कार्य्या विचारणा ॥ लाजैः कन्यामवाप्नोति कन्यापि लभते वरम् ॥ १६९ ॥ वन्ध्या नारी रजः स्नाता पूजयित्वा गणाधिपम् ॥ पलप्रमाणगोमूत्रे पिष्टाः सिन्धुवचानिशाः ॥ ॥ १७० ॥ सहस्रं मन्त्रयेत्कन्या बटून्सम्भोज्य मोदकैः ॥ पीत्वा तदौषधं पुत्रं लभते गुणसागरम् ॥ १७१ ॥ वाणीस्तम्भं रिपुस्तम्भं कुर्य्यान्मनुरुपासितः ॥ जलाग्निसिंहचौरास्त्रप्रमुखानपि रोधयेत् ॥ १७२ ॥ एतेऽष्टौ गणपाः प्रोक्ता दक्षिणाम्नायगोचराः ॥ १७३ ॥

इति श्रीमहामायामहाकालानुमते मेरुतन्त्रे शिवप्रणीते
दक्षिणाम्नायगणपतिमन्त्रप्रकाशष्षोडशः ॥ १६ ॥

---

ईश्वर उवाच ॥ ऊर्ध्वाम्नाये प्रवक्ष्यामि गणेशान्सिद्धिदायकान् ॥ भुक्तिमुक्तिप्रदं तत्र महागणपतिं शृणु ॥ १ ॥ तारश्रीबीजहृल्लेखा कामो भूबीजमेव च ॥ गणेशबीजं गणपतये वरवरेति च ॥ २ ॥ द सर्वजनं मे वशमान याग्निवधूरिति ॥ अष्टाविंशतिवर्णोऽयं गणकोऽस्य मुनिर्मतः ॥ ३ ॥ निवृद्गायत्रिका छन्दो महागणपतिः सुरः ॥ गं बीजं ह्रीं च शक्तिः स्याद्दीर्घषट्कयुतस्तु गः ॥ ४ ॥ तारादिबीजषट्केन पृथग्युक्तेन कारयेत् ॥ षडङ्गानि मनोरस्य जातियुक्तानि चाचरेत् ॥ ५ ॥ अथ वा तारपूर्वेण दीर्घषट्कयुतेन च ॥ स्वबीजेनांगुलिन्यासं षडङ्गानि तथाचरेत् ॥ ६ ॥ वर्णा द्वाविंशतिर्न्यस्या गणपत्यादयो मनोः ॥ ब्रह्मरन्ध्रे श्रोत्रयोश्च नेत्रयोश्चनसोर्मुखे ॥ ७ ॥ मूले दक्षभुजस्यादौ मध्ये च मणिबन्धके ॥ अंगुलीमूलकेऽग्रे च वामबाहावपीदृशम् ॥ ८ ॥ विन्यसेदग्रिमान्वर्णांस्ततश्चादौ तदग्रिमान् ॥ मणिपूरे स्वाधिष्ठाने मूलाधारे तदग्रिमान् ॥ ९ ॥ तारं पार्ष्णौ मुखे श्री च हृदि ह्रीं श्रीं गुदे न्यसेत् ॥ पादयोर्ग्लौं हृदि पुनः प्रत्यङ्गं बीजमेव च ॥ १० ॥ अवशिष्टैर्मन्त्रवर्णैः शरीरे व्यापकं न्यसेत् ॥ एवं न्यासविधिं कृत्वा हृदि देवं विचिन्तयेत् ॥ ११ ॥ ऐक्षवे जलधेर्द्वीपे नवरत्नमये शुभे ॥ तत्तरङ्गलसत्तोयैर्धौते शीते महीतले ॥ १२ ॥ तत्तोयगुणसंपृक्तगन्धवाहनिषेविते ॥ कल्पपादपपुष्पौघैः पतद्भिः समलङ्कृते ॥ १३ ॥ नाना-

कुसुमसङ्कीर्णे नानापक्षिविराजिते ॥ अनेकफलसङ्कीर्णे सेविते चाप्सरोगणैः ॥
॥ १४ ॥ ज्वालामालासहस्राढये चोचज्ज्योत्स्नासमाकुले ॥ विलसत्पद्मरागौ-
घकुट्टिमारुणभूतले ॥ १५ ॥ कल्पपादपपुष्पस्थषट्पदस्वनमञ्जुले ॥ पारि-
जातं कल्पतरुं तत्र मध्ये विचिन्तयेत् ॥ १६ ॥ युगपट्टे तु पङ्केन खचितं
पुष्पशोभितम् ॥ नवरत्नमयं तस्याधस्तात्सिंहासनं स्मरेत् ॥ १७ ॥ तन्मध्ये
लिपिपद्मं च षडारं तस्य मध्यतः॥ कर्णिकायां गणेशञ्च तत्संस्थं च महागणम् ॥
॥ १८ ॥ नानारत्नविभूषाढ्यमेकदन्तं गजाननम् ॥ चक्रं चांकुशपद्मादी-
न्बीजपूरं गदां तथा ॥ शरासनं च शूलं च बिभ्रतं हस्तपङ्कजैः ॥ १९ ॥
पद्मोद्यत्करया शक्त्या चाश्लिष्टं वरदं प्रभुम् ॥ अर्द्धेन्दुमौलिं त्र्यक्षं च दीप्य-
मानं कृपाकरम् ॥ २० ॥ पुष्करोद्धृतरत्नौघमयकुम्भमुखच्युतान् ॥ मणि-
मुक्ताप्रवालादीन्वर्षन्तं धारया मुहुः ॥ २१ ॥ सर्वतः साधकास्याग्रे स्वदान-
जललोलुपाम् ॥ षट्पदालीं कर्णतालैर्वारयन्तं मुहुर्मुहुः ॥२२॥ अमरासुरसं-
सेव्यं सद्रत्नमुकुटोज्ज्वलम् ॥ ऊर्ध्वकरं गजमुखं नानाभरणभूषितम् ॥ २३ ॥
इति ध्यात्वा गणपतिं यजेत्सर्वोपचारकैः ॥ धर्मादिक्लृप्ते पूर्वोक्ते तीव्रादिनवश-
क्तिके ॥ २४ ॥ पूजायन्त्रं गणेशस्य मातृकापद्ममुच्यते ॥ चतुर्द्वारसमायुक्तं
चतुरस्रत्रयावृतम् ॥ २५ ॥ तत्कर्णिकायां षट्कोणं तदन्तश्च त्रिकोणकम् ॥
देवस्याग्रे त्रिकोणाच्च बहिर्मन्त्रैर्यजेत्सुरान् ॥ २६ ॥ लक्ष्मीनारायणायेति ॐ
श्रींपूर्वो हृदन्तकः ॥ मन्त्रस्तेन यजेत्तञ्च ध्यायेद्बिल्वतले स्थितम् ॥ २७ ॥
पद्मद्वयेकला लक्ष्मीः शंखचक्रधरो हरिः॥ॐ ह्रींगौरीहराभ्यां च हृदन्तो नव-
वर्णकः ॥ २८ ॥ देवस्य दक्षिणे तौ च ध्यायन्नेवं प्रपूजयेत् ॥ संस्थितौ
च जटाधस्तात्सुवर्णरजतप्रभौ ॥२९॥ पाशांकुशधरा देवी टंकशूलधरो हरः॥
तारः क्लीं रतिकामाभ्यां हृदन्तोयं नवाक्षरः ॥ ३० ॥ पृष्ठस्थपिप्पलाधस्ता-
द्रतिकामौ समर्चयेत् ॥ नालयुक्तोत्पलद्वन्द्वचापपुष्पेषुसंयुतौ ॥ ३१ ॥ ॐ
ग्लौंमहीवराहाभ्यां हृदन्तोयं दशाक्षरः ॥ उत्तरेधः प्रियङ्गोस्तु महीकोलौ
यजेत्ततः ॥ ३२॥ शुकबीज्याग्रकगदाचक्रालंकृतसद्भुजौ ॥ ॐ गं लक्ष्मीगण-
काभ्यां हृदन्तोयं दशाक्षरः ॥ ३३ ॥ देवस्याग्रे त्रिकार्णान्तर्लक्ष्मीयुग्गणकं

यजेत् ॥ षट्कोणेषु यजेन्मन्त्रमोंगं पूर्वौ हृदन्तकः ॥ ३४॥ आमोदं सिद्धिसहितमग्रकोणे समर्चयेत् ॥ समृद्ध्यायुतमभ्यर्चेत्प्रमोदं वह्निकोणके ॥ ३५॥ सुमुखं कान्तिसंयुक्तमीशकोणे समर्चयेत् ॥ दुर्मुखं मदनावत्या यजेद्वारुणकोणगम् ॥ ॥ ३६ ॥ विघ्नं मदद्रवायुक्तं कोणे नैशाचरे यजेत् ॥ वायव्ये विघ्नकर्त्तारं द्राविण्या सहितं यजेत् ॥ ३७ ॥ पाशांकुशधरा विघा शक्तयश्चाभयप्रदाः ॥ रक्तारक्ताम्बरालेपभूषणा मदविह्वलाः ॥ ३८ । षट्कोणस्य बहिर्देवैर्दक्षिणे तु समर्चयेत ॥ वसुधारान्वितं शंखनिधिं वामेर्चयेत्तथा ॥ ३९ ॥ वसुमत्या युतं पद्मनिधिं तद्ध्यानमुच्यते ॥ तत्राद्यो मौक्तिकाभोन्यो माणिक्याभस्तुधारया ॥ वर्षन्तौ धनसम्पात्तिं लोकानां मेघवत्सदा ॥ ४० ॥ केशरेष्वङ्गपूजा स्याद्बाह्याद्याः पत्रमध्यगाः ॥ चतुरस्रे लोकपालांस्तदस्त्राणि च पूर्ववत् ॥ षडावरणसंयुक्तमित्थं देवं समर्चयेत् ॥ ४१ ॥ एकादशायुतं जप्त्वा सहस्रोत्तरमादरात् ॥ दशांशं जुहुयादष्टद्रव्यैरेकाक्षरोदितैः ॥ ४२ ॥ तर्प्पयित्वा दशांशेन चाभिषिक्तोणुना ततः ॥ ब्राह्मणान्भोजयेत्सम्यक् षड्रसैर्भूरिदक्षिणाम् ॥ दत्त्वा प्रणम्य विसृजेदेवं सिद्धो भवेन्मनुः ॥ ४३ ॥ ततः प्रणम्य विधिवद्गुरुं सन्तोष्य यत्नतः ॥ काम्यकर्म्माणि कुर्वीत सिद्धयः स्युर्न चान्यथा ॥ ४४ ॥ रक्तप्रसूनैर्गणपं पूजयित्वा मनुं जपेत् ॥ सहस्राष्टकमस्यान्ते जुहुयात्करवीरजैः ॥ ४५ ॥ तद्दशांशेन कुसुमैर्मधुरत्रयसंस्कृतैः॥ राजा तदा चरो भूत्वा सामात्यः सन्निषेवकः॥४६॥एवं पलाशपुष्पैश्च मधुरत्रयसम्प्लुतैः॥ होमात्सर्वेपि विघ्नाः स्युर्वशास्तस्य न संशयः ॥४७॥ जितेन्द्रियो मन्त्रिवरो घृतमेवं च होमयेत् ॥ कीर्तिम्प्राप्नोति विपुलां चिरकालानुबन्धिनीम् ॥ ४८ ॥ एवमाज्यप्लुतं धान्यं हुत्वामात्यः प्रजायते ॥ अष्टोत्तरसहस्रं तु जप्त्वा होमं समाचरेत् ॥ लवणाज्यसुराभिश्च शोधयित्वास्य भस्म तु ॥ ४९ ॥ करे गृहीत्वा सघृतं तेन नारीं च ताडयेत् ॥ भवत्यामरणांतं सा दासीतोप्यधिकं वशा ॥५०॥ शिवालये लक्षमिताज्जपाद्धोमो दशांशतः ॥ पायसेन त्रिमधुरयुतेन लभते सदा॥ अर्थांश्च विविधान्मन्त्री भोगं मोक्षमवाप्नु-

१ इडभाव आर्षः ॥

यात् ॥ ५१ ॥ अष्टोत्तरसहस्रन्तु हुत्वा जातीप्रसूनकैः ॥ मेधा वेदार्थकरणे बुद्धिं प्राप्नोति साधकः ॥ ५२ ॥ अयुतात्रितयं यस्तु हुनेद्दूर्वां घृतेन च ॥ तस्याल्पमृत्युरोगाद्या नश्यन्त्यायुश्च वर्धते ॥ ५३ ॥ समाहितोयुतं हुत्वा पीतपुष्पैर्घृतान्वितैः ॥ संस्तम्भयेद्वैरिसेनां सभृत्यगजयोधिकाम् ॥ धारास्तम्भं च वाक्स्तम्भं कुर्य्यादत्र न संशयः ॥ ५४ ॥ बिभीतकसमिद्भिश्च जुहुयादयुतत्रयम् ॥ उच्चाटयेद्वैरिसङ्घान्ग्रामं देशं पुरादिकम् ॥ ५५ ॥ अष्टोत्तरसहस्रं तु समिधोऽरुष्कवृक्षजाः ॥ हुत्वा रण्डास्तस्य वश्या जीवेन च धनेन च ॥ ५६ ॥ निम्बपत्रेषु सँलिख्य साध्यनामानि तु द्वयोः ॥ एकस्य चाश्वरक्तेन महिषस्यापरस्य च ॥ ५७ ॥ कटुतैलयुतैर्विंशत्सहस्रं होममाचरेत् ॥ मन्त्रान्ते प्रवदेदेतदमुकं चामुकेन च ॥ ५८ ॥ द्वेषयेति ततः स्वाहा चैकान्ते होममाचरेत् ॥ तयोस्तु जायते वैरं मित्रयोर्जीवनाशकम् ॥ ॥ ५९ ॥ अष्टांगुलं मनुष्यास्थि कीलं शवशिरोरुहैः ॥ संवेष्टय मन्त्रयेदष्टोत्तरं तच्च सहस्रकम् ॥ ६० ॥ मुहूर्ते कुलिके रात्रौ शत्रोर्द्वारि प्रपूजयेत् ॥ सप्ताहतोसौ भवति निश्चयेन यमातिथिः ॥ ६१ ॥ नागस्य विवरद्वारि लक्षमेतं मनुं जपेत् ॥ तस्याग्रतः समायान्ति नागकन्याः सहस्रशः ॥ ६२ ॥ निर्लज्जा भोगकांक्षिण्यः प्रयच्छन्ति रसायनम् ॥ नानामणींश्च रत्नानि यद्यदिष्टतमं भवेत् ॥ ६३ ॥ लक्षमेकं गिरेर्मूर्ध्नि जपेन्मन्त्री दृढव्रतः ॥ कृपाणसिद्धिं लभते प्रार्थनीयां सुरासुरैः ॥ ६४ ॥ वनसारञ्च लज्जालुं शुक्लां च गिरिकर्णिकाम् ॥ नन्द्यावर्त्त मधुपुष्पीं मेलयित्वा सुपेषयेत् ॥ ६५ ॥ कृत्वा तु गुटिकां विंशत्सहस्रमभिमन्त्रयेत् ॥ नेत्रे तया चाञ्जयित्वा निधानं पश्यति ध्रुवम् ॥ ६६ ॥ अष्टोत्तरशतं जप्त्वा पीडाक्रांतं च रोगिणम् ॥ त्रिः फूत्कृत्य हरेत्पीडां सर्वां नास्त्यत्र संशयः ॥ ६७ ॥ गुप्तप्रदेशे रम्ये च गोमयेनोपलेपिते ॥ स्नात्वा मन्त्री नवं कुम्भं चन्दनाद्यैश्च चर्चितम् ॥ ६८ ॥ सुगंन्धतोयैः सम्पूर्य्य शरावेण पिधापयेत् ॥ कपिलाज्येन सम्पूर्णं दीपं न्यस्येत्तथोपरि ॥६९॥ पूजयेदुपचारैस्तं कुमारीं च कुमारकम्॥तत्रोपविश्य तं स्पृष्ट्वा

१ पूर्वपदार्थान्तर्गतस्यापि उत्तरपदार्थस्य बुद्ध्या प्रविभागात्प्रत्यवमर्शः ॥

जपेदष्टोत्तरं शतम् ॥ ७० ॥ तदासौ कथयेत्सर्वं दीपं दृष्ट्वा तु बालकः ॥ भूतं च वर्तमानं च भविष्यन्नात्र संशयः ॥ ७१ ॥ ध्यात्वा महागणपतिमथ वा दीपसन्निधौ ॥ जपेद्गणेशः कथयेत्स्वप्ने चापि शुभाशुभम् ॥ ७२ ॥ ग्रहणे जलमध्यस्थो जपेन्मन्त्रं तदा भवेत् ॥ आकर्षणस्य संसिद्धिः सधान्यपशुयोषिताम् ॥ ७३ ॥ न्यग्रोधस्य तले जप्त्वा लक्षमेकं वटाभिधा ॥ यक्षिणी तु समागत्य धनाद्याकृष्य यच्छति ॥ ७४ ॥ उपोष्य रात्रौ विधिवत्स्नात्वा चानीय सद्वचाम् ॥ पूजयित्वा गणेशं तां स्पृष्ट्वा मन्त्रायुतं जपेत् ॥ ॥ ७५ ॥ पश्चात्कृत्वा तु तच्चूर्णं गृह्णीयात्कर्षमात्रकम् ॥ कपिलाज्यैः पिबेत्प्रातः सप्तभिर्दिवसैः कविः ॥ ७६ ॥ [1]अवश्यमेव भवति पारदस्य क्रियां शृणु ॥ कर्पटे शोधयेदादौ रसमष्टोत्तरं शतम् ॥ ७७ ॥ कर्पासपत्रजरसैर्दिनमेकं च मर्द्दयेत् ॥ कुमारिकाकाशवल्ल्योस्तदा रौप्यसमो भवेत् ॥ ७८ ॥ एतस्य युग्मांशं तु शुद्धं शुल्वं नियोजयेत् ॥ शुल्वादेतत्सार्धभागं शुल्वार्धं कनकन्त्वयः ॥ ७९ ॥ कज्जलाभं वर्धतीयं कर्पासीकन्यकाद्रवैः ॥ दिनैकमारनाले तु मर्दयित्वारनालके ॥ ८० ॥ स्थापयेद्गुटिकां कृत्वा ततो गच्छेच्छिवालये ॥ लक्षमेकं जपेन्मन्त्रं सिद्धा सा जायते तदा ॥ ८१ ॥ ता मुखे धारयन्मन्त्री रणे च विजयी भवेत् ॥ अवध्यः सर्वभूतानां शस्त्रास्त्रैश्चैव जायते ॥८२॥ तमक्ता म्रियते नैव विषैः सर्पादिसम्भवैः ॥ तत्प्रभावाद्वज्रदेह आकाशे लभते गतिम् ॥ ८३ ॥ नष्टच्छायस्तथादृश्यो जलगोपि प्रजायते ॥ यस्मिन्गेहे स्थिता सा तु तत्र लक्ष्मीः स्थिरा भवेत् ॥ लोकानां दृष्टिबन्धं च सा कुर्य्यात्साधकेच्छया ॥ ८४ ॥ ब्रह्मदण्डीं च लज्जालुं गृह्णीयात्पुष्यभास्करे ॥ वज्राणुकं त्रिलोहं च ताभ्यां सम्यग्विमर्दयेत् ॥ ॥ ८५ ॥ तद्यदा कज्जलीतुल्यं स्यात्तदा गुटिकां चरेत् ॥ ८६ ॥ गणेशं पूजयित्वास्य गृह्णीयाद्गुटिकां शुभाम् ॥ इत्थं विचिन्त्य स्वकरे गृह्णीयात्तन्मनुं जपेत् ॥ ८७ ॥ वक्त्रे शिखायां च करे स्कन्धे वा धारयेच्च ताम् ॥ तस्याः प्रभावान्नायान्ति चौरव्याघ्रोरगादयः ॥ ८८ ॥ साधकस्य समीपं तु न विघ्नैः

१ इदं पूर्वान्वयि ॥

परिभूयते ॥ राजानो वश्यतां यान्ति सुन्दरीणामतिप्रियः ॥ ८९ ॥धत्तूररोचने शङ्खपुष्पी श्वेतापराजिता ॥ सहदेवी ब्रह्मदण्डी हिमं कृष्णागुरुः समम् ॥९०॥सम्पीड्य सम्यक्कुर्य्याच्च गुटिकां विधिना ततः॥कुर्य्याद्द्वादशसाहस्रंजपं तत्तिलके कृते॥ जनानांजायते मोहो गणेशस्य प्रभावतः॥९१॥ दीर्घतुण्डामृताग्राह्याः पुष्यार्के पेषयेच्च ताः॥तच्चूर्णेन करौ लिप्त्वाष्टाधिकं च सहस्रकम्॥९२॥ मनुं जपित्वा तौ हस्तौ गजेभ्यः परिदर्शयेत्॥ विद्रवन्ति तदा नागा ऐरावतसमा अपि॥९३॥गजान्ग्रहीतुकामश्चेद्राजा गजवने तदा॥सम्यक्च कारयेच्छालांदृढां गजनिबन्धिनीम् ॥ ९४ ॥ चतुरस्रां विशालां च दृढावरणसंयुताम् ॥ कुर्य्यात्तत्र स्थलां सम्यक्चतुरस्रां समुन्नताम् ॥ तस्यामुत्तरदिग्भागे कुण्डं कुर्य्याद्यथोदितम्॥मण्डलं सर्वतोभद्रं कृत्वा तत्र प्रपूजयेत् ॥९५॥ नानोपचारैर्गणपं बहिः स्थापनमाचरेत् ॥ त्रिश्रिह्रैनेत्क्रमात्तारश्रीमायाकामबीजकैः ॥ ग्लौंगंभ्यां गणपतये पदेनापि च होमयेत् ॥ ९६ ॥ वरवरदेति ततः पदेनापि च होमयेत् ॥ सर्वं जनं मे वशमानय स्वाहा त्वनेन च ॥ सप्तविंशत्याहुतयो हव्या एधैश्च गोघृतैः ॥९७॥ततः समृद्धिमन्त्रेण तिस्रश्चानेन होमयेत् ॥ भुर्भुवः स्वस्तथा चाग्निर्जातवेदास्ततः परम् ॥ ततश्च मूलमन्त्रेण जुहुयाच्च नवाहुतीः ॥ ९८ ॥ मूलाणुना समस्तेन जपेन्मन्त्रार्णसंख्यया ॥ आज्येनैव ततश्चाष्टद्रव्यैः स्वादुत्रयान्वितैः ॥९९ ॥ देवस्थानस्थदेवानां संख्यया प्रत्यहं ततः॥बहून्सम्भोजयेद्विप्रांस्तदाशीर्भिर्विवर्धितः॥ १००॥ गुरवे दक्षिणां दद्यात्पञ्चाशद्दन्तिनोथ वा ॥ तन्मूल्यं तद्दशांशं वा दत्त्वा सन्तोष्य सद्गुरुम् ॥१०१॥ चतुर्णां मिथुनानां षड्गणेशनिधियुग्मयोः ॥ अङ्गमातृदिगीशानां तन्मंत्रैः सर्पिषा हुनेत् ॥ १०२ ॥ लक्ष्मीनारायणौ गौरीहरौ कामस्तथा रतिः ॥ पृथ्वी वराहाविति तु चत्वारि मिथुनानि च ॥ १०३ ॥ सिद्धिमोदौ तथा ऋद्धिप्रमोदौ कान्तिसंयुतः ॥ सुमुखोथो दुर्मुखस्य प्रियोक्ता मदनावती ॥१०४॥मदनद्रवया युक्तोविघ्नोथो द्राविणीयुतः॥विघ्नकर्तेति षट्प्रोक्ता गणेशाश्च निधिद्वयम्॥ १०५॥शङ्खःपद्मश्च तन्मन्त्रास्तद्बीजं नाम हृत्तथा॥एवं होमं

---

१ स इति शेषः ॥

समाप्याथ नैवेद्यं तु समाचरेत ॥१०६॥ पुनरभ्यर्च्य विघ्नेशं साङ्गं सावरणं तथा ॥ निजे हृदि समुद्वास्य विचरेच्च यथासुखम् ॥ १०७ ॥ ततो दिनैर्वेदवेदैः करिणो निपतन्ति हि ॥ विनायकप्रभावेण कलभाः शतशस्तथा ॥ १०८ ॥ करिणीनां समूहश्च पतत्यम्बु घटे यथा ॥ प्रोक्तकुण्डे प्रोक्तरूपं गणेशं सम्यगर्चयेत् ॥१०९॥ तत्र वह्निं समाधाय जुहुयाल्लक्षसङ्ख्यया॥ पयोघृताभ्यां संयुक्तैः पुष्पैः शर्करयापि च ॥ ११० ॥ क्षौद्रेण पृथगेकैकद्रव्येणागस्त्यगाष्टपः ॥ वेतालसञ्ज्ञा गुटिका कुण्डमध्यात्प्रयाति च ॥ १११॥ अणिमादिकसिद्धीनां प्राप्य तं नायको भवेत् ॥ ब्राह्मे काले समुत्थाय क्षीणचन्द्रे च पर्वणि ॥ ११२ ॥ कपिलायाः पञ्चखण्डं गोमयं प्रतिगृह्य च ॥ संजप्य मन्त्रमयुतं निखातद्वारि धारयेत्॥व्याघ्रक्रोडारिचोरादीन्नात्र कार्य्याविचारणा ॥ ११३ ॥ जातीधत्तूरमञ्जिष्ठा प्रचण्डा हस्तयोजिनी ॥ शिखादिकार्णिकाख्यादि त्वग्जिह्वाचक्षुषामलैः॥ ११४ ॥नासिकाघ्राणजैश्चापि गुटीं सम्यग्विधाय च ॥ स्पृष्ट्वा सम्प्रजपेन्मन्त्रं त्वष्टाधिकसहस्रकम्॥ ११५॥ गुंजिकादिप्रमाणं च यवमानं च लेहयेत्॥ सर्षपार्धं त्वङ्गनाया भक्षितं वश्यकारकम् ॥ ॥ ११६ ॥ जितेन्द्रियो जपेन्मन्त्रमष्टोत्तरसहस्रकम् ॥ दशांशं जुहुयाल्लाजाहयारिकुसुमान्वितान्॥प्राप्नुयात्सत्कुलां कन्यामथ ध्यायेद्विनायकम् ॥ ११७॥ गन्धादिनाभ्यर्च्य तं च मन्त्रं लक्षमितं जपेत् ॥ निगडान्मुच्यते कस्मादथ बिल्वस्य पुष्पकम् ॥ ११८ ॥ तगरं देवदारुं च प्रियंग्वगरुचन्दने ॥ नागकेशरमेतानि मधुना भावयेत्समम् ॥ ११९ ॥ गुटीं कृत्वाथ संस्पृश्य सहस्राष्टकमाजपेत् ॥ भवेत्सा सिद्धगुटिका तद्रूपाद्रोगनाशनम्॥ १२० ॥ एतद्रूपाच्च निस्स्वोपि धनी स्याज्जनवल्लभः ॥ दुर्भगा सुभगा स्त्री स्यात्कुमारी लभते वरम् जलाशये ॥१२१॥ लक्षजपाद्वृष्टिः सप्ताहतो भवेत ॥ अथास्य लक्षहोमस्य प्रयोगं कामिकं शृणु ॥ १२२ ॥ हुनेद्गोपयसा गोर्थे स्वर्णार्थे मधुना हुनेत् ॥ घृतेन लक्ष्म्यै पयसे हुनेच्छर्करया द्विजः ॥ १२३ ॥ दध्ना सर्वर्द्धये होमो घृतान्नैरन्नवृद्धये ॥ लाजैश्च यशसे होमो धनार्थन्तिलतण्डुलैः ॥ ॥ १२४ ॥ कौसुम्भैः करवीरैर्वा वस्त्रार्थं होममाचरेत् ॥ यवैस्तु वशयेद्भू-

पमुत्पलैश्चापि तद्वधूम् ॥ १२५ ॥ कैरवैर्मन्त्रिणस्तस्य पुत्तल्यादि च पिष्ट-
जम् ॥ कृत्वा हुनेद्वधूर्वश्या वटात्प्लक्षादुदुम्बरात् ॥ १२६ ॥ कस्मादपि
गृहीत्वा च समिधो होममाचरेत् ॥ विप्राद्यान्वशयेद्वर्णांल्लोणहोमादवर्षणम् ॥
॥ १२७ ॥ विनश्येद्भूयसी वृष्टिर्महागणपतेस्तदा ॥ वर्णानस्य प्रवक्ष्यामि
काम्यकर्म्माणि संस्मरेत् ॥ १२८ ॥ पीतं स्तम्भेरुणं वश्ये धूम्रमुच्चाटने स्म-
रेत् ॥ मारणे कृष्णमारक्तमाकृष्टौ पाटलं द्विषि ॥ हरिद्वर्णं धनप्राप्त्यै मुक्त्यै
शुक्लं च संस्मरेत् ॥ १२९ ॥ गणेशतर्प्पणं वक्ष्ये सर्वकामफलप्रदम् ॥
त्रिवेदाङ्कसमं यच्च प्रकटं वक्ष्यतेधुना ॥ १३० ॥ एकान्ते विजने रम्ये सर्वो-
पद्रववर्जिते ॥ कृतस्नानादिको मन्त्री पूर्ववन्न्याससंयुतः ॥ १३१ ॥ तडाग-
मध्ये सञ्चिन्त्य पुष्पितं नलिनीवनम् ॥ तस्य मध्ये महापद्मन्तरुणादित्यस-
न्निभम् ॥ १३२ ॥ समुन्नतं सुगन्धाढ्यं रमणीयम्मनोहरम् ॥ सद्यो विक-
सितं ध्यायेन्मन्त्री पूर्वोक्तमन्त्रवत् ॥ १३३ ॥ शुद्धं रजतसोपानं पश्यन्तं रवि-
मण्डलात् ॥ विनिर्गत्यावरुह्याथ कर्णिकामध्यसंस्थितम् ॥ १३४ ॥
इति ध्यात्वा सावरणम्महागणपतिम्पुनः ॥ प्रवरैर्गन्धकुसुमैः प्राग्वत्सा-
वरणं यजेत् ॥ १३५ ॥ निधाय पुष्करमुखं साधकेन्द्रस्य मूर्द्धनि ॥ वर्षन्तं
रत्नधाराभिर्ध्यात्वा देवस्य मूर्द्धनि ॥ १३६ ॥ चन्द्रचन्दनकाश्मीरकस्तूरी
मिलितैर्ज्जलैः ॥ तर्पयेत्परया भक्त्या देवदेवं प्रसन्नधीः ॥ १३७ ॥ यथा
दिष्टस्य नामान्ते तर्पयामीति संवदेत् ॥ तर्प्पणस्य विधिश्चायं शृणु वैदिक-
तर्प्पणम् ॥ १३८ ॥ तर्प्पयाम्येतदन्ते तु स्वाहां वैदिक ईरयेत् ॥ इत-
रस्तु नमो ब्रूयाद्वामाचारी नमो वदेत ॥ १३९ ॥ मूलमन्त्रं समुच्चार्य्य
महागणपतिन्ततः ॥ देवस्य मूर्ध्नि प्रथमन्दशवारं प्रतर्प्पयेत् ॥ १४० ॥
पुनश्चतुश्चतुर्वारं ज्ञेयं सर्वत्र तर्प्पणम् ॥ एकं वर्णं समुच्चार्य्य मूलमन्त्रस्य
तर्प्पयेत् ॥ १४१ ॥ पुनः सम्पूर्णमूलेन चतुर्वारन्तु तर्प्पणम् ॥ एवं षट्
पंचसंख्याकं चतुष्कन्तर्प्पणम्भवेत् ॥ १४२ ॥ पुनर्मूलेन सन्तर्प्य ततो यु-
ग्मानि तर्प्पयेत् ॥ तत्र चायं प्रयोगः स्यादमुकं सहितामिति॥अमुकीन्तर्प्प-

१ तर्पयामि इति शेषः । २ अमुकेनेति शेषः ॥

यामीति पुनर्मूलेन तर्प्पयेत् ॥ १४३ ॥ अमुकया युक्तममुकन्तर्प्पयामि ततो वदेत् ॥ पुनर्मूलम्भवेदेवं चतुष्कमपि तर्प्पणम् ॥ १४४ ॥ एवं षड्गणपानां च सजायानान्तदन्तरा ॥ तर्प्पणं मूलमन्त्रेण चतुष्काजिनसंख्यकम् ॥ १४५ ॥ वसुन्धराशङ्खनिधेर्भार्य्या पद्मनिधेस्तथा ॥ भवेद्वसुमती ताभ्याम्मध्ये मूलेन चाष्टधा ॥ १४६ ॥ तर्प्पणं स्यात्तु मूलेन पुनश्चापि तु तर्प्पयेत् ॥ एवं भूभूचतुष्कांकैर्वेदवेदकृतैर्मितम् ॥ १४७ ॥ तर्प्पणस्य विधिं वच्मि तान्त्रिकाणान्तु यन्मितम्॥आदौ मूलेन सन्तर्प्य मन्त्रवर्णैश्च तर्प्पयेत्॥१४८॥ भूभूभूभूकुभूपंचपंच दिग्भितयेन च ॥ अन्तरान्तरमूलेन चैवं सिद्धिश्चतुष्किका ॥ ॥ १४९ ॥ ततो मूलेन सन्तर्प्य गणेशायुधतर्प्पणम् ॥ कुर्य्यादन्तरमूलेन ह्यायुधानां क्रमस्त्वयम् ॥ १५० ॥ आदौ तद्बीजमुच्चार्य्य प्रणवं च वदेत्ततः ॥ अमुकात्मने च प्रवदेदमुकाय नमस्त्विति ॥ १५१ ॥ नमोमुकन्तर्प्पयामि स्वाहेति कथितो मनुः ॥ विघ्नम्भूमौ रमां मायां श्रीं ह्रीं क्लीं वसुधां च गम् ॥ १५२ ॥ एकादशे गणेशस्य षड्बीजान्यपि संवदेत् ॥ मन्त्रं फलञ्च शक्तिं च प्राणवन्धं वदेत्ततः ॥ १५३ ॥ चक्रव्याप्तिश्च तारं च भूविद्या च त्रिलोककम् ॥ तदात्मन इमे प्रोक्तास्तेषान्नामान्यहं ब्रुवे ॥ १५४ ॥ बीजपूरं च परशुं कार्म्मुकं च त्रिशूलकम् ॥ चक्राब्जपाशोत्पलानि कलभाग्रविषाणयुक् ॥ १५५ ॥ शुण्डायां रत्नकलशमित्थमायुधनिर्णयः ॥ सर्वं द्वाविंशसंख्याकन्तर्प्पणं च प्रजायते ॥ १५६ ॥ षड्बीजान्ते चतुर्थ्यन्तं तत्तन्नाम समुच्चरेत् ॥ पठित्वा सकलम्मूलममुकङ्गणपं वदेत् ॥ तर्प्पयाम्यग्निजायान्तो मन्त्रो मूलान्तरान्तरः ॥ १५७ ॥ विघ्नो विनायको वीरः शूरो वरद एव च ॥ इभवक्रश्चैकदन्तो लम्बोदरगणेश्वरौ ॥ १५८ ॥ क्षिप्रप्रसादनश्चैव महागणपतिस्तथा ॥ एवं विंशच्चतुष्काः स्युस्ततो युग्मानि तर्प्पयेत् ॥ १५९ ॥ युग्मबीजं वदेदादौ गणेशस्य तदुत्तरम् ॥ प्राग्वत्तद्युग्ममाभाष्य मूलेनान्तरितानि च ॥ १६० ॥ श्रीं ह्रीं क्लीं ग्लौमिदन्तेषां क्रमाद्बीजचतुष्ककम् ॥ एवं षोडशसंख्यानि

१ भूमित्यत्रोक्तभाव आर्षः ॥

चतुष्काणि भवन्त्यपि ॥ १६१ ॥ श्रीगणेशबीजपूर्वान्तांस्तर्प्पयेच्च विनायकान् ॥ मूलेनान्तरितांश्चैव चतुष्का जिनसंख्यकाः ॥ १६२ ॥ तर्प्पयेद्विधिवत्साग्वन्मूलमन्त्रान्तरान्तरे ॥ ह्रींगं वसुन्धराशंखौ तर्प्पणीयौ च पूर्ववत्॥ ॥ १६३ ॥ अत्रादौ स्त्रीपुमानन्ते बीजयोर्विपरीतता ॥ ग्लौंगं वसुमती पद्मनिध्योर्बीजन्तु तर्प्पणे ॥ १६४ ॥ स्वमष्टौ तर्पणानि मूलेनान्ते प्रतर्पयेत् ॥ भवन्ति वेदवेदाब्धिसंख्यकास्तर्पणक्रमाः ॥ १६५ ॥ मूलमन्त्रश्चतुर्वारम्पूर्वं सन्तर्पयेत्ततः ॥ स्वबीजाद्यस्वाहान्तानि युग्मान्येवम्प्रतर्प्पयेत् ॥ १६६ ॥ गणपानां ततः षट्कं निधिं युग्मं प्रतर्पयेत् ॥ मध्ये मध्ये मूलमन्त्रं चतुर्वारमिति क्रमात् ॥ भवेदष्टोत्तरशतं लघुतर्प्पणमीरितम् ॥ १६७ ॥ महागणपतिं पुष्टिं चत्वारि मिथुनानि च ॥ षड्गणेशान्निधियुगमेवमेतत्त्रयोदश ॥ १६८ ॥ अथाव्यस्तानि चैतानि चान्तरा मूलतर्प्पणम् ॥ कृतञ्च द्विशतञ्चाष्टाधिकमाद्यन्तयोस्तथा ॥ १६९ ॥ मूलन्तदा तु द्विशतञ्जायते षोडशाधिकम् ॥ तर्प्पणम्मध्यमञ्चैतन्महागणपतेर्मतम् ॥ १७० ॥ अथवा पूर्ववत्कुर्य्यादादौ मूलेन तर्प्पणम् ॥ ततश्च मूलमन्त्रस्य चैकैकेनाक्षरेण च ॥ १७१ ॥ मूलमन्त्रस्यान्तरेण कुर्य्यादेवञ्चतुश्चतुः ॥ गजाश्विनेयतुल्यन्तज्जायते च ततः परम् ॥ १७२ ॥ पुनर्भव्यप्रकारेण तर्प्पयेदिति जायते ॥ महागणपतेः पूर्णं तर्प्पणन्तन्त्रवैदिकम् ॥ १७३ ॥ कामनाभेदैस्तु तर्प्पणं वक्ष्यतेधुना ॥ पुष्करे तर्प्पयेद्देवम्मोक्षार्थं शुद्धवारिभिः ॥ १७४ ॥ लक्ष्मीकामेन गोदुग्धैर्मूर्ध्नि तर्प्यो गजाननः ॥ गुह्यप्रदेशे मधुना कामार्थं तर्प्पयेद्विभुम् ॥ १७५ ॥ आकर्षणार्थं वश्यार्थं नेत्रयोर्मधुना तु तम् ॥ घृतेन राजवश्याय देवं पृष्ठे प्रतर्प्पयेत् ॥ १७६ ॥ तथा चैरण्डतैलेन रण्डावश्याय तर्प्पणम् ॥ प्रीतेर्विवृद्ध्यै स्कन्धे तु पयोभिस्तर्प्पयेद्विभुम् ॥ १७७ ॥ क्षीरेण दध्ना मधुना तुण्डे तत्पुत्रवृद्धिकृत् ॥ एवं यः पूजयेत्सम्यग्गणेशम्ममवल्लभम् ॥ तस्य भुक्तिश्च मुक्तिश्च जायते नात्र संशयः ॥ १७८ ॥ अनेनैव सुतेन्द्रेण दिवोदासो विवासितः ॥ कल्पयित्वा वेदवाह्यं मार्गं कलियुगप्रियम् ॥ १७९ ॥ आनीताश्च महत्यात्र दक्षाम्नायस्य देवताः ॥ तदुपासनतो लोकैः स्वस्वधर्म्मो विगर्हितः ॥ १८० ॥ अस्वादन्नस्तु पृक्ष-

स्थवारुण्याः काङ्क्षते फलम्॥क्षुधातुरस्तु भूमिष्ठन्दूरीकृत्य कशेरुकम् ॥१८१॥ दिवोदासीयलोकैस्तु दृष्ट्वा त्वरितकौतुकम् ॥ अन्तःप्रधारितो धर्म्मो वामान्ते कौलिकादिकः ॥ १८२ ॥ राज्ञो धर्म्मं प्रजा भुंक्ते प्रजापापन्तु भूपतिः ॥ तत्पातकेन भूपोसौ काशीतः प्रेषितो दिवम् ॥ मया च काश्यां वसतिः कृता पुत्रप्रसादतः ॥ १८३ ॥ येये वामपथे देवा गणकेन नियोजिताः ॥ काशी-प्रवेशकामार्थं तेते सन्तोषिताः परैः ॥ १८४ ॥ तत्र चीनागणैर्देवैर्वाममार्गेण तर्प्पणम् ॥ याचितन्तन्मया दत्तन्तन्त्रेषु प्रतिपादितम् ॥ १८५ ॥ तन्मार्ग-निरता वीरा जायन्ते क्षत्रियादयः ॥ स्त्रियो भवन्ति योगिन्यो विप्रस्तत्परि-वर्ज्जयेत् ॥ १८६ ॥ दिवोदासस्य राज्यान्ते प्राप्ते कलियुगे च तैः ॥ उप-द्रुता वेदमार्गे विहिताश्च द्विजातयः ॥ १८७ ॥ दुर्जनानान्तु ते भीत्या हिमाचलमुपाश्रिताः ॥ तत्रापि तैरभिद्रुत्य धर्म्मलोपार्थमुद्यतम् ॥ १८८ ॥ तदा विप्रैः स्तुतश्चाहम्बहुभिर्वैदिकैः स्तवैः ॥ तेषाम्मध्यात्समुद्भूतम्मम लिङ्गं मुखान्वितम् ॥ १८९ ॥ तद्विलोक्य तु ते वीराः साष्टाङ्गं प्रणता जगुः ॥ देवदेव त्वदुक्तस्य ॥ मार्गस्यायं व्यतिक्रमः ॥ १९० ॥ क्रियते वैदिकैर्मूर्खै-स्तदुद्धारार्थमुद्यताः गङ्गाजलादप्यधिकम्पावनं कारणं त्विदम् ॥ १९१ ॥ कन्दमूलफलादिभ्यः पवित्रं स्वादु पोषकृत् ॥ एतन्मांसं वयं दद्म उद्धारार्थं त्रिजन्मनाम् ॥ १९२ ॥ नानातीर्थसमुद्भूता अनेकविधिसंस्कृताः ॥ भोग-मोक्षप्रदा मत्स्यास्तानेभ्यो दातुमुद्यताः ॥ १९३ ॥ संसारस्य ह्यसारस्य सारंसारङ्गलोचनाः ॥ अर्द्धाङ्गे या त्वया देव विष्णुना हृदये कृता १९४॥ उत्सङ्गे ब्रह्मणा चापि देवेन्द्रेण निजासने ॥ वयं कारुणिकास्तात ह्येतेभ्यो दातुमुद्यताः॥१९५॥षण्मांसैश्च षडन्नैश्च षट्तीर्थैर्देवसंयुताः ॥ षट्सुगन्धा षड्र-साश्च मुद्रा दातुं समुद्यताः ॥ १९६ ॥ ता एते नैव गृह्णन्ति यष्टव्यं पशवो यथा ॥ स्वर्णपात्रस्थपरममन्नं हित्वा तृणाशिनः ॥ १९७ ॥ तदा मया धर्मपादरक्षार्थं गदितं वचः ॥ शृण्वन्तु मद्वचो वीराः सर्वप्राणिकृपायुतम् ॥ ॥ १९८ ॥ अस्मिन्पापे कलौ लोका नेया नो कौलिके पथि ॥ अतिक्षु-द्रादियोनीनान्दशस्वेकः प्रजायते ॥ १९९ ॥ कृमियोनिषु तेषान्तु दशके

चोन्दुरादिकः ॥ दशके चोन्दुरादीनां विडालादिः प्रजायते ॥ २०० ॥ तेषान्तु दशके पक्षी कश्चिदेकः प्रजायते ॥ तन्मध्ये दशके कश्चिन्मृगजातिषु जायते ॥ २०१ ॥ तेषान्दशकमध्ये च महिषो वा वृषो भवेत् ॥ तेषान्तु दशके कश्चित्खरो वा करभो भवेत् ॥ २०२ ॥ भवेत्तद्दशके कश्चिद्धयादीनाञ्च जातिषु॥तेषान्तु दशके कश्चिन्नरो वाकुञ्जरो भवेत् ॥२०३॥आयुर्वै यस्य कालेन भावयन्तु सदा त्विमम् ॥ तेषामपि मनुष्याणाम्मध्यादेकः प्रजायते ॥ २०४ ॥ कश्चिद्धर्मं पुरस्कृत्य मुक्तोहमिति जायते ॥ तेषान्दशकमध्ये तु कश्चिद्वर्णः प्रजायते॥२०५॥ तेषान्तु दशके कश्चिदनुलोमो भवेज्जनः॥ तेषान्तु दशके कश्चित्प्राप्नुयाद्द्विजतां नरः ॥ २०६ ॥ द्विजानान्दशके कश्चिद्विप्रो भवति कष्टतः ॥ तेषान्तु दशके कश्चित्कर्म्मनिष्ठः प्रजायते ॥ २०७ ॥ कर्म्मिणां दशके कश्चिद्वेदाशीलवान्नरः ॥ तेषां तु दशके कश्चिद्योगी भवति बालकः ॥ २०८ ॥ योगिनां दशके कश्चिदेको ज्ञानी प्रजायते ॥ ज्ञानिनां दशके कश्चिन्मुक्तो भवति वा न वा ॥ २०९ ॥ एवं मोक्षस्सुदुस्साध्यः संसारोयं चिरं स्थितः ॥ सर्वे एव हि मुक्ताः स्युः प्रवृत्ताः कौलिके पथि ॥ ब्रह्मसृष्टिविनाशश्च तूर्णमेव भविष्यति ॥ २१० ॥ एवं प्रतारिता वीरा नन्नृतुर्मदमोहिताः ॥ वयम्मुक्तावयम्मुक्ता अन्योन्यञ्जगुरोजसा ॥ २११ ॥ पुनः प्रमुदिताः सर्वे वचनञ्चेदमब्रुवन् ॥ अहो पशुजना यूयं निरयम्परमं गताः ॥ २१२ ॥ ते वरं याचतास्मभ्यं स्वोद्धारार्थम्भवान्तरे॥ततः प्रमुदितैर्विप्रैर्याचितोयं वरस्तदा ॥ २१३ ॥ अयं यः स कपालीनो लिङ्गरूपी प्रदृश्यते ॥ अस्माकन्तत्र रमताम्मनःस्वव्यभिचारितम् ॥ २१४ ॥ इति श्रुत्वा तदा वीरा वचनञ्चेदमब्रुवन् ॥ सत्यम्भवतु तच्चात्र पशुभिर्याचितन्तु यत् ॥ २१५ ॥ ब्रह्मविष्णुमहेशादिशक्तिसूर्य्यदिवौकसाम् ॥ नाथानस्मान्विहायाद्य पशुभिः किन्नु याच्यते २१६ ॥ वीराय मदिरा मन्त्रो मुद्रा मत्स्यः पलानि च ॥ अहो दैन्यं वयम्भोगमोक्षदाः कौलिका जनाः ॥ भोगेन मुक्तिरस्माकं सा त्यक्ता पशुभिर्जनैः ॥ २१७ ॥ भगे लिङ्गं समाधाय यत्सुखं समवाप्यते ॥ तेनार्चितोन्तरात्मायम्मुक्तो भवति तत्क्षणात् ॥ २१८ ॥ जठराग्नौ हूयते

यत्त्वनेकविधिसंस्कृतम् ॥ फलं तेन तु तुष्टश्चेदन्तरात्मा विमुच्यते ॥ ॥ २१९ ॥ यदैव हृदयङ्गच्छेत्सुधातोप्यधिका सुरा ॥ तदैव सकलाः क्लेशा नाशं यान्ति विमुच्यते ॥ २२० ॥ यदैव गन्धो मुद्राया नासिकाञ्च प्रधावति ॥ अमृतानामयं सारः शफरः परिकीर्त्तितः ॥ २२१ ॥ तद्योगादमृतत्वं चेन्नास्ति किं वैदिके पथि॥अहो शृण्वन्तु पशवस्तन्त्रसारमिदं वचः ॥२२२॥ पण्डितो वापि मूर्खो वा दीक्षितो वाप्यदीक्षितः ॥ मुद्राः शतसहस्रन्तु कृत्वा मोक्षमवाप्नुयात ॥ २२३ ॥ मुद्रायाः करणञ्चैवं शिक्षणीयं कदाचन ॥ चामुण्डाद्या महादेव्यो भैरवाद्या महाबलाः ॥२२४॥ मुद्राभिरेव तृप्यन्ति न पुष्पादिकपूजनैः ॥ महापूजा कृता तेन येन मुद्राष्टकं कृतम्॥२२५॥स यत्पदमवाप्नोति तन्न ब्रह्मा न शंकरः ॥ अवश्यमेव मुक्तिः स्यात्सहस्रभगदर्शनात् ॥२२६॥ पुरा कौलिकमार्गस्य निन्दा वै विष्णुना कृता ॥ तत्पातकवशाज्जातो मत्तो दशरथात्मजः ॥ २२७ ॥ यत्तेन निन्दिता शक्तिस्तत्सीता रक्षसा हृता ॥ दुःखञ्च समनुप्राप्तं वियोगश्चानुकालिकः ॥ २२८ ॥ शरीरं वैभवं लब्ध्वा-पुनस्तेन कृतन्तपः ॥ तदा गोपकुले जातः सदा शक्तिनिषेवकः ॥ २२९ ॥ शरीरार्धेन बालिभिर्नित्यमासवसेवकः षोडशस्त्रीसहस्राणाञ्जातोसौ भगदर्शनात॥ ॥ २३० ॥ मोक्षाधिकारिपशवः शृणुतैतद्धितं वचः ॥ विना मांसं विना मासं विना मत्स्यं च मैथुनम् ॥ २३१ ॥ विना मुद्रामन्यतमं भवेन्नास्तीष्ट-साधनम्॥पशुभिर्याचितं यत्तु किमु चैतत्तदेव हि ॥२२२ ॥ एवमुक्तेषु वीरेषु मुनयः शंसितव्रताः ॥ अन्तः प्रफुल्लवदनाः शान्तिपूर्वं वचो जगुः ॥ ३३३ ॥ वयन्तु पशवो विप्रा अन्नप्राणा विलोकिताः ॥ यूयं सिंहाः सिंहवच्च सदा मांसनिषेवकाः ॥ २३४ ॥ पशूनां च यथा तृप्तिः शाद्वलेनैव जायते ॥ अन्नेन च तथास्माकं न मांसं भक्षितुं क्षमाः॥२३५॥ सिंहानां तु यथा भक्ष्यं मांसं नान्नं कदाचन ॥ तथैव वीरसिंहानां भक्ष्यं मांसादिकं किल ॥२३६॥ इति श्रुत्वा वचस्तेषां प्रोचुस्ते च महेश्वरम् ॥ त्वां सेवयितुमिच्छन्ति पशवो विप्ररूपिणः ॥२३७॥ तस्मात्पशुपतिस्त्वं च नेपालेत्र स्थिरो भव॥इत्युक्त्वा ते पुनः पीत्वा मद्यं मत्तास्तथाभवन् ॥ २३८ ॥ तदा नानाविधैः स्तोत्रै-

विप्रैः सन्तोषितो ह्यहम् ॥ तदा तेभ्यो मया प्रोक्तं व्रियतांव्रियतामिति ॥ ॥२३९॥उक्तं तैश्च पुनर्देव कथं मुक्तिः कलौ भवेत् ॥ येनास्माकं भवेच्छ्रेय-स्तन्धर्म्मं वद नः प्रभो ॥ २४० ॥ इति तेषां वचः श्रुत्वा मया तत्त्वं निरू-पितम् ॥ ज्ञानं विना न मोक्षोत्र ज्ञानं धर्म्माद्दते न हि॥तस्माद्विजाः प्रकर्त्तव्यं वेदोक्तं कर्म्मं नित्यशः ॥ २४१ ॥ यथा पिष्टेन बडिशमत्र गुप्तं निपात्यते मत्स्यानां ग्रहणार्थन्तु तद्वत्तन्त्रनिषेवणम् ॥ २४२ ॥ कश्चिन्मत्स्यो दैवयोगा-च्चूर्णभोक्ता न विद्यते॥तदास्य जायते तृप्तिर्जीवनं च भवेद्यथा॥२४३॥तथैव वाममार्गे च ज्ञाननिर्दग्धकल्मषाः ॥ भवन्ति मुक्ता नान्ये च तस्मात्तं परिवर्ज्जे-येत ॥ २४४ ॥ ये वाममार्गनिरता वेदबाह्यानुसारतः ॥ स्वधर्म्मेव शंसन्ति वचस्तेषां न मानयेत् ॥२४५॥ अस्मिन्कलियुगे घोरे यथाशक्ति करोति यः सेवनं वेदमार्गस्य कलौ तस्य जनिर्न हि ॥ २४६ ॥ यमलोके न निरये पाताले नैवनैव च ॥ यद्ब्राह्मणे जन्म कलौ स एव निरयः स्मृतः ॥ २४७ ॥ अतः परं प्रवक्ष्यामि गणेशेन हृताश्च ये ॥ सत्कार्यार्थं दिवोदासनिस्सारार्थं-देवताः ॥ २४८ ॥ आनीतास्तास्तु मम वै पार्वत्याश्चापि वल्लभाः ॥ गणेश शासनात्कामो दग्धोपि पुनरुत्थितः ॥ २४९ ॥ दिवोदासस्य भवने सर्वेषां हृदये स्थितः ॥ तस्य मन्त्रान्प्रवक्ष्यामि लोकद्वयफलप्रदान्॥ २५० ॥ आदौ क्लीम्बीजरूपोस्य मन्त्र एकाक्षरो मतः ॥ सम्मोहनो मुनिश्छन्दो गायत्रं देवता स्मरः ॥ षड्दीर्घभाजा बीजेन षडङ्गानि प्रकल्पयेत् ॥ २५१ ॥ रक्ताम्बरं रक्तवर्णं रक्तगन्धानुलेपनम् ॥ नानारत्नौघमुकुटभूषणैर्भूषितं शुभम् ॥२५२॥ पाशांकुशाविक्षुचापं पुष्पेषून्दधतं करैः ॥ उपविष्टं रक्तपद्मे कामदेवं विभावये ॥ २५३ ॥ पद्ममष्टदलं कृत्वा मध्येनङ्गं समर्चयेत ॥ कर्णिकायां च षट्पत्रे कोणेष्वङ्गानि पूजयेत् ॥ २५४ ॥ देवाग्रतस्तु मध्यान्तमर्चयेत्केशरेषु च ॥ मोहिनीं क्षोभिणीं चैव त्रासिनीं स्तम्भिनीं ततः ॥ २५५ ॥ आकर्षिणीं द्राविणीं ह्लादिनीं क्लिन्नां च क्लेदिनीम् ॥ षट्पत्रे मदनानङ्गमन्मथा कुसुमाह्वयाः ॥ २५६ अनङ्गकुसुमातुरा ह्यनङ्गाशिशिरापि च ॥ अनङ्गमेखलानङ्गदीपिका च ततः परम् ॥ २५७ ॥ सर्वा ध्येयाः पद्महस्ताः सालंकाराश्च तद्बहिः ॥

पद्मे षोडशपत्राढ्ये स्वाग्रतः परिपूजयेत् ॥ २५८ ॥ युवती विप्रलम्भा च ज्योत्स्ना सूरुमदद्रवा ॥ सुरता वारुणी लोला लीला सौदामनी तथा ॥ ॥ २५९ ॥ कामच्छत्रा चन्द्ररेखा शुकी च मदनाह्वया ॥ योनिर्मायावती चेति तरुण्यः सस्मिताननाः ॥ २६० ॥ कह्लारहस्ताः कामार्त्ताः पत्राग्रे परिचारकान् ॥ विलासविभ्रमौ मोहं शोकं कामस्य पूजयेत् ॥ २६१ ॥ मदनातुरापत्रपौ युवानं चन्दनं तथा ॥ रतिप्रियं चूतपुष्पं ग्रीष्मं तापनमूर्जकम् ॥ ॥ २६२ ॥ हेमन्तं शिशिरं चापि मदन्ते पुष्पसायकाः ॥ एते चार्पिततूणीराः शोण-स्त्रीसक्तमानसाः ॥ २६३ ॥ इक्षुचापाश्च तद्बाह्ये चाष्टपत्रदलेर्चयेत् ॥ परभूः सारसाक्षश्च शुको मेघस्ततः परम् ॥ २६४ ॥ आपांगोरुविलासौ च हीनचीरो रतिप्रियः ॥ भूगृहस्य च कोणे च चतस्रः पूजयेदिमाः ॥ २६५ ॥ माधव्याख्या मालती च हरिणाक्षी मदोत्कटा ॥ श्वेतचामरसद्धस्ताः श्यामा भूषितविग्रहाः ॥ २६६ ॥ इन्द्रादींश्च ततो बाह्ये वज्रादीन्यपि पूजयेत् ॥ एवमाराधयेद्यस्तु गन्धपुष्पादिभिः स्मरम् ॥ २६७ ॥ सौभाग्यमतुलं कामान्महालक्ष्मीं स विन्दति ॥ पुरश्चरणमेतस्य लक्षं द्वादश चोच्यते ॥ २६८ ॥ तद्दशांशं त्रिमध्वक्तैः किंशुकप्रसवैर्हुनेत् ॥ तर्पणं मार्जनं कृत्वा ब्राह्मणानपि भोजयेत् ॥ २६९ ॥ ततोभ्यर्च्य गुरुं विप्रैः प्रणम्य च सुतोषयेत् ॥ एवं सिद्धमनुर्मन्त्री प्रयोगानाचरेत्ततः ॥ २७० ॥ अशोककुसुमैः स्वादुत्रयाक्तै-स्त्रिदिनं हुनेत् ॥ अष्टाधिकं सहस्रं यः सर्वेषां स प्रियो भवेत् ॥ २७१ ॥ गोघृतेन सुसंपातमष्टोत्तरशतं हुनेत् ॥ सम्यक्प्रपूजिते वह्नौ मन्त्रेणानेन मन्त्र-वित् ॥ २७२ ॥ सम्पातं सर्पिषां यो वै स्वां नारीं भोजयेत्प्रिये ॥ आज्ञानुव-र्तिनी सास्य भवेज्जन्मनि जन्मनि ॥ २७३ ॥ दध्यक्तलाजहोमेन प्रत्यहं मण्डलावधि ॥ वाञ्छिताँल्लभते मन्त्री कन्या सापि प्रियं पतिम् ॥ २७४ ॥ मालामन्त्रं प्रवक्ष्यामि कामदेवस्य सिद्धिदम् ॥ हृदयं कामदेवाय सर्वजनप्रिया-य च ॥ २७५ ॥ सर्वजनसम्मोहनाय ज्वलद्वह्निमयं वदेत् ॥ प्रज्वल सर्वजनस्य हृदयं ममकीर्तयेत् ॥ २७६ ॥ वशंकुरुकुरु स्वाहा मन्त्रो नागकृताक्षरः ॥ षड्दीर्घ-यतक्लींबीजैः षडङ्गविधिरीरितः ॥ २७७ ॥ आदौ करांगुलाग्रेतान्वर्णान्कामस्य

चिन्तयेत् ॥ द्रामायां द्राविणीं देवीं द्रोमायां क्षोभिणीमपि ॥ २७८ ॥ क्लीं च वशीकरीं न्यस्येत्क्लूं क्लीमायां महेश्वरीम् ॥ आकर्षिणीं च सः पूर्वां सम्मोहिनींहमादिकाम् ॥२७९॥ काममन्मथकन्दर्प्पमकरध्वजसञ्ज्ञकाः॥मीनकेतुरिमे न्यस्याः पञ्चाङ्गेष्वंगुलीषु च ॥२८०॥ चत्वारिंशन्मन्त्रवर्णानिकारादिस्थले न्यसेत् ॥ मातृकाया नासिकाङ्गेष्वङ्गेष्वथ ततः परम् ॥२८१॥ जठरे हृदये कण्ठे वक्त्रेनसि च पञ्चसु ॥ न्यस्यद्वर्णत्रयं शेषं व्यापकत्वेन सन्न्यसेत्॥ ॥ २८२ ॥ पुनः सम्पूर्णमनुना व्यापकं पुनराचरेत् ॥ ततश्च मातृकार्णानां बृहन्न्यासं समाचरेत्॥ २८३ ॥कामबीजप्रकुटितां मात्रामुक्त्वा च युग्मकम् ॥ स्यान्तं नमः समुच्चार्य्य मातृकाङ्गेषु विन्यसेत् ॥ २८४ ॥ रतियुक्तं न्यसेत्कामं कामदम्प्रीतिसंयुतम् ॥ कान्तां च कामयुक्तां हि कान्तिमन्तञ्च मोहिनीम् ॥ २८५ ॥ कामाङ्गं कमलायुक्तं कामचारं विलासिनीम् ॥ कामयुक्तां कल्पनाञ्च श्यामलां कामुकान्विताम् ॥ शुचिस्मितां न्यसेत्कामवर्धनेन समन्विताम् ॥ २८६ ॥ रमायुक्तं विशालाक्षं रमणं लोलजिह्विकाम् ॥ दिगम्बरां रतिनाथं रमाञ्चातिरतिप्रियम् ॥ रात्रिनाथं कुब्जिकाञ्च रमाकान्तञ्च कान्तया ॥ २८७ ॥ नित्यया रममाणञ्च कल्परूपां निशाकरम् ॥ नन्दकं भोगिनीयुक्तं नन्दनं कामदायुतम् ॥ सुलोचनां नन्दिनञ्च नन्दयन्तं प्रलापिनीम् ॥ २८८ ॥ पञ्चबाणं च मदनींरतिभङ्गकलिप्रियाम् ॥ पुष्पधन्वा मृगाक्षी च सुमुखा च महाधनुः ॥ भ्रमणो नलिनीयुक्तो भ्रमणो यजिनीयुतः॥ २८९ ॥ मन्मथो मदनायुक्तो सोभङ्गश्चापि मालया ॥ शान्तश्च मुग्धया युक्तो भ्रामको रमया युतः ॥ २९० ॥ शृङ्गश्च भ्रमया युक्तो भ्रांताचारस्तु लोलया ॥ भ्रमावहश्चञ्चलया मोहनोदीर्घजिह्वया ॥ २९१ ॥ रतिप्रियां मोदकं च मोहाक्षीं लोलमेव च ॥ मोहवर्धनशृङ्गिण्यो मदनं पाटलां तथा ॥ २९२ ॥ मन्मथं मदनां चापि मालां मातङ्गमेव च ॥ भृङ्गनायकहंसिन्यौ गायकं विश्वतोमुखीम् ॥ २९३ ॥ गीतिज्ञं जगदानन्दं नर्तकं रमणीमपि ॥ क्ष्वेलकं कान्तिसंयुक्तं चोन्मत्तं कलकण्ठिकाम् ॥ २९४ ॥ मत्तं वृकोदरायुक्तं मेज्यौ श्यामां विलासिनम् ॥

सर्वोत्तमायुतं लोभवर्धनं न्यस्य चिन्तयेत् ॥ २९५ ॥ प्राग्वत्पूजादिकं तद्व-त्कृष्णपीठे समर्चयेत् ॥ प्रयोगाश्चापि कर्त्तव्याः कृष्णगोपालसम्भवाः॥ २९६॥ त्रयोदश्यां शुक्लपक्षे सोमवारे सहस्रकम्॥ अष्टोत्तरं च ताम्बूलं गजपुष्करभक्षितम्॥ ॥ २९७ ॥ पुरुषत्वमवाप्नोति सत्पुत्रं द्रावयेत्प्रियाम् ॥ अथ कामस्य गायत्री प्रोच्यते पूजनादिकम् ॥ संन्यासएकाक्षरवन्मुनिर्वात्स्यायनो मतः ॥२९८॥ कामदेवाय विद्महे पुष्पबाणाय धीमहि ॥ तन्नोऽनङ्गः प्रचोदयात् ॥ २९९॥ षण्वति सहस्राणि जपोस्य परिकीर्त्तितः ॥ सर्वान्कामानवाप्नोति परत्रापि च सद्गतिम् ॥ ३०० प्रथमन्तु गणेशेन दिवोदासमहीपतेः ॥ अन्तःपुरे प्रेषि-तोयं नारीणां हृदयं गतः ॥ ३०१ ॥ अपास्य च ततो धर्म्मं राज्ञो हृदयमा-विशत् ॥ मन्दधर्मः शापितो यस्तदा काश्या विवासितः ॥ ३०२॥ तस्माद्गणे शादन्येन कामो मन्त्रोपि चापरः ॥ विष्णुः काममयो यस्मात्तस्मात्कामः सतां गतिः ॥ ३०३॥ अन्तःपुरे गते कामे दिवोदासस्य तेजसा ॥ दन्दह्यमानो गणपस्तत्सहायार्थमुद्यतः ॥ ३०४॥ तदा ध्यात्वा महाकालं महामायां च शाश्व-तीम्॥ तदा तयोः प्रभावेण दृष्टवान्परमं पतिम् ॥ २०५ ॥ तस्मिन्नुदभवत्का-चिद्वर्णाली ब्रह्मवादिनः ॥ तामेव च जपंस्तस्थौ वर्षमात्रं विमुक्तितः ॥ ३०६ ॥ मणिकर्णिका तटे तस्य सिद्धयः समुपस्थिताः ॥ तदा ख्यातः काशिकायामसौ सिद्धिविनायकः ॥ ३०७ ॥ सिद्धये स मनु-ष्याणां नानारूपधरो भवेत् ॥ लोभद्वेषादिकान्सर्वांन्वासयामास तत्र तु ॥ ॥ ३०८ ॥ स मन्त्रः केवलं कोलवाचको मोक्षदायकः ॥ यत्प्रसादाद्दिवो-दासो गुप्तसेनः प्रपञ्चितः ॥ ३०९॥ तस्मात्प्रपञ्चमन्त्रोयं तन्त्रेषु प्रकटीकृतः ॥ उद्धारार्थमविप्राणां गायत्र्येषा मयोदिता ॥ ३१० ॥ सर्वेपि मन्त्रा भो देवा देवसायुज्यकारकाः॥ तस्य चान्तर्गताः पञ्च मन्त्रो येभ्यो मया कृतः॥ ३११॥ पञ्चाम्नायस्य विषयस्तं मन्त्रं कथयाम्यथ ॥ महाकालस्य यो वाची स आदौ प्रणवो मनुः ॥ ३१२ ॥ माहामायावाचिका तु हृल्लेखा परिकीर्तिता ॥ जीव-वाची हंस इति द्व्यक्षरोयं तृतीयकः ॥ ३१३ ॥ जीवकर्म्मच्छेदकरं ज्ञानं यत्प्रोच्यते बुधैः ॥ स एव सोहमिति चेद्वर्णौ मन्त्रश्चतुर्थकः ॥ ३१४ ॥

यस्मात्प्रपञ्च उद्भूतो देवतृप्तिकरश्च यः ॥ स स्वाहा द्व्यक्षरो मन्त्रः पञ्चमः परिकीर्त्तितः ॥ ३१५ ॥ एवमष्टाक्षरश्चायं मन्त्रराजो निरूपितः ॥ यतो ब्रह्माप्रपञ्चादिः स एवास्य मुनिः स्मृतः ॥ ३१६ ॥ गायन्तन्त्रायते यस्माद्गायत्रं छन्द ईरितम् ॥ यस्मादपि स एकोपि तेजसोन्तो न विद्यते ॥ परम्पदेन यत्प्रोक्तं परं ज्योतिश्च देवता ॥ ३१७ ॥ आदौ तु मातृकान्यासः केवलं प्रथमं स्मृतः ॥ सबिन्दुमातृकान्यासो द्वितीयः परिकीर्त्तितः ॥ ३१८ ॥ कलादिमातृकान्यासस्तृतीयः परिकीर्त्तितः ॥ केशवादिकमातृणां चतुर्थो न्यास उच्यते ॥ ३१९ ॥ शिवशक्त्यात्मको न्यासः पञ्चमोत्र समीरितः ॥ मायाबीजादिकः षष्ठो मातृकान्यास उच्यते ॥ ३२० ॥ श्रीबीजादिकमातृणां सप्तमो न्यास उच्यते ॥ मातृकाकामबीजाद्यास्तन्न्यासश्चाष्टमो मतः॥ ३२१ ॥ नवमो ह्रींरमाकामबीजपूर्वास्तु मातृकाः ॥ प्रपञ्चपूर्वाणां मन्त्रो मातृणां दशमः स्मृतः ॥ ३२२ ॥ व्यापकत्वाच्च कालस्य न ध्यानं न च पूजनम् ॥ ॥ ३२३ ॥ लक्षाष्टकं मनोरस्य पुरश्चरणमुच्यते ॥ उग्रताराद्यतिक्रूरस्तारादिश्चैव साधकः ॥ ३२४ ॥ अनेन पुटितो जनो वर्णलक्षमितो यदि ॥ आगत्य मन्त्रदेवस्तु जायते साध्यकिङ्करः ॥ महाकालप्रभावेण स्वर्गिभ्यो नान्यथा भवेत ॥ ३२५ ॥ समिधस्तु वटप्लक्षपिप्पलोदुम्बरोद्भवाः ॥ तिलसिद्धार्थाज्यहविर्होमद्रव्याष्टकं मतम् ॥ ३२६ ॥ होमार्थं पूजयेद्विप्रान्सिद्धमन्त्रस्ततो भवेत् ॥ सिद्ध्यन्ति सर्वकार्य्याणि प्रयोगः कथ्यतेधुना ॥ ३२७॥ दशायुतं विधानेन तदर्धमथ वा पुनः॥ कार्य्यस्यैवानुसारेण हुनेद्द्रव्याष्टकेन च ॥ ॥ ३२८॥ चौरशत्रुभयव्याधिसर्पराक्षसदोषतः॥ चतुःशतन्तदर्धं वा तदर्धं वा हुनेत्ततः ॥ ३२९॥ क्षुद्ररोगेषु जातेषु तत्तद्दोषानुसारतः॥ रससङ्ख्यसहस्राणि हुनेद्द्रव्याष्टकेन च ॥ ३३० ॥ एतद्द्विगुणतश्चाथ चतुर्गुणत एव वा ॥ भूतावेशग्रहावेशकृत्यादीन्सुविनाशयेत् ॥ ३३१ ॥ शास्त्रोक्तं तु क्रमं हित्वा जपपूजादिकन्तु यः ॥ वामे वा कौलिके मार्गे ग्रस्यते भैरवादिभिः ॥ ३३२ ॥ स्मृतिभ्रंशो भवेद्यस्य होमद्रव्याष्टेकन च॥ सहस्रसङ्ख्यहोमेन स्वमो भवति तत्क्ष-

१ अन्यून इत्यर्थः ॥

णात् ॥ ३३३ ॥ प्रत्येकं द्विसहस्रं यो हुनेद्द्रव्याष्टकेन च ॥ अपस्मारं स्मृतिभ्रंशं शोषदोषं स नाशयेत् ॥ ३३४ ॥ द्रव्याष्टकं त्रिमध्वक्तं हुनेत्तस्य तु भोग्यतः ॥ देवेन्द्रस्य महालक्ष्मीस्तल्लक्ष्म्या लज्जतेतराम्॥ ३३५॥ लक्षं लक्षार्धकं वापि त्रिमध्वक्तं तु यो हुनेत् ॥ द्रव्याष्टकं त्रिवर्षावाक्तस्य लोकत्रयं वशे ॥ ३३६ ॥ वश्यादिसाधनं प्रोक्तं त्विह द्रव्याष्टकेन च ॥ वृद्ध्यादिकं विजानीयाद्धोमं तं कार्य्यगौरवात् ॥ ३३७ ॥ शुद्धैस्तिलैस्तु लक्षं यो होमं कुर्य्याद्यथाविधि ॥ महापापानि तस्याशु प्रलयं यान्ति नान्यथा ॥ ३३८ ॥ लक्षं कमलहोमेन महालक्ष्मीः प्रजायते ॥ हविष्यैः पुष्टिदो होमो घृतहोमो यशस्करः ॥ ३३९ ॥ मालतीपुष्पहोमोपि सर्ववश्यप्रदो भवेत् ॥ ३४० ॥ सामुद्रं लवणं हुत्वा तथा वश्यं प्रसाधयेत् ॥ अथ शालिसमुद्भूतांस्तण्डुलान्साधु चूर्णयेत् ॥ ३४१ ॥ मधुरत्रयसंयुक्ततच्चूर्णेनैव साधकः ॥ साध्यप्रतिकृतिं कुर्य्यात्सम्यक्संम्पूज्य तां स्पृशेत् ॥ ३४२ ॥ प्राणस्थापनमन्त्रन्तु जपेत्साष्टशतं ततः ॥ विभज्य जुहुयान्मन्त्री तां न्यासक्रमतो निशि ॥ ॥ ३४३ ॥ सप्तरात्रं प्रकुर्वाणो नरं वा स्त्रियमेव वा ॥ वशीकरोति सोप्येवं नात्र कार्य्या विचारणा ॥ ३४४ ॥ सामुद्रलवणस्यापि पुत्तल्या फलमीदृशम् ॥ प्रादुर्भूते ततस्तस्मिन्वटाग्नौ जुहुयाद्घृतम् ॥ ३४५ ॥ अष्टोत्तरशतं मन्त्री भासितं पतितं च यत् ॥ पूर्णौषधिविपक्केन पञ्चगव्येन पूरिते ॥ ३४६ चुल्ल्यां संस्थापितेधस्ताद्वह्निः कुम्भे प्रदापयेत् ॥ तावत्संख्यं च सञ्जप्य गृह्णीयात्सर्वसिद्धिदम् ॥ ३४७ ॥ लक्षणाद्गात्रलेपाच्च तिलकक्रियया तथा ॥ मस्तके धारणात्सद्यः सर्वे नश्यन्त्युपद्रवाः ॥ ३४८ ॥ भूतप्रेतपिशाचादिविषरोगादिनाशनम् ॥ सर्ववश्यकरं पुंसां श्रीसौभाग्यजयप्रदम् ॥ ३४९ ॥ सहस्रसंख्यके होमे तदानीं गुरवे बुधः ॥ पलं पलार्धकं वापि दद्याद्धेम्नो वरस्य च॥ ३५० ॥ कल्पवृक्षाद्यथा देवा लभन्ते वाञ्छितं फलम् ॥ एवं सिद्धिं प्रपञ्चाख्यमन्त्रेण गणपस्य हि ॥ ३५१ ॥ तत्सन्निधौ समाजग्मू राजकीया महाजनाः ॥ स एव सर्वशास्त्राणां वक्ताभूज्जगतो गुरुः ॥ ३५२ ॥ विना विप्रान्सर्वजनास्तन्त्रमार्गे प्रकीर्त्तिताः ॥ मका-

रपञ्चकेनैव जातं सर्वत्र पूजनम् ॥ ३५३ ॥ शनैश्शनैः समभवत्पृथिव्यां क्वचिदीदृशः ॥ मर्पंचमन्त्रमाहात्म्याद्राजापि भ्रान्तमानसः ॥ ३५४ ॥ मन्नाम्ना कल्पितैर्ग्रन्थैः क्षुद्रदेवरता जनाः ॥ मर्पंचकस्य सेवातो धर्म्मं पश्यन्ति ते न हि ॥ ३५५ ॥ प्र.मुग्रान्त द्रुतं सिद्धिं गणेशस्य प्रभावतः ॥ अहो साक्षात्परब्रह्म अहो गुरुपतिस्त्वयम् ॥ अहोष्टसिद्धिनाथोयं सर्वविद्याविशारदः ॥ ३५६ ॥ मथित्वा चतुरो वेदानस्मद्भाग्यात्कृपालुना ॥ दर्शितः कौलिकः पन्था भुक्तिमुक्तिप्रदायकः ॥ ३५७ ॥ इति नृणां वचः श्रुत्वा जग्मुर्विप्राश्च तं प्रति ॥ स तेषां सम्यगातिथ्यं कृत्वा तुष्टाव चागमम् ॥ ३५८ ॥ अहो विप्रा जीवहिंसाप्रधानं यज्ञकर्म्म तु ॥ न कर्तव्यो गुरुप्रोक्तो यज्ञो यागो मर्पंचकः ॥ ३५९ तपश्चापि न कर्तव्यमात्मा दुःखी प्रजायते ॥ तान्त्रिकं कर्म्म कर्तव्यं वैदिकं न कदाचन ॥ ३६० ॥ वैदिकाः पशवः प्रोक्ता जीवन्मुक्तास्तु तान्त्रिकाः ॥ कुर्वन्त्याभ्यन्तरं कर्म्म तत्त्वमेतद्विचार्य्यताम् ॥ ॥ ३६१ ॥ यद्दीयते प्राप्यते तद्वेदशास्त्रादिसम्मतम् ॥ दुःखं यदात्मनो दत्त्वा कथं सौख्यं प्रलभ्यते ॥ ३६२ ॥ सुखबीजेन संसाध्यं महत्सौख्यं द्विजोत्तमाः ॥ तस्मात्कौलं समासाद्य लोकद्वयसुखप्रदम् ॥ मुक्ता भवन्तु भो विप्रास्त्यज्यतां वेदकर्म्म तत् ॥ ३६३ ॥ जातानि बहुवर्षाणि चाहोरात्राणि कुर्वताम् ॥ काचिद्दृष्टा तत्र सिद्धिः प्रत्यक्षं दृश्यतामिदम् ॥ ३६४ ॥ प्राणाग्निहोत्रं तन्त्रोक्तं कर्म्म षट्कप्रकाशतम् ॥ त्यक्त्वा तदग्निहोत्रन्तु चर्य्यतां दृश्यतामिदम् ॥ ३६५ ॥ इति तद्वचनं श्रुत्वा सरस्वत्या विमोहिताः ॥ त्यक्त्वाखिलं वेदमार्गं प्रविष्टा वामकौलयोः ॥ ३६६ ॥ प्राणाग्निहोत्रं वक्ष्यामि गणेशेन प्रदर्शितम् ॥ ज्ञानिनां त्वरिता सिद्धिरन्येषां पतनं द्रुतम् ॥ उपविष्टः प्रसन्नात्मा प्राङ्मुखः स्थिरमानसः ॥ अतिमृद्वासनं बद्ध्वा पद्मासनमृजुर्भवेत् ॥ ३६७ ॥ शक्तिरूपात्मकं चिन्त्यं मूलाधारे त्रिकोणकम् ॥ मायाबीजन्तु तन्मध्ये चिन्तनीयं गुणात्मकम् ॥ ३६८ ॥ प्राग्रकोणात्त्रिकोणेषु त्रिकोणांस्त्रीन्विचिन्तयेत् ॥ हकारं चापि तन्मध्ये ध्यायेत्सत्त्वगुणा-

१ वासरूपन्यायेन कारप्रत्ययो न एवमग्रेपि ॥

त्मकम् ॥ ३६९ ॥ हकारान्तर्गतं ज्योतिश्चेतो भास्करसन्निभम् ॥ सात्त्विकेन हकारेण वेष्टितं तच्च चिन्तयेत् ॥ ३७० ॥ स हकारो राजसेन ईकारेण समन्वितः ॥ तामसेन तु रेफेण समाक्रान्तन्तु तद्द्वयम् ॥ ३७१ ॥ मूलाधार इति ध्यात्वा पंचकुण्डानि तत्र तु ॥ मध्ये प्राच्यां प्रतीच्यां च कौबेर्यां दक्षिणे तथा ॥ ३७२ ॥ सर्वदा ज्वलदग्नीनि तानि कुण्डानि भावयेत् ॥ मध्यादिपूर्वतस्तत्र ज्ञेयाः पंचाग्नयो ह्यमी ॥ ३७३ ॥ आवसथ्यश्च सत्यश्च गार्हपत्यो हुताशनः ॥ तथा चाहवनीयोऽग्निरन्वाहार्य्यश्च पंचमः ॥ ३७४ ॥ प्रभाजालनिदानांश्च ज्ञानरूपान्निरंजनान् ॥ द्वादशान्तःस्थितांस्तांश्च कल्पादित्यान्विचिन्तयेत् ॥ ३७५ ॥ मातृकार्णानाज्यरूपान्व्यत्यया-त्तत्र होमयेत् ॥ त्रं क्षं हं सं षमिति तु ज्ञेया वर्णाश्च पंच च ॥ ३७६ ॥ ध्येया मरकतप्रख्याः शास्त्रादिज्ञानकारकाः ॥ शं वं लं रं यं च ध्येयाः पंच गोमेदसन्निभाः ॥ सैंहिकेयस्य पंचैते संग्रामे विजयप्रदाः ॥ ३७७ ॥ मं भं बं फं पमिति च वर्णाः पंच शनेर्मताः ॥ नीलेन्द्रेण समा ध्येया मन्त्रसिद्धिप्रदायकाः ३७८ ॥ नं धं दं थं तमिति च ध्येया विद्रुमसन्निभाः ॥ भौमस्यैते द्यूतकलिराजद्वारेषु सिद्धिदाः ॥ ३७९ ॥ णं ढं डं ठं टमित्येते वर्णाः शुक्रस्य कीर्त्तिताः ॥ चिन्तनीया वज्रनिभा यात्राकार्य्यशुभंकराः ॥ ३८० ॥ ञं झं जं छं चमिति च पुष्परागसमत्विषः ॥ गुरोरेते विवाहादिकार्य्यादिषु सुशोभनाः ॥ ३८१ ॥ ङं घं गं खं कमित्येते ध्येया वैदूर्य्यसन्निभाः ॥ केतोरेते शत्रुनाशकरा ध्येया मनीषिभिः ॥ ३८२ ॥ अः अं औं ओं च ऐं ए च ॡं ऌं मौक्तिकसन्निभाः ॥ ॠं ऋं ऊं उं च ईंच आं अं चैतेर्कसन्निभाः ॥ वर्णा हीरकसंकाशा राजकार्य्यंकरा इमे ॥ ३८३ ॥ एवं ध्यात्वा सखेटार्णास्ततो होमं समाचरेत् ॥ क्षं शं मं नं णं च ञं ङं अः एं ऊं आवसथ्यके ॥ ३८४ ॥ लं वं भं धं ढं च झं घं अं ॡं उं सत्यकुण्डके ॥ हं लं बं दं डं च जं गं औं ॡं ईं जुहुयात्ततः ॥ ॥ ३८५ ॥ अग्नावाहवनीयाख्ये सं रं फं थं ततश्च ठम् ॥ छं खं ओं ॠं च इं कारमन्वाहार्य्ये हुनेत्सुधीः ॥ ३८६ ॥ पं यं पं तं टं च

चं कं ऐं क्रं आं गार्हपत्यके ॥ क्षकाराद्यान्नकारान्तान्व्यस्यान्वर्णा-न्क्रमाद्धुनेत् ॥ ३८७ ॥ तारं मायां च तं वर्णं हंसः सोहं ततः परम् ॥ स्वाहेत्युक्त्वा प्रोक्तकुण्डे हुनेदेकैकमक्षरम् ॥ ३८८ ॥ अकारस्तु परब्रह्मरूपी ध्येयस्ततो हुनेत् ॥ एवं हुत्वा शब्दजातं सर्वं शास्त्रादिकं हुनेत्॥ ॥ ३८९ ॥ आवसथ्याभिधे कुण्डे हं बीजेन गुरूक्तितः ॥ स्पर्शादिकान्वायु-गुणान्यं बीजेनेन्द्रकुण्डके ॥ ३९० ॥ सर्वरूपाणि जुहुयाद्रं बीजेन च पश्चिमे ॥ वंबीजेन रसान्सर्वान्हुनेत्कुण्डे तथोत्तरे ॥ ३९१ ॥ लम्बीजेन हुनेत्सर्वान्गन्धान्दक्षिणकुण्डके॥प्रलयानलसंकाशज्वलदग्निष्वहर्निशम्॥ ३९२॥ होमं कुर्वीत कुण्डेषु मातृकावर्णसंयुतम् ॥ नित्यशुद्धपरानन्दचिद्रूपोसौ विरा-जते ॥ ३९३ ॥ ध्रुवयज्ञादिकं होमं जपान्तं तत्तु पूर्ववत् ॥ पञ्चाशत्सङ्ख्यया कृत्वा न्यस्य तावद्यथाविधि ॥ ३९४ ॥ जीवन्मुक्तो भवेन्मन्त्री चिरञ्जीवी च जायते॥तेजसा सूर्य्यकल्पोसौ कर्ता हर्ता च शम्भुवत् ॥ ३९५ ॥ प्रत्यहं विधिनानेन भोजनं कुरुते यदि ॥ गार्हपत्यादिकुण्डेषु क्रमाद्ग्रासांस्तु होमयेत्॥ अथर्वपरिशिष्टोक्तैर्मंत्रैरेतैस्तु पञ्चभिः ॥ ३९६ ॥ गार्हपत्येनेहिरण्यवर्णाः शुचयः पावकाः ॥ अग्निं विहृत्यात्मानमुपचर्य्योर्ध्वं गच्छन्तु स्वाहा ॥ ॥ ३९७ ॥ अन्वाहार्य्येऽपाने गगनरुचयः पावकाः ॥ अग्निं विहृत्यात्मा-नमुपचर्य्योर्ध्वाधस्तिर्य्यग्गच्छन्तु स्वाहा ॥ ३९८ ॥ आहवनीये व्याने रक्त-वर्णाः शुचयः पावकाः ॥ अग्निं विहृत्यात्मानमुपचर्य्य तिर्य्यगूर्ध्वाधो गच्छंतु-स्वाहा ॥ ३९९ ॥ आवसथ्ये समाने सुप्रभावर्णाः शुचयः पावकाः ॥ अग्निं विहृत्यात्मानमुपचर्य्य तिर्य्यगूर्ध्वाधस्समं गच्छन्तु स्वाहा ॥ ४०० ॥ एवं होमं विधायाथ मंत्रमेतमुदीरयेत् ॥ एवं भावनया सर्वमश्नीयाद्धुच्यते मनुः ॥ ४०१ ॥ अहं वैश्वानरो भूत्वा जुहोम्यन्नं चतुर्विधम् ॥ पञ्चमेन विधाने-नोर्ध्वाधस्तिर्य्यक्षु गच्छतु ॥ ४०२ ॥ स्वाहांतोयं चतुस्त्रिंशद्वर्णमंत्र उदा-हृतः ॥ तूष्णीं होमं विधायाथ संस्कृतान्नेन मंत्रवित् ॥ ४०३ ॥ अमृते त्यादिमन्त्रेण पीत्वा च चुलुकोदकम् ॥ आचम्य विधिना पश्चाच्छुद्धाचमन-माचरेत् ॥ ४०४ ॥ मूलाधारं समारभ्य द्वादशान्तावधि स्मरेत् ॥ जीवा-

त्मानं जगद्व्याप्तं नित्यमेकमनन्यगम् ॥ ४०५ ॥ प्रकृतिस्थं शुभं चादि-मध्यान्तरहितं परम् ॥ हवनीयेन शुद्धेन जुहुयात्तेन तर्पितम् ॥ ४०६ ॥ एवं गलत्सुधारूपं पञ्चाशद्वर्णसिक्तकम् ॥ भुक्त्वा हविर्हुतं मंत्री सज्वलत्पञ्च-वह्निकः ॥ ४०७ ॥ प्रातः सायं च कुर्वाणो मंत्री प्राणाग्निहोत्रकम् ॥ गर्भस्थितिभवं क्लेशं विंदते न कदाचन ॥ ४०८ ॥ अत्र तत्त्वं प्रवक्ष्यामि-कौलिकोद्धारहेतुकम् ॥ या काचिद्वाममार्गेण साध्यते देवता तु सा ॥४०९॥ मपञ्चकेन सा तृप्ता साधकस्येष्टदायिनी ॥ नाधिकारस्तु विप्राणां मपञ्चकनि-षेवणे ॥ ४१० ॥ अज्ञानान्मोहतो वापि दुर्गुरोर्वा प्रसङ्गतः ॥ मपञ्चकस्य सङ्गश्चेज्जातो निरयमश्नुते ॥ ४११ ॥ तदुद्धाराय वक्ष्यामि युक्तिं प्राणाग्नि-होत्रकम् ॥ मांसस्य भक्षणे चिंत्यं हुनेत्पश्चिमकुण्डके ॥ ४१२ ॥ अग्निमु-ख्यादेवतया हुतं तद्भुज्यते त्विति ॥ मैथुने स्वस्य वीर्य्यं तु घृतरूपं विचिन्त-येत ॥ ४१३ ॥ दक्षिणाग्निं तु तेनेद्धं भावयेत्सम्भवेत्त तत् ॥ एवमातृप्तिप-र्य्यंतं बालाया मैथुनं चरेत ॥ ४१४ ॥ पूर्णतत्त्वे मनो नीत्वा ध्वजपातः प्रजायते ॥ न तत्र रात्रिजं पापं देवता चेत्प्रसीदति ॥ ४१५ ॥ पूर्वकुण्डेहु-नेन्मुद्रां मूलमंत्रेण साधकः॥देवता तेन तुष्टा स्यान्न पापैरभिभूयते ॥४१६॥ मद्यमुत्तरकुण्डे तु जुहुयाद्देवतामुखे ॥ न चानोत्यस्य गन्धेन पापं वै धर्म्म एव सः ॥ ४१७ ॥ मध्यमे तु हुनेन्मत्स्यान्ध्यायंश्च वडवानलम् ॥ त्यक्तसौख्यः साधकश्चेद्भुक्तिमुक्तिप्रदः स तु ॥ ४१८ ॥ इत्थं वो बोधितं विप्रा वाममार्गे प्रकीर्तिताः ॥ नानामंत्रैः कृताः शिष्या ज्ञातॄणां भुक्तिमुक्तिदैः ॥ ४१९ ॥ शक्तित्रयात्मको मंत्रो वाग्वादिन्याः प्रकीर्त्यते॥ प्रणवं वदयुग्मं च वाग्वादिनि पदं वदेत् ॥ ४२० ॥ ह्रींक्लींक्लिन्ने क्लेदिनीति महाक्षोभं वदेत्कुरु ॥ सौरुक्त्वा मोक्षमुचार्य्यं कुरुष्व प्रणवं वदेत् ॥ ४२१ ॥ वाग्वादिन्या मनुः प्रोक्त एको-नत्रिंशदक्षरः ॥ नवभिश्च नगैर्वर्णैर्जायतेस्य मनुत्रयम् ॥ ४२२ ॥ ब्रह्मा-दीनां त्रयाणां तु वाग्देव्यस्तत्र देवताः ॥ उत्पत्तिस्थितिनाशानां कारिकास्ताः प्रकीर्तिताः ॥ ४२३ ॥ नास्याः पूजा न च ध्यानं नच्छन्दो न च किञ्चन॥

गणेशस्य प्रसादेन वर्णलक्षजपादद्रुतम् ॥ ४२४ ॥ वाक्सिद्धिं समवाप्नोति कार्य्योत्पत्त्यादिकं हृदि ॥ चिंतयित्वा तथा मंत्रखण्डं जप्त्वा वदेत्सकृत् ॥ ॥ ४२५ ॥ तदा सा भारती सत्या शापानुग्रहवादिनी ॥ मौनादस्य स्थिरा सिद्धिरशक्तौ मितभाषणात् ॥ ४२६ ॥ ततः प्रोक्ता गणेशेन त्रिंशद्व्याख्या तु भैरवी ॥ वदवद वाग्वादिनि ऐमित्येको नवाक्षरः ॥ ४२७ ॥ क्लिन्ने क्लेदिनि इत्युक्त्वा महाभागे वदेत्कुरु ॥ भैरवी देवता चात्र वर्णलक्षजपो भवेत् ॥ ॥ ४२८ ॥ न च पूजादिकं न्यासा मपञ्चकनिषेवणम् ॥ केवलं सिद्धये प्रोक्तं सर्वतन्त्रेषु गोपितम् ॥ ४२९ ॥ ज्ञातं यैर्गुरुमार्गेण सिद्धास्ते नात्र संशयः ॥ एताभ्यामेव मन्त्राभ्यां बहवः कौलिकाः कृताः ॥ ४३० ॥ अथ वक्ष्ये विप्रगोप्यां देवीं त्रिपुरभैरवीम् ॥ कौलिके वाममार्गे च सिद्धान्ते द्रुतसिद्धिदाम् ॥ ४३१ ॥ हकारं च सकारं च रेफमैकारसंयुतम् ॥ नादबिन्दुसमायुक्तं वाग्भवं कूटमुच्यते ॥ ४३२ ॥ हकारश्च सकारश्च ककारश्च तथा रवौ ॥ नादबिन्दुसमायुक्ते ईकारे योजयेत्तदा ॥ पञ्चवर्णात्मकं कूटं कामराजाभिधं मतम् ॥४३३॥ हकारश्च सकारश्च रेफमैकारसंयुतम् ॥ विसर्गाढ्यं तृतीयन्तु-कूटं वर्णत्रयात्मकम् ४३४ ॥ तृतीयबीजे बिन्द्वाढ्यं स्त्रीणामुक्तं न सर्गयुक् ॥ ॥ ४३५ ॥ आदौ सकारः पश्चाद्धस्त्रिभिः कूटत्रयेपि च ॥ पठनीयस्तथा तासां देयो मन्त्रः सुसिद्धये ॥ ४३६ ॥ पंक्तिश्छन्दो मुनिः प्रोक्तो दक्षिणा-मूर्त्तिसञ्ज्ञकः॥देववन्दितपादाब्जा देवी त्रिपुरभैरवी ॥४३७॥ आपादं नाभितस्त्वोघमानानि हृदयात्परम् ॥ आहृन्मूर्द्धागतं चान्त्यं चैवं बीजत्रयं न्यसेत् ॥ ४३८ ॥ आद्यं सव्ये परं दक्षे तृतीयमुभयोर्न्यसेत् ॥ ऐं हृत् क्लीं च शिरः प्रोक्तं सौरन्त्येन शिखा मता ॥ ४३९ ॥ ऐं वर्म्म क्लीं च नेत्रं स्यात्सौरास्त्रं परिकीर्तितम् ॥ मूर्ध्न्याधारे हृदि न्यस्यं मनोः कूटत्रयं पुनः ॥ ४४० ॥ कुर्वीत देहसन्नाहं त्रिभिर्बीजैस्तदुच्यते॥ मणिबन्धे करतले कराग्रे च क्रमान्न्यसेत्॥४४१॥ आदौ दक्षे ततो वामे कक्षकूर्प्परपाणिषु ॥ पुनर्दक्षे च वामे च पादयोश्च तथा न्यसेत् ॥ पादान्ते हृदये लिङ्गे संहारक्रमतो न्यसेत्॥४४२॥

१ वाक्सिद्धिं समवाप्नोति–इति पूर्वान्वयि ॥ २ कार्योत्पत्त्येति तु चिन्तयित्वेत्यनेन संबध्यते ॥

अथ सृष्टिक्रमेणैव बीजान्यंङ्गेषु विन्यसेत्॥ आदौ वामे ततो दक्षे कर्णयोश्चिबुके ततः ॥ ४४३ ॥ शङ्खयोश्च मुखे चैव नेत्रयोश्च तथा न्यसेत ॥ बाहुद्वये च हृदये कूर्परद्वितये कटौ॥ ४४४॥ जानुनोर्व्यञ्जने चापि पादयोर्मलनिर्गमे॥ पार्श्वद्वये च हृदये स्तनयुग्मे गले तथा ॥ ४४५॥ नवयोन्यात्मको न्यासः प्रोक्तो बीजत्रयेण तु ॥ लिङ्गे रत्यै नम इति चाद्यबीजेन विन्यसेत् ॥ ४४६॥ प्रीत्यै नमश्च हृदये मध्यबीजेन विन्यसेत्॥ मनोभवायै हृदये भ्रुवोर्मध्ये तृतीयकम् ४४७ ॥ सौः क्लीं ऐमिति बीजैश्च स्थानेष्वेव पुनर्न्यसेत् ॥ अमृतेशीं च योगेशीं विश्वयोनिं क्रमादिमाः॥ विलोमबीजैर्विन्यस्य मूर्त्तिन्यासमथाचरेत्॥ ॥ ४४८ ॥ स्होमितीशानरूपाय ततो मनोभवाय च ॥ नम इत्यन्तःप्रोच्या धरेशानं न्यसेद्बुधः ॥ ४४९ ॥ स्हैं तत्पुरुषरूपाय मकरध्वजकात्मक ॥ नमः प्रोच्य न्यसेद्वक्के हृदये तु ततो न्यसेत् ॥ ४५० ॥ ह्स्रूं अघोररूपाय कन्दर्पस्यात्मने नमः ॥ ह्स्रीं वामदेवरूपाय मन्मथस्यात्मने नमः ॥४५१॥ एतद्गुह्ये प्रविन्यस्य न्यस्येच्च पदयोस्तथा ॥ ह्स्कं सद्योजातात्मने कामदेवाय नम इत्यपि ॥ ४५२ ॥ ऊर्ध्वप्राग्दक्षिणोदीच्यपश्चिमेषु मुखैः क्रमात् ॥ प्रविन्यस्येत्ततः पञ्च बाणानङ्गेषु विन्यसेत् ॥ ४५३ ॥ ह्रां ह्रीं क्लीं ह्रूम-इति च पञ्च बाणाः प्रकीर्तिताः ॥ अंगुष्ठादिकनिष्ठान्तमंगुलीषु क्रमान्न्यसेत् ॥ ॥ ४५४ ॥ क्षोभणद्रावणाकर्षवश्योन्मादाश्च नामतः॥ ललाटे च भ्रुवोर्मध्ये-मुखकर्णाक्षिकण्ठके ॥ ४५५ हृन्नाभिलिङ्गे विन्यस्या एता अष्टौ च शक्तयः शुभगाद्या भगा त्वन्या ततीया भगसर्पिणी ॥ ४५६ ॥ चतुर्थी तु पराजेया पञ्चमी भगमालिनी ॥ अनङ्गानङ्गकुसुमा प्रोक्ता चानंगमेखला ॥ ४५७ ॥ अनंगमदना सर्वा मदविभ्रममन्थराः ॥ ध्येयाः कुसुम्भवसना हरित्काञ्चिकिकाः शुभाः ॥ ४५८ ॥ वाक्कामवूं पुनः स्त्री सस्ताराः पञ्चोदितास्त्वमी ॥ न्यासं कुर्य्याद्भूषणाख्यं ततः स तु निगद्यते ॥ ४५९ ॥ न्यस्येच्छिरसि भ्रूमध्ये कर्णाक्षियुगले नसि ॥ गण्डयोरोष्ठयोर्दन्तपंक्त्योरास्ये न्यसेत्स्वरान्॥ ४६०॥ चिबुकेथ गले कण्ठे पार्श्वयोः स्तनयुग्मके ॥ दोर्मूलयोः कूर्प्परयोः पाण्योस्तत्पृष्ठदेशतः ॥ ४६१ ॥ हस्तद्वये हमित्येकं तत्पृष्ठे च तु नित्यकम् ॥

नाभौ गुह्ये पुनश्चोर्वोर्जानुनोर्जंघयोस्तथा ॥ ४६२ ॥ स्फिजोश्च गुल्फयोः पश्चाच्चरणांगुष्ठयोर्द्वयोः ॥ ग्रैवेये च तथा कट्यां हृदये दलकुण्डले ॥ वामकुण्डलके मूर्ध्नि वलये पानके तथा ॥ ४६३ ॥ हृदयस्थारुणाम्भोजकर्णिकामध्यसंस्थिताम् ॥ जपाकुसुमसङ्काशामरुणाम्बरभूषणाम् ॥ ४६४ ॥ स्मितसौधमहामोहां त्रिनेत्रां चन्द्रशेखराम् ॥ विश्वसौन्दर्य्यसर्वस्वजन्मसागररूपिणीम् ॥ ॥ ४६५ ॥ ब्रह्माब्जनेत्ररुद्रेशशशिवाक्षैर्मण्डसञ्ज्ञितैः ॥ मण्डिताङ्गीं महादेवीं मुक्ताजपवटीधराम् ॥ ४६६ ॥ पुस्तकालंकृतकरां वरदाभयधारिणीम् ॥ आनन्दमधुरां देवीं मदाघूर्णितलोचनाम् ॥ रक्ताङ्गरागसुभगां ध्यायेत्त्रिपुरभैरवीम् ॥ ॥ ४६७ ॥ पूजायन्त्रं प्रवक्ष्यामि भैरवीबालयोरथ ॥ नवयोन्यात्मकं कुर्य्यान्मण्डलं गुरुमार्गतः ॥ ४६८ ॥ हकारञ्च सकारञ्च रेफमौकारसंयुतम् ॥ बिन्दुद्वययुतं चाग्रे त्रिकोणे मध्यमे न्यसेत् ॥ ४६९ ॥ योन्यष्टके कामबीजं बहिरष्टदलं लिखेत् ॥ केशरेषु स्वरालेख्या द्वन्द्वशोग्रदलेषु च ॥ ४७० ॥ कचटांस्तपयान्वर्णाञ्छक्षौ च विलिखेत्क्रमात् ॥ क्रमाद्दलानां ग्रन्थीश्च प्रणवाभ्यां ततश्चरेत् ॥ ४७१ ॥ दलाग्रेषु त्रिशूलानि बहिर्भूपुरमालिखेत् ॥ शूलाग्रेषु लिखेद्वर्णान्क्रमात्रिभ्यश्च पूर्वतः ॥ ४७२ ॥ खगघाङ्कुछजांश्चापि झञठाण्डढणांस्तथा ॥ थदधान्नफबाश्चापि भसराल्ँवषांस्तथा ॥ ४७३ ॥ वृत्तद्वयं च तद्बाह्ये वीथिकायां च मातृकाः ॥ चतुरस्रत्रयं कुर्य्यात्तद्बाह्ये देवतार्चनम् ॥ ४७४ ॥ यन्त्रमध्ये देवपृष्ठाः प्रादक्षिण्येन पूजयेत् ॥ द्वादशैताश्चाद्यवीथ्यामेकस्यां दिशि तु त्रयम् ॥ ॥ ४७५ ॥ वामा ज्येष्ठा तथा रौद्री अम्बिकेच्छे ततः परम् ॥ ज्ञानोक्रियाकुब्जिका च बिम्बा देवी विषघ्निका ॥ ४७६ ॥ दुस्तरा च तथा नन्दा ध्यानमासां निरूप्यते ॥ विप्रा वेदविदो यूयं तच्छृणुध्वं समाहिताः ॥ ४७७ ॥ मुक्ताफलामलमणिस्फुरच्छत्रं शशिप्रभम् ॥ गङ्गातरङ्गधवलं चामरद्वयमद्रि[1]जे ॥ ४७८ ॥ नवरत्नस्फुरद्दीप्तताम्बूलस्य करण्डकम् ॥ मल्लिकामालतीजातीशतपत्राढ्यदामभिः ॥ ४७९ ॥ पूर्णं रत्नमयं भाण्डं तथालङ्कारपू-

---

१ पार्वति ॥

रितम्॥पटीञ्च व्यजनद्वन्द्वं नवरत्नविचित्रितम्॥ ४८० ॥ नीलकण्ठस्य पुच्छैश्च तथोशीरविराजितम् ॥ कर्पूरमृगनाभ्याढ्यं कर्पूरक्षोदसंयुतम् ॥ ४८१ ॥ चषकं स्वर्णरचितं कङ्कतीं हीरराजिताम् ॥ कज्जलस्य शलाकां च करण्डं चन्द्रपूरितम् ॥ ४८२॥ दधानाः परमेशान्यः शक्तयः पीठसंस्थिताः ॥ पूर्वादिक्रमतः सर्वाः सर्वाभरणभूषिताः ॥ ४८३ ॥ सम्पूज्य मध्ये देवेशीं प्रेतासिंहासनं यजेत् ॥ रक्तस्वर्णाकृति स्वर्णदीप्तिमत्कलमव्ययम्॥पञ्चप्रेतासनं साक्षान्मोक्षदायि न संशयः ॥ ४८४ ॥ ह्स्कोः सदाशिवमहाप्रेतपद्मासनाय च ॥ हृदन्तः षोडशार्णोयं मन्त्रः स्यात्पीठपूजनम् ॥ ४८५ ॥ सिंहासनं च सम्पूज्य चक्रैर्व्याकुलसुन्दरीम् ॥ आवाहनाद्या मुद्राश्च दर्शयित्वा प्रदर्शयेत् ॥ वरमुद्रां चाभयाख्यां ध्यायेत्त्रिपुरभैरवीम् ॥ ४८६ ॥ हृदयस्यारुणाम्भोजकर्णिकामध्यसंस्थिताम् ॥ जपाकुसुमसंकाशारुणां स्वर्णविभूषणाम् ॥ ४८७ ॥ स्मितसौधमहामोहां त्रिनेत्रां चन्द्रशेखराम् ॥ विश्वसौन्दर्य्य सर्वस्वजन्मसागररूपिणीम् ॥ ४८८ ॥ ब्रह्मार्कविष्णुरुद्रेशशिवाख्यैर्मञ्चसंज्ञिकैः ॥ मण्डिताङ्गीं महादेवीं मुक्ताजपवटीधराम् ॥ ४८९ ॥ पुस्तकालङ्कृतकरां वरदाभयधारिणीम् ॥ आनन्दमधुरां देवीं मदाघूर्णितलोचनाम् ॥ ४९० ॥ रक्तांगसुभगां साक्षाद्ध्यायेत्त्रिपुरभैरवीम् ॥ मुद्राविंशतिसंख्याकास्ततो देव्यै प्रदर्शयेत ॥ ॥ ४९१ ॥ वराभये पुस्तकाक्षमाले चांकुशपाशकौ ॥ चापबाणे कपालं च कमलं चायुधं तथा ॥ कपालाख्यं वामहस्ततलं कुर्य्यात्कपालवत् ॥ ॥ ४९२ ॥ आवाहनाद्या आदौ स्युश्चतस्रोन्ते च पंच च ॥ दर्शनीया योनिमुद्रास्तासां लक्षणमुच्यते ॥ ४९३ ॥ योनिमुद्रा हृदि क्षिप्ता त्रैलोक्यं क्षोभिणी भवेत् ॥ त्रैलोक्यद्राविणी चास्य त्रैलोक्याकर्षिणी भुवोः ॥ ॥ ४९४ ॥ त्रैलोक्यवशकृद्भालेह्लादकृद्ब्रह्मरन्ध्रके ॥ ततः षडंगावरणं पीठस्योपरितोर्चयेत् ॥ ४९५ ॥ अग्नीशासुरवायव्यमध्ये दिग्दिक्षु च क्रमात् ॥ अग्निकोणे रतिं पश्चात्प्रीतिमुत्तरकोणके ॥ ४९६ ॥ मनोभवान्दक्षकोणे ततो बाणान्समर्चयेत् ॥ द्वौद्वावर्वागुदक्चैकमग्रे कामांश्च बाणवत् ॥ ४९७ ॥ तत्र सम्पूजयेदेताः पूर्वादिक्रमतो बुधः ॥ अनङ्ग-

कुसुमा चाद्या द्वितीयानङ्गमेखला ॥ ४९८ ॥ तृतीयानङ्गमदनाग्रेन-ङ्गमदनातुरा ॥ शुभगा पञ्चमी देवी भगाग्रे भगसर्पिणी ॥ ४९९ ॥ भगमा-लात्र सर्वत्र देवपृष्ठं च पूर्वदिक् ॥ अष्टयोनिषु ब्राह्मयाद्या बाह्ये चाष्टदलद्वयम् ॥ ५०० ॥ ब्राह्मयायुक्तश्चासिताङ्गो रुरुर्माहेश्वरीयुतः ॥ चण्डः कौमारि-कायुक्तः क्रोधः स्याद्वैष्णवीयुतः ॥ ५०१ ॥ वाराह्या च तथोन्मत्तो मा-हेन्द्र्या च कपालभृत् ॥ चामुण्डाभीषणौ महालक्ष्मीः संहारसंयुता॥५०२॥ दीर्घस्वराष्टको बिन्दुयुक्तानामहदान्विताः ॥ क्रमात्स्युरष्टशक्तीनां पूजनेष्टौ मनूत्तमाः ॥ ५०३ ॥न ह्रूभैरवमन्त्रेषु स्वरा ह्रस्वाः सबिन्दुकाः ॥ कामरू-पश्च मलयस्ततः कोल्लगिरिः स्मृतः ॥ ५०४ ॥ कुल्मान्तकवचौ हारे ह्यतो जालन्धरः परः ॥ उड्डीयानं देवकोटं पीठाष्टकमुदाहृतम् ॥ ५०५ ॥ ग्रन्थि-स्थानेषु सम्पूज्यं पश्चिमादिक्रमेण तु ॥ हेतुकं भैरवं त्वाद्यं द्वितीयं त्रिपुरान्त-कम् ॥ ५०६ ॥ वेतालमग्निजिह्वं च कालान्तककपालिनौ ॥ एकपादं भीमरूपं ततो बाह्ये तु भूपुरे ॥ ५०७ ॥ पूजयेल्लोकपालांश्च ऊर्ध्वाधः-क्रमतो यजेत ॥ ब्रह्माणं चैव विष्णुं चाप्यर्चयेत्पश्चिमादितः ॥ वम्पूर्वो बटुको ङेन्तो हृदयान्तस्तथैव च ॥ ५०८ ॥ आदौ त्रिकोणं तद्बाह्ये वृत्तं च चतुरस्रकम् ॥ पूर्वमन्त्रैः समभ्यर्च्य बटुकादींस्ततः परम् ॥ बलिम-न्त्रैश्च बलयो देया यन्त्रान्वदाम्यथ ॥ ५०९ ॥ एह्येहि देवीपुत्रान्ते बटुकान्ते च नाथ च ॥ कपिलान्ते जटाभारभास्वरान्ते त्रिनेत्र च ॥ ज्वालामुखेति सर्वान्ते विघ्नान्नाशयनाशय ॥ ५१० ॥ सर्वोपचारसहितं बलिं गृह्णद्वयं वदेत् ॥ पंचपंचादशार्णोयं स्वाहान्तो बटुकस्य तु ॥ ५११ ॥ पात्रान्तरेण गृह्णीयात्पूर्वं स्थापितपात्रतः॥ तोयं गृहीत्वा वामांगुष्ठेन वैः निसृजे-द्बलिम् ॥५१२॥ॐ यां योगिनीभ्यः स्वाहा सवर्णयोगिनीपदम् ॥ हुं फट् स्वहेति धृत्यर्णो योगिनीनां बलौ मनुः ॥ ५१३ ॥ वामांगुष्ठानामिकाभ्यां मध्ये च पातयेद्बलिम् ॥ सद्दीर्घ्ययुक्तं क्षं प्रोच्य स्थाने क्षेत्रे निपानभूः ॥ ५१४ ॥ धूपदीपादि सहितं बलिं गृह्णद्वयं वधूः ॥ अग्नेरष्टनवा-

१ एतदग्रे तूत्तरान्वयि ॥

र्णोयं क्षेत्रपालबलेर्मनुः ॥ ५१५ ॥ अंगुष्ठतर्ज्जनीभ्यां च तर्जन्या चैकयापि च ॥ गां गीं गूं गणपतये वर वरद शर्वं च ॥ ५१६ ॥ जनं मे वशमानय बलिं गृह्ण द्वयं वदेत् ॥ स्वाहान्ता एकत्रिंशच्च मनौ वर्णाः प्रकीर्तिताः ॥ ५१७॥ वामांगुष्ठमध्यमाभ्यां प्रोक्ष्याग्रे बलिमुत्सृजेत् ॥ निर्माल्यभोजिनी चास्य देवी त्रिपुरचण्डिका ॥ ५१८ ॥ न जपेत्रिंशतो न्यूनं साधकस्तु कदाचन ॥ तत्सम्प्रदायशुद्धात्मगुरोर्लब्ध्वा मनुं सुधीः ॥ ५१९ ॥ प्रजपेत्सिद्धये सूर्य्यलक्षं मन्त्रं दृढव्रतः ॥ तत्सहस्रं प्रजुहुयात्पलाशकुसुमैर्नवैः॥ त्रिस्वादुयुक्तैरश्वारिकुसुमैरथ वा हुनेत्॥ ५२०॥ रक्ताम्बरः प्रीतमना मौक्तिकाभरणैर्युतः॥ चन्दनागुरुकर्पूरकृतगात्रानुलेपनः॥ ५२१॥ ब्रह्मचर्य्यरतः शान्तो विरतः परषङ्गुणे ॥ सर्वभूतसुहृन्मौनी कुमारीपूजको भवेत् ॥ ५२२ ॥ अथैतस्या एकबीजप्रयोगो वक्ष्यतेऽधुना ॥ नवकुन्दनिभां देवीं मुक्ताजालविभूषिताम् ॥ मुक्ताकलापविद्याक्षमालाराजच्चतुर्भुजाम् ॥ ५२३ ॥ एतस्याः प्रथमम्बीजं लक्षं जपति संयतः ॥ कविता जायते तस्य नानावृत्तार्थशोभना ॥ ५२४ ॥ अथ द्वितीयबीजस्य ध्यानादिकमिदं स्मृतम् ॥ रक्तां सुरतरोर्मूलविलसन्माणिपीठगाम् ॥ ५२५ ॥ पाशञ्च बीजपूरञ्च बाणानंकुशमेव च ॥ कपालञ्च धनुश्चेति षड्भुजैर्दधतीं भजे ॥ ५२६ ॥ रक्तैरलंकृतां पुष्पैर्मदाघूर्णितलोचनाम् ॥ हेलाविलाससम्पन्नां नवयौवनसुन्दरीम् ॥ ५२७ ॥ देवीं ध्यात्वा जपेद्बीजं यो लक्षं मध्यतो वशी ॥ त्रैलोक्यं क्षोभयेदाशु पूर्ववत्सिद्धिभागसौ ॥ ५२८ ॥ अथो तृतीयबीजस्य वक्ष्ये ध्यानादिकं खलु ॥ अक्षमालासुधाककुम्भमुद्रापुस्तकधारिणीम् ॥ ५२९ ॥ नवकुन्देन्दुसंकाशां राजन्मौक्तिकभूषणाम् ॥ शक्तिं सच्चिन्मयं ध्यात्वा बीजं सारस्वतं वशी ॥यो जपेज्जायते तस्य कविता भुवि सम्मता ॥ ५३०॥ पलाशपुष्पैस्त्रिस्वादुयुतैर्होमायुतद्वयम् ॥ कुर्य्यात्सरस्वतीतुष्ट्यै सौभाग्यानां गृहं हि सः ॥ ५३१ ॥ जाती करञ्जकशमीवटोद्भवसमिद्वरैः ॥ बिल्वप्रसूनैस्त्रिस्वादुयुतैर्होमं समाचरेत्॥ परनारीनृपाणां च रञ्जनं भवति ध्रुवम्॥ ५३२॥ मालतीवकुलोद्भूतैर्दलैश्चन्दनवारिणा ॥ सिक्तैर्हुनेत्क्रमात्तस्य कवित्वमभिजायते ॥ ५३३॥ अनुलोमविलोमेन मध्यस्थं सा-

ध्यकर्म्मयुक् ॥ मनुं प्रजप्य होतव्यं लोणराजिकया ततः ॥ नरनारीनृपांश्चैव वशयेन्नात्र संशयः ॥ ५३४ ॥ त्रिस्वादुयुग्बिल्वफलैर्होमो मर्त्यावरञ्जनः ॥ साधकस्य समृद्धिश्च कमलाया भवेदपि ॥ ५३५ ॥ त्रिस्वादुयुग्गुडूचीभिर्होमो रोगारिनाशनः ॥ गुप्तरूपा स्थिता काश्यामेवं त्रिपुरभैरवी ॥ ५३६ ॥ अथ सम्पत्प्रदां वक्ष्ये देवीं त्रिपुरभैरवीम् ॥ आहूतां गणनाथेन कौलिकाचारपूजिताम् ॥ ५३७ ॥ हकारं च सकारं च खकारं च फरौ तथा ॥ ऋकारस्वरसंयुक्तं बिन्दुनादविभूषितम् ॥ पञ्चवर्णात्मकं कूटं प्रथमं परिकीर्त्तितम् ॥ ॥ ५३८ ॥ द्वितीयं बीजमृजमैः कात्कौ स्याच्च तृतीयकम् ॥ एवं मंत्रः समाख्यातो द्विरावृत्त्या षडङ्गकम् ॥ ५३९ ॥ प्राग्वदस्याश्चरेन्न्यासं ध्यानमस्या निरूप्यते ॥ उद्यत्सूर्य्यसहस्राभां चंद्रचूडां त्रिलोचनाम् ॥ ५४० ॥ नानालङ्कारसुभगां सर्ववैरिनिकर्त्तनीम् ॥ स्रवद्रुधिरमुण्डालिललितां रक्तवाससम् ॥ ५४१ ॥ डमरुञ्च त्रिशूलं च खड्गं खेटकमेव च ॥ पिनाकं च शरान्पाशानंकुशं पुस्तकं तथा ॥ ५४२ ॥ अक्षमालां च बिभ्राणां शवसिंहासनस्थिताम् ॥ एवं ध्यात्वा यजेत्पीठं प्रथमं पीठमन्त्रतः ॥ ५४३ ॥ अघोरे ऐं ओं चं घोरे मायां घोरद्वयान्तरम् ॥ श्रीं सर्वतः सर्वसर्वेभ्यो नमस्ते पदं वदेत् ॥ रुद्ररूपेभ्यो ह्रीं श्रीं च देवार्णः पीठमन्त्रकः ॥ ५४४ ॥ ततः पूज्यास्तु पीठस्य शक्तयः पृष्ठदेशतः ॥ वामां ज्येष्ठां च रौद्रीं च कालीं च वरलोचनाम् ॥ ५४५ ॥ कलाढ्यां च बलाढ्यां च यजेद्विकारिणीं ततः॥ बलप्रमथिनीञ्चैव सर्वभूतदमां तथा ॥ ५४६ ॥ द्वादशैताः क्रमाद्देव्यो मदनीं च मनोन्मनीम् ॥ पूजापीठं समुद्धृत्य प्राग्वदङ्गानि पूजयेत् ॥५४७॥ रत्यादित्रयमभ्यर्च्य तथानंगादिकान्यजेत् ॥ ब्राह्म्यादियुग्मं सम्पूज्य वसुपत्रेषु मातृकाः ॥ भूपुरे लोकपालांश्च सायुधान्परमेश्वरि ॥ ५४८ ॥ अन्यः सर्वः प्रयोगोयं त्रिपुराभैरवीसमः ॥ चैतन्यभैरवीमन्त्रस्त्र्यक्षरः कथ्यतेऽधुना ॥ सहावकारसंयुक्तौ प्रथमं बीजमीरितम् ॥ ५४९ ॥ सकलैरीसमायुक्तैर्द्वितीयं बीजमुच्यते ॥ सहरौद्रीसमायुक्ता विसर्गांतास्तृतीयकम् ॥ ५५० ॥ उद्यद्भा-

---

१ अमभाव आर्षः ॥

नुसहस्राभां नानालङ्कारभूषिताम् ॥ मुकुटोर्ध्वलसच्चन्द्ररेखां रक्ताम्बराचिताम् ॥ ॥ ५५१ ॥ पाशांकुशधरां नित्यां वामहस्तकपालिनीम् ॥ वरदाभयशोभाढ्यां पीनोन्नतघनस्तनीम् ॥५५२॥ एवं ध्यात्वा यजेद्देवीं पूर्वसिंहासने स्थिताम् ॥ द्विरावृत्त्या षडङ्गानि न्यस्येत्सर्वांगलक्षणम् ॥६५३॥ त्रिकोणं चैव षट्कोणं वसुपत्रं ततः परम् ॥ चतुरस्रं चतुर्द्वारमेवं मण्डलमालिखेत् ॥५५४॥ प्रथमावरणं चात्रषडंगैः परिकल्पयेत् ॥ रत्यादिकास्ततः पूज्यास्त्रिकोणाग्रे वसन्तकम् ॥ वामे कामं विधुं दक्षे यजेद्बाणांश्च पूर्ववत् ॥ ५५५ ॥ डाकिनीं शाकिनीं चैव लाकिनीं काकिनीं ततः ॥ शाकिनीं हाकिनीं चापि पश्चिमादिक्रमाद्यजेत् ॥ अनङ्गकुसुमाद्याश्च वसुपत्रेषु पूर्ववत् ॥५५६॥ परभृत्सारसाख्यौ च शुकमेघाह्वयौ पुनः ॥ अपाङ्गभ्रूविलासौ च हावभावौ प्रपूजयेत् ॥५५७॥ पुरश्चर्यादिकं प्राग्वत्प्रयोगांश्चापि साधयेत् ॥ तद्वदेव च पूजापि शेषं न्यासादिकं तथा ॥ ५५८ ॥ अथातः सम्प्रवक्ष्यामि भुवनेश्वरभैरवीम् ॥ हसावकारसंयुक्तौ प्रथमं बीजमीरितम् ॥ ५५९ ॥ हंसकला ह्रींसमेता द्वितीयं बीजमुच्यते ॥ हसावौकारसंयुक्तौ विसर्गान्तं तृतीयकम् ॥ षड्दीर्घान्वितमध्येन बीजेनोक्तं षडङ्गकम् ॥ ॥ ५६० ॥ जपाकुसुमसङ्काशां दाडिमीकुसुमप्रभाम् ॥ चन्द्ररेखां जटाजूटां त्रिनेत्रां रक्तवाससम् ॥ ५६१ ॥ नानालङ्कारसुभगां पीनोन्नतघनस्तनीम् ॥ पाशांकुशवराभीतीर्दधानां च शिवां श्रये ॥ ५६२ ॥ चैतन्यभैरवीवत्स्याद्यद्यन्नोक्तमिहाथ तत् ॥ षडङ्गावरणं चात्र पूर्ववत्परितो यजेत् ॥ ५६३ ॥ रत्याद्याः पूजयेद्देवि त्रिकोणे तदनन्तरम् ॥ ब्रह्मविष्णुमहेशाद्यास्तत्र पूज्या बहिः पुनः ५६४ ॥ डाकिन्याद्या वसुदले षड्दले हाकिनीमुखाः ॥ अनङ्गकुसुमाद्याश्च ब्राह्म्याद्याश्च समंततः ॥ ५६५ ॥ भूबिम्बे लोकपालांश्च बटुकाद्यांश्च पूजयेत् ॥ चतुःषष्टियोगिनीभ्यो हृदन्तोयं दशाक्षरः ॥ ५६६ ॥ अष्टपत्रेषु भूबिम्बे त्वेकोच्चारेण पूजयेत् ॥ एकादशमहाकोटियोगिनीभ्यो नमोर्चयेत् ॥ ५६७ ॥ जपादिकं प्रयोगाश्च ज्ञेयाः प्राग्वत्त एव हि ॥ अथातः सम्प्रवक्ष्यामि भैरवीं कमलेश्वरीम् ॥५६८॥ हसस्थाने सहेत्युक्त्वा सर्वं मन्त्रादि पूर्ववत् ॥ राज्ञाज्ञाता ततः शप्ता तुहिनागेऽभवन्नदी ॥ ५६९ ॥ त्यक्तस्तया

वाममार्गो राजभीत्या तु मत्कृते ॥ यतो लब्धं तथा दुःखं कलौ ख्यातिं गमिष्यति ॥ ५७० ॥ पुनस्तेषु च देवेषु प्रत्यक्षेयं भविष्यति ॥ अवर्णाद्याश्च वर्णाश्च भविष्यन्ति वरप्रदाः ॥ ५७१ ॥ त्यक्त्वा मपञ्चकं पूजां कृत्वा ये- चैव मत्पराः ॥ अस्यास्तीरे पुरीश्वर्य्यां न च तेषु प्रसीदति ॥ ५७२ ॥ भुवनेशी भैरवी तु कृत्वा रूपान्तरं मम ॥ कार्य्यार्थे बहवः शिष्याः कौलका वामनाः कृताः॥ तस्माद्ध्यानाद्यर्चनादि प्राग्वद्दक्षिणमार्गतः॥५७३॥ अथातः सम्प्रवक्ष्यामि हसराद्यां च भैरवीम् ॥ भुवनेश्वरभैरव्या बीजादौ हसरान्प- ठेत् ॥५७४॥ त्रयाणामपि बीजाना प्रथमं व्यञ्जनात्मकम् ॥ हसराद्यांस्तथा विद्यात्प्राग्वत्पूजादिकं मतम् ॥ ५७५ ॥ अथातः सम्प्रवक्ष्यामि सिद्धां कौलेश- भैरवीम् ॥ आद्यन्तबीजयो रेफरहिता हसरादिकाः ॥ ५७६ ॥ कौलेश्वरी भवेद्विद्या कौलिकानां सुसिद्धिदा ॥ सम्पत्प्रदा भैरवीवत्सर्वं ध्यानादिकं मतम्॥ ॥ ५७७ ॥ कुर्वन्तोपीदृशं कर्म्म दिवोदासस्य तेजसा ॥न शक्तास्तत्र संस्थातुं तदा देवेन ढुण्ढिना ॥५७८॥जयदुर्गा समाहूता भजतां जयदायिनी॥ऊर्द्ध्वा- म्नायस्य ये देवास्तान्वक्ष्यामि समासतः ॥५७९॥ दुर्गेदुर्गेतिदुर्घटेच प्रणवादि- नवाक्षरम् ॥ एकादशार्णं स्वाहान्तं मन्त्रयुग्मं तदीयकम् ॥ ५८० ॥ नारदो मुनिराख्यातो विराट् छन्द उदाहृतम् ॥जयदुर्गा देवतास्य भुक्तिमुक्तिफलप्रदा॥ ॥ ५८१ ॥ ताराद्यैः पञ्चमन्त्रस्य पदैः सर्वेशधीर्मता ॥ जातियुक्तैरङ्ग- क्लृप्तिः षट्पदैस्तैः षडङ्गकम् ॥ ५८२ ॥ अष्टपत्राम्बुजद्वन्द्वं चतुरस्रत्रयावृ- तम् ॥ चतुर्द्वारसमायुक्तं कुंकुमादिभिरुद्धरेत् ॥ ५८३ ॥ कुर्य्यात्स्वपीठपू- जायां नवशक्तिसमर्चनम् ॥ प्रभा माया जया चैव सुप्रभा च विशुद्धिका ॥ ॥ ५८४ ॥ नादिनी सुप्रभावापि विजया सिद्धिदा तथा ॥ एकवह्निशरक्ली- बहीनैरद्भिः प्रपूजयेत् ॥ ५८५ ॥ तारो वज्रनखदंष्ट्रायुधाय महासिंहाय ॥ हुं फट् नमः सिद्धमनुः पीठं चानेन पूजयेत ॥ ५८६ ॥ आसनं मनुना तेन दद्यान्मूलेन कल्पयेत ॥ मूर्त्तिमावाह्य तस्यान्तः पूजयेच्चन्दनादिभिः॥५८७॥ क्रमादावरणाङ्गैश्च जयादिसुप्रभादिभिः ॥ देवायुधैर्दिगीशैश्च हेतिभिर्ध्यान- मुच्यते ॥ ५८८ ॥ मेघाभां चन्द्रमुकुटां सिंहास्यां त्रीक्षणां करैः ॥ चक्रं

खड्गं चर्म्म दरं दधानां च क्रमाद्भजे ॥ ५८९ ॥ जया च विजया कीर्त्तिः प्रीतिश्चापि प्रभा मता ॥ श्रद्धा मेधा श्रुतिश्चेति ओमाद्यक्षरपूर्विकाः॥५९०॥ असिर्दरो गदा खड्गपाशांकुशशरा धनुः ॥ इत्यायुधानि प्रोक्तानि लक्षाणां पञ्चकं जपेत् ॥ ५९१ ॥ दशांशं जुहुयादाज्यैस्तर्पणादि ततश्चरेत् ॥ ततः सिद्धमनुर्मन्त्री प्रयोगानाचरेत्सुधीः ॥ ५९२ ॥ इमं मन्त्रं जपेद्भूयः प्रविशे-त्क्षत्रसङ्गरम् ॥ अशेषेण रिपुं हन्यान्नात्र कार्य्या विचारणा ॥५९३॥विवादे व्यवहारादौ जप्तो विजयदो भवेत् ॥ अनया विधयास्त्राणि शस्त्राणि सुबहून्यपि ॥५९४॥सञ्जप्तानि च संग्रामे सम्यग्विजयदानि तु ॥एतदाराधनाद्देवा दिवोदा-सोभवत्क्षणात्॥संग्रामे सैन्यवर्गस्य क्षयमालोक्य मोहितः॥५९५॥ योच्चारणा-र्थमानीता दिवोदासस्य भूभुजः॥ वनदुर्गा स्थिता गंगापारे तस्या मनुं शृणु ॥ ॥ ५९६ ॥ उत्तिष्ठ पुरुषीत्युक्त्वा किं स्वपिषि भयं वदेत् ॥ मे शमयेति चोच्चार्य्य पश्चाद्ब्रूयात्स्थितं तथा ॥ ५९७ ॥ यदि शक्यमशक्यं वा तन्मे भगवतीति च ॥ शमयाग्निवधूश्चेति मन्त्रो नगगुणार्णकः ॥५९८॥ स्वकार्य्यं साधयित्वेवं गणनाथेन कीलिता॥५९९॥एनां जपेच्च निष्कीलां तदा सिद्धिः प्रजायते ॥६००॥ ओंह्रीं दुं दुं पुनर्दुं च प्रथमं बीजपञ्चकम्॥मन्त्रादौ यो-जयेदन्ते दुंह्रींमोमि इति मन्त्रवित् ॥ ६०१ ॥ निष्कीला जायते विद्या-साधकानां सुसिद्धिदा ॥ आरण्यको मुनिः प्रोक्तो ह्यनुष्टुप् छन्द ईरितम् ॥ ॥ ६०२ ॥ वनदुर्गा देवतास्य सर्वशत्रुविनाशिनी ॥ ऋत्वष्टाष्टभूबाणैर्मन्त्रार्णैः स्यात्षडङ्गकम् ॥ ६०३ ॥ दक्षपादांगुलीमूले गुल्फे जानुनि चोरुके ॥ गुदे-लिङ्गे तथा मूलाधारे च जठरे तथा ॥ ६०४ ॥ पार्श्वयुग्मे हृदि कुचद्वन्द्वे कण्ठे च सन्धिषु ॥ करयोर्वदने नासागण्डयुक्कर्णयुग्मके ॥ ६०५ ॥ भ्रूमध्ये मूर्धनि मनोर्वर्णा न्यस्या यथाविधि ॥ विद्युन्निभां त्रिनेत्रां च ह्यरुणे पङ्कजे स्थिताम् ॥ ६०६ ॥ चक्रं दरं वराभीती हस्तेषु दधतीं शुभाम् ॥ स्वर्णोद्यत्कान्तिवसनां शशिमौलिं वनस्थिताम् ॥ ६०७॥ प्रसन्नां पुष्पभूषाढ्यां पार्श्वोद्यन्मृगशाविकाम् ॥ इति ध्यात्वा यजेद्देवीं पीठे पूर्वोदिते ततः॥६०८॥ पूर्वमङ्गानि पूज्यानि तत आर्य्यादिका यजेत् ॥ चक्राद्यस्त्राणि मातॄश्च लोके-

शानायुधानि च ॥६०९॥ आर्य्या दुर्गा च भद्रा च भद्रकाल्यम्बिका तथा ॥ क्षेम्या च वेदगर्भा च शाङ्करी चाष्टमी मता ॥ ६१० ॥ शङ्खचक्रासिखेटेषु धनुः शूलं गदेति च ॥ वेदलक्षं जपेन्मन्त्रं तद्दशांशं हुनेत्तिलैः ॥ ६११ ॥ व्रीह्याज्यतिलदुग्धान्नैर्दुर्गां सञ्चिन्त्य चानले ॥ तर्प्पणं माज्र्जनं कृत्वा ब्राह्मणा-राधनं तथा ॥ ६१२ ॥ धनधान्यादिभिः सम्यक्तोषयित्वा निजं गुरुम् ॥ एवं सिद्धमनुर्मन्त्री वाञ्छितार्थान्प्रसाधयेत्॥६१३॥ दुर्गां प्रयोगभेदेन चिन्तये-द्वनवासिनीम् ॥ ध्यायेच्छ्रियं श्यामलाङ्गीं हयारेर्मूर्धनि स्थिताम् ॥ ६१४ ॥ शङ्खचक्रासिबाणांश्च तर्जनीचर्म्म खेटकम् ॥ चापं च दधतीं हस्तैः सुप्रसन्ना-ननां भजे ॥ ६१५ ॥ प्रत्यहं प्रजपेन्मन्त्री स्वरक्षार्थं शतं सदा ॥ सहस्रं च तदन्ते च प्रयोगान्कर्त्तुमर्हति ॥ ६१६ ॥ यद्यदुद्दिश्य च मनुं सहस्रं वायुतं जपेत् ॥ अचिराल्लभते तत्तदसाध्यमपि साधकः ॥ ६१७ ॥ प्रातःस्नायी न्यासपूर्वं स्मरन्देवीमनन्यधीः ॥ नित्यं सहस्रं प्रजपेन्मन्त्रं साधकसत्तमः ॥ ॥ ६१८ ॥ क्रूरसर्पग्रहाद्यांश्च दोषान्प्रशमयेत्सुधीः ॥ हुनेदारण्यकतिलैराजि-काभिश्च वा हुनेत् ॥ ६१९ ॥ अपामार्गसमिद्भिर्वा नाशयेत्सकलान्गदान् ॥ अपस्मारादिकान्मन्त्री नात्र कार्य्या विचारणा ॥ ६२० ॥ न्यग्रोधोत्थसमि-द्भिश्च सशुंगाभिर्हुनेत्सुधीः ॥ दशाहतो वाञ्छितार्थसिद्धिर्भवति नान्यथा ॥ ६२१ ॥ त्र्यहं वा सप्तरात्रं वा चैधै रास्नासमुद्भवैः ॥ एकैकं सकलं मन्त्री हुनेद्वाञ्छितसिद्धये ॥ ६२२ ॥ त्रिंशच्छरान्सिताग्रांश्च विधाय जुहुयाद्बुधः॥ कटुतैलैः सहस्रं वा ह्ययुतैस्तदनन्तरम् ॥६२३॥ सम्पाततैलरसनान्समभ्यर्च्य यथाविधि ॥ पूर्ववत्प्रजपेन्मन्त्रं ताञ्छरानपि भूपतिः ॥ ६२४ ॥ शुद्धा-चारश्च धीरश्च धन्वी संग्राममानसः ॥ गृहीत्वा परसेनायां मध्ये गच्छेदभी-तवत् ॥ साधनानि दिशः सर्वाः समन्तात्सफलास्तदा ॥६२५॥ स आगत्य पुनर्भूयो गुरुं धान्यैर्धनैरपि ॥ वस्त्रालङ्करणैश्चापि तोषयेज्जयदायिनम् ॥ ॥ ६२६ ॥ अष्टाधिकशतेनाथ जपेन शवभस्म च ॥ निक्षिपेद्यस्य शिरसि स विद्विष्टो भवेज्जनैः ॥ देशाद्देशान्तरं चैव सदा भ्राम्यति काकवत् ॥६२७॥ कारस्करद्रुमोत्थैश्च पत्रैर्वायुनिपातितैः॥सहस्रं जुहुयात्पादरजोभिः सहवैरिणः॥

॥ ६२८ ॥ उच्चाटोर्थे[1] भवेत्सद्यो विषवृक्षसमुद्भवैः ॥ पुष्पैर्हुनेत्सहस्रं[2] च सेना संस्तम्भयेद्बुधः ॥ ६२९ ॥ तावद्भिस्तस्य पत्रैश्च मन्त्री सेनां निवर्त्तयेत् ॥ विषवृक्षसमुद्भूतां शत्रोः प्रतिकृतिं शुभाम् ॥ ६३० ॥ कृत्वा प्रतिष्ठितप्राणां खण्डखण्डीकृतां निशि ॥ कृष्णपक्षे चतुर्दश्यां ककोलूकवसायुतैः ॥ ॥ ६३१ ॥ होमाद्रिपुर्नाशमेति ह्युन्मत्तसमिधा तथा ॥ होमान्मत्तो रिपुर्नूनं भवत्येव सहस्रतः ॥ ६३२ ॥ वैरिणः प्रतिमा कृत्वा सम्यक् संस्थापितानिलाम् ॥ विषत्रिकटुकालिप्तां सम्यगुष्णजले क्षिपेत् ॥ ६३३ ॥ प्रजपेच्च मनुं सद्यो ज्वराक्रान्तो भवेद्रिपुः ॥ दुग्धाभिषेकतः शान्तिर्भवत्यस्य न संशयः ॥ ६३४ ॥ प्रतिमां विषवृक्षोत्थां निक्षिपेदुष्णवारिणि ॥ उन्मादश्च रिपोः सद्यः पूर्ववच्छान्तिरीरिता ॥ ६३५ ॥ सूर्य्यबिम्बवदारक्तां शूलतर्जनिकाधराम् ॥ ध्यात्वायुतं[3] प्रजप्याथ मारयेद्रिपुसञ्चयम् ॥ ६३६ ॥ असिखेटकराकेंस्था क्रुद्धा सा वनवासिनी ॥ संस्मृता मन्त्रजापेन शमयेच्छत्रुसञ्चयम् ॥ ॥ ६३७ ॥ शरचापकरां सिंहस्थितां पावकसन्निभाम् ॥ कारस्करद्रुसमिधा ह्ययुतं जुहुयात्सुधीः ॥६३८॥ रोगिणोः वैरिणः[4] सर्वे जायन्ते चाचिरात्तदा ॥ विषवृक्षोत्थितैः पत्रैरभिनाशं प्रयान्ति च ॥६३९॥ तद्वृक्षसुमनोभिः स्यादुच्चाटः करिणां ध्रुवम् ॥ राजवृक्षसमिद्धोमाद्रोगा नश्यन्ति दंतिनाम् ॥ ॥ ६४० ॥ विषवृक्षप्रसूनैश्च त्रिमध्वक्तैरिभव्रजः ॥ वशी भवेत्तथा शीघ्रं पत्रैरादित्यकोत्थितैः ॥ ६४१ ॥ त्रिस्वादुयुक्तैः करिणो जातिमंतो भवन्ति च ॥ अभ्यंगः पञ्चगव्येन लोकरक्षाकरः स्मृतः ॥ ॥ ६४२ ॥ करिणां[5] मनुजानां च प्राग्वै तन्त्रविदुत्तमैः ॥ सर्पिस्तिलैर्नित्यकटुराजिकापञ्चगव्यकैः[6] ॥ ६४३ ॥ हविस्तण्डुलकैश्चैव प्रत्येकं तु सहस्रशः ॥ जुहुयादिभसङ्घानां वृद्धिर्भवति नान्यथा ॥६४४॥ महान्तं ब्रह्मवृक्षं च च्छित्त्वा निर्भिद्य पञ्चधा ॥ दिक्क्रमेणैव पञ्चाथ आयुधानि प्रकल्पयेत् ॥ ६४५ ॥ सम्यङ्नित्यं गदा शङ्खो नन्दकश्चक्रशार्ङ्गकौ ॥ कौमोद-

१ अस्य पूर्वपद्यघटकवैरिण इत्यत्र सम्बन्धः । २ अथानन्तरं विषवृक्षकुसुमहोमात्स्तम्भनमिति भावः । ३ ध्यात्वेति शेषः । ४ शत्रूणामिति शेषः । ५ अर्द्धं पूर्वान्वयि । ६ अर्द्धमुत्तरान्वयि ।

कीर्ति क्रमतोप्युक्तमायुधपञ्चकम् ॥ ६४६ ॥ निक्षिप्य पञ्चगव्ये च जपे-त्पञ्चसहस्रकम् ॥ तावच्चाज्येन जुहुयात्सम्पातं तत्र पातयेत् ॥ ६४७ ॥ भूयश्च पूर्वसंख्याकं जपं कुर्य्याद्विचक्षणः ॥ विदध्याद्दैवतान्पञ्च पञ्चगव्यप्रपूरितान् ॥ ६४८ ॥ मध्ये हि तेष्वायुधानि निक्षिपेद्भूतले समे ॥ कुर्य्याच्छान्तिं ततो मन्त्रैर्बलिं हव्यं निजैः शुभैः ॥ ६४९ ॥ नगरग्रामदेशानां कारयेत्क्षेममीदृशम् ॥ यत्रेयं क्रियते रक्षा कमला तत्र वर्धते ॥ ६५० ॥ धनधान्यसमृद्धिः स्याद्रिपुचौरभयं न च ॥ पद्मैर्नृपं वशीकुर्य्यात्तत्पत्नीमुत्पलैरपि ॥ ६५१ ॥ ब्राह्मणान्कुमुदैर्हुत्वा कह्लारैर्विश एव च ॥ शूद्राल्लँवणहोमेन ग्रामं जातीप्रसूनकैः ॥ ६५२ ॥ शङ्खचक्रगदाम्भोजहस्तं सञ्चिन्तयेच्छुभम्॥ रविबिम्बे मुकुन्दं च मनुप्रोक्तेष्टलिङ्गकम् ॥ ६५३ ॥ प्रजपेद्वाथ पुरुषो भगवत्पादयोरथ ॥ सर्वसिद्धिकरः प्रोक्तः प्रकारोयं सुमन्त्रिभिः ॥ ६५४ ॥ साध्यनामाक्षरैः सम्यग्विदर्भितमनुं लिखेत् ॥ यन्त्रे मृदं कुलालस्य करलग्नां प्रगृह्य च ॥ ६५५ ॥ तया कृता या प्रतिमा तस्या हृदि च सन्न्यसेत ॥ संस्थापित्वाभिमुख्येन सप्ताहं प्रजपेन्मनुम् ॥ सन्ध्यात्रये शतं चाष्टाधिकं वश्यो भवेत्तु सः ॥ ६५६ ॥ व्रीहीन्हुनेदष्टशतं प्रत्यहं वत्सराद्भवेत् ॥ व्रीहिमान्गोपयोभिश्च पशुमान्भवति ध्रुवम् ॥ ६५७ ॥ घृतहोमान्मन्त्रिणः स्यात्काञ्चनाप्तिर्महीयसी ॥ दध्ना च सर्वसिद्धिः स्यादन्नैरन्नसमृद्धियुक् ॥ ॥ ६५८ ॥ मधुहोमेन रत्नानां निधिर्भवति नान्यथा ॥ दूर्वाहोमेन दीर्घायुर्मन्त्री भवति निश्चितम् ॥ ६५९ ॥ श्वेतगुञ्जाः समानीय कुडवप्रमिताः शुभाः ॥ एतन्मन्त्रं तु जप्त्वा ता विकिरेच्छत्रुसैन्यके ॥ ६६० ॥ मन्त्रोत्तमः सुजनः स तेनासौ वैरिणश्चमूः ॥ ज्वरादिकैर्महारोगैः पीडिता सा नृणां चिरम् ॥ ६६१ ॥ सेनाधिपतिमुख्यानां परस्परविरोधतः ॥ एवं ह्युपद्रवैर्नानाविधैर्नाशं प्रयाति च ॥ ६६२ ॥ अथातः सम्प्रवक्ष्यामि बीजरूपं महामनुम् ॥ दुरित्येकाक्षरो मन्त्रस्सर्वमन्त्रोत्तमो मतः ॥ ६६३ ॥ ऋषिः काश्यप उद्दिष्टो गायत्री छन्द ईरितम् ॥ देवता तु भवेद्दुर्गा षडङ्गानां विधिस्तथा ॥ षड्दीर्घयुक्तबीजेन विसर्गेणान्वितेन च ॥ ६६४ ॥ दूर्वाश्यामां

त्रिनेत्रां च कमलेष्टदले स्थिताम् ॥ शूलं बाणं खड्गचक्रे शङ्खं खेटं शरासनम् ॥ कपालानि च दक्षाधः क्रमेण दधतीं स्मरेत् ॥ ६६५ ॥ चतुर्लक्षं जपेन्मन्त्रं दशांशं जुहुयात्तिलैः ॥ पूजादिकं प्रयोगादि नवदुर्गासमं स्मृतम् ॥ ॥ ६६६ ॥ येये भूपोपकाराय लक्ष्मीमन्त्राः सुरोधिताः ॥ गणेशेनैव काश्यां ते चार्थदास्तान्ब्रवीम्यहम् ॥ ६६७ ॥ नमः कमलवासिन्यै स्वाहा चेति दशाक्षरः ॥ ऋष्याद्या दक्षवेद्देवी कमला समुदीरिता॥६६८॥देवीं च पद्मिनीं विष्णुपत्नीं तु वरदां मताम्॥तथा कमलरूपां च ङेनमोन्तां च विन्यसेत् ॥ पञ्चाङ्गेषु च ताराद्या ध्यानमस्या निरूप्यते ॥६६९॥ तडित्कान्तिं पद्मयुगवरदाभयसत्कराम् ॥ शरीरभासा भुवनं भासयन्तीं सरोजगाम् ॥ ॥ ६७० ॥ काञ्चीमुकुटमञ्जीरनूपुरै रुचिरां श्रये ॥ आदावङ्गानि तद्बाह्ये कमलाद्यष्टशक्तयः[1] ॥ ६७१ ॥ तद्बाह्ये लोकपालांश्च तदस्त्राणि च तद्बहिः ॥ एवमभ्यर्चयेल्लक्ष्मीं भवेत्सद्यो धनाधिपः ॥ ६७२ ॥ पञ्चलक्षं जपेन्मन्त्रं हविष्याशी जितेन्द्रियः ॥ तद्दशांशं सरसिजैस्त्रिस्वाद्वक्तैर्हुनेत्सुधीः ॥ ६७३ ॥ नद्यां समुद्रगामिन्यां कण्ठदघ्ने जले स्थितः ॥ लक्षत्रयं जपेन्मन्त्री भवेदर्थान्वितो नरः ॥ ६७४ ॥ नन्द्यावर्त्तप्रसूनैश्च जुहुयादुत्तराक्रमे ॥ रमां सम्पूज्य साहस्रं तावद्बिल्वैर्मधुप्लुतैः ॥ ६७५ ॥ फलैर्हुनेत्पौर्णमास्यां पञ्चम्यां वा सिताम्बुजैः ॥ शुक्रवारेब्जपुष्पैश्च मासं यो जुहुयात्सुधीः ॥ संवत्सराद्धनं पूर्णं लभते नात्र संशयः ॥ ६७६ ॥ किम्बहूक्तेन भजते मनुमेनं जितेन्द्रियः ॥ स वाञ्छितार्थाँल्लभते वसुधान्यसमृद्धियुक् ॥ ६७७ ॥ अथ वक्ष्ये गणेशेन काशीराज्याप्तये मम ॥ सांबादित्यस्य रक्षोदिग्भागे लक्ष्मीरुपासिता ॥ लक्ष्मीविनायकस्तत्र प्रसिद्धोसौ गजाननः ॥ ६७८ ॥ दक्षिणेनैव मार्गेण तस्याः सिद्धिर्न वामतः ॥ सकारश्च हकारश्च कलरा वर्णपञ्चकम् ॥ ६७९ ॥ ईकारस्वरसंयुक्तं प्रथमं कूटमुच्यते ॥ हंबीजं तु द्वितीयं स्यात्प्रोक्तोयं त्र्यक्षरो मनुः ॥ ६८० ॥ ऋषिर्हरिश्च गायत्री छन्दो लक्ष्मीश्च मोहिनी॥ साम्राज्यदा देवतोक्ता कूटं बीजं प्रकीर्त्तितम्॥

१ द्वितीयार्थे प्रथमा ।

॥६८१॥शक्तिं श्रीं च षडङ्गानि षड्भिर्दीर्घैः समाचरेत्॥अतसीपुष्पसङ्काशां रत्न भूषणभूषिताम् ॥ ६८२ ॥ शंखचक्रगदापद्मशार्ङ्गबाणधरां करैः ॥ षड्भिः कराभ्यां देवेशीं वरदाभयशोभिताम् ॥ ६८३ ॥ पूजायन्त्रं त्रिकोणं स्यादष्टपत्रं सभूपुरम् ॥ मध्ये प्रपूजयेद्देवीं षडंगानि ततो यजेत् ॥ ६८४ ॥ त्रिकोणकोणे गायत्रीं सावित्रीं च सरस्वतीम् ॥ ईशकोणात्क्रमेणैव ब्राह्मयाद्याश्च दलाष्टके ॥ ६८५ ॥ एकोच्चारक्रमेणैव भूपुरे मनुना पुरा ॥ अष्टादशमहाकोटियोगिनीभ्यो नमोस्त्विति ॥ ६८६ ॥ मन्त्रेण पूजयेत्पश्चादिन्द्रादीनायुधान्यपि ॥ पुनर्देवीं समभ्यर्च्य गन्धपुष्पाक्षतादिभिः ॥ ६८७ ॥ बटुकक्षेत्रपालेभ्यो योगिनीभ्यो बलिं हरेत् ॥ एवमष्टभुजां ध्यात्वा त्रिलक्षं प्रजपेत्सुधीः ॥ ६८८ ॥ तद्दशांशेन पद्मैस्तु हुनेत्साम्राज्यसिद्धये ॥ एवमर्चयतो लक्ष्मीं साम्राज्यं स्यादसंशयम् ॥ ६८९ ॥ अथातः सम्प्रवक्ष्यामिनित्यक्लिन्नामनुं परम् ॥ भवाणोंसौ मुखे मायानित्यक्लिन्ने मदद्रवे ॥ ६९० ॥ स्वाहान्तोस्य मुनिर्ब्रह्मा छन्दस्त्रिष्टुप् च देवता ॥ नित्यक्लिन्ना ह्रीं च बीजं स्वहा शक्तिः समीरिता ॥ ६९१ ॥ क्लिन्नेति कीलकं प्रोक्तं हृदाद्यने समीरितम् ॥ द्वाभ्यांद्वाभ्यां च शेषाणि कुर्य्यादंगानि साधकः ॥ ६९२ ॥ हृदये दृग्द्वये कर्णद्वये नासाद्वयेपि च ॥ लिंगे गुह्ये पादयोश्च मन्त्रार्णान्क्रमतो न्यसेत् ॥ ६९३ ॥ अरुणामरुणाकल्पामरुणांशुकधारिणीम् ॥ अरुणस्रग्विलेपां तां चारुस्मेरमुखाम्बुजाम् ॥ ६९४ ॥ नेत्रत्रयोल्लसद्वक्त्रां भाले घर्माम्बुमौक्तिकैः ॥ विराजमानां मुकुटलसदर्धेन्दुशेखराम् ॥ ६९५ ॥ चतुर्भिर्बाहुभिः पाशमंकुशं पानपात्रकम् ॥ अभयं बिभ्रतीं पद्ममध्यासीनां मदालसाम् ॥ ६९६ ॥ ध्यात्वैवं पूजयेन्नित्यं प्रागुक्ते शक्तिपीठके ॥ त्रिकोणमादौ तस्यान्तः षट्कोणं बाह्यके लिखेत् ॥ ६९७ ॥ पद्ममाष्टदलं बाह्ये भूपुरेण च वेष्टितम् ॥ तत्र मध्ये यजेद्देवीं चन्दनादिभिरुत्तमैः ॥ ॥ ६९८ ॥ कर्णिकायोनि मध्यस्थदेशे वाग्वीशवह्निषु ॥ नैर्ऋत्यां पुरतो दिक्षु यजेदंगानि षट् क्रमात् ॥ ६९९ ॥ क्षोभिणीं मोहिनीं लोकां त्रिषु कोणेषु पूजयेत् ॥ नित्यां निरञ्जनां क्लिन्नां क्लेदिनीं मदनातुराम् ॥ मद-

द्रवां द्राविणीं च द्रावितां चाष्टपत्रके ॥ ७०० ॥ मदाविला मंगलां च मन्मथार्त्तां मनस्विनीम् ॥ महोन्मोदां मानमयीं माया मन्दां सितावतीम् ॥ द्वारपार्श्वेषु कोणेषु दिक्षु द्वादश पूजयेत् ॥७०१॥ देव्यग्रद्वारके वामे पार्श्वमारभ्य पूजयेत् ॥ लोकेशानपि तद्बाह्ये तदस्त्राणि ततो बहिः ॥ ७०२ ॥ ध्यात्वैवं प्रजपेल्लक्षमनुमेतं दशांशतः ॥ बन्धूकपुष्पैः स्वाद्वक्तैर्जुहुयाद्धविषाथ वा ॥ ७०३ ॥ तद्दशांशं कल्पयित्वा जलैः कर्पूरवासितैः ॥ आत्मानमभिषिच्याथ ब्राह्मणान्भोजयेत्ततः ॥ ७०४ ॥ वित्तभूषाम्बराद्यैश्च तोषयेद्गुरुमात्मनः ॥ सिद्धे मन्त्रे प्रकुर्वीत प्रयोगान्मन्त्रवित्तमः ॥ ७०५ ॥ ततो विद्याप्रयोगार्हो नित्यार्चानिरतस्तथा ॥ सहस्रजापी तद्भक्तः कुर्य्यादुक्तं न चान्यथा ॥ ७०६ ॥ पद्मै रक्तैस्त्रिमध्वक्तैर्होमाल्लक्ष्मीमवाप्नुयात् ॥ तथैव कैरवै रक्तैराज्ञश्च स्ववशं नयेत् ॥ ७०७ ॥ समानरूपवत्सायाः शुक्लाया गोः पयःप्लुतैः ॥ मल्लिकामालतीजातीशतपत्रैर्हुनेद्भवेत् ॥ स्वर्णाप्तिः स्तम्भनं शत्रोर्नृपादीनां क्रुधोपि च ॥ ७०८ ॥ आज्याक्तैः करवीरोत्थैः प्रसूनैराहुतैर्ध्रुवम् ॥ रक्ताम्बराणि वाणिज्यं भूतमर्त्यं वशं नयेत् ॥ भूषावाहनवाणिज्यसिद्धयः स्युः स्ववांछिताः ॥ ७०९ ॥ लवणैः सर्षपैर्गौरैरितरैर्वाथ होमतः ॥ तत्तैलाक्तैर्निशामध्ये त्वानयेद्वांछितां वधूम् ॥ ७१० ॥ तैलाक्तैर्जुहुयात्कृष्णदरपुष्पैः र्निशान्तरा ॥ मासादरातिस्तीव्रार्त्तिज्वरेण परिपीड्यते ॥ ७११ ॥ अरुष्कसुघृताक्तैस्तद्बीजैर्निशि च होमतः ॥ व्रणाः शरीरे नश्येयुर्दुस्साध्याश्च चिकित्सकैः ॥ ७१२ ॥ तैलेन दलितांगस्तु रिपुर्याति यमालयम् ॥ तथा तत्तैलसंसिक्तैर्बीजैरंकोलकैरपि ॥ ७१३ ॥ मारिचैः सर्षपाज्याक्तैर्निशि होमात्तु मानसे वांछितां वनितां कामज्वरार्त्तामानयेद्ध्रुवम् ॥ ७१४ ॥ मारिचैः सर्षपोपेतैः सप्तरात्रं हुतैर्निशि ॥ धनमानकुलैर्नित्यं दुष्प्राप्यामानयेद्वधूम् ॥ ७१५ ॥ अन्नाद्यैर्जुहुयान्नित्यं शतमष्टोत्तरं तु वा ॥ तेनान्नपूर्णे भवने भोक्ता च भवति ध्रुवम् ॥ तण्डुलैराज्ययुक्तैश्च होमाच्छालीनवाप्नुयात् ॥ ७१६ ॥ साध्यक्षवृक्षसम्भूतविष्टपादरजः कृताम् ॥ राजीमरीचलवणैर्जुहुयात्पुत्तलीं निशि ॥ प्रपदाभ्यां च जंघाभ्यांजानुभ्यामूरुयुग्मतः ॥ ७१७ ॥ नाभेरधस्तद्धृदया-

द्गलात्कण्ठात्तथैव च ॥ छित्त्वा शिरस्सुतीक्ष्णेन शस्त्रेण जुहुयात्क्रमात् ॥ एवं द्वादशधा होमान्नरनारीनराधिपाः ॥ ७१८ ॥ वश्या भवेयुः सर्वे हि ज्व-रार्त्ताश्चास्य वांछया ॥ प्रयान्ति निधनं चास्य वांछया नान्ययोगतः ॥ पिष्टेन गुडयुक्तेन मरिचैर्जीरकैर्युताम् ॥ ७१९ ॥ कृत्वा पुत्तलिकां साध्यज्ञानमुक्तामथो हृदि ॥ सनामहोमसम्पातघृते सम्पच्य तां पुनः ॥ स्पृशन्निजकराग्रेण सहस्रं प्रजपेन्मनुम् ॥ ७२० ॥ अभ्यर्च्य तद्घृता-क्तेन भक्षयेत्तद्धिया जपन् ॥ नरनारीनृपास्तस्य वश्यास्स्युर्मरणावधि ॥ ॥ ७२१ ॥ तैरेव पिष्टैर्वृत्तं तु कृत्वा तन्मध्यतस्तथा ॥ साध्यनामस्फुटं कृत्वा प्राग्वत्सम्पाच्य भक्षणात् ॥ ७२२ ॥ वैश्यास्ते वत्सरं भूयः स्वनामा-र्थान्वितैस्तथा ॥ कृत्वा विपच्य स्वादंस्तु वशयेत्तं तदर्थकम् ॥ ७२३ ॥ नारिकेरपयोभिस्तु तर्पणाद्वनिता वशा ॥ कर्पूरवासितैस्तोयैर्मनुष्यान्वशयेत्स्थि-तान् ॥ ७२४ ॥ तर्पणाल्लवणाम्भोभिस्सर्वे स्युस्तस्य किंकराः ॥ तथा लवणयुक्तेन तोयेन वनिता वशा ॥ ७२५ ॥ शुद्धेन वारिणा मासं तदर्धं तप्त-वारकान् ॥ तर्प्पयेद्यस्य नाम्नैवं स तस्य स्याद्वशेऽनिशम् ॥ ७२६ ॥ केतकीवासितैर्ज-म्बूयुतै रम्भाफलोदकैः ॥ तर्पणाद्वनिता वश्या दद्युः प्राणानपि प्रियान् ॥ ॥ ७२७ ॥ तर्पणाल्लवणाम्भोभिस्सतिलैः किन्नरा वशाः ॥ शुद्धेन वारिणा मासं तर्पणात्स्यान्निजं धनम् ॥ नमेरुवासितैस्तोयैस्तर्पणाद्भूमिपा वशाः ॥ ७२८ ॥ कस्तूरीवासितैस्तोयैस्तर्प्पणाद्भूमिपा वशाः ॥ चम्पकैर्वासितजलैस्तर्प्पणं सर्वर-ञ्जनम् ॥ ७२९ ॥ पाटलीशतपत्राभ्यां वासितैर्ज्जलतर्प्पणैः ॥ सर्वलोकचम-त्कारी ध्रुवं भवति नित्यशः ॥ ७३० ॥ कस्तूरीवासिताम्भोभिस्तर्प्पणं सर्वसिद्धि-कृत् ॥ इंद्रचन्दनसौरभ्यवासिताम्भः प्रतर्प्पणैः ॥ ७३१ ॥ वाञ्छितार्थसु-संसिद्धिस्तर्प्पयेद्वैरिमृत्यवे ॥ केवलोष्णोदकैस्तस्य तीव्रज्वरसमुद्भवः ॥ ७३२ ॥ निम्बपत्ररसोपेतैरम्बुभिस्तर्पणाद्द्विषाम् ॥ जायतेन्योन्यवैरुद्धयं येन ते नाशमा-प्नुयुः ॥ ७३३ ॥ तथैवात्युष्णसलिलैस्तर्प्पणाद्द्वेषिणो भृशम् ॥ अतीसा-रादिभिर्दोषैरुदग्रैर्रोगमाप्नुयुः ॥ सर्वविद्यास्वियं मुख्या देवी श्रीविद्यया समा

१ इदम्पूर्वान्वयि ॥ २ इदम्पूर्वान्वयि ॥

॥ ७३४ ॥ अथातः सम्प्रवक्ष्यामि नित्यक्लिन्नामनुं परम् ॥ ॐ ह्रीं मैमिति बीजानि नित्यक्लिन्ने मदद्रवे ॥ ७३५ ॥ ॐ ह्रीं स्वाहेति तिथ्यर्णो मंत्रोयं वाञ्छितार्थदः ॥ ऋषिः सम्मोहनश्छन्दो विराडुक्तं तु देवता ॥ नित्यक्लिन्नाभिधा देवी चतुर्वर्गफलप्रदा ॥ ७३६ ॥ विना वाग्भवबीजं तु द्विद्वियुग्मेषुबाणकैः ॥ समस्तेनांगषट्कं स्यान्नित्यक्लिन्नां स्मरेत्ततः ॥७३७॥ सुरासमुद्रमध्ये तु पृथुद्वीपं स्मरेद्बुधः ॥ तेजोमयं तत्र वनं नानाकल्पद्रुमान्वितम् ॥ ७३८ ॥ भृंगालिमंजुनादेन मंदवातेन सेवितम् ॥ मनोज्ञतृणपुष्पाद्यैर्युक्ते माणिक्यमण्डपे ॥ ७३९ ॥ रत्नसिंहासनं तस्य मध्ये राजत्रिकोणके ॥ तन्मध्येष्टदले देवीमुपविष्टां च संस्मरेत् ॥ ७४० ॥ शीतांशुचूडामरुणाम्भोजाभाम्बिभ्रतीं करैः॥ पाशांकुशौ कल्पवल्लीं कपालं दोर्युगेन च॥ वादयन्तीं कलां वीणां त्र्यक्षां नित्यां स्मराम्यहम् ॥ ७४१ ॥ इति ध्यात्वा यजेत्पीठं चतुश्शक्तियुतं सुधीः ॥ सयोनिकर्णिकं पद्ममष्टपत्रविराजितम् ॥ ७४२ ॥ आं द्राविण्यै च वामायै हृदुक्तैशानके यजेत्॥ ईं स्यादाह्लादकारिण्यै ज्येष्ठायै हृद्रुदासने ॥ ७४३ ॥ ऊं क्षोभिण्यै च रौद्र्यै च नमः पश्चिमकोणके ॥ ऐं गुह्यशक्त्यै हृत्प्रोक्तं यजेन्मध्ये त्रिकोणके ॥ ह्रीं सर्वशक्तिकमलासनाय हृदयान्ततः ॥ ७४४ ॥ पूज्यं त्रयोदशार्णेन देव्याश्चासनमुत्तमम् ॥ नित्यक्लिन्नां तत्र यजेद्वक्ष्यमाणेन वर्त्मना ॥ ७४५ ॥ केशरेष्वंगपूजा स्यात्पत्रेष्वेताः प्रपूजयेत् ॥ इं नित्यामीं सुभद्रां च मंगलां वनचारिणीम् ॥ ७४६ ॥ उऊं पूर्वा मे सुभगा मैं पूर्वा चापि दुर्भगाम् ॥ मनोन्मनी च ॐ पूर्वा मौं पूर्वारुद्ररूपिणीम् ॥ चतुर्थ्यन्तहृदन्तेन नाममन्त्रेण पूजयेत् ॥ ७४७ ॥ वल्लकी वादनपरा ह्यरुणा रक्ता मनोहरा ॥ मदमन्थरगामिन्यः सुभूषाश्चारुभूषणाः ॥७४८॥ हव्यञ्जनाढ्यं कामस्य बीजं बिन्दुद्वयान्वितम् ॥ उच्चार्य्य ङेहृदन्तांश्चानंगादीन्पूजयेत्क्रमात् ॥ ७४९ ॥ पञ्चपत्रेषु देव्यग्रप्रादक्षिण्येन ते तथा ॥ अनंगश्च स्मरो मन्मथाख्यः कामश्च मारकः ॥ पञ्चपुष्पेषुपाशाह्वनांकुशेक्षुधनुर्भृतः ॥ ७५० ॥ पृष्ठभागे भूषणयुक्ता शक्तिस्तत्पार्श्वसंस्थिताः ॥ भूषायुक्ताः

स्मरेद्वक्रकमलाः साधु पूजयेत् ॥ ७५१ ॥ ततो बाह्ये दशदले देव्यग्रादि-प्रदक्षिणम् ॥ षण्डान्तस्वरहीनश्च ककारं बिंदुभूषितत् ॥७५२॥ एकैकं पूर्व-मुच्चार्य्य ङेन्हृदन्तश्च नाम च॥अयन्तु पूजामन्त्रः स्यात्सर्वासां चाप्यनुक्रमात् ॥ ॥६५३॥रतिश्च विरतिः प्रीतिः विप्रीतिश्च मतिस्तथा ॥ दुर्मतिर्निर्धृतिर्विधृति-स्तुष्टिश्चापि वितुष्टिका॥ ७५४॥अरुणाभरणोपेता वीणाहस्ताः स्मिताननाः ॥ लोकपालास्ततो बाह्ये तदस्त्राणि ततो बहिः ॥ ७५५ ॥ वह्निलक्षं जपे-न्मत्रं तद्दशांशं हुनेत्पुनः ॥ घृतेन तर्प्पणाद्यं च कृत्वा संतोष्य देशिकम् ॥ ७५६ ॥ धनधान्यादिभिः सम्यक्प्रयोगानाचरेत्ततः ॥ पूर्वमन्त्रोदितान्सम्यक्पूर्वोक्तविधिना सुधीः ॥ ७५७ ॥ एवं यः पूजये-द्भक्त्या नित्यक्लिन्नां मनोहराम् ॥ प्राप्नोति महतीं लक्ष्मीं याच्यते प्रम-दाजनैः ॥ ७५८ ॥ षडाम्नायैश्चिरं सेव्या पारंपर्य्यं विचार्य्य च ॥ अथातोस्याः प्रवक्ष्यामि द्वादशार्णं महामनुम् ॥ ७५९ ॥ ऐं क्लीं बीजं समुच्चार्य्य नित्यक्लिन्ने मदद्रवे ॥ स्वाहान्तोयं मनुः प्रोक्तो मुनिः सम्मोहनो मतः ॥ ७६० ॥ छन्दो निवृत्समाख्यातं नित्यक्लिन्ना च देवता ॥ वाग्भ-वेन षडंगानि कृत्वा देवीं विचिन्तयेत् ॥ ७६१ ॥ रक्ताम्बरां रक्तवर्णां रक्तगन्धानुलेपनाम् ॥ कमलञ्च सृणिं पाशं कपालं बिभ्रतीं करैः ॥ ॥ ७६२ ॥ मदाकुलितसर्वांगीं त्रिनेत्रां शशिशेखराम् ॥ शाक्तपीठे यजेद्देवीं प्रोक्तांगानि पुरा यजेत् ॥ ७६३ ॥ पूर्वोक्ताश्च ततो बाह्ये शक्ती-र्नित्यादिका यजेत् ॥ अरुणा नीलकमलकपालाढ्यकराम्बुजा ॥ ॥ ७६४ ॥ शतक्रत्वादिकान्बाह्ये वज्रादींश्च ततः परम् ॥ अथ वक्ष्ये महाकालीं समस्तजनमोहिनीम् ॥ ७६५ ॥ आनीतां श्रीगणेशेन वाम-मार्गप्रचारिणीम् ॥ त्वरितं वाममार्गेण ह्यस्याः सिद्धिः प्रजायते ॥ ७६६ ॥ दिवोदासोच्चाटकरां दुर्गायां उत्तरास्थिताम् ॥ ॐ क्षेंक्ष्रेंक्रेंक्रेंश्च पशुं गृहाण-कवचं वदेत् ॥ अस्त्रं स्वाहा शक्रवर्णो मन्त्रः काल्या उदीरितः ॥ ७६७ ॥ न न्यासो न च मुद्रादिर्नात्र काचिद्विचारणा ॥ यथेष्टभक्ष्यपानाभ्यां मैथु-

१ इदं पूर्वान्वयि ॥ रतिं स याच्यते—इत्यर्थः । २ अत्र गौणे कर्मणि लः ॥

नेन प्रसीदति ॥ ७६८ ॥ उष्णतोयेन सम्पूर्णे कुम्भे चैवाथ कालिकाम् ॥ ब्राह्मयादिभिः शक्तिभिश्च युक्ता भक्त्या प्रपूजयेत् ॥ ७६९ ॥ पञ्चवक्त्रां महा-रौद्रीं प्रतिवक्त्रां त्रिलोचनाम् ॥शक्तिशूलधनुर्बाणखेटखड्गवराभयान् ॥ ७७० ॥ दक्षां दक्षभुजैर्देवीं बिभ्राणाम्भोगभूषिताम् ॥ ध्यात्वैवं सिद्धकः साध्यं साधये-न्मनसि स्थितम् ॥ ७७१ ॥ ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥ वाराही च तथेन्द्राणी चामुण्डा चण्डिकाष्टमी ॥ ७७२ ॥ प्रोक्ता ईशानपर्य्य-न्तं कुम्भकुक्षिस्थिता इमाः ॥ कार्त्तिकेया तमोदेवी महाकाली भयापहा ॥ ७७३ ॥ वर्णलक्षं जपेन्मन्त्रं घृताक्तैस्तिमिभिर्हुनेत् ॥ तर्पणादि ततः कृत्वा सिद्धो मन्त्रैः प्रजायते ॥ ७७४ ॥ नामोच्चारणसंरब्धरज्वा प्रज्वलितेनले ॥ जुहुयाद्वै-रिणः क्रुद्धो देवीमन्त्रं जपंस्तथा ॥ ७७५ ॥ समिधः पिचुमन्दस्य बिभीता ङ्गारहोमतः ॥ सप्ताहाद्वैरिणं हन्ति कालिकामन्त्रयोगतः ॥ ७७६ ॥ उच्चाटो ह्यपराह्णे च सन्ध्यायां मारणन्तथा ॥ दक्षिणस्यां दिशि स्थित्वा ग्रामादेर्द-क्षिणामुखः ॥ एतैरेव भवेद्धोमस्तत्तत्कर्म सुसिध्यति ॥ ७७७ ॥ अथातः सम्प्रवक्ष्यामि महागणपसेविताम् ॥ महाकृत्यां यथा नार्य्यः पातिव्रत्यव्र-ताच्च्युताः ॥ ७७८ ॥ नानाविधाश्चमत्कारा नारीभ्यश्च प्रदर्शिताः ॥ पातिव्रत्याङ्कुशितास्ताः पापराशिर्महानभूत् ॥ ७७९ ॥ स्त्रीषु कृत्यासु जातासु गार्हस्थ्ये भंगुरे सति ॥ पुरुषा यां समासाद्य गृहस्थाः सुखिनो-भवन् ॥ ७८० ॥ तां कृत्यां सम्प्रवक्ष्यामि गृहस्थाश्रममण्डनाम् ॥ ह्रीं महायोगिनीं प्रोच्य गौरीमुक्त्वा भुवेति च ॥ ७८१ ॥ न भयङ्करि हुञ्चेति मन्त्रोयं षोडशाक्षरः ॥ अङ्गिराश्च मुनिर्देवी गायत्री छन्द ईरितम् ॥ ७८२ ॥ एवं फडन्तं भुवनभयङ्करि शिरो मतम् ॥ पुनरेवन्त्रिरावृत्या षडङ्गानि समाच-रेत् ॥ ७८३ ॥ सिंहासीनां कृष्णमुखीं लम्बमानपयोधराम् ॥ दंष्ट्राकरा-लवदनां त्रिनेत्रां सर्वतोज्वलाम् ॥ ७८४ ॥ कृष्णकंचुकसंवीतां विधूमाग्निस-मप्रभाम् ॥ त्रिशूलचक्रचषकखट्वाङ्गवरपङ्कजाम् ॥ ७८५ ॥ लेलिहानां महाजि-ह्वां विद्युत्प्रेक्षणभीषणाम् ॥ ध्यात्वा कृत्यां विधानेनपूजयेन्मन्त्रवित्तमः ॥ ७८६ ॥

१ तस्येति शेषः ।

भीषणां श्रीमतीं देव्या अग्रादारभ्य पूजयेत् ॥ प्रतिष्ठाञ्च तथा विद्यां तद्वाह्ये तु चतुर्दले ॥ ७८७ ॥ पूर्वस्यां शाङ्करीं नाम शुभ्रवर्णाम्बरावृताम् ॥ द्विभुजां सौम्यवरदां पाशांकुशधरां शिवाम् ॥ ७८८ ॥ दक्षिणे मालिकां नाम लम्बजिह्वां भयंकरीम् ॥ पूजयित्वा जपेन्मन्त्रं नित्यमष्टोत्तरं शतम्॥७८९॥ लोकेशार्चादिकं बाह्ये नियोगोस्याथ कथ्यते ॥ कालं विदित्वा प्रतिमां मारणे चाप्यधोमुखीम् ॥ ७९० ॥ तस्याधोमेखलायुक्तं त्रिकोणं वह्निकोणके ॥ चन्द्रगौरं विधायाग्निं परिस्तीर्य्य शरैस्तृणैः ॥ ७९१ ॥ बिभीतकपरिध्या च कल्पयेद्वाऽस्य मारणे ॥ जुहुयान्निम्बतैलाक्तैः काकोलूकोत्थविट्कैः ॥७९२॥ दारयैनं शोषयैनं मारयेत्थं विधाय च ॥ अष्टोत्तरशतं चैव मनुना जुहुयाद्बुधः ॥७९३॥ होमान्ते विधिवत्कृत्वा मारणाग्नेश्च सन्निधौ ॥ यो मे कण्ठग्रहो वापि दूरस्थोप्यन्तिकेपि च ॥ विषक्रव्यमसृक्तस्येत्थमुक्त्वा च निवेदयेत् ॥७९४॥ संरक्ष्याग्निविधानेन नवरात्रं समापयेत् ॥ मृतस्तिष्ठति तेनाशं तावदस्य रिपोर्मतिः॥७९५॥अर्कक्षीरेण मरिचं पिष्ट्वा सिद्धार्थमेव च॥ जले सँल्लोड्य मन्त्रेण रिपुं ध्यात्वा निरुद्धदृक् ॥७९६॥ कृष्णाम्बरोत्तरीयोग्रपादेनाक्रम्य चेद्रिपुम् ॥ वज्रं शूलमिति ध्यात्वा अद्भिस्तस्योपरि क्षिपेत् ॥ नवरात्रान्तरे शत्रुर्म्रियते नात्र संशयः ॥७९७॥ हरसिद्धे चितावह्नौ तैलसिक्तैर्बिभीतकैः ॥ जुह्वतो म्रियते शत्रुः सत्यमौशनसोदितम् ॥ ७९८ ॥ रिपोः प्रतिकृतिन्ध्यात्वा साध्यर्क्षफलकेनले ॥ अर्कक्षीरेण मरिचं पिष्ट्वा तत्रैव लेपयेत् ॥ ७९९ ॥ फट्कारं हृदये कृत्वा शिवं निर्माय कूपके ॥ क्षिपेत्कृष्णचतुर्दश्यां जप्त्वा मन्त्रं सहस्रशः ॥ ८०० ॥ सद्योवगाहनं कृत्वा तस्यामेव च लक्षकम् ॥ मन्त्रं जप्त्वा विधानेन भेदयेच्छिन्नमुद्रया ॥ षण्मासान्म्रियते शत्रुः सन्ध्ययोरुभयोरपि ॥८०१॥ वायुना मुद्धृतं पत्रं शुष्कं बैभीतकन्ततः॥ गृहीत्वा विलिखेन्मन्त्री कृष्णसर्पास्यशोणितैः ॥ ८०२ ॥ नामधेयं रिपोरन्ते वायुबीजं नियोजयेत् ॥ लिखने तस्य गेहे तु काकवद्भ्रमते ध्रुवम्॥८०३॥ वातोद्धूतैः शुष्कपत्रैः काष्ठैरशनिपातितैः ॥ उष्ट्रास्थ्रा च शवाङ्गारैः शत्रो-

१ सन्निधरार्थः ॥

रुच्चाटनं भवेत् ॥ ८०४ ॥ दूर्वां गुडूचीं सम्मिश्य सर्पिषा तिलतण्डुलैः ॥ अन्नैः समिद्भिः पालाशैः शान्तिं कुर्य्याद्विचक्षणः ॥ ८०५ ॥ लक्ष्मीं बिल्वफलैः पत्रैर्नन्द्यावर्त्तैः श्रियं तथा ॥ रक्तपुष्पैरपामार्गैरिंगालैश्च समुद्रकैः ॥ मधुरत्रयसंसिक्तैरेभिः कुर्य्यात्तु वश्यकम् ॥ ८०६ ॥ शान्तिं कृत्वा विधानेन कृत्यामन्त्रमिमं जपेत् ॥ महाव्याधिप्रशमनं नित्यमष्टाधिकं शतम् ॥ ८०७ ॥ जपेदेकाग्रचित्तस्तु लोकवश्यकरं परम् ॥ मनसा चिन्तयेत्कृत्यां गजारूढां विहंगमाम् ॥ ८०८ ॥ तस्य वश्यम्भवेत्क्षिप्रमश्वारूढां तथा भजेत् ॥ चौरव्याघ्रमृगादीनां सलिलादिभयापहाम् ॥ ॥ ८०९ ॥ सप्ताभिमन्त्रितं तोयं पीत्वा मन्त्रसमाहितः ॥ मेधावी च भवेद्वाग्मी तावज्जप्त्वाभिषेकतः ॥ सप्ताभिमंत्रितं कृत्वा विषमप्यमृतम्भवेत ॥ ८१० ॥ पक्षं मासं द्विमासं वा षण्मासं वत्सरन्तु वा ॥ एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ॥ ८११ ॥ अथ वक्ष्ये महाशान्तिं सर्वोपद्रवनाशिनीम् ॥ वामाचारस्य सङ्गोप्त्रीं समस्तसुरतुष्टिदाम् ॥ ८१२ ॥ वाममार्गभवं पापं हरेत्पुण्यं विवर्द्धयेत् ॥ अकालमृत्युमथिनी सदा विजयवर्द्धिनी ॥ ८१३ ॥ आयुष्यपालिनी पुष्टिलक्ष्मीसौभाग्यवश्यकृत् ॥ ८१४ ॥ पुत्रदा पौत्रदा चैव लक्ष्मीमलविनाशिनी ॥ महाव्याधिप्रशामिनी ह्यपस्मारविनाशिनी ॥ ८१५ ॥ योगिनीभूतवेतालाः प्रेतकूष्माण्डपन्नगाः ॥ तत्र स्थाने न तिष्ठन्ति डाकिन्याद्या विशेषतः ॥ ८१६ ॥ कृत्यामभ्यर्चयेद्वस्त्रे यथाविधिपुरःसरम् ॥ षोडशारं लिखेत्पद्मं योनियुक्तं सबिन्दुकम् ॥ ८१७ ॥ तन्मध्येऽष्टदलं लेख्यमकारादि न्यसेत्क्रमात् ॥ तन्मध्ये रसकोणं तु लिखेन्मूलमनुं स्मरन् ॥ ८१८ ॥ चन्द्रबिम्बं लिखेत्पद्मं तस्योर्ध्वं प्रेतमालिखेत् ॥ न्यस्येत्तन्मध्यगं कुम्भं वस्त्ररत्नविभूषितम् ॥ ८१९ ॥ कुम्भमध्ये न्यसेत्कृत्यां सर्वलक्षणसंयुताम् ॥ अर्चयेच्च यथान्यायं पायसन्तु निवेदयेत् ॥ ८२० ॥ लोके शान्तां यजेद्देवीं तदग्रे होममाचरेत् ॥ जुहुयादाज्यसंसिक्तापामार्गतिलसर्पिषा ॥ ८२१ ॥ दूर्वाम्रखदिराश्वत्थैः प्रत्येकं तु शताष्टकम् ॥ कुण्डे च

१ एतत्पदचतुष्टयं पूर्वान्वयि ॥

स्थण्डिले वापि होमकर्म्म समाचरेत् ॥८२२॥ तस्य दक्षिणपार्श्वे तु लक्ष्मी-न्ध्यायेद्यथाविधि ॥ कुम्भमध्ये न्यसेद्देवीं दक्षिणे तु श्रियं स्मरेत् ॥ ८२३ ॥ वामपार्श्वे यजेद्देवीं हृल्लेखां परमेश्वरीम् ॥ तस्या वै वामपार्श्वे तु पूजयेद्गणना-यकम् ॥८२४॥ अयुतं मूलमन्त्रन्तु जपेन्मृत्युविनाशनम् ॥ लक्षं तु भ्रूण-हत्यायां मद्यपाने सहस्रकम् ॥ ८२५ ॥ गुरुद्रोहे कोटिमितं तथा चाष्टोत्तरं शतम् ॥ ब्रह्मद्रोहे तु प्रयुतं गुरुतल्पगमे तथा ॥ मदात्ययादधर्मादौ पञ्च-लक्षमितं जपेत् ॥ ८२६ ॥ वामे वा कौलिके मार्गे कापाले गन्तुमिच्छति ॥ सचादौ साधयेन्मन्त्रमिमं परिमलाह्वयम् ॥ ८२७ ॥ पापनाशकरो यस्मा-च्छत्रुभीतिनिवारकः ॥ गुरुदोषाः शिष्यदोषा अधर्म्मांगभवाश्च ये ॥ ते सर्वे नाशमायान्ति मनोरस्य जपे कृते ॥ ८२८ ॥ दक्षिणाचारनिष्ठोपि दुःखना-शाय सेवयेत् ॥ शष्कुल्यः फेणिका मुद्गा मांसन्तु वटकेण्डिराः ॥ ८२९ ॥ सौवीरं कांजिकं मद्यं स्वस्त्री शक्तिः प्रकीर्तिता ॥ वृन्ताकशाको मत्स्यार्थे वा-मादधिकसिद्धिदः॥८३०॥अथातः सम्प्रवक्ष्यामि विघ्नं त्रैलोक्यमोहनम्॥प्रप-ञ्चितं प्रपञ्चेपि शक्तिभिर्बहुधा तथा ॥ ८३१ ॥ दिवोदासस्य तपसा शाक्ते मार्गे न येविशन् ॥ तदा सम्मोहनो नाम केदारस्य तु पश्चिमे ॥ ८३२ ॥ गणेशोभूत्तदा तेन सम्पूर्णं मोहितं पुरम् ॥ तस्य मन्त्रं प्रवक्ष्यामि सोर्ध्वाम्नाये-न सिद्धिदम् ॥ ८३३ ॥ वक्रतुण्डैकदंष्ट्राय क्लीं ह्रीं श्रीं गं वदेत्ततः ॥ गणपतिं वरयुग्मं दान्तं सर्वजनं वदेत् ॥ ८३४ ॥ मे वशमानय स्वाहा त्रय-स्त्रिंशल्लिपिर्मनुः ॥ मुनिस्तु गणपः प्रोक्तो गायत्रं छन्द ईरितम् ॥ ८३५ ॥ त्रैलोक्यमोहनो विघ्नो देवता परिकीर्तितः ॥ रुद्रेषुपंचवेदांगनेत्रवर्णैर्मनोः क्रमात् ॥ ८३६ ॥ षडंगविधिरुद्दिष्टो ध्यानपूजादिकं ब्रुवे ॥ महागणेशवत्सर्वं प्रयोगादिकमाचरेत् ॥ ८३७ ॥

इति श्रीमहामायामहाकालानुमते मेरुतन्त्रे शिवप्रणीते
ऊर्ध्वाम्नायगणपतिमन्त्रप्रकाशः सप्तदशः ॥ १७ ॥

श्रीशिव उवाच ॥ अथातः सम्प्रवक्ष्यामि पूर्वाम्नायगणेश्वरान् ॥ ह्लेखां विरियुग्मं च गणपते वरद्वयम् ॥ १ ॥ दकारं सर्वलोकं मे वशमानय ठद्व- यम् ॥ पंचविंशाक्षरो मन्त्रः प्रोक्तोयं पुत्रपौत्रदः ॥ २ ॥ मुनिर्गणक आ- ख्यातश्छन्दो गायत्रमुच्यते ॥ देवताविरिविघ्नेशो दृष्टादृष्टफलप्रदः ॥ ३ ॥ वेदवेदेषु पंचार्णैः शरलोचनसंख्यकैः ॥ विभक्तैर्मूलमन्त्रार्णैः षडंगानि समा- चरेत् ॥ ४ ॥ सिन्दूराभं त्रिनयनं वामोर्ध्वपाशधारिणम् ॥ दक्षोर्ध्वे चांकुशं दक्षतले मध्ये कपालकम् ॥ ५ ॥ पुष्ट्या योनिं वामतलहस्तेनैव च बिभ्रतम् ॥ चन्द्रमौलिं हस्तिमुखं दक्षिणेन करेण च ॥ ६ ॥ पुष्ट्या लिंगितसर्वांगं स्पृशन्त्या वामपाणिना ॥ लिंगाग्रन्तु गणेशस्य ऊर्ध्वयोः करयोर्द्वयोः ॥ ७ ॥ सन्दधानं पद्मयुग्ममेवं गणपतिं भजेत् ॥ यजेत्पीठे पुरा प्रोक्ते नवशक्तिसमन्विते ॥ ८ ॥ मूलमंत्रेण क्लृप्तायां मूर्त्ता- वावाह्य पूजयेत् ॥ मिथुनानि यजेदादावामोदादीन्दिगम्बरान् ॥ ९ ॥ अंगानि पूजयेत्पश्चान्मातॄश्चैव ततः सुधीः ॥ अर्चयेल्लोकपालाँश्च तद- स्त्राणि ततो बहिः ॥ १० ॥ षडावरणसंयुक्तं विरिविघ्नेश्वरं यजेत् ॥ अथ मन्त्रान्तरं वक्ष्ये विरिविघ्नेश्वरस्य तु ॥ ११ ॥ वरद्वयं दकारञ्च तदा लोकप- दं वदेत् ॥ एकोनविंशत्यर्णोयं निवृच्छन्द उदाहृतम् ॥ १२ ॥ न्यासः षट्त्रिंशदर्णोक्त एकैकं बीजपूर्वकः ॥ अथ ध्यानं प्रवक्ष्यामि ह्यूर्ध्वादूर्ध्वकरेषु तुं ॥ १३ ॥ बीजपूरं गदां चापं चक्रं मालां च दक्षिणे ॥ वामे पद्मं पाशबाणान्रदं रत्नाढ्यकुम्भकम् ॥ १४ ॥ पद्मद्वयकरां पुष्टिमङ्कस्थामरुणप्र- भाम् ॥ आलिंगयन्तमरुणं स्रवन्मदकपोलकम् ॥ १५ ॥ त्रिनेत्रं पीतवसनं दृढ- मुत्थापितध्वजम् ॥ किरीटिनं कुण्डलिनं ध्यायेद्देवं गजाननम् ॥ १६ ॥ अथातः सम्प्रवक्ष्यामि ब्रह्मणा समुपासितम् ॥ काश्या बाह्ये च सौम्यस्थं विरिञ्चिगण- नायकम् ॥ १७ ॥ ह्रीं विरिञ्चिपदं प्रोच्य ङेन्तं गणपतिं पुनः ॥ प्राग्वद्वदे- द्वरादीनि षड्विंशत्यर्णको मनुः ॥ १८ ॥ वेदपञ्चेषुपञ्चेषुद्वयर्णैरुक्तं षड- ङ्गकम् ॥ ध्यानपूजादिकं प्राग्वद्विशेषादस्य साधकः ॥ १९ ॥ सङ्क्रान्सार्था- न्सकृच्छ्रुत्वा वेदान्पठति याज्ञिकः ॥ स्वयमेव प्रजायेत कर्त्ता हर्त्ता यथाविधि

॥ २० ॥ वेदे लक्षमिता प्रोक्ता सर्वेषां तु पुरस्क्रिया ॥ मधुरत्रयसंयुक्तैः पूर्वोक्तैरष्टभिर्हुनेत् ॥ २१ ॥ एवं साधितमन्त्रस्तु प्रयोगान्कर्त्तुमर्हति ॥ विकचोत्पलहोमेन वशयेत्सकलं जगत् ॥ २२ ॥ तिलतण्डुलहोमेन श्रियमाप्नोत्यनिन्दिताम् ॥ मोदकानाज्यसंयुक्तान्हुत्वा विजयमाप्नुयात् ॥ ॥ २३ ॥ मधुरत्रयहोमेन राजानं वशमानयेत् ॥ अभीष्टसाधनो होमो भक्ष्यभोज्यादिकैः कृतः ॥ २४ ॥ अथ शक्तिगणेशस्य त्र्यक्षरो मन्त्र उच्यते ॥ ह्रीं श्रीं ह्रीमितिच्छन्दोऽस्य विराड्डागेव उच्यते ॥ २५ ॥ मुनिर्देवः शक्तिगणेशोऽस्य मन्त्रस्य कीर्तितः ॥ षड्दीर्घभाजा बीजेन षडंगानि प्रकल्पयेत् ॥ २६ ॥ गजेन्द्रवदनं साक्षाच्चतुर्बाहुं सुचामरम् ॥ हेमवर्णं त्रिनेत्रं च पाशांकुशधरं विभुम् ॥ २७ ॥ स्वदन्तं दक्षिणे हस्ते बीजपूरञ्च वामके ॥ पुष्करे मोदकाश्चैव धारयन्तं त्वनुस्मरेत् ॥ २८ ॥ पूर्वोक्ते पूजयेत्पीठे तीव्रादिनवशक्तिके ॥ अष्टपत्राम्बुजे देवं चतुरस्रत्रयावृते ॥ २९ ॥ प्रथमांगावृतिः प्रोक्ता द्वितीया मातृभिः स्मृता ॥ तृतीया लोकपालैः स्याद्वज्राद्यैश्च चतुर्थिका ॥ ३० ॥ लक्षमेकं जपेन्मन्त्रं हविष्याशी जितेन्द्रियः ॥ तद्दशांशं प्रजुहुयादपूपैर्घृतसम्प्लुतैः ॥ ३१ ॥ एवं सिद्धमनुर्मंत्री काम्यकर्म्माणि साधयेत् ॥ शुक्लपक्षे चतुर्थ्यां तु पूजयित्वा विनायकम् ॥ ३२ ॥ अपूपैर्गुडसंमिश्रैः पक्वान्नैश्च घृतप्लुतैः ॥ मरिचैर्जीरकैश्चैव सैन्धवेन विमिश्रितैः ॥ ३३ ॥ देवस्य सन्निधौ मंत्री जुहुयात्त्रिसहस्रकम् ॥ गद्यपद्यमयी वाणी सप्ताहाद्भवति ध्रुवम् ॥ ३४ ॥ वश्यार्थी मधुहोमेन राजानं वशमानयेत् ॥ कन्यार्थी जुहुयाल्लाजैस्तन्नामायुतमन्त्रतः ॥ ३५ ॥ एकां कन्यामथो सप्त भोजयेल्लभते वधूम् ॥ चन्द्रसूर्य्यग्रहे प्राप्ते पलन्तु कपिलाघृतम् ॥ ३६ ॥ कर्षमात्रं वचाचूर्णं मिश्रीकृत्याभिमन्त्रयेत् ॥ पिबेत्तु नियतो भूत्वा देवताध्यानतत्परः ॥ ३७ ॥ यावज्जीवं भवेत्तावन्नाश्नीयात्किमपीह सः ॥ सप्ताहाज्जायते शीघ्रमपरो वाक्पतिर्यथा ॥ ३८ ॥ वन्ध्या तु स्नानदिवसे पूजयित्वा विनायकम् ॥ निष्कार्धपादमानेन हरिद्रां सैन्धवं वचाम् ॥ ३९ ॥ गोमूत्रे कुडवे पिष्ट्वा सहस्रमभिमन्त्रयेत् ॥ अन्नैः सुभक्ष्यभोज्यैश्च भोजयित्वा च कन्यकाः ॥ ४० ॥

गुरवे दक्षिणां दत्वा पिबेन्नारी तदौषधम् ॥ ततः सा लभते पुत्रं सर्वलक्षण-संयुतम् ॥ ४१ ॥ अथास्य भेदं वक्ष्यामि ताराद्यश्चतुरर्णकः ॥ ऋषिः शुक्रो निगदितश्छन्दो गायत्रमुच्यते ॥ ४२ ॥ देवता शक्तिगणपः सर्वसिद्धि-करः परः ॥ पूर्ववच्च षडंगानि ध्यानमस्य निरूप्यते ॥ ४३ ॥ हेमाभं हेमवस्त्रं च त्रिनेत्रं तुन्दिलं भुजैः ॥ पाशाक्षसूत्रदशनान्धारयन्तं तथांकुशम् ॥ ४४ ॥ पुष्करेण दधानञ्च मोदकं हेमभूषणम् ॥ मध्याह्नादित्यसंकाशं चारुशक्त्या समन्वितम् ॥ ४५ ॥ ततः पूर्वोदिते पीठे देवमावाह्य पूजयेत् ॥ प्रथमा-वृत्तिरंगैः स्याद्दलषट्के ततः परम् ॥ ४६ ॥ पद्मे चाष्टदले वक्रतुण्डादींश्च दलाग्रतः ॥ मातृकाः पूजयेद्बाह्ये भूपुरे लोकपालकान् ॥ ४७ ॥ आयुधानि च तद्बाह्ये प्राग्वच्छेषं समापयेत् ॥ लक्षमेकं जपेन्मन्त्रं तद्द-शांशं समाहितः ॥ ४८ ॥ जुहुयाद्घृतसंयुक्तैस्तिलैर्मन्त्रविदुत्तमैः ॥ तर्प्पणादि ततः कुर्य्यादेवं सिद्धो भवेन्मनुः ॥ ४९ ॥ काम्यकर्म्म ततः कुर्य्याद्देशिको यतमानसः ॥ आज्यान्नैर्जुहुयान्नित्यमन्नवान्वत्सराद्भवेत् ॥ ५० ॥ पायसाज्येन महतीं श्रियमाप्नोति मानवः ॥ रम्भातुल्यां लभे-त्कन्यामेनं यो भजते नरः ॥ ५१ ॥ अथातः सम्प्रवक्ष्यामि भेदमस्यार्कव-र्णकम् ॥ ह्रीं गं ह्रीं च महेत्युक्त्वा ङेन्तं गणपतिं पुनः ॥ ५२ ॥ स्वाहान्तोस्य भवेच्छन्दो गायत्रीपूर्विका निवृत् ॥ ऋषिर्गणक आख्यातो देवः शक्तिविना-यकः ॥ ५३ ॥ एकेनैकेन चैकेन सप्तभिर्द्वितयेन च ॥ समस्तेन च मन्त्रा र्णैरङ्गक्लृप्तिरिहोदिता ॥ ५४ ॥ मुक्तावलीचन्द्रधरं व्यालनेत्रं च दक्षिणे ॥ ऊर्ध्वाधरैः पद्मसृणी दधानं वाम ऊर्ध्वके ॥ ५५ ॥ दशकुम्भं तलस्थेन प्रिया-योनिं प्रसन्नयेत् ॥ नागवक्त्रं मणिमयं मुकुटं बिभ्रतं प्रभुम् ॥ ५६ ॥ एवं सञ्चिन्त्य विधिवत्साधकः सर्वसिद्धये ॥ यजेत्पूर्वोदिते पीठे विरिविघ्नेशवर्त्मना ॥ ॥ ५७ ॥ लक्षमेकं जपेन्मन्त्रमयुतं जुहुयात्ततः ॥ अपूपैर्घृतसंयुक्तैर्विधिवत्पू-जितेनले ॥ ५८ ॥ तर्प्पणं मार्जनं कृत्वा ब्राह्मणान्भोजयेत्ततः ॥ एवं सिद्धमनु-र्मन्त्री प्रयोगान्विधिवच्चरेत् ॥ ५९ ॥ इक्षुदण्डैः कृतो होमो राजलक्ष्मीं प्रयच्छति ॥ कदल्या नारिकेलैश्च होमो लोकवशङ्करः ॥ ६० ॥ सतिलैः

पृथुकैर्होमो राजानं वशमानयेत् ॥ सक्तुभिश्च कृतो होमो ब्राह्मणानां वशङ्करः ॥ ६१ ॥ सर्पिषा जुहुयात्सम्यग्धनधान्यादिसम्पदे ॥ पूर्वोक्ताश्चापि कर्तव्याः प्रयोगाः साधकैरिह ॥ ६२ ॥ अथान्यं सम्प्रवक्ष्यामि मन्त्रं शक्तिगणेशितुः ॥ ॐ ह्रींगं ह्रीं च वशमानय स्वाहा भवाणर्कः ॥ ६३ ॥ पूर्वोदितास्तु मुन्याद्या मन्त्रार्णैरङ्गकल्पनम् ॥ एकेन द्वित्रियुग्मेन मन्त्रार्णेन समेन च ॥ बन्धूकाभं त्रिनेत्रं च नागास्यं शशिशेखरम् ॥ भोगिमालं गुणसृणी वरेक्षून्हस्तपंकजैः ॥ ६४ ॥ दधानं शुण्डया स्पृष्टभगं चालिङ्गितं तथा ॥ श्यामलाङ्ग्या लिङ्गपद्महस्तया भावयेद्धृदि ॥ ६५ ॥ पूर्वोक्तपीठे पूर्वोक्ता पूजा कार्य्या मनीषिणा ॥ लक्षत्रयं जपेन्मन्त्रमपूपैस्तद्दशांशतः ॥ घृताप्लुतैश्च जुहुयात्तर्पणादि ततश्चरेत् ॥ ६६ ॥ ततो निजगुरुं ध्यात्वा धनधान्यैश्च तोषयेत् ॥ ततः काम्यप्रयोगास्तु तत्कल्पोक्तान्प्रसाधयेत् ॥ ६७ ॥ स्वादुत्रयाप्लुतापूपैर्होमैः कान्तावशङ्करः ॥ शक्तिं विना गणेशो न शक्तिश्चापि न तं विना ॥ ६८ ॥ तस्माद्बुधैः साधनीयः सर्वथा शक्तिसङ्गमः ॥ तस्मादादौ प्रवक्ष्यामि शक्तिं श्रीभुवनेश्वरीम् ॥ ६९ ॥ ह्रीमित्येकाक्षरं बीजं तस्या मन्त्रः प्रकीर्त्तितः ॥ ऋषिः शक्तिर्वशिष्ठश्च सूतश्छन्दोस्य कथ्यते ॥ ७० ॥ गायत्री देवता बोधसंविद्राज्ञ्या कलापरा ॥ हकारस्तु भवेद्बीजमीकारः शक्तिरुच्यते ॥ ७१ ॥ रेफस्तु कीलकं प्रोक्तं नियोगोखिलसिद्धये ॥ षड्दीर्घयुक्तबीजेन षडंगानि समाचरेत् ॥ ७२ ॥ संहारमातृकां सृष्टिमातृकां विन्यसेत्ततः ॥ देव्येकतापादनाय मन्त्रन्यासोथ वक्ष्यते ॥ ७३ ॥ भाले ह्रीं ह्रल्लेखायै मुखे ह्रं भगनाम च ॥ ह्रं रक्ता हृदये स्थाप्या गुदे ह्रीं च करालिका ॥ ७४ ॥ ह्रुं पादयोर्महोच्छुष्मा पञ्चवक्त्रेषु विन्यसेत् ॥ ऊर्ध्वोदग्याम्यपूर्वाशाप्रत्येकस्थेषु च क्रमात् ॥ ७५ ॥ न्यस्येत्कण्ठे च गायत्रीं सावित्रीं वामगे कुचे ॥ सरस्वतीं दक्षकुचे ब्रह्माणीं वामगेंसके ॥ ७६ ॥ हृदि विष्णुं महेशं च दक्षिणेंसे प्रविन्यसेत् ॥ ब्रह्माणं विन्यसेद्भाले गायत्र्या सहितं सुधीः ॥ ७७ ॥ विष्णुं कपोलदेशे तु सावित्र्या सहितं न्यसेत् ॥ महेशं वामगण्डे च वागीश्वर्य्या युतं न्यसेत् ॥ ७८ ॥ वामे धनपतिं युक्तं श्रिया श्रोत्राग्रके न्यसेत् ॥ ७९ ॥ स्मरं रत्या युतं वक्त्रे गणं

पुष्ट्या युतं न्यसेत् ॥ दक्षश्रोत्राग्रके मन्त्री निधी शक्तियुतौ न्यसेत् ॥ ८० ॥ अधःकपोलान्तरयोर्वक्त्रमूले न्यसेत्ततः ॥ गलमूले कुचयुगे वामांसे हृदि-दक्षिणे ॥ ८१ ॥ अंसे पार्श्वयुगे चैतान्न्यसेन्मन्त्री समाहितः ॥ न्यस्येन्मातृरष्ट भाले चांसे पार्श्वे तथोदरे ॥ ८२ ॥ पार्श्वे चांसे च मन्त्रज्ञस्तथा पादे गले हृदि ॥ व्यापयेन्मूलमन्त्रेण तनुं देवीं ततः स्मरेत् ॥ ८३ ॥ उद्यदादित्यरुचिरां शीतांशुकृतशेखराम् ॥ पद्मासनां त्रिनेत्रां च पाशांकुशवराभयैः ॥ अलं-कृतचतुर्बाहुं मन्दस्मितलसन्मुखीम् ॥ ८४ ॥ कुचभारविनम्राङ्गलतां देवीं हृदि स्मरेत् ॥ आदौ कृत्वा तु षट्कोणं तद्बाह्येऽष्टदलाम्बुजम् ॥ ८५ ॥ तद्बाह्ये षोडशदलं चतुरस्रत्रयं बहिः ॥ चतुर्द्वारसमोपेतं मण्डलं प्रोक्तमुत्तमम् ॥ ॥ ८६ ॥ तत्र पीठं यजेत्पूर्वं नवशक्तिसमन्वितम् ॥ जया च विजया चैवा-जिताख्या चापराजिता ॥ ८७ ॥ नित्या विलासिनी दोग्ध्री ह्यघोरा मङ्गला ततः ॥ एतास्तु शक्तयः पूज्याः केशरेषु च मध्यके ॥ ८८ ॥ दद्यान्मूले-नासनं तु मूर्तिं तेनैव कल्पयेत् ॥ देवीमावाहयेत्तस्यामङ्गावरणसंयुताम् ॥ ८९ ॥ पाशांकुशवराभीतिधरा भूतनिभाश्च ताः ॥ हृल्लेखाद्या समभ्यर्च्य विविधा-भरणोज्ज्वलाः ॥ ९० ॥ मध्याग्नेयाम्योदक्प्रत्यक्स्थानेषु क्रमतस्तथा ॥ अग्नी-शासुरवायव्यकोणेष्वग्रेहृदादिकान् ॥ ९१ ॥ यजेदनन्तथाशासु कोणाग्रे मिथु-नानि च ॥ गायत्रीमरुणाभासामरुणाकल्पभूषिताम् ॥ ९२ ॥ चतुर्मुखीं करैर्दण्डं कुण्डिकामक्षमालिकाम् ॥ अभीतिं बिभ्रतीं तद्वद्ब्रह्माणं पुरतो यजेत् ॥ ९३ ॥ सावित्रीं हस्तकमलैरारिशंखगदाम्बुजम् ॥ बिभ्राणां पीतवसनां केयूराङ्गदभूषि-ताम् ॥ ९४ ॥ किरीटहाररशनानूपुरैरुपशोभिताम् ॥ तादृग्रूपमयं विष्णुं रक्षःकोणाग्रके यजेत् ॥ ९५ ॥ शुभ्रां त्रिनेत्रामभ्यन्तः शुभ्रवस्त्रविरा-जिताम् ॥ टङ्काक्षसूत्राभयदवरयुक्तां चतुर्भुजाम् ॥ ९६ ॥ सरस्वतीं यजे-द्वायोः कोणे चेशं च तादृशम् ॥ लक्ष्मीं प्रियांकसंस्थां च दक्षेणालिङ्ग्य बाहुना ॥ ९७ ॥ पतिं कामेन कमलं धनदं च पृषोदरम् ॥ पीतं रत्नघटं रत्नकरञ्जं बिभ्रतीं यजेत् ॥ ९८ ॥ आग्नेये रमणांकस्थां रतिं सव्येन

१ इदं पूर्वान्वयि ॥

पाणिना ॥ आलिङ्ग्य रमणं पद्ममन्यतो दधतीं स्मरेत् ॥ बन्धूकाभं बाणगुण-सृणिचापकराञ्चकम् ॥ ९९ ॥ ऐशान्यां पूजयेत्सम्यग्विघ्नराजं प्रियान्वितम् ॥ सृणिपाशधरं कान्तावराङ्गस्पृक्करांगुलिम् ॥ १०० ॥ माध्वीपूर्णकपालाढ्यं विघ्नराजं दिगम्बरम् ॥ पुष्करे विगलद्रत्नस्फुरच्चषकधारिणम् ॥ ॥ १०१ ॥ सिन्दूरसदृशाकारामुद्दाममदविह्वलाम् ॥ धृतरक्तोत्पलामन्यपाणिना तद्ध्वजस्पृशम् ॥ आश्लिष्टकान्तामरुणां पुष्टिमर्चेद्दिगम्बराम् ॥ १०२॥ कर्णिकायां निधिं पूज्य षट्कोणस्याथ पार्श्वयोः॥आद्या त्वनङ्गकुसुमा ह्यनङ्ग-कुसुमातुरा॥१०३॥ अनङ्गमदनान्या तु ह्यन्या भुवनपालिनी ॥ षष्ठी गगनवेगा स्याच्छशिशीर्षा च सप्तमी ॥ १०४ ॥ अन्ते गगनरेखेषु पत्रेषु परितः स्थिताः ॥ पाशांकुशवराभीतिकरा रक्ताः सुभूषिताः ॥ १०५ ॥ ततः षोडशपत्रेषु कराली विकरालिका ॥ सरस्वती श्रीर्दुर्गोमा लक्ष्मीश्रुत्यौ स्मृति-र्धृतिः ॥ १०६ ॥ श्रद्धा मेधा मतिः कान्तिराख्याः षोडशशक्तयः ॥ खड्ग-खेटकधारिण्यः श्यामाः पूज्याः प्रदक्षिणैः ॥ १०७ ॥ ब्राह्म्याद्यास्तद्बहिःपूज्य-पत्रसन्धिषु दिक्क्रमात् ॥ पश्चाद्बहिः समभ्यर्च्याः शक्तयः परिचारिकाः ॥ १०८ ॥ अनङ्गरूपानङ्गादिमदना मदनातुरा ॥ तथा भुवनवेगा स्या-दग्रे भुवनपालिका ॥ १०९ ॥ षष्ठी च सर्वशिशिरा तदग्रे नंगवेदना ॥ अनङ्गमेखला चेति तद्बाह्ये तु दिगीश्वरान् ॥ ११० ॥ रक्तां रक्तोज्ज्वला-कल्पां रक्तान्तायतलोचनाम् ॥ रक्तोत्पलकरां वामे दक्षिणे क्रमतस्त्विदम् ॥ १११ ॥ चषकं तालवृन्तं च ताम्बूलं छत्रचामरे ॥ दर्प्पणं चांशुकं पुष्पं बिभ्राणां दक्षिणैः करैः ॥ ११२ ॥ वज्रादीन्यपि तद्बाह्ये पूजयेच्चोत्तमोत्तमे॥ कार्प्ये दिव्यावृते चित्ते चतुर्भिरपि चोत्तमा ॥ ११३ ॥ हृल्लेखाद्यैस्तदङ्गैश्च लोकपालैस्तदायुधैः ॥ मध्यास्त्वावरणैः पूजाङ्गलोकेशतदस्त्रकैः ॥ ११४ ॥ द्वाभ्यां कनिष्ठाङ्गलोकपालाभ्यां सा प्रवासके ॥ अनन्यगतिका पूजा ह्यंगेनैकेन कीर्त्तिता ॥ ११५ ॥ पूजालोपं न कुर्वीत भुवनेश्याः कदाचन ॥ सन्ध्या-लोपे यथा पापं पूजालोपे तथा भवेत् ॥ ११६ ॥ सप्ताहपूजालोपे तु शापः पतति दारुणः ॥ शुक्रे तु दक्षिणी वामी रवौ पूजां न लोपयेत् ॥ ११७ ॥

सप्तशुक्रं मानवो यो निष्पूजो भवतीह सः ॥ द्वात्रिंशल्लक्षमानेन जपेन्मन्त्रं समाहितः ॥ ११८ ॥ तद्दशांशं हुनेदष्टद्रव्यैस्त्रिस्वादुसंयुतैः ॥ तर्प्पणादि ततः कुर्य्यान्मन्त्री शास्त्रोक्तवर्त्मना ॥ ११९ ॥ अथान्यदपि मन्त्रस्य पुरश्चरणमुच्यते ॥ एकलिङ्गे शिवागारे दक्षिणामूर्तिमाश्रितः ॥ १२० ॥ बद्धपद्मासनो भस्मशायी च कुशविष्टरः ॥ कृष्णाष्टमीं समारभ्य यावत्कृष्णा चतुर्दशी ॥ १२१ ॥ नित्यमिष्ट्वा शिवं शक्तिं जपेन्मन्त्रं सहस्रकम् ॥ दधिक्षौद्रघृताभ्यक्ता व्याघातसमिधो हुनेत् ॥ १२२ ॥ ततः साग्रसहस्रेण ध्यायेत्सर्वेश्वरीमुखीम् ॥ ततः सिद्धो भवेन्मन्त्रो नात्र कार्य्या विचारणा ॥ १२३ ॥ अश्वत्थोदुम्बरप्लक्षन्यग्रोधसमिधस्तथा ॥ तिलसर्षपदुग्धाज्यद्रव्याण्यष्टमितानि च ॥ १२४ ॥ प्रतिद्रव्यन्तु होमेस्य ह्ययुतानां चतुष्टयम् ॥ एवं सिद्धमनुर्मन्त्री सर्वान्कामान्प्रसाधयेत् ॥ १२५ ॥ नित्यं सौभाग्यदं पञ्चविंशज्जप्त्वाभिषेचनम् ॥ मेधावी च भवेद्वाग्मी तावज्जप्ताम्बुपानतः॥ १२६ ॥ जिह्वाग्रे न्यस्य सञ्जप्तं वाक्सिद्धिः कविता भवेत् ॥ तज्जप्तमञ्जनं वश्यं कर्पूरागुरुमिश्रितम् ॥ १२७ ॥ सासृग्भस्मारुणालेपैर्वश्याय तिलकक्रिया ॥ जानुमात्रजले स्थित्वा निश्चलो मीलितेक्षणः ॥ जपेत्सहस्रं तद्वाग्यामिष्टामाकर्षयेत्स्त्रियम् ॥ १२८ ॥ लाजैः कन्यामवाप्नोति तिलैरारोग्यमश्नुते ॥ पुष्टिमान्दधिहोमेन तण्डुलैश्च तथा भवेत्[1] ॥ १२९ ॥ ब्राह्मीरसयुताँल्लाजान्वचया च समन्वितान् ॥ त्रिसहस्रेणाभिसंमन्त्र्य मासमेकं प्रभक्षयेत् ॥ बृहस्पतिसमो मन्त्री सर्वविद्याधिपो भवेत् ॥ १३० ॥ अश्वत्थसमिधः स्वादुयुक्ता हुत्वा द्विजानसौ ॥ वशयेत्पद्महोमेन राज्ञस्तन्मन्त्रिणस्तथा ॥ १३१ ॥ कुमुदैराजपत्न्याश्च ब्रह्मक्षेत्रजसूनकैः ॥ तण्डुलानां पिष्टकृतां प्रतिमां स्वादुसंयुताम् ॥ ॥ १३२ ॥ कृतप्राणप्रतिष्ठां तां सञ्जप्तां मनुनामुना ॥ भक्षयेत्तामर्कवारे ततः कुर्य्याद्वशं नरम् ॥ राजानं प्रमदां वापि यंयं वाञ्छत्यनुत्तमम् ॥ १३३ ॥ फलके भस्मना शक्तिं ससाध्यां सुलिखेत्सुधीः ॥ गार्भिण्यै दर्शयेदाशु सा सुखप्रसवा भवेत् ॥ १३४ ॥ अभिषेकविधानं तु वक्ष्यते वाञ्छितार्थदम् ॥

१ वश्यकरमित्यर्थः ॥

मण्डपे मण्डलं कुर्य्याद्देवीपीठान्वितं शुभम् ॥ १३५ ॥ यथावत्पीठमभ्यर्च्य कलशान्विन्यसेत्सुधीः ॥ कर्णिकायां दलाग्रे तु स्वर्णरौप्यसुताम्रजान् ॥ ॥ १३६ ॥ मार्त्तिकांस्तत्र विन्यस्य पञ्चैकं वापि तन्त्रवित् ॥ महता वाद्यघोषेण मनुना स्थापयेत्सुधीः ॥ पूर्वोक्तैरुपचारैस्तु निजेष्टायै च मन्त्रवित् ॥ ॥ १३७ ॥ घटेष्वेषु च सम्पूज्या मातरो दिक्क्रमाद्बुधैः ॥ यदि स्युः पञ्चकलशा मध्यादिषु यजेत्क्रमात् ॥ १३८ ॥ हृल्लेखाद्याः पञ्च सुधीरभिषिञ्चेत्तदुत्तरम् ॥ प्रथमं घृतकुम्भेन कषायेण ततः परम् ॥ १३९ ॥ तैलेन च कषायेण मधुना च ततः परम् ॥ द्विजवृक्षत्वचः क्वाथैरभिषिञ्चेत्ततः सुधीः ॥ १४० ॥ द्वारकुम्भदलैः पश्चादन्तराले समाचरेत् ॥ वक्त्रहस्तपदक्षालाचमनान्यपि मन्त्रवित् ॥ १४१ ॥ एकैककलशस्नानानन्तरं पुनरेव हि ॥ कारयेत्तेन नीरेण त्वेवं शक्तो नरो भवेत् ॥ १४२ ॥ ब्राह्मणान्भोजयेन्नानाविधैर्भक्ष्यैश्च तोषयेत् ॥ प्राप्नोति महतीं लक्ष्मीं सर्वदा विजयी भवेत्॥ १४३॥ पलाशाश्वत्थबिल्वानां फलं ग्राह्यं पलार्धकम् ॥ अग्निमन्थलक्षसेव्यनाम्नोः कर्म्म विदुत्तमः ॥ १४४ ॥ प्रसारिणीकाश्मरिकारोहिणीनां तदर्धकम् ॥ उदुम्बरीपाटलीन्दुकुभागाः परिकीर्तिताः ॥ १४५ ॥ बृहत्क्वाथोदकेनैव पूरयेत्कलशं ततः ॥ आप्नोति प्रतिवर्षं च सेकाद्दीर्घायुरुत्तमम् ॥ १४६ ॥ सुन्दरोनामयश्चैव सहितस्तेजसा रविः ॥ कमला किङ्करी तस्य तं दृष्ट्वा विविधाभयाः ॥ नश्यन्ति वर्धते तस्य धनं धान्यसमाकुलम् ॥ १४७ ॥ सर्वे देवा नमस्यन्ति तं दृष्ट्वा फणिनोपि वै॥ न दशन्ति च तत्पुत्राः शयानाः पथिसाधकम् ॥ १४८ ॥ अथ चात्र प्रवक्ष्यामि त्र्यक्षरं मन्त्रमुत्तमम् ॥ ऐंह्रींश्रीमिति पूर्वोक्ता मुन्याद्याश्चात्र कीर्त्तिताः ॥ आद्याद्येन च मध्येन दीर्घषट्कान्वितेन च॥अंगुल्यादिषडङ्गानि शेषन्यासाश्च पूर्ववत् ॥ १४९ ॥ बन्धूकाभां त्रिनयनां चन्द्रार्धकृतशेखराम् ॥ रत्नपात्रं वामहस्ते दक्षे पद्मं ततो मनुम् ॥ १५० ॥ जपेद्द्वादशलक्षं च जुहुयात्तद्दशांशतः ॥ त्रिस्वादुयुक्तहविषा तर्प्पणादि ततश्चरेत् ॥ १५१ ॥ ततः प्रयोगान्कुर्वीत मन्त्री स्वेष्टफलाप्तये ॥ ब्रह्मवृक्षप्रसूनैश्च होमो लक्ष्मीप्रदो मतः ॥ १५२ ॥ सञ्-

पाद्वत्सरं ब्राह्मीसर्पिःपानात्कवित्वभाक् ॥ गौरसर्षपयुग्लोणहोमस्तु वशयेत्त्रि-यम् ॥ नरं नरपतिं वान्यं वशयेन्नात्र संशयः ॥ १५३ ॥ आरग्वधोत्थैः कुसुमैः संसिक्तैश्चन्दनाम्भसा ॥ दुकूलयुक्तै रत्नौघै राज्यलक्ष्मीं च विन्दति ॥ १५४ ॥ तिलतण्डुलसम्मिश्रैर्होमात्पूर्वोदितं फलम् ॥ पूर्वोदितान्प्रयोगांश्च कुर्य्यादत्रापि साधकः ॥ एवमाराधितो मन्त्रो भुक्तिमुक्तिप्रदायकः ॥ ॥ १५५ ॥ अथान्यं त्र्यक्षरं वक्ष्ये द्रुतं वाग्विभवप्रदम् ॥ ऐंह्रींऐमिति मुन्याद्या ज्ञेयाः पूर्वोदितास्तथा ॥ १५६ ॥ आद्यन्तपुटितेनैव दीर्घयुग्मध्यमेन च ॥ जातिभाञ्जि षडङ्गानि विदध्यान्मन्त्रवित्तमः ॥ १५७ ॥ एकाक्षरोदितं न्यासं कुर्य्यान्मन्त्रविदुत्तमः ॥ उद्यद्द्युतिं त्रिनयनां पीनवक्षोजनामिताम् ॥ ॥ १५८ ॥ पद्मं च रत्नपात्रं च ह्यभयं च वरं तथा ॥ हस्तैर्दधानां रक्ताब्जसंस्थां च शशिशेखराम् ॥ मुक्ताहारसमायुक्तां भावयेद्भुवनेश्वरीम्॥ १५९॥ एकाक्षरोदिते पीठे पूजयेद्भुवनेश्वरीम् ॥ पूर्वोक्ताः पूर्ववत्पूज्या हृल्लेखाद्याश्च मन्त्रिणा ॥ १६० ॥ सम्पूजयेत्कोणषट्के पूर्ववन्मिथुनानि च ॥ किञ्जल्केषु षडङ्गानि पूजयेच्च दलेषु ताः ॥ ब्राह्मयाद्या निजनाथाङ्कस्थिताः स्मेराननालसाः ॥ १६१ ॥ असिताङ्गो रुरुश्चण्डःक्रोधोन्मत्तौ कपाल्यथ ॥ विभीषणश्च संहारः प्रोक्तास्तत्पतयास्त्विमे ॥ १६२ ॥ शूलं कपालं प्रेतं च क्षुद्रदुन्दुभिमेव च ॥ १६३ ॥ बिभ्राणाः पाणिभिर्हस्तैस्त्वग्वस्त्रा भीमविग्रहाः ॥ स्मर्तव्या वक्रकेशाश्च पूजाकाले सुमन्त्रिणा ॥ १६४ ॥ दीर्घाद्या मातरः पूज्या ह्रस्वाद्या भैरवास्तथा ॥ तद्बाह्ये स्वरपत्रेषु करालाद्याः पुरोदिताः ॥ ॥ १६५ ॥ पूज्यास्त्वनङ्गरूपाद्या लोकेशा हेतिभिः सह ॥ मनुं जपेत्त्रिलक्षं ब्रह्मवृक्षप्रसूनकैः ॥ १६६ ॥ त्रिमध्वक्तै राजवृक्षपुष्पैर्वा तद्दशांशतः ॥ जुहुयात्तर्प्पणादीनि कुर्य्यान्मन्त्रस्य सिद्धये ॥ १६७ ॥ एवं सूक्तविधानेन यो भजेद्भुवनेश्वरीम् ॥ मदविह्वलयोषाः स राज्ञश्च वशयेत्सुधीः ॥ एकाक्षरोदितान्सर्वान्प्रयोगानाचरेत्तथा ॥ १६८ ॥ अथान्यं सम्प्रवक्ष्यामि त्र्यर्णयन्त्रादिसिद्धिदम् ॥ ओंह्रींक्रोमिति वह्न्यर्णो मुन्याद्येकाक्षरोदितम् ॥ ॥ १६९ ॥ कल्पयेन्माययाङ्गानि ध्यानमत्र निरूप्यते ॥ अंकुशं च गुणा-

भीतिवरांश्च दधतीं करैः ॥ कमलस्थां प्रोद्यदर्ककान्तिं हृदि विभावयेत् ॥ ॥ १७० ॥ पूर्वोदिते यजेत्पीठे हृल्लेखाद्या यथा पुरा ॥ किञ्जल्केषु षडङ्गानि ब्राह्मयाद्या दलमध्यतः ॥ १७१ ॥ ततः शक्रादयो बाह्ये हेतयोऽर्च्यास्तु तद्बहिः ॥ एवं यः पूजयेद्भक्त्या स भवेत्तु कुबेरवत् ॥ १७२ ॥ अनुरक्ताः सर्वलोका भवेयुस्तस्य मन्त्रिणः ॥ मन्त्रं जपेल्लक्षमेकं जुहुयात्तत्सहस्रकम् ॥ १७३ ॥ त्रिस्वादुयुग्दुग्धवृक्षसमिद्भिः भक्तसङ्ग्रहया ॥ शुक्लैस्तिलैः पयोयुक्तैस्तर्पणादि ततश्चरेत् ॥ १७४ ॥ अश्वत्थोदुम्बरप्लक्षवटाश्चत्वार एव च ॥ होमे वृक्षाः समाख्याताः प्रत्येकं षट्सहस्रकम् ॥ १७५ ॥ होमोयं स्यादागमेन चतुर्विंशतिसङ्ख्यकः ॥ सहसा सूर्य्यसद्दशस्तेनाधिष्ठितमन्दिरम् ॥ १७६ ॥ रजन्यां निष्प्रदीपं च प्रदीपशतसंकुलम् ॥ विलोक्यते सर्वजनैरेतन्मन्त्रप्रसादतः ॥ १७७ ॥ लवणैर्मिश्रसिद्धार्थैं रजन्या च घृतप्लुतैः ॥ जुहुयाच्चैव राजानं राजपत्नीं वशं नयेत् ॥ १७८ ॥ अन्नहोमेन मन्त्रज्ञः समृद्धान्नगृहो भवेत् ॥ विकचोत्पलहोमेन लक्ष्मीरेनं न सन्त्यजेत् ॥ १७९ ॥ चतुरंगुलपुष्पैश्च होमः स्यात्कवितापदः ॥ तिलहोमेन पापानां नाशो मन्त्रिण एव हि ॥ १८० ॥ आयुष्कामो घृतेनैव जुहुयान्मन्त्रवित्तमः ॥ पूर्वोदितान्प्रयोगांश्च कुर्य्यादत्रापि मन्त्रतः ॥ अस्मिन्सिद्धे मनौ मन्त्री भुक्तिं मुक्तिमवाप्नुयात् ॥ १८१ ॥ अथातः सम्प्रवक्ष्यामि वक्रतुण्डाय हुंमिति ॥ सर्वसिद्धिकरो मन्त्रः प्रोक्तश्चायं षडक्षरः ॥ १८२ ॥ अस्यं तु कवचं श्रीभिर्जप्तव्यं सर्वसिद्धिदम् ॥ भार्गवो मुनिराख्यातोऽनुष्टुप्छन्द उदाहृतम् ॥ देवता वक्रतुण्डोऽस्य सुरासुरनमस्कृतः ॥ १८३ ॥ विधाय मूलमन्त्रेण करशुद्धिं जितेन्द्रियः ॥ षड्भिर्मन्त्रगतैर्वर्णैः षडङ्गानि प्रकल्पयेत् ॥ १८४ ॥ भ्रूमध्ये कण्ठहृदये नाभ्यामाधारके तथा ॥ षडक्षराण्यथो न्यस्य सर्वेण व्यापकं तथा ॥ १८५ ॥ उद्यद्दिनेश्वररुचिं पाशांकुशवराभयम् ॥ हस्तैर्दधानं स्मेरास्यमरुणं चिन्तयेद्धृदि ॥ ॥ १८६ ॥ पूर्वोक्ते पूजयेत्पीठे वक्रतुण्डं गणेश्वरम् ॥ अष्टपत्राम्बुजद्वन्द्वं चतुर्द्वारयुतेन च ॥ चतुरस्रत्रयेणाथ वेष्टितं च क्रमाल्लिखेत् ॥ १८७ ॥ मध्ये

१ युग्मकम् ॥

देवं समभ्यर्च्य पूजितैरुपचारकैः ॥ आदावङ्गानि सम्पूज्य यथास्थानं विशालधीः ॥ पूर्वदिग्दलमूलेषु शक्तीरष्टौ क्रमाद्यजेत् ॥ १८८ ॥ विद्याख्या विश्वधात्री च भोगदा विघ्ननाशिनी॥ निधिप्रदा च पापघ्नी तथा पुण्या शशिप्रभा ॥ १८९ ॥ दलेषु च यजेत्तत्र ह्यणिमाद्याः पुरोदिताः ॥ द्वितीयेष्टदले तद्वद्वक्रतुण्डादिकान्यजेत् ॥ १९० ॥ चतुरस्रे लोकपालांस्तदस्त्राणि च पूजयेत् ॥ प्राग्वद्वीथीद्वये सम्यग्वक्रतुण्डार्च्चनं त्विति ॥ १९१ ॥ वर्णलक्षं जपेन्मन्त्रं जुहुयात्तद्दशांशतः॥अष्टद्रव्यैः पुरा प्रोक्तैर्मधुराक्तैर्यथाविधि॥ १९२॥ एवं सिद्धे मनौ मन्त्री काम्यकर्म्माणि साधयेत् ॥ तर्प्पयेत्पूर्वमार्गेण वक्रतुण्डं गणेश्वरम् ॥ १९३ ॥ चतुरस्रं हस्तमात्रं कुण्डं कुर्य्यात्तदग्रतः ॥ आदधीत मथित्वाग्निमनूचानगृहाद्धरेत् ॥ १९४ ॥ प्राणायामत्रयं कृत्वा मन्त्री कर्म्म समाचरेत् ॥ ततः पूर्वोक्तवत्कृत्वा मन्त्रन्यासं षडङ्गकम् ॥ १९५ ॥ गन्धपुष्पादिकैराग्निं सम्पूज्य स्थापयेत्ततः ॥ कृशानुमध्ये तत्राथ नागयज्ञोपवीतिनम् ॥ ॥ १९६ ॥ लम्बोदरं भास्करं तं चैकदन्तं त्रिलोचनम् ॥ पद्मासनसमारूढं चतुर्बाहुं त्रिलोचनम् ॥ १९७ ॥ किरीटहारकेयूराङ्गदालंकारभूषितम् ॥ एवं सञ्चिन्त्य मनसा समावाह्य गणेश्वरम् ॥१९८॥ गन्धादिभिः समभ्यर्च्य जलेनाग्निं प्रसिच्य च ॥ षडर्णेन द्विठान्तेन जुहुयाच्च घृताहुतीः ॥ अष्टाधिकसहस्रं च ततः सिद्धो भवेन्मनुः ॥ १९९ ॥ सहस्राष्टचतुर्थीषु पक्षयोरुभयोरपि ॥ शतं त्वपूपैर्जुहुयाद्वत्सराल्लभते धनम् ॥ २०० ॥ मध्याह्नकाले नित्यं हि तदग्रे प्रजपेन्मनुम् ॥ सहस्रं त्रिशतं वाथ शतं वाष्टोत्तरं सुधीः ॥ अचिरणैव महतीं लक्ष्मीं प्राप्नोत्ययत्नतः ॥ २०१ ॥ प्रसन्नतात्र मनसः स्तुतिरन्येप्सिता तथा ॥ स्वापे वैमुख्यता चापि स्वप्ने द्विरददर्शनम् ॥ एतानि मन्त्रसिद्धेर्हि चिह्नान्युक्तानि मन्त्रिभिः ॥ २०२ ॥ पूर्वोक्तसिद्धौदनेन त्रिमासं त्रिशतंहुनेत् ॥ महानिधीनां भवनं भवेद्वैश्रवणोपमः॥ २०३॥गुडाक्तैः पृथुकैर्नारिकेलैर्मरिचसंयुतैः ॥ अपूपैः क्षीरसंयुक्तैर्गणेशस्य च सन्निधौ ॥ अग्नौ सहस्रं जुहुयात्स मन्त्री धनवान्भवेत् ॥ २०४ ॥ शुभशालिमयैः शूर्णैर्मरिचाद्यैः ससैन्धवैः ॥ सजीरकैर्बहुगुडैः शुभैरतिघृताप्लुतैः ॥ २०५ ॥ अपूपैर्जुहुयान्मन्त्री गणेशस्य च सन्निधौ ॥ सहस्रमात्रं लभते महतीमचिराच्छ्रियम् ॥ २०६ ॥

साध्यनामार्णपुटितमनुना जुहुयात्सुधीः ॥ अपामार्गसमिद्भिर्वा पक्वैः पनसजैः फलैः ॥ २०७ ॥ सहस्रं कदलैर्वाथ नरं नारीं वशं नयेत् ॥ लाजकैर्जुहुयादग्नौ सहस्रं कन्यकाप्तये ॥ २०८ ॥ सहस्रमाज्याहुतीनां हुनेत्क्षीराहुतीरपि ॥ सहस्रं रोगशान्त्यर्थं मन्त्रशास्त्रविशारदः ॥ सर्वाहुतीनां जुहुयाल्लक्षं मृत्युञ्जयो भवेत् ॥ २०९ ॥ ब्रह्मवृक्षोत्थसमिधो मधुरत्रयलोलिताः ॥ सहस्रं जुहुयान्मन्त्री मासाच्छत्रूञ्जयेद्ध्रुवम् ॥ २१० ॥ बिभीतकस्य समिधां सहस्रं साष्टकं निशि ॥ लोहितार्क्के श्मशानाग्नौ जुहुयान्मारयेद्रिपुम् ॥२११॥ भूमौ शत्रुस्वरूपं च लिखित्वास्योदरेनलम् ॥ प्रज्वाल्य सिद्धार्थवरैः सहस्रं जुहुयात्सुधीः ॥ तं मारयेत्सप्तदिनैर्नात्र कार्य्या विचारणा ॥ २१२ ॥ शोणमेघसमानाभं गणेशं निजशुण्डया ॥ रिपुं गृहीत्वा वडवामुखे वह्नौ महोत्कटे ॥ २१३ ॥ प्रक्षिपन्तं गणपतिं ध्यात्वामुं प्रजपेन्मनुम् ॥ सहस्रं त्रिदिनेनासौ शत्रुमुच्चाटयेद्ध्रुवम् ॥२१४॥ समुद्रगां नदीं प्राप्य गृहीत्वाञ्जलिना जलम् ॥ सहस्रकृत्वोभिमन्त्र्य परिषिञ्चेत्स्वमूर्धनि ॥ अनेन विधिना मन्त्री पापौघं नाशयेद्ध्रुवम् ॥ २१५ ॥ शनैश्चरदिनेश्वत्थमालम्ब्य त्रिसहस्रकम् ॥ जपन्मनुं गणं ध्यायेद्दोषान्ग्रहभवान्हरेत् ॥ २१६ ॥ वेतसोत्थसमिद्धोमात्सहस्रं वृष्टिमाप्नुयात् ॥ धनार्थी जुहुयाद्धान्यैरन्नाद्यैर्वन्नैर्हुनेद्ध्रुवम् ॥ २१७ ॥ कमलैरुत्पलैर्वापि होमो वस्त्रप्रदो मतः ॥ क्षेत्राभिकांक्षी पललैर्गुडाभ्यक्तैर्हुनेत्सुधीः ॥ ॥ २१८ ॥ तमर्चयित्वा गणपं हरिद्रां सैन्धवं वचाम् ॥ निष्कार्धार्धप्रमाणेन सम्पिष्यैतानि नित्यशः ॥ २१९ ॥ प्रसूत्युन्मितगोमूत्रे सहस्रेणाभिमन्त्रयेत् ॥ स्नातामृतुस्नानदिने विशुद्धां रक्तवाससम् ॥ पाययेत्तां च सा बन्ध्या प्रसूते वत्सरात्सुतम् ॥ २२० ॥ उपोष्य सोमग्रहणे भास्करग्रहणेथ वा ॥ कपिलाज्यं पलं चूर्णं वचायाश्च पलार्धकम् ॥ २२१ ॥ एतत्सहस्रजपितं सहस्रं प्रपिबेत्सुधीः ॥ अवाप्य मेधां महतीं कवितां लभते ध्रुवम् ॥२२२॥ गोचर्ममात्रं भूतेशं चोपलिप्यांशुकावृतम् ॥ कृत्वात्र स्थापयेत्कुम्भं पूजितं चन्दनादिभिः॥२२३॥ कुमारं वा कुमारीं वा दीपस्याग्रे निधाय च॥जपेत्तन्मन्त्रप्रवरमष्टोत्तरसहस्रकम् ॥२२४॥ तेन स्पृष्टा कुमारी वा कुमारो वा ब्रवीति तत् ॥

मनोगतं हि सकलं भविष्यद्भूतमेव च ॥ वर्तमानं मनोरस्य प्रसादान्नात्र संशयः ॥ २२५ ॥ मन्त्रान्तरमथो वक्ष्ये वक्रतुण्डगणेशितुः ॥ मेघोल्काय तथा स्वाहा मन्त्रः प्रोक्तः षडक्षरः ॥ भार्गवो मुनिरस्याणोरनुष्टुप्छन्द ईरितम् ॥ ॥ २२६ ॥ वक्रतुण्डगणेशोस्य देवता देववन्दितः ॥ मन्त्रवर्णैः षडङ्गानि षड्भिः कुर्य्याद्यथा पुरा ॥ ध्यानपूजादिकं सर्वं मन्त्री पूर्ववदाचरेत् ॥२२७॥ अथातः सम्प्रवक्ष्यामि मन्त्रं द्वात्रिंशदर्णकम् ॥ रायस्पोषस्य दयिता निधिदो-रत्नदो मतः ॥ २२८ ॥ रक्षोहनोबलगहनोथाद्यश्च षडक्षरः ॥ ऋष्या-दिकं पुरा प्रोक्तं ध्यानपूजादि पूर्ववत् ॥ जपेदर्कसहस्राणि जुहुयात्तद्दशांशतः ॥ २२९ ॥ हविषा घृतासिक्तेन तदन्ते तोषयेद्गुरुम् ॥ एवं सिद्धे मनौ मन्त्री साधयेदिष्टमात्मनः ॥ २३० ॥ षडर्णप्रोक्तमन्त्रेण सर्वं काम्यं समाच-रेत् ॥ अथास्य भेदं वक्ष्यामि मन्त्रमन्यं तथाविधम् ॥ २३१ ॥ रायस्पो-षस्य दयिता निधिदो रत्नदो नृमान् ॥ रक्षोहणोबलगहनोवक्रतुण्डाय हूमिति ॥ २३२ ॥ सायकैस्त्रिभिरष्टाभिश्चतुर्भिः पञ्चभी रसैः ॥ मन्त्रार्णैः स्युः षडङ्गानि मुन्याद्याः पूर्ववन्मताः ॥ २३३ ॥ प्राग्वत्प्रयोगो निधिदो विशेषेण मनुस्त्वयम् ॥ अथ वक्ष्ये वक्रतुण्डगायत्रीं गणपप्रियाम् ॥२३४॥ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि ॥ तन्नो दन्ती प्रचोदयात् ॥ २३५ ॥ आद्य-न्तयोर्जपेदेनां सर्वमन्त्रप्रसिद्धये ॥ अष्टोत्तरशतं नित्यं पुरश्चरणकृन्नरः ॥ ॥ २३६ ॥ अष्टाविंशतिसंख्याकान्गणेशानदिने जपेत् ॥ जपाद्यन्तेथाष्ट-संख्याननन्यजापी सुसिद्धये ॥ २३७ ॥

इति श्रीमहामायामहाकालानुमते मेरुतन्त्रे शिवप्रणीते
पूर्वाम्नायगणपतिमन्त्रप्रकाशोष्टादशः ॥ १८ ॥

श्रीशिव उवाच ॥ अथातः सम्प्रवक्ष्यामि पश्चिमाम्नायसिद्धिदान् ॥ नाना-श्चर्य्यकरान्काशीसंस्थितान्गणनायकान् ॥ १ ॥ महागणपतेरंशाश्चतुःषष्टि-विनायकाः ॥ एकैकांते गृहीत्वा तु योगिनीं चेटिकामपि ॥ २ ॥ स्वर्गभूमिं समासाद्य यावदन्तं गृहं मम ॥ अष्टावरणकैरष्टौ संस्थिताः सिद्धिदायकाः ॥ ॥ ३ ॥ तत्राष्टौ काशिकाबाह्ये स्वर्गभूमौ समास्थिताः ॥ योजनैकं बहिष्काश्या-

कीर्तितः परिधिस्तु सः ॥ ४ ॥ गं विघ्नाय नमः प्रोक्तो मन्त्र एष षडक्षरः ॥ क्षिप्रप्रसादनसमप्रष्टानां साधनं स्मृतम् ॥ ५ ॥ वेदायुतं जपेन्मन्त्रं होमश्च घृतपायसैः ॥ प्रयोगाः पूर्ववच्चात्र क्षिप्रमेव च सिद्धयः ॥ ६ ॥ गजानना योगिनी तु योगिनीरूपधारिणी ॥ नान्धवर्णस्ससबिन्दुस्तन्नाममन्त्र इतीरितः ॥ ७ ॥ प्रिया चैतस्य गदिता तत्सिद्धिं कथयाम्यथ ॥ ॐ शिवे शिवपत्नीति शं शिवे स्वकरेति च ॥८॥ पङ्कजं फलं देहीति मनोजवमिदं वदेत् ॥ चरणयोर्देहिदेहि तुभ्यं नम इतीरितः ॥ षट्त्रिंशदक्षरो मन्त्रो-ध्यानमस्या निरूप्यते ॥ ९ ॥ उद्यद्भानुसहस्राभां कमलासनपूजिताम् ॥ हस्ते मोहमयं पाशं दधानां प्रभजे शिवाम् ॥ १० ॥ जपेत्त्रिंशत्सहस्राणि शतपत्रीवनान्तरे ॥ कौसुम्भकुसुमैर्होमं तर्पणादि ततश्चरेत् ॥ एवं सिद्धमनुर्मन्त्री चेटिकां च प्रसाधयेत् ॥ ११ ॥ श्रावणे मासि चाष्टम्यां कृष्णपक्षे निशान्तरे ॥ पूजयित्वा जपेन्मन्त्रन्तदा नादाञ्छृणोति च ॥ १२ ॥ भीषयन्ति च भूतानि तदा चेद्दृढमानसः ॥ तदानेकसुरैर्युक्ता प्रत्यक्षास्य शिवा भवेत् ॥ १३ ॥ तुष्टा फलन्ददात्येकन्तेनासौ साधकोत्तमः ॥ दूरं याति क्षणेनैव मनसोप्यतिवेगवान् ॥ १४ ॥ अदृश्यः सर्वलोकानामपि राजगृहान्तरे ॥ एवं विघ्नगणेशेन मोहिता बहवो जनाः ॥ १५ ॥ विनायकाय हृदयं गं बीजाद्योष्टवर्णकः ॥ वर्णलक्षम्पुरश्चर्य्या गणेशानां प्रकीर्त्तिता ॥ १६ ॥ सर्वासां योगिनीनान्तु स्वबीजाद्या हृदन्तकाः ॥ नाममन्त्रास्स्मृता मन्त्रवर्णलक्षम्पुरस्क्रिया ॥ १७ ॥ गणेशस्य प्रभावेन सिद्धिः स्यात्पारलौकिकी ॥ योगिनीसेवनादत्र न विघ्नैः परिभूयते ॥ १८ ॥ चेटिका प्रोक्तफलदा सर्वत्रैष विनिश्चयः॥ सिंहास्या योगिनी चात्र जटिला विषधारिणी ॥ १९ ॥ अथ काम्या चेटिकाया मनुं विंशतिवर्णकम् ॥ ब्रवीमि वर्णद्वितयात्पातालतलवासिनीम् ॥ २० ॥ श्यामले श्रींसिद्धिमिति देहि स्वाहेति चिन्तयेत् ॥ तालारण्यान्तरे स्वस्थां करतालीमनोरमाम् ॥ ॥ २१ ॥ आलिभिः सहितां गीतकारिणीं श्यामलाम्भजे ॥ जपेदयुतसंख्याकं शान्तात्मा तालकानने ॥ २२ ॥ तद्दशांशेन जुहुयात्स तालीफल-

खण्डकैः ॥ कर्पूरागुरुयुक्तैश्च पूर्णं तत्रिः प्रदक्षिणम् ॥२३॥ कुर्य्यात्तालीवने तत्राथैतन्मध्ये वनांतरे ॥ ज्येष्ठामायां जपेद्रात्रौ सहस्रद्वितयं मनुम् ॥ २४ ॥ अर्धरात्रे चरेद्धोमम्पूर्णं तालफलेन च ॥ झञ्झामारुत आयाति प्रकाशोतीव जायते ॥ २५ ॥ तन्मध्ये तु महादेवी श्यामा षोडशवार्षिकी ॥ नीलांशुकपरीधाना कस्तूरीचन्दनप्रिया ॥ २६ ॥ तान्नमस्कृत्य विश्वेशीं तुष्टा भव वरानने ॥ इत्युक्ता मन्त्रिणे तुष्टा सा ददाति फलत्रयम् ॥ ॥ २७ ॥ परमानसविज्ञानविद्यां जातिमगोरमाम् ॥ कंदर्प्पवत्स्वरूपं च जगतीमोहनक्षमम् ॥ २८ ॥ गं वीराय नमश्चेति प्रोक्तो मंत्रः षडक्षरः ॥ योगिनी चास्य वृद्धा स्याद्वेषतः सा तपस्विनी ॥ २९ ॥ तस्याश्चेटी तु बालोक्ता ह्येकोनत्रिंशदक्षरा ॥ ॐ पंचवार्षिकीत्युक्त्वा बाले वचनमाधुरीम् ॥ ३० ॥ मम देहि द्वयांते तु हुरूणां हुरुयुग्मकम् ॥ भुवनेशीद्वयं चेति ध्यानमस्या निरूप्यते ॥ ३१ ॥ गोरोचनाचर्चितांगीं हेमगौरीं सुरार्चिताम् ॥ चंद्रावतंसां ललितवचनां नेत्रसुंदरीम् ॥ ३२ ॥ गोमयेन समालिप्य शून्यगेहस्य भूमिकाम् ॥ चंदनेन समालिख्य तत्पश्चात्कुंकुमेन च ॥ ३३ ॥ तत्र दूर्वादलैः पूज्या बाला लक्षं जपेत्ततः ॥ धत्तूरकुसुमैर्होमं सहस्रैकं समाचरेत् ॥ ॥ ३४ ॥ तद्बीजैः पूजनं कार्य्यं कौशेयवसनो यजेत् ॥ काषायवस्त्रो नग्नो वा सिद्धमन्त्रः समाचरेत् ॥ ३५ ॥ धत्तूरतैलेनाभ्यङ्गं पौर्णमास्यां विधूदये ॥ पुष्पस्य तद्गृहे गत्वा नग्नो बालामनुं जपेत् ॥ ३६ ॥ ततो रात्रिप्रान्तभागे दूरतः पंचवार्षिकी ॥ दृश्यते सा द्रुमारूढा धावंस्तत्सन्निधौ व्रजेत् ॥ ३७ ॥ सापि मोदप्रहृष्टा हि चुम्बत्याशु तदाननम् ॥ तच्चुम्बनात्तस्य जिह्वा रससन्दोहिनी भवेत् ॥ ३८ ॥ तद्वार्तया याति मोहं राजा राज्येऽखिलो जनः ॥ व्याघ्रादिपशुजातीनां मोहनं तद्वचो भवेत् ॥ ३९ ॥ मुखं तस्य समालोक्य सर्वे मुह्यन्ति जन्तवः ॥ गं सुराय नमश्चेति प्रोक्तो मन्त्रः षडक्षरः ॥४०॥ योगिनी काकतुण्डा स्यात्स्फुटाक्षी चेटिकेरिता ॥ विशालाक्षि गजान्तेति तिले देहियुगं वदेत् ॥ ४१ ॥ दारिद्र्यं दाहयेत्युक्त्वा

ह्रीं स्फुटं हुं कलत्रकम् ॥ वह्नेर्मन्त्रः समाख्यातो नागनेत्रमिताक्षरः ॥ ४२ ॥ जम्बीरनारिकेलानां वने वाथ नदीतटे ॥ अथ वा विजने रम्ये ताहग्वनविभूषिते ॥ ४३ ॥ अथ वा कमलामोदभूषिते सुसरित्तटे ॥ लक्षमेकं जपित्वा तु होमं कुर्य्याद्दशांशतः ॥ ४४ ॥ नारिकेलैस्ततः सिद्धमन्त्रो मन्त्री समाचरेत् ॥ माघे मासि तथाष्टम्यां कृष्णपक्षे विधौ निशि ॥ ४५ ॥ सहस्रं प्रजपेन्मन्त्रं वेतालाः खड्गपाणयः ॥ साधकं ते भीषयन्ति न भेतव्यं तदा क्वचित् ॥ ४६ ॥ वामहस्तासृजा तांश्च सिञ्चेत्ते यान्ति दूरतः ॥ पुनर्जपे समारब्धे तदा कात्यायनी स्वयम् ॥ ४७ ॥ आयाति शवमुण्डानि चर्वयन्त्यतिभीषणा ॥ वामजङ्घासृजा सिञ्चेत्ततः सापि प्रयाति च॥ ४८ ॥ पुनर्जपे समारब्धे भैरवी याति भीषणा ॥ गजमुण्डश्चर्वयन्ती वमन्ती शोणितम्भुवि ॥ ४९ ॥ तया सह समायान्ति भीषणा भैरवास्तदा ॥ सिञ्चेद्दै भैरवांस्तांश्च ततो भालोद्भवासृजा ॥ ५० ॥ पुनः सहस्रजापान्ते नारिकेलत्रयं हुनेत् ॥ तदा देवी समागत्य नारिकेलं प्रयच्छति ॥ तस्मिन्स्थिते जगद्वश्यं जायते नगरेन्दिरा ॥ ५१ ॥ गमुक्ता प्रवदेन्डेन्तं वरदाक्षविनायकम् ॥ हृदन्तो रुद्रवर्णोऽयं मन्त्रः प्रोक्तोऽस्य योगिनी ॥ ५२ ॥ उग्रग्रीवाभिधा प्रोक्ता सैरन्ध्रीरूपधारिणी ॥ वेदास्या हरितालाक्षी मन्त्रः सप्तदशाक्षरः ॥ ५३ ॥ तारं ह्रीं हरितालाक्षि वदेद्रतिकलां ततः ॥ दहयुग्मं वह्निजायां ध्यानमस्या निरूप्यते ॥ ५४ ॥ जपापुष्पसहस्रोद्योतमानां महेश्वरीम् ॥ ध्यायेत्तां हरितालाक्षीं सिद्धिदां शं वितन्वतीम् ॥ ५५ ॥ मृगद्वितीयचरणप्रवेशे भवति ध्रुवम् ॥ आदिमे दिवसे रात्रौ गत्वा वै निर्जने वने ॥ ५६ ॥ दिवसे च समानीय हरितालं मुखे स्वके ॥ लेपयित्वा प्रथमतो जपेदयुतसंख्यकम् ॥ ५७ ॥ घृतकर्पूरकाश्मीरैः कौसुम्भैर्होममाचरेत्॥ पूर्णं कुर्य्यात्कुलिङ्गेन हरितालरसस्पृशा ॥ ५८ ॥ ततो देवी समायाति ललिता हरितालिका ॥ नानावाक्यैर्मोहयन्ती साधकस्तां न विश्वसेत् ॥ ५९ ॥ ततः प्रभातसमये मूलमन्त्रप्रभावतः ॥ भगिनीं स्वां

---

१ शत्रन्तं सप्तम्यन्तञ्चैतत् ॥

रतिकलां साधकाय प्रयच्छति ॥ ६० ॥ वशीभूता रतिकला गृहीत्वा मन्त्रिणं ध्रुवम् ॥ खेचरं कुर्वती सद्यो नयेद्देशे विचिन्तिते ॥ ६१ ॥ यक्षिणी भूतवेतालभैरवानतिभैरवान् ॥ आनयति क्षणेनैव मन्त्रिणो वशमादरात् ॥ ॥ ६२ ॥ देवकिन्नरगन्धर्वविद्याधरपुरे नयेत् ॥ आनयेच्च पुनर्भूमौ नाना वस्तु प्रदर्शयेत् ॥ ६३ ॥ गमुक्ता चेभवक्त्राय हृदन्तोयं गजाक्षरः ॥ योगिन्यस्य हयग्रीवा भवेन्मासोपवासिनी ॥ ६४ ॥ अस्यास्तु कुण्डली चेटी मन्त्रो विश्वमिताक्षरः ॥ ॐ कुण्डिनि नागवाहने फुर्फुर्वह्निगेहिनी ॥ ॥ ६५ ॥ महानागसमारूढामानिम्नस्फुटलोचनाम् ॥ दीप्यन्तीमन्धकारे च फूत्काराहतभूरुहाम् ॥ ६६ ॥ एकलिंगो महादेवो यत्र स्याद्बिल्व-कानने ॥ तत्रेमं प्रजपेन्मन्त्रं लक्षहोमं समाचरेत् ॥ बिल्वमूलेन मन्त्रस्य तदा सिद्धिः प्रजायते ॥ ६७ ॥ रात्रौ शिवचतुर्दश्यामेकान्ते शिवम-न्दिरे ॥ जपेत्सहस्रत्रितयं हुनेत्तस्य दशांशतः ॥ ६८ ॥ बिल्वमूलेन होमांते कुण्डो नाम महाफणी ॥ विस्तीर्णवदनो लम्बो दृश्यते युगविंशकः ॥६९॥ फणां प्रसार्य्य नागोसौ पुनस्तिष्ठति मन्त्रिणः ॥पुरस्तात्तस्य निर्भीत्या स्थातव्यं तेन मन्त्रिणा ॥ ७० ॥ फूत्काराणां सहस्राणि फणाभिः कुरुते ध्रुवम् ॥ तस्य वक्त्राच्छतं ज्वाला निस्सरन्ति पुनः पुनः ॥ ७१ ॥ तथा विषाणि बहुधा नीलपीतच्छवीनि च ॥ पललानि ततो धूमपत्रिगश्चापि शाखिनः ॥ ७२ ॥ एवंविधं महोत्पातं दृष्ट्वा नैव बिभेति चेत् ॥ तदा सा दृश्यते देवी तन्नागफणसंस्थिता ॥ ७३ ॥ तां स्तुयात्स्तुतिभिर्देवीं तोषिता सा ददाति च॥ अमृतन्तोलकमितन्तेन स्यादजरामरः ॥ निधीन्पश्यति भूमिष्ठा-न्वाणी सत्या प्रजायते ॥ ७४ ॥ गमेकदन्तं ङेन्तश्च हृदयांतो गजाक्षरः ॥ वाराही योगिनी जाता वेषाच्छूकरचारिणी ॥ अस्य देवस्य चेटी तु प्रोक्तात्र मधुवासिनी ॥ ७५ ॥ त्रयोदशाक्षरो मन्त्रः प्रणवो मधुवासिनी ॥ कामदे-वीति चोच्चार्य्य क्लींस्वाहेति मनुः स्मृतः ॥ ७६ ॥ स्तूयमाना च कामेन बिभ्रती स्वर्णपंकजम् ॥ ध्यायेन्नवरसां देवीं मृगाक्षीं ब्रह्मसौख्यदाम् ॥७७॥ मधुवृक्षतले स्थित्वा जपेल्लक्षमितम्मनुम् ॥ वासन्तीकुसुमैर्होमो मधुपुष्पैरथापि

वा ॥ ७८ ॥ कर्पूरागुरुसम्मिश्रैः कुर्य्यादयुतसंख्यया ॥ मधुमासि सिताष्टम्यामेकांते निर्जने जपेत् ॥ ७९ ॥ मधुवृक्षतले नीरे गोदावर्य्यां विशेषतः॥ होमः प्राग्वत्सहस्रं स्याज्जपेन्नवसहस्रकम् ॥८०॥ मधुनेति तदा यक्षो ज्वालामालेतिभीषणः ॥ माहिषेण विषाणेन दक्षहस्तेन सम्पिबन् ॥ ८१ ॥ रक्तञ्च वामहस्तेन सुरां पिबति भीषणः ॥ जिह्वयैव च यक्षो हि लतावृक्षादि गुल्मकान् ॥ ८२ ॥ उत्पाट्य चर्वन्घोरो हि भक्ष्यन्देहीति भाषते ॥ न भयं प्राप्नुयात्तस्मान्मिथ्यात्रासादिभिस्तदा ॥ ८३ ॥ तस्मै रक्तं प्रदातव्यम्मन्त्रिणा स्वकरोद्भवम् ॥ ततस्तस्मिन्गते यक्षे देवी वृक्षतले तदा ॥ ॥ ८४ ॥ प्रत्यक्षा जायते तस्मै दद्यात्पौष्पञ्च कार्मुकम् ॥ वितस्तिमात्रन्तेन स्यात्सर्वमोहनकारकः ॥ ८५ ॥ नवयौवनशालिन्यः कुङ्कुमारुणविग्रहाः ॥ धनन्देहं प्रयच्छन्ति तस्मै कामविमोहिताः ॥ ८६ ॥ गञ्च लम्बोदरं ङेन्तं हृदयांतोष्टवर्णकः ॥ योगिनी शरभास्यास्था ज्वालामालावपुर्धरा ॥ चेटी तु मन्थरा प्रोक्ता मंत्रो जिनमिताक्षरः ॥ ८७ ॥ ॐ मन्थरे वदेत्पश्चाद्दिक्षुक्षितिनिवासिनि ॥ मसेष्टवरयुग्मञ्च तुं वं मं वह्निगेहिनीम् ॥ ८८ ॥ करे वहन्ती कोदण्डमैक्षवं लोललोचना ॥ जपाकुसुमशोणांगी मम चित्तस्य मन्थरा ॥ ८९ ॥ इक्षुवाटीस्थले चैव गुडपाकस्थले तथा ॥ रसपञ्चसमीपे तु रचयित्वा शुभं स्थलम् ॥ ९० ॥ लक्षमानम्पुरश्चर्य्यां हीक्षुखण्डैश्च होमयेत् ॥ मज्ञारिषष्ठीरात्रौ तु जपेत्सोमे शतत्रयम् ॥ ९१ ॥ तद्दशांशैर्हुनेदिक्षुखण्डैरायाति मन्थरा ॥ ददाति मधुपात्रं हि दिव्यमाध्वीकमिश्रितम् ॥९२॥तत्पूजयेत्त्रिसन्ध्यं हि तन्मुखान्मन्थरा वदेत् ॥ भाषया स्पष्टया दद्यात्पूजांते यन्मनोगतम् ॥ ९३ ॥ भूतञ्च वर्त्तमानञ्च भविष्यदपि तत्त्वतः ॥ स जानाति न सन्देहो मनोरस्य प्रभावतः ॥ ९४ ॥ यदायदातिसंकष्टञ्जायते मन्त्रिणो ध्रुवम् ॥ तदातदा तु तां देवीं मधुपानैः प्रपूजयेत् ॥ ९५ ॥ संकष्टं हरते तूर्णं विग्रहादौ प्रपूजयेत् ॥ रसपञ्चसमीपे तु भूमिपूजां विधेतः ॥ ९६ ॥ कुंकुमैश्चादिसिन्दूरै रक्तचन्दनवन्दनैः ॥ ९७ ॥ माध्यन्दिनीजपापुष्पकरवीरप्रसूनकैः ॥ यावदालोहितं वस्तु

तावद्भिः परिपूजयेत् ॥ ९८ ॥ वक्ष्येथ कौलिकप्रोक्तान्स्थितानष्टौ विनायका-न्॥नमो भगवते पूर्वं ङेन्तन्तन्नाम चोच्चरेत् ॥९९ ॥ अष्टानामपि मन्त्रोयमैन्द्र्यां सिद्धिविनायकः ॥ उलूकी योगिनी तत्र नापितीरूपधारिणी ॥१००॥ विधि-स्तत्र समाख्यातो ह्यणिमाद्यष्टसिद्धयः ॥ साधको यां सिद्धिमिच्छेत्तद्युक्ताय पदं वदेत् ॥ १०१ ॥मन्त्रमध्ये वर्णलक्षं जपेद्धोमं समाचरेत् ॥ महागणपव-त्सर्वं ततस्तां सिद्धिमाप्नुयात् ॥ १०२ ॥ काश्यामाग्नेयदिग्भागे विज्ञेयोर्क-विनायकः ॥योगिनी च शिवा ह्येषा मृत्तिकारूपधारिणी ॥ १०३ ॥ हंसावा-गस्य चेटी स्यान्मन्त्रः स्याद्द्वादशाक्षरः ॥ ॐहंसगेंबोधयिति वाक्छ्रीबीजाग्नि-वल्लभाः ॥ १०४ ॥ शतचन्द्रसमज्योत्स्नां चन्द्रार्धकृतशेखराम् ॥ वरदाभय-हस्तां च संसेवे हंसगामिनीम् ॥१०५॥ सहस्राणां तु पञ्चाशत्पुरश्चरणमस्य तु ॥ अयुतार्धन्ततो होमं पद्माक्षैराज्यसंयुतैः ॥ १०६ ॥ कुर्य्याद्धोमं यद्वैस्त-द्वत्पद्मयुक्तसरित्तटे ॥ हिरण्यकशिपुप्राणनाशकालतिथौ ध्रुवम् ॥ १०७ ॥ सन्ध्यामारभ्य जप्तव्यं प्रहरत्रितयावधि ॥ भूर्ज्जपत्रैश्च होतव्यं पद्माक्षैः स्वस्व-स्वाष्टकम्॥ १०८ ॥ततो हंससमारूढा शतचन्द्रसमप्रभा ॥ सा देवी मन्त्रिणे तस्मै पद्ममालां प्रयच्छति॥ १०९॥तन्मालाजपतो मन्त्री जायते शास्त्रपारगः॥ अज्ञानाद्येत्सगर्वोपि जायते सत्त्वमस्य तु ॥ दुर्गया स्थापितः काश्या याम्ये दुर्गविनायकः ॥ ११० ॥ मायूरी योगिनी तत्र लोकानामौषधप्रदा ॥ ॐह्री-न्दुयुक्ता दुर्गायै हृदयान्तोष्टवर्णकः ॥१११॥ मुनिः प्रोक्तो नारदाख्यो गायत्री छन्द ईरितम् ॥ दुर्गा देवी यया दुर्गवधार्थं सेवितो गणेः[1]॥११२॥ प्रणवं पूर्व-मुच्चार्य्यं दीर्घषट्कसमन्वितम् ॥ क्रमादाद्यन्तयोर्मायां दुर्गायै चेति मध्यतः ॥ ॥११३॥ पल्लवाद्याः षडङ्गानि चेति मन्त्राः प्रकीर्तिताः ॥ ११४ ॥ सिंहा-सीनां मरकतद्युतिं चन्द्रार्धशेखराम् ॥ शङ्खचक्रधनुर्बाणान्दधतीं त्रीक्षणां भजे ॥ ११५ ॥ अष्टपत्राम्बुजद्वन्द्वे चतुरस्रत्रयावृते ॥ चतुर्द्वारसमायुक्ते कुंकुमा-मादिभिरुद्धृते ॥ कुर्य्यात्स्वपीठपूजायां तत्र शक्तिसमर्चनम् ॥ ११६ ॥ प्रभा समा जया सूक्ष्मा विशुद्धा नन्दिनी तथा ॥ सुप्रभा विजया पूर्वदलात्स-

१ गणेशः ॥

वीर्थसिद्धिदा ॥ ११७ ॥ एवं वह्निसरक्ताविहीनैरद्भिः प्रपूजयेत् ॥ ॐ वज्रनखदंष्ट्रायुधायप्रोक्त्वामहापदम् ॥ ११८ ॥ सिंहाय हुंफट् हृदयमून-विंशतिवर्णकः ॥ सिंहमन्त्रः समाख्यातस्तेन सिंहं प्रपूजयेत् ॥ ११९ ॥ मूर्ति-मावाह्य तस्यान्तु पूजयेच्चन्दनादिभिः ॥प्रथमावृत्तिरङ्गैः स्याद्द्वितीया तु प्रभा-दिभिः ॥ १२० ॥ सबिन्दुनाद्यवर्णेन जयादीनान्तु नामभिः ॥ङेन्तैर्नमोन्तै-स्तृतीयावरणं परिकीर्तितम् ॥ १२१ ॥ जया च विजया कीर्तिः प्रीतिश्चापि प्रभा मता ॥ श्रद्धा मेधा श्रुतिश्चापि चतुर्थावरणं क्रमात् ॥ १२२ ॥ शङ्खं चक्रं गदां खड्गं पाशांकुशशरान्धनुः ॥ बाह्यवीथीद्वये लोकपालानस्त्राणि च क्रमात् ॥ १२३ ॥ जितेन्द्रियो हविष्याशी वसुलक्षं जपेन्मनुम् ॥ तत्सहस्रं तिलैः स्याद्दुलोलिकैर्वा पयोन्धसा ॥ १२४ ॥ जुहुयादेधिते वह्नौ तर्प्पणादि ततश्चरेत् ॥ एवं सिद्धे मनौ मन्त्री प्रयोगानाचरेत्सुधीः ॥ १२५ ॥ यथो-क्तेन विधानेन नवकुम्भान्मनोरमान् ॥ पञ्चरत्नसमायुक्तान्नवस्थानेषु विन्यसेत् ॥ १२६ ॥ मन्त्री दुर्गां यजेन्मध्येष्वन्यत्र च जयादिकाः ॥ चन्दनाद्यैः समभ्यर्च्य धूपदीपैश्च मन्त्रवित् ॥ १२७ ॥ अभिषिञ्चेत्स्त्रियं साध्यं राजानं वा शिशुं बुधः॥ विजयश्रीसमायुक्तो राजा भवति नान्यथा ॥ १२८ ॥ भूता-पस्मारवेतालपिशाचाद्यैर्विमुच्यते ॥ वन्ध्या च ललना पुत्रं विनीतं प्राप्नुयाच्छु-भम् ॥ १२९ ॥ आमयान्मुच्यते मर्त्यो दीर्घायुश्च न संशयः ॥ अनेनैव विधानेन जनानामनुरञ्जनम्॥ दुर्गामनुं च भजतां बह्वादुःखाघनाशनम् ॥ १३० ॥ काश्या नैर्ऋत्यभागे तु ज्ञेयश्चण्डविनायकः ॥ वेश्या वृत्तिकरी चास्य योगिनी चकितानना ॥ हंसीनाम्नी तस्य चेटी तस्याः साधनमुच्यते ॥ १३१ ॥ सुधाकरसमज्योत्स्नां शुक्रशोभितसत्कराम् ॥ वामे हंसं दधानां च पीनोन्नत-पयोधराम्॥ १३२ ॥ एकान्ते च नदीतीरे जपेन्मन्त्रयुतत्रयम् ॥ मुस्तकन्दैः सहोशीरैर्दशांशं होममाचरेत् ॥ १३३ ॥ एवं सिद्धप्रयोगस्तु नदीतीरे च कानने ॥ गहने विल्ववृक्षाणामेकान्तेप्यथ वा सुधीः ॥ १३४ ॥ तुङ्गभ-द्रानदीतीरे यत्र लक्ष्मीश्वरः शिवः ॥ तत्र स्नात्वा तटे तस्या ह्यङ्गायां च दिने यजेत् ॥ भानोर्वारे निशि हुनेत्साम्बदेवीं तथा यजेत् ॥ १३५ ॥ मत्वा

स्तुत्वा प्रार्थयित्वा निर्भयो जनवर्जिते ॥ ददाति मन्त्रिणे शीघ्रं स्फटिकाख्यं मनोहरम् ॥१३६॥ तस्मिन्पश्यति भूतं च भविष्यद्वर्त्तमानकम् ॥ तथा स्वस्य परस्यापि सर्वज्ञो जायते नरः ॥१३७॥ काश्याः पश्चिमदिग्भागे स देहलि-विनायकः॥ योगिनी त्वष्टवक्रास्य वणिक्कर्म्म प्रकुर्वती ॥ १३८ ॥ विचित्रा-नाम चेट्यस्य त्रयोविंशतिवर्णकः ॥ ह्रीं विचित्रे चित्रचैले चैलं देहि पदं वदेत् ॥ वायुं पूरययुग्मं च हुं स्वाहेत्युदितो मनुः ॥ १३९ ॥ अयुतं प्रज-पेत्तीरे सरितस्तद्दशांशतः ॥ कमलाक्षैर्भवेद्धोमस्तत्तत्काम्यं समाचरेत्॥१४०॥ चैत्रे चाश्विनमासे च चतुर्दश्यां निशान्तरे ॥ सरस्तीरे जपेन्मन्त्रं समस्तां रात्रिमन्ततः ॥ १४१ ॥ ततो देवी समायाति विचित्रं वसनाञ्चलम् ॥ ददाति तत्पूजयित्वा रात्रौ संस्थापयेद्गृहे ॥ तद्गृहं पूर्य्यते वस्त्रैराजमन्दि-रैरपि ॥ १४२ ॥ काश्या वायव्यकोणेयमुद्दण्डाख्यो विनायकः ॥ योगिनी कोटराक्ष्यस्य चेटी स्याद्दधिदुग्धदा ॥ १४३ ॥ केशमुचार्य्य चावर्त्तनखरे-हिपदं ततः ॥ ह्रींश्रींस्वाहेति मन्त्रोथ तस्य ध्यानमिहोच्यते ॥ १४४ ॥ स्वच्छतोयैश्च सम्पूर्णं वामे धत्ते कमण्डलुम् ॥ स्वर्णकुण्डलक्षिताढ्यगण्डान्तं विधिपूर्वकम् ॥१४५॥ जपेल्लक्षमितं मन्त्रं नदीतीरे मनोरमे ॥ होमयेच्च त्रिम-धुरैः प्रयोगं तत आचरेत्॥१४६॥कृष्णातीरे महातीर्थेथ वा पञ्चनदे शुभे ॥ मघामासे द्वितीयायां कृष्णपक्षे निशान्तरे ॥ १४७ ॥ कृत्वा तृणकुशूलं तु निक्षिपेत्तत्स्थलान्तरे ॥ कृत्वा सायन्तनं कर्म कुशूलं पूजयेत्ततः ॥ १४८ ॥ तत्र देवीं स्मरन्मन्त्री कुशूलान्तर्विशेद्ध्रुवम् ॥ तत्र बद्धासनो योगी शीतवा-धामुपेक्ष्य हि ॥ १४९ ॥ जपेत्पंचसहस्रं तु देवतां विधिपूर्वकम् ॥ पंचवक्त्रां त्रिनेत्रां च पश्येदष्टभुजां शिवाम् ॥ १५० ॥ ततः सा देवता तस्मै ददाति च कमण्डलुम् ॥ जलपूर्णं ततस्तस्मै जलेनासेचयेत्सुतम् ॥ १५१ ॥ स नरस्तत्क्षणादेव सप्तजन्मसमुद्भवाम् ॥ जातिं वदति तत्कालं तत्तत्कर्म करोति च ॥१५२॥ काश्यामुत्तरभागे तु पाशपाणिर्विनायकः ॥ योगिन्यस्य भवेत्कुब्जा व्यालग्राहा स्वरूपतः ॥ १५३ ॥ यदा न महिषं शक्ता धोतितुं

---

१ प्रकुरुते । २ णिज्लोप आर्षः ॥

विन्ध्यवासिनी ॥ वज्रस्तदा कृतोनेन महिषो येन घातितः ॥ तस्मान्महिषमर्दिन्या मन्त्रं वक्ष्ये समासतः ॥ १५४ ॥ महिषमर्दिनीत्युक्त्वा स्वाहान्तोऽष्टाक्षरो मनुः ॥ मार्कण्डेयो मुनिश्छन्दो गायत्रं दैवतं मनोः ॥ सुरासुरनुता देवी प्रोक्ता महिषमर्दिनी ॥ १५५ ॥ महिष मर्दिनि हुंफट् हृदयं परिकीर्त्तितम् ॥ महिषारीशानि हुंफट् शिरोगं समुदीरितम् ॥ मन्त्रैरेभिर्जातियुक्तैः पंचाङ्गानि प्रकल्पयेत् ॥ १५६ ॥ गारुडोपलदीप्तिं च मणिमौक्तिककुण्डलाम् ॥ तिष्ठन्तीं माहिषे शीर्षे नौमि भालविलोचनाम् ॥२५७॥ चक्रं शङ्खं कृपाणं च बाणं शूलं च तर्जनीम् ॥ कार्मुकं खेटकं हस्तैर्बिभ्रतीं शशिशेखराम् ॥ १५८ ॥ जटामुकुटशोभाढ्यां सर्वाभरणभूषिताम् ॥ पीताम्बरधरां देवीं पीनोन्नतकुचद्वयाम् ॥ १५९ ॥ ततः पूर्वोदिते पीठे यजेन्महिषमर्दिनीम् ॥ प्रथमावृत्तिरङ्गैः स्याद्दुर्गाद्याभिः परीरिता ॥ १६० ॥ स्वाग्रादिप्रादक्षिण्येन दुर्गा च वरवर्णिनी ॥ आर्य्या च कनकाख्यातु कृत्तिका चाभयप्रदा ॥ १६१ ॥ कन्यास्वरूपा आईकांदियों द्विस्वरपूर्विकाः ॥ क्लीबान्तरहितं चात्र ग्राह्यं दीर्घस्वराष्टकम् ॥ १६२ ॥ परादिकं प्रथमतः सबिन्दुं वर्णमुच्चरेत् ॥ ततो देव्यायुधं प्रोच्य तृतीयावरणे यजेत् ॥ १६३ ॥ चतुर्थी लोकपालैः स्यात्पञ्चमी च तदायुधैः ॥ प्रजपेल्लक्षमेकं च तत्सहस्रं तिलैर्हुनेत् ॥ १६४ ॥ एवं सिद्धे मनौ मन्त्री प्रयोगानाचरेत्ततः ॥ तिलहोमाद्वशीकारो नृणां स्त्रीणां भवेद् ध्रुवम् ॥ १६५ ॥ आमयान्मुच्यते मर्त्यः सद्यः सर्षपहोमतः ॥ पद्महोमात्तथा राज्ञः संग्रामे विजयो भवेत् ॥ ॥ १६६ ॥ दूर्वाहोमेन मर्त्यानां रोगशान्तिर्भवेद्ध्रुवम् ॥ ब्रह्मवृक्षोत्थकुसुमैर्लभते पुष्टिमुत्तमाम् ॥ १६७ ॥ धान्यहोमेन धान्यानि काकपक्षहुतेन च ॥ विद्वेषो जायते लोके चात्यन्तसुहृदोरपि ॥ शत्रुर्गच्छति पंचत्वं सत्यं मारिचहोमतः ॥ १६८ ॥ एवं यो भजते देवीं दुर्गां महिषमर्दिनीम् ॥ स नाशयेत्क्षुद्रभूतांश्चौरादीन्दर्शनादपि ॥ उपासितापासितातिनिकटे द्रुतसिद्धिदा ॥ १६९ ॥ काश्यामीशानदिग्भागे ज्ञेयः खर्वविनायकः ॥ दासीरूपं समास्थाय स्थिता विकटलोचना ॥ योगिनी जयदुर्गा च सिद्धिदा तत्र

संस्थिता ॥ १७० ॥ तारो दुर्गे द्वयं प्रोच्य रक्षिणीत्यग्निगेहिनी ॥ दशाक्षरो मनुः प्रोक्तो भजतामिष्टसिद्धिदः ॥ १७१ ॥ नारदर्षिर्विराट् छन्दो जयदुर्गा च देवता ॥ ताराद्यैः पंचैं मन्त्रस्य पदैः सर्वैण सम्मता ॥ जातियुक्ता चाङ्ग-क्लृप्तिः काम्यकर्म्म ह्यथोच्यते ॥ १७२ ॥ दुर्गेति हृदयं प्रोक्तं दुर्गा च शिर ईरितम् ॥ दुर्गायै स्याच्छिखा वर्म्म भूतरक्षाक्षि कीर्तितम् ॥ १७३ ॥ तारादिदुर्गद्वितयं रक्षिण्यक्षि प्रकीर्त्तितम् ॥ तारादियुगलं दुर्गे रक्षिण्यस्त्रमु-दीरितम् ॥ मेघश्यामां ग्लौकिरीटां त्रिनेत्रां सिंहवाहिनीम् ॥ १७४ ॥ चक्रं दरं खड्गशूलौ बाहुभिर्बिभ्रतीं भजे ॥ दौर्गे पीठे यजेद्देवीमुक्तमार्गेण मन्त्रवित् ॥ प्रजपेत्पञ्चलक्षं च तद्दशांशं हुनेद्घृतैः ॥ १७५ ॥ तर्प्पणादि ततः कुर्य्यात्ततः सिद्धो भवेन्मनुः ॥ ततः सिद्धमनुर्मन्त्री प्रयोगानाचरेत्ततः ॥ ॥ १७६ ॥ इमं मनुं जपेद्भूयः प्रविशेच्छत्रुसङ्गरम् ॥ अशेषेण रिपुं हन्या-न्नात्र कार्य्या विचारणा ॥ १७७ ॥ विवादे व्यवहारादौ यशोविजयदो भवेत् ॥ अनया विद्यया जप्तं पताकाध्वजदुन्दुभिः ॥ १७८ ॥ शृङ्गं शङ्खा-दिकं सर्वं यानं सेना च सैन्यपः॥संमुखेत्स च संग्रामे लभते विजयं खलु॥ १७९॥ अथास्याः प्रोच्यते भेदो यदा घोरस्थले पतेत्॥ ऋणं वा जायते तारान्नम उक्ता च पूर्ववत्॥ १८०॥द्वादशार्णो भवेन्मन्त्रः संग्रामविजयप्रदः ॥ मुन्याद्यं पूर्वव-त्प्रोक्तं ध्यानपूजादिकं तथा ॥ १८१ ॥ व्यस्तेन च समस्तेन मन्त्रेणाङ्गानि षट् क्रमात् ॥ काशीप्रान्तस्थिता एते कीर्तिता गणनायकाः ॥ १८२ ॥ देहलीसञ्ज्ञगणपानिकटेऽन्ये तु षोडश ॥ विनायकास्तु काश्यां वै वेदकर्म्मप्रव-र्त्तकाः ॥ १८३ ॥ तान्त्रिकाणां नात्र सिद्धिर्गामिनां तु विशेषतः ॥ वेद-स्तवनादिस्तस्यात्र द्रुतं सिद्धिः प्रजायते ॥ १८४ ॥ अभक्तविघ्नकर्ता च भक्तानां विजयप्रदः ॥ पापिनां पापहर्ता च वाममार्गप्रसाधकः ॥ १८५ ॥ तपोवनपरित्राता सीतारक्षाकरस्तथा ॥ आयुष्कर्त्ता रोगहर्त्ता निधिदाता द्विजा-धिपः ॥ १८६ ॥ तुन्दिलो विश्वरक्षाकृद्गणनाथो गणाधिपः ॥ दुग्धदश्चेति नामानि सर्वसिद्धिकराणि च ॥ १८७ ॥ हृदन्तानि प्रजप्तानि मन्त्रार्णायुत-

१ भिन्नविभक्तिलोप आर्षः ॥

संख्यया ॥ नामानुसारिणी सिद्धिरवश्यं स्यान्न संशयः ॥१८८ ॥ अथातः सम्प्रवक्ष्यामि ये विमुक्तान्तसंस्थिताः ॥ सीमाविनायका अष्टौ मन्त्रस्तेषां निरूप्यते॥ १८९॥धराबीजं समुच्चार्य तद्बीजञ्च समुच्चरेत् ॥ ङेन्तं तन्नामगं प्रोच्य-हृदयान्तो मनुः स्मृतः ॥ १९० ॥ अविमुक्ते पूर्वदिशि लम्बोदरविनायकः ॥ शुष्कोदरी योगिनी तु धात्रीरूपं समाश्रिता ॥ १९१ ॥ तत्रैव शूलिनी दुर्गा-तस्यास्साधनमुच्यते ॥ ज्वलद्वयं शूलिनीति वदेद्दुष्टग्रहे ततः ॥ १९२ ॥ हुं फट् स्वाहेति मन्त्रोयं तिथिवर्णः प्रकीर्त्तितः॥मुनिर्दीर्घतमाश्छन्दः ककुबुक्तं च देवता ॥१९३॥ शूलिन्याद्या महादुर्गा सर्वारिष्टविनाशिनी ॥ दुर्गे स्याद्धृदयं शीर्षं वरदे विन्ध्यवासिनी ॥ १९४ ॥ शिखा वर्म्मासुरान्ते च दमन्यन्ते ततो वदेत् ॥ शुद्धं प्रियं वदेत्पश्चान्नासय रूपमीरितम् ॥ १९५ ॥ अस्त्रं च देवसिद्धान्ते वदेन्मन्त्री सुपूजिते ॥ नन्दिन्यंतरे रक्षयुग्मं समस्तयोगेश्वरीति च ॥ शूलिनीतिपदाद्याश्च वर्म्मास्त्रान्ताः प्रकीर्त्तिताः ॥ १९६ ॥ पञ्चाङ्गमन्त्रमुद्दिष्टमेवं न्यस्तं च मन्त्रिणः ॥ रक्षाकृद्ग्रहदोषघ्नमङ्गकर्तुर्भवेद्ध्रुवम्॥एवं न्यस्य शरीरादौ ध्यायेद्दुर्गां सुरैर्नुताम्॥ १९७॥गदां दरमरिंखड्ग बाणाञ्छूलं च खेटकम् ॥ करालिकां पाशधनुर्दिग्भिर्हस्तैश्च बिभ्रतीम् ॥ ॥ १९८ ॥ मेघाभामिन्दुमुकुटां सिंहारूढां चतसृभिः ॥ कन्यकाभिः परिवृतां त्र्यक्षां भूषणभूषिताम् ॥ १९९ ॥ एवं ध्यात्वा पुनर्न्यासान्कृत्वा कुर्वीत साधकः ॥ दुर्गापीठे पुरा प्रोक्ते ध्यात्वा देवीं प्रपूजयेत् ॥ २०० ॥ दुर्गाद्याभिर्द्वितीया स्यादायुधाद्यैः समन्ततः ॥ दुर्गा च वरदा विन्ध्यवासिन्यसुरमर्द्दिनी ॥ २०१ ॥ प्रोक्ता युद्धप्रिया देवसिद्धाद्या पूजितापि च ॥ नन्दिनी सुमहायोगेश्वरीति गदिताश्च ताः ॥ २०२ ॥ चक्रं शङ्खं खड्ग-गदे शरांश्चापं त्रिशूलकम् ॥पाशं देव्यग्रतश्चैतान्पूजयेच्च प्रदक्षिणम्॥२०३॥ दिशादिनाथैर्वज्राद्यैः पञ्चावरणपूजितम् ॥ वर्णलक्षं जपेन्मन्त्रं जुहुयात्तद्दशांशतः ॥ २०४ ॥ आज्येन साज्यहविषा तर्प्पणादि ततश्चरेत् ॥ आराध्य विप्रान्विधिवद्भक्त्याभ्यर्च्य गुरुं ततः ॥ २०५ ॥ एवं सिद्धमनुर्मन्त्री प्रयोगान्निजवाञ्छितान् ॥ विदधीत विधानेन गुरोराज्ञापुरःसरम् ॥ २०६ ॥

शूलाद्यायुधसंयुक्तामुग्रास्यां शूलिनीं तथा॥ विचिन्त्य प्रजपेन्मन्त्रं यस्तं स्पृष्ट्वा विधानतः ॥ २०७ ॥ तमाविश्य क्षणं सर्वं वदेत्पश्चाद्विनश्यति ॥ मन्त्रावृत्त्या तदानीं च भूतसङ्घः पलायते ॥ २०८ ॥ स्मृत्वा च रोगिणां मध्ये शूलिनीं स्वायुधैर्युताम् ॥ जपतो विद्रवन्त्याशु ग्रहाश्चोपग्रहादयः ॥ २०९ ॥ क्षेमंकरीं पूजयित्वा मनुमेनं जपेत्सुधीः ॥ परायुधानि गृह्णाति सेना[1] निश्चेष्टिता भवेत् ॥ २१० ॥ तिलयुक्तैस्सर्षपैश्च वैरिनामसुसंयुतैः ॥ लक्षं प्रजुहुयाच्छत्रुर्यमस्यातिथ्यमाप्नुयात् ॥ २११ ॥ त्रिस्वादुयुक्तिलैरष्टसहस्रं प्रत्यहं हुनेत् ॥ शक्तिरस्याप्रतिहता वत्सरात्प्राग्भवेदलम् ॥ २१२ ॥ घृतेनाष्टशतं मन्त्री हुत्वा वाञ्छितमप्नुयात् ॥ वत्सरात्प्राग्दूर्वया च मधुरत्रययुक्तया ॥ सम्यगष्टोत्तरशतं हुत्वेप्सितमुपव्रजेत् ॥ २१३ ॥ अष्टोत्तरशतं मन्त्री गुलिकां गोमयस्य च ॥ जुहुयात्सप्तदिवसैरिष्टैः सेङ्कस्तदादरात् ॥ २१४ ॥ अस्पृष्टभूम्यन्तारिक्षे गृहीत्वा गोमयं शुभम्॥ त्रिसहस्रमितं जप्तं यियासोर्द्वारिसङ्खनेत्॥ २१५॥ तस्य संस्तम्भनं तत्र भवने नात्र संशयः ॥ सेनामुखे निखातं च सेनास्तम्भं करोत्यलम् ॥ २१६॥ ग्रामं वा नगरं गच्छेत्संस्मरेदम्बिकां सुधीः ॥ पानीयान्नकरां चैव प्रसन्नां प्रजपेन्मनुम् ॥ २१७ ॥ तर्पयित्वा प्रविष्टस्तं प्राप्नुयान्मिष्टभोजनम् ॥ सहस्रभृत्यवर्गेण सहितो नात्र संशयः ॥ २१८ ॥ अर्कवृक्षसमिद्भिश्च त्रिमध्वक्ताभिरुक्तवत् ॥ जुहुयाद्दशसाहस्रं यान्समुद्दिश्य साधकः ॥ भवन्त्येव हि ते वश्यास्तथाश्वत्थसमिद्वरैः ॥ २१९ प्रसन्नचेताश्च तिलैः पूर्वकर्म्मणि वा हुनेत् ॥ दुर्गाकल्पोदितान्सर्वान्प्रयोगान्साधयेत्सुधीः ॥ २२० ॥ अथ वक्ष्ये कूटदन्तं गणेशं कूटसिद्धिदम् ॥ योगिन्यस्य ज्वलज्जिह्वा नर्त्तकी रूपधारिणी ॥ गृध्रदुर्गस्य निकटे साधकाभीष्टदायिनी ॥ २२१ ॥ तारो नमो भगवति ज्वालामालिनि संवदेत् ॥ गृध्रं गणपतिं वृत्ते स्वाहान्तो द्विनखाक्षरः ॥ २२२ ॥ त्रिचतुष्पञ्चवस्वक्षिमितैर्वर्णैर्मनोः क्रमात् ॥ पञ्चाङ्गानि सुधीरस्य जातियुक्तानि कल्पयेत्[2] ॥ अन्यच्छूलिनिदुर्गावित्सवर्मस्याः

---

१ अप्रत्यये तथैवेष्टेति वार्त्तिकेन परशब्दलोपेन शब्दसम्बन्धिमाहिम्ना वात्र परसेनेत्यर्थः ॥
२ भवेदिति शेषः ॥

प्रकीर्त्तितम् ॥ २२३ ॥ अथातः सम्प्रवक्ष्यामि देवं शालंकटंकटम् ॥ स्वदंष्ट्रा योगिनी चास्य नानासङ्गीतकोविदा ॥ २२४ ॥ विधात्री चेटिका चास्य तस्याः साधनमुच्यते ॥ ओं विधात्रि नीरक्षीरविधायिनि पदं वदेत् ॥ स्वाहान्तास्थितिवर्णोऽयं जपो लक्षमितो मतः ॥ २२५ ॥ धात्रीतरुसमीपस्थां विधात्रीं कमलासनाम् ॥ विशाललोचनां वन्दे नीरक्षीरविधायिनीम् ॥ ॥ २२६ ॥ नदीतीरे तु यत्रास्ते धात्रीवृक्षो मनोरमे ॥ सफलस्तस्य भूमौ तु कार्त्तिक्यां पूर्णिमातिथौ ॥ २२७ ॥ सोमवारे तदा मंत्री निशायां त्रिशतं जपेत् ॥ होमो धात्रीफलैः कार्य्यस्ततस्तु तरुतो ध्रुवम् ॥ जायते हि महाशब्दः प्रसन्नास्मीति शोभनः ॥ २२८ ॥ तन्मन्त्रपठनान्मन्त्री नीरक्षीरं भजेदिह॥इत्युक्तेकीलमुद्धृत्य सम्पठेन्मन्त्रमुत्तमम् ॥ नीरान्वितं ततः क्षीरं जायते क्षीरमादरात् ॥ २२९ ॥ अथातः सम्प्रवक्ष्यामि कूष्माण्डाख्यविनायकम् ॥ बालग्रहपतिश्चास्य योगिनी चारुणानना ॥ वेणुवादनमेवेयं कृत्वा काश्यां सदा रता ॥ २३० ॥ चेटी तु वैनतेयाक्षी तस्याः साधनमुच्यते ॥ तारं च वैनतेयाक्षि सर्पसेवित इत्यपि ॥ नागदेवी डेन्तमुक्त्वास्वाहान्तोष्टादशाक्षरः ॥ २३१ ॥ नानाकमलसर्पादिवेष्टितां विन्ध्यवासिनीम् ॥ ध्यायामि वैनतेयाक्षीं विषदोषहरां शिवाम् ॥ चतुःषष्टिसहस्राणि पुरश्चरणमस्य तु॥२३२॥ श्रावणे मासि नागानां पञ्चमी या प्रकीर्त्तिता ॥ तस्यां जपेन्महामन्त्री रात्रौ वल्मीकभूमिषु ॥ २३३ ॥ अयुतं वैनतेयाक्षीं होमः स्यान्मातुलुङ्गकैः ॥ ततः सा गारुडीं विद्यां प्रसन्ना सम्प्रयच्छति ॥ सर्पाकर्षणशक्तिं च समस्तविषनाशिनीम् ॥ २३४ ॥ मुण्डं विनायकं वक्ष्ये ऋक्षाक्षीयोगिनीयुतम् ॥ काशते काशिकायान्तु वीणावादनतत्परा॥किंकरी नाम चैतस्य चेटी तत्साधनं ब्रुवे॥२३५॥ किंकरी जलदेवीति जलं पूरयपूरय॥धंधं सप्तदशार्णोऽयं जपेद्वर्णसहस्रकम्॥२३६॥ अवृष्टिकाले रात्रौ हि नरो नद्यां जले जपेत् ॥कण्ठमात्रेयुतं चैकं ध्यायन्देवीं समाहितः॥२३७॥ किंकरीं वारुणं पाशं बिभ्रतीं जलरूपिणीम् ॥ विषक्षतस्वरूपाभां घोरगर्जनभीषणाम् ॥ प्रभाते वृष्टिरायाति सा हि

१ इदं पूर्वान्वयि ॥ २ मयेति शेषः ॥ ३ इदं पूर्वान्वयि ॥ ४ स्मरन्निति शेषः ॥

पञ्चदिनावधि ॥ २३८ ॥ अथ वक्ष्ये गणेशानं विख्यातं विकटद्विजम् ॥ योगिनी केकराक्षस्य मृदंगं वादयेद्वरम् ॥ वाग्वादिनी चास्य शक्तिर्मन्त्रावस्य निरूप्यते ॥ २३९ ॥ वदयुग्मं वाग्वादिनि स्वाहेति च दशाक्षरः ॥ ऋषिः कण्वो विराट् छन्दो देवता तु सरस्वती ॥ २४० ॥ मातृकोक्तविधानेन मन्त्री कुर्य्यात्षडङ्गकम् ॥ के[1] श्रोत्रयोनसोर्हस्त्योः कपोलास्ये तथेन्द्रिये ॥ ॥ २४१ ॥ गुदे च विन्यसेद्वर्णांस्ततो वागीश्वरीं यजेत् ॥ सितपद्मगतां श्वेतां लेखनीपुस्तकान्विताम् ॥ नम्रां च कुचभारेण वाग्देवीं चन्द्रशेखराम् ॥ ॥ २४२ ॥ ओंह्रींवर्णजाय चोक्त्वा सरस्वत्यासनाय च ॥ नमः पञ्चदशार्णोयमासनस्य मनर्मतः ॥ अंगानि पूजयेदादौ स्वरद्वन्द्वं ततोर्च्चयेत् ॥ ॥ २४३ ॥ वर्गाष्टकं ततोभ्यर्च्य ततोष्टौ शक्तयस्त्विमाः ॥ योगसन्ध्या च विमला ज्ञानबुद्धिः स्मृतिस्तथा ॥ २४४ ॥ मेधा प्रज्ञा ततः पूज्या मातृकाश्च दिगीश्वराः ॥ तदायुधानि पूज्यानि भूपुरादौ यथाक्रमम् ॥२४५॥ दशलक्षं जपेदन्ते त्रिसध्वक्तैश्च कैरवैः ॥ जुहुयात्तद्दशांशैस्तु शुद्धैश्चाथ तिलैर्हुनेत् ॥ २४६ ॥ तर्पणं मार्जनं कृत्वा ब्राह्मणान्भोजयेत्ततः ॥ एवं सिद्धेमनौ मन्त्री ब्रह्मचर्य्यव्रते स्थितः ॥ २४७ ॥ जपहोमरतो रामां चिन्तयेद्देवताधिया ॥ अचिरादेव स भवेत्कवीनामग्रणीर्ध्रुवम् ॥ २४८ ॥ न्यासान्वितमिमं मन्त्रं दिनादौ प्रत्यहं जपेत् ॥ लभते नात्र सन्देहो वाक्सिद्धिमतुलां नरः ॥ २४९ ॥ ब्रह्मवृक्षरमावृक्षसुमनोभिः समिद्वरैः ॥ मधुरत्रयसंयुक्तैर्जुहुयात्साधकः स्वयम् ॥ अचिराद्वाग्विलासेन कवीनामग्रणीर्भवेत् ॥ २५० ॥ अथातः सम्प्रवक्ष्यामि राजपुत्रं गणेश्वरम् ॥ योगिन्यस्य बृहत्तुण्डा तालवादनतत्परा ॥ २५१ ॥ मातृकासिद्धिदश्चायं तस्मात्तन्मंत्र उच्यते ॥ यस्यामन्तर्गता मन्त्रास्त्रयस्त्रिंशच्च कोटयः ॥ २५२ ॥ गायत्री मातृका वापि साधिता स नरो भवेत् ॥ समस्तागममन्त्राणां दाता-नास्त्यत्र संशयः ॥ २५३ ॥ अकारादिक्षकारान्ता वर्णा वायुश्च देवता ॥ वदन्ति मातृकां देवीं यया सर्वमिदं ततम् ॥ २५४ ॥ ब्रह्मा मुनिश्च गायत्री

---

१ शिरसि ॥

छन्दो देवी च मातृका ॥ हलो बीजान्यचः प्रोक्ताः शक्तयः कीलकं भवेत् ॥ ॥ २५५ ॥ अव्यक्तं सत्त्वनिर्वाच्यं व्यञ्जनैः स्वरसंगमः ॥ प्रागुक्तमातृकान्यासास्तत्रै मुख्या भवन्ति च ॥ २५६ ॥ सुधाकुम्भाक्षवटिकावरपुस्तकधारिणीम् ॥ पञ्चाशद्वर्णव्याप्ताङ्गीं चन्द्रार्धांकितशेखराम् ॥ २५७ ॥ त्र्यक्षां कुंदेन्दुरुचिरां पद्मस्थां कुचनामिताम् ॥ मुक्तामृतस्फुरद्रूपां भजे मातृसरस्वतीम् ॥ २५८ ॥ लिखेत्स्वर्णादिजे पत्रे रोचनाकुंकुमादिभिः ॥ अष्टपत्रं शुभं पद्मं भूपुरत्रितयावृतम् ॥ २५९ ॥ कर्णिकायां तु स्वकं बीजं केशरेषु द्वयम् द्वयम् ॥ कचटादिकवर्गांश्च लिखेदष्टदलेषु च ॥ २६० ॥ तत्कमलस्याशदिक्षु वं बीजं ठं विदिक्षु च ॥ पूजापीठमिदं प्रोक्तमावांगानि संयजेत् ॥ १६१ ॥ स्वरद्वन्द्वं ततो वर्गान्केशरेषु यजेदिमाः ॥ २६२ ॥ मेधा प्रज्ञा प्रभा विद्याधीर्धृतिस्मृतिबुद्धयः ॥ विद्येश्वरी मध्यमांते पूज्याः पीठे ततः परम् ॥ ॥ २६३ ॥ वर्गाष्टके त्विमाः पूज्या व्यापिनी पालनी तथा ॥ पावनी क्लेशिनी चापि धारिणी मालिनी तथा ॥ २६४ ॥ हंसिनी शान्तिनी पत्रस्याग्रेर्च्या मातरः परम् ॥ वीथ्यां लोकेश्वरानस्त्रे वीथ्यामस्त्राणि पूजयेत् ॥ ॥ २६५ ॥ तद्दशांशेन जुहुयान्मधुरत्रयलोलितैः ॥ तिलैः शुद्धैस्तर्पणादिकृत्वा सिद्धो भवेन्मनुः ॥ २६६ ॥ तत्त्वैर्भूर्यैश्च दिग्भिः कनकरजतताम्रान्तकैर्भिन्नसूत्रैः सम्यक्कृत्वा त्रिवर्गास्तबकमथ जपेद्गव्यमाज्यं हुनेच्च ॥ वस्त्रभाणां च पातं सुजनितहविषा चाभिषिंचेद्धृतैस्तां देवीमभ्यर्च्य धार्य्यं ग्रहगदशमनं संगरे स्याज्जयाय ॥ २६७ ॥ तोयम्पिबेद्दिनादौ च द्विवारं जप्तमेतया ॥ वत्सराज्जायते सम्यक्स मूर्खोपि कवित्वभाक् ॥ २६८ ॥ ब्राह्मीरसेन वचया पयसा पाचयेद्धृतम् ॥ अयुतं जप्तमनया भक्षितं कविताप्रदम् ॥ २६९ ॥ वर्णौषधीकाथसुवर्णकुम्भैर्जपन्सहस्रं च नरं प्रसिंचेत् ॥ कीर्तिश्च लक्ष्मीः कविता तथायुर्भवेच्च वन्ध्या लभते सुतान्वयम् ॥ २७० ॥ अथ प्रवक्ष्ये प्रवरं गणेशं सुरा प्रिया साखिलकर्म्मविज्ञा ॥ स्याद्योगिनी चास्य शुभंकरी च चेटी नदी-

---

१ यन्त्रामिति शेषः ॥

याम्यतटे क्षयोर्स्याः ॥ २७१ ॥ आक्रत्यर्णो मनुस्तारः शुभंकरा परेति च ॥ देवते ममेष्टं देहि दुर्भुश्री शिखिवल्लभा ॥ २७२ ॥ कलाकलापान्परिपालयन्ती विभावयन्ती विषयाननेकान् ॥ नारीनरेन्द्रानपि मोहयन्ती सा मानसे मेस्तु शुभंकरीश्रीः॥२७३॥ जप्त्वा लक्षं च रक्तैर्हयरिपुकुसुमैर्होमयेत्सिद्धमन्त्रः कृष्णायाम्भाद्रकृष्णे हयरिपुगहने चापि शेफोलिसिन्ध्वोः ॥ याम्ये तीरे च नद्या निशि जपमयुतन्तद्दशांशेन होमं कुर्य्यात्प्रातस्तु नीराज्जयति सुखकरान्साधकेन्द्रो गतोसौ ॥ २७४ ॥ नानाभोगकरः कामं यंयं प्रार्थयते तु तम् ॥ स्वयं ददाति सा देवी सुस्त्रीवित्ताम्बरादिकम् ॥ २७५ ॥ अथातः सम्प्रवक्ष्यामि वाराणस्यां तु ये स्थिताः ॥ आवृता वक्रतुण्डाद्याश्चेटीशक्तिसमन्विताः ॥ २७६ ॥ ङेन्तन्तन्नाम हृच्चेति तेषाम्मन्त्रः प्रकीर्त्तितः ॥ वक्रतुण्डविधिः पूर्वमुक्तोष्टानां स एव हि ॥ २७७ ॥ कपालहस्तयुक्तानां प्रदिष्टा ऋक्षयोगिनी ॥ शतनादे योगिनीति देहि देहि वदेत्ततः ॥२७८॥ ह्रींहूंस्वाहेति मन्त्रोयं ध्यानमस्या निरूप्यते ॥ वीणातन्त्रीस्फुरद्धस्तां तन्नादचलकुण्डलाम् ॥ २७९ ॥ कुसुम्भवसनां नम्रां स्तनभारेण योगिनीम् ॥ नदीतीरे चाम्रवणे जपेन्मन्त्रं दशायुतम् ॥ आम्रपत्रैः समूलैश्च हुनेत्सिद्धो भवेन्मनुः ॥ २८० ॥ अमायां श्रावणे मासि रात्रौ दूरे नदीतटे ॥ तत्र रात्रौ मनुं देव्या जपेदष्टसहस्रकम् ॥ २८१ ॥ प्राग्वद्धुनेदष्टशतं ततः शब्दाञ्छृणोति च ॥ वीणावेणुमृदङ्गानां किन्नरीणाञ्च भूयसः ॥ २८२ ॥ इत्यादयः शतं नादा जायंते नादिभीषणाः ॥ ततः सा योगिनीरूपा प्रत्यक्षा मन्त्रिणो भवेत् ॥ २८३ ॥ ददाति योगमुद्रां सा दर्शयेत्कुण्डलीपथम् ॥ ततः स्वानुभवो मन्त्री योगी ज्ञानी प्रजायते ॥ वाक्सिद्धिश्च भवेदस्य ब्रह्मभूयाय कल्पते ॥ २८४ ॥ अथातः सम्प्रवक्ष्यामि चैकदन्तुरविघ्नपम् ॥ योगिनी तस्य रक्ताक्षी गानवादरता सदा ॥ २८५ ॥ नेत्ररम्या चेटिकास्य वेदाग्न्यर्णो मनुश्च ओम्॥नेत्ररम्ये अञ्जनं च देहियुग्मं निधिं वदेत् ॥२८६॥ दर्शयद्वितयं चोक्ता पटलम्पदमुच्चरेत् ॥ दूरीकुरु युगम्पञ्च स्वाहेति कथितो मनुः॥२८७॥

१ निवासः ॥ २ इडभावश्छान्दसः ॥

पुरश्चरणमेतस्या अयुतत्रितयं चरेत् ॥ घृताक्तगुग्गुलैर्होमो देवतां साधयेत्ततः ॥ ॥ २८८ ॥ कानने करवीराणां रात्रौ वैशाखमासि तु ॥ चतुर्दश्यामपि देवीं नेत्ररम्यां शतत्रयम् ॥ २८९ ॥ भौमस्तु वासरः प्रोक्तस्त्वथ वा शुक्रवासरः॥ घृताक्तगुग्गुलैर्होमं ततः कुर्य्याच्छतत्रयम् ॥ २९० ॥ ददाति मन्त्रिणे तस्मै स्वाञ्जनं नेत्रबोधकम् ॥ निधिं भूमिगतं वस्तु दूरदेशगतं तथा ॥ आलोकते स मन्त्री च सद्यो भवति भूपतिः ॥ २९१ ॥ अथातः सम्प्रवक्ष्यामि कपिसिंहद्विपाननम्॥एवं त्रिवदनन्तस्य योगिनी तु शुकी मता॥रसज्ञा चेटकी चास्य पङ्कजाक्षी प्रकीर्त्तिता ॥२९२॥ ॐपङ्कजाक्ष्यमृतफलं देहीति युगं तथा ॥ श्रीं स्वाहा मेघवर्णोयं जपः षष्टिसहस्रकः ॥ होमः पलाशपुष्पैः स्यादभावे च समिद्वरैः ॥ २९३ ॥ सञ्जीवयन्तीव मदं लोलनेत्रातिसुन्दरी ॥ पंकजाक्षी कार्य्यकरी नानालंकारशोभिता॥२९४॥वसतन्तौ च गङ्गायास्तटे ब्रह्मरुहांवने॥ कृष्णाष्टम्याश्चैत्रमासे भौमे शुके थवा निशि॥२९५॥त्रिसहस्रं जपित्वातु पालाशैर्होममाचरेत्॥ततो देवी समायाति ददाति फलमुत्तमम्॥२९६॥जरामरणराहित्यं तत्कालम्भक्षिते सति॥फले तस्मिन्समायाति सद्गुरुःआर्थितःपुनः॥२९७॥अथातः सम्प्रवक्ष्यामि पञ्चास्यश्च गजाननम् ॥ श्येन्यस्य योगिनी प्रोक्ता रागालापनतत्परा ॥ पयोदिनीचेटिकास्य ह्यकत्रिंशाक्षरो मनुः ॥ २९८ ॥ तारम्पयोदिनीत्युक्त्वा जलधाराधरे तथा ॥ अग्निं शमय वाडवं वह्निं च शमय द्वयम् ॥२९९॥ श्रीं स्वाहा नम इत्येतज्जपेदन्ते सहस्रकम् ॥ सरस्तीरे पयः कार्यै हुनेत्सघृतपायसम्॥३००॥ वर्षन्ती जलबिन्दूंश्च मेघमाला मनोरमा ॥ श्यामाम्बरपरीधाना मे चित्तेस्तु पयोदिनी॥३०१॥श्रावणे बहुलाष्टम्यां रोहिणी ऋक्षसम्भवे ॥ भौमे बृहस्पतौ वापि शुक्रे वा तत्र वासरे॥३०२॥रात्रौ स्नान विधिं कृत्वा सरस्तीरे मनोरमे॥अयुतम्प्रजपेन्मन्त्रम्पायसैर्होममाचरेत्॥३०३॥ सहस्रैकन्ततो देवी साक्षात्सा तु पयोदिनी॥ ददाति वरकां चैकाम्मन्त्रिणे तोषमागता॥३०४॥अग्निदाहोस्य नैवास्ति भवेच्च करकान्वितः॥अवृष्टावपि कर्तव्यन्ध्यात्वादेवीं भवेज्जलम्॥३०५॥अथातः सम्प्रवक्ष्यामि हेरम्बं गणनायकम्॥

१ ध्यात्वेति शेषः॥ तेनेति शेषः ॥ ३ इदं पूर्वान्वयि ॥

चत्वरादिककाम्यास्य योगिन्यस्ति कपोतिका ॥ हंसवागीश्वरीशाक्तिर्मन्त्राद्यस्य निरूप्यते ॥ ३०६॥ ॐ ह्रीं ॐ ह्रीं ॐ तथोक्ता सरस्वत्यै नमस्त्विति ॥ ऋषिः शाक्तिश्च देव्यादिर्गायत्री छन्द ईरितम् ॥ ३०७ ॥ हंसवागीश्वरी देवी देवता परिकीर्त्तिता ॥ विद्वांस्तृतीयबीजेन षडङ्गन्यासमाचरेत् ॥ ३०८ ॥ सुषुम्णाग्रे भ्रुवोर्मध्ये रन्ध्राणां नवमे तथा ॥ मन्त्राक्षराणि विन्यस्य चिन्तयेदिष्टदेवताम् ॥ ३०९ ॥ हंसपृष्ठस्थपद्मस्थां कान्तकर्पूरसन्निभाम् ॥ चन्द्राननां मन्दहासां चन्द्रार्धकृतशेखराम् ॥ ३१० ॥ पुस्तकं च करैर्वीणां जपमालां सुधाघटम् ॥ इति ध्यात्वा यजेत्पीठे मातृका याः पुरोदिताः ॥ ३११ ॥ वर्णाद्येनाशनं दद्यान्मूर्तिं मूलेन कल्पयेत् ॥ तस्यामावाह्य तां देवीमर्चयेद्गन्धपुष्पकैः ॥ ३१२॥ संपूज्य पार्श्वयोर्वाचौ संस्कृते प्राकृते उभे ॥ ततोऽङ्गानि च तच्छक्तीर्मातृर्लोकेश्वरानपि ॥ तदस्त्राणि ततो बाह्ये देवीमित्थं प्रपूजयेत् ॥ ॥ ३१३ ॥ प्रज्ञा मेधा श्रुतिः शक्तिः पञ्चमी स्मृतिरीरिता॥ वागीशी सुमतिः स्वस्तिरष्टौ तच्छक्तयो मताः ॥ ३१४॥ वर्णैकाधिकलक्षन्तु जपेन्मन्त्रं समाहितः ॥ तत्सहस्रं प्रजुहुयात्सिताब्जैर्नागचम्पकैः॥ तर्प्पणादि ततः कुर्य्यात्साधको नियतव्रतः ॥ ३१५॥ इमं मनुं यो भजते पातकैर्मुच्यतेचिरात् ॥ लक्ष्मीयशःकान्तियुतः कवित्वस्यालयं भवेत् ॥ ३१६॥ कुर्य्यात्पूर्वानुगादितान्प्रयोगानत्र मन्त्रवित् ॥ अथ मन्त्रान्तरं वक्ष्ये यत्तस्याः षोडशार्णकम् ॥ ३१७ ॥ ऐंकारं पूर्वमुच्चार्य्य नमो भगवतीति च ॥ वेदयुग्मं च वाग्देवी स्वाहान्तो मन्त्र ईरितः ॥ ३१८ ॥ पूर्वमन्त्रोदिताश्चात्र मुन्याद्याः सम्प्रकीर्तिताः ॥ पदैर्मन्त्रस्य षड्भिः स्यात्षडङ्गं चैव जातिमत ॥ ३१९ ॥ कुन्देन्दुभासिवसनां श्वेतमाल्यानुलेपनाम् ॥ वनमालां तथा व्याख्यां मुद्रां पुस्तकमेव च॥ ३२०॥ सुधाकुंभं हस्तपद्मैर्दधतीं श्वेतपद्मगाम् ॥ त्र्यक्षां चन्द्रार्धभालां च पीनोन्नतपयोधराम् ॥ ३२१ ॥ प्राग्वत्पूजाप्रयोगादिविशेषोत्र निगद्यते ॥ अष्टलक्षं जपेन्मन्त्रं हविष्याशी जितेन्द्रियः॥ ३२२ ॥यथाविधि जपान्ते च तद्दशांशं हुनेत्तिलैः॥आज्याप्लुतैस्तर्पणादि सर्वं पूर्ववदाचरेत्॥ ३२३॥अह्नो मुखे प्रत्यहं य एतज्जप्त्वा जलं पिबेत्॥संवत्सराद्भवेद्विद्वान्नात्र कार्य्या विचारणा॥ ३२४॥

स्नानकाले मन्त्रजप्तैस्तोयैः सिञ्चेत्स्वमूर्धनि ॥ सर्वैस्तोयैस्तर्पयेत्तां मेधा वंशे भवेद्ध्रुवम् ॥ जपित्वा मन्त्रमेतं च पुष्पगन्धादिकं सुधीः ॥ ३२५ ॥ शिरसा धारयेत्तेन सभापूज्यः स जायते ॥ वादे च विजयो नित्यं भवेत्तस्य न संशयः ॥ ३२६ ॥ अन्यन्मन्त्रान्तरं चास्या वक्ष्यते रुद्रवर्णकम् ॥ ऐं वाचस्पते अमृते प्लुवः प्लुरिति कीर्तितः ॥ दशाक्षरवदस्यान्यत्पञ्चांगं तु मनोः परैः॥ ३२७ ॥ पद्मसंस्थां पद्मयुगाक्षमालापुस्तकानि च ॥ करैर्दधानां चन्द्रार्धमुकुटां त्रीक्षणां सिताम् ॥ नानामुनिनुतां नम्रां स्तनभारेण ताम्भजे ॥ ३२८ ॥ यजेच्च मातृकापीठे दशार्णोक्तेन वर्त्मना ॥ प्रयोगादि प्रकुर्वीत पूर्ववद्वै दशार्णवत् ॥ ३२९ ॥ अथातः सम्प्रवक्ष्यामि विघ्नराजं विनायकम् ॥ योगिनी पाशहस्तास्य वंशारोहणकारिणी ॥ सरस्वती शक्तिरस्य त्र्यर्णा चेटीत्रयान्विता ॥ ३३० ॥ चारुस्वामीति मन्त्रोऽस्य विप्राणां परिकीर्त्तितः ॥ वाक्तुरस्वामीति संजप्यः क्षत्रियैः परतापकैः ॥ ३३१ ॥ ग्वारुं स्वामीति वैश्यानामैरुं स्वाम्यंघ्रिजन्मनाम् ॥ ऋष्यादिकं दशार्णोक्तं देवी त्र्यर्णा सरस्वती ॥ ३३२ ॥ द्विरुच्चारितमूलेन षडङ्गं जातिसंयुतम् ॥ करन्यासं विधायाथ ध्यायेद्देवीं सरस्वतीम् ॥ ३३३ ॥ मुक्ताहारसमायुक्तां चन्द्रार्धकृतशेखराम् ॥ व्याख्यामुद्रा रत्नकुम्भं त्वक्षमालां च पुस्तकम् ॥ ३३४ ॥ पीनोत्तुङ्गकुचानम्रां श्वेताब्जस्थां सरस्वतीम्॥ ३३५ ॥ पुरा प्रोक्ते मातृकायाः पीठे देवीं समर्चयेत्॥ यथापूर्वं प्रत्यहं यः स भवेद्वाक्पतिर्ध्रुवम् ॥ ३३६ ॥ वर्णलक्षं जपेन्मन्त्रं हविष्याशी जितेन्द्रियः ॥ आज्याक्तहविषा वह्नौ दशांशं जुहुयात्ततः ॥ ३३७॥ तर्पणादि ततः कुर्य्यात्प्रागुक्तविधिना ततः ॥ एवं सिद्धमनुर्मन्त्री प्रयोगान्कर्तुमर्हति ॥ ३३८ ॥ चतुरंगुलसम्भूतैः सुमनोभिर्हुनेत्तु यः ॥ वाचः सोऽप्रतिमां सिद्धिमचिराल्लभते ध्रुवम् ॥ ३३९ ॥ कुचन्दनोदकेनाक्तैर्जातीपुष्पैः सिताम्बुजैः ॥ नंद्यावर्तोद्भवैः कुन्दसंयुतैः कुसुमैर्हुनेत् ॥ ३४० ॥ अचिरादतुलां वाचां सिद्धिं प्राप्नोत्यसंशयम् ॥ एवं मन्त्रं जपेन्मन्त्री सभायां जयमाप्नुयात् ॥ ३४१ ॥ वचां श्वेतां तथा ब्राह्मीं जपितां मनुनामुना ॥ अह्नो मुखे च यः खादेत्स मेधां

वाञ्छितां लभेत् ॥ ३४२ ॥ पाण्डवी पृथुमध्या च पार्थिवा चेति चेटिकाः॥ ॐपाण्डवीति बगले ततश्च बगलामुखि ॥ ३४३ ॥ शत्रोः पादं स्तम्भय-द्विः क्लींह्रीं भुवंचरे वदेत् ॥ स्क्रींस्वाहेति त्रिंशार्णो मन्त्रो ध्यानं निरूप्यते ॥ ३४४ ॥ पीताम्बरां पीतवर्णां पीतगन्धानुलेपनाम् ॥ श्वेतासनां पीतवर्णां विचित्रां पाण्डवीं भजे॥ ३४५॥ अयुतत्रितयं जप्त्वा कुसुम्भकुसुमैर्हु-नेत् ॥ एवं कृत्वा पुरश्चर्य्यां पश्चात्साधनमाचरेत् ॥ ३४६ ॥ वत्सरादौ प्रति-पदि शुक्रवारे जपेन्निशि ॥ अयुतं तद्दशांशेन कुसुम्भकुसुमैर्हुनेत् ॥ ३४७॥ प्रसन्ना जायते देवी वस्त्रमेकं ददाति च ॥ वैरिणोद्वेगतो बद्धं गतिस्तम्भः प्रजायते ॥ ३४८ ॥ कार्त्तिके कृष्णषष्ठ्यान्तु वटवृक्षतले स्थितः ॥ जप्त्वा युतं चूतपत्रैः ससुगन्ध्यगुरूद्भवैः ॥ तैलयुक्तैर्भवेद्धोमः पृथुमध्या प्रसीदति ॥ ३४९ ॥ ददाति पीठं तत्रस्थो दृष्ट्या रामाश्च मोहयेत् ॥ वहन्ति पञ्च-भूतानि तत्पीठं तेन खे गतिः ॥ ३५० ॥ उन्मत्तजनगां देवीं स्थूलाङ्गीं कलहप्रियाम् ॥ कार्त्तिकेयगुहाखेलां पृथुमध्यां भजाम्यहम् ॥ ३५१ ॥ ॐ पार्थिवे च पृथिवीतलचारिणि वायुमा॥ ततो लिनि च तारुण्यं कुरुयुग्मं च धं च धम् ॥ ३५२ ॥ स्वाहैकोनात्रिंशदर्णः पार्थिवाया मनुः स्मृतः ॥ नदीतीरे वृष्टिकाले चतुर्दश्यां निशान्तरे ॥ ३५३ ॥ कूलं खनित्वा कुहरं कर्त्तव्यं युगसप्तकम् ॥ जपस्यार्धायुतो होमः कदलीखण्डकैस्तथा ॥ ३५४ ॥ पृथिवीतलसञ्चारशालिनीं वायुमालिनीम् ॥ भजामि पार्थिवीं देवीं तारुण्याङ्क-प्रदां शिवाम् ॥ ३५५ ॥ तुष्टा ददाति सा शक्तिं पृथिव्यन्तरचारिणीम् ॥ जरामरणराहित्यं सम्भवेच्चैव सर्वगः ॥ ३५६ ॥ विनायकस्तु प्रवरो दण्डहस्ता-स्य योगिनी ॥ रज्जुरोहास्वरूपा सा चेटी कंकालिका मता ॥ ३५७ ॥ ऐं कंकालीमहाकालीकलिकलाभ्यामुच्चरेत् ॥ स्वाहान्तःस्थितिवर्णोयं लक्षमस्य जपो मतः॥ ३५८ ॥ हुनेदस्य सहस्रैकं कंकाली वरदा भवेत् ॥ ईप्सितं तत्साधकस्य तदेकं सा प्रयच्छति॥ ३५९॥ अथातः सम्प्रवक्ष्यामि गणेशं मोदक-प्रियम्॥ प्रचण्डा योगिनी चास्य चेटिका पंकवासिनी॥ ३६०॥ ॐ पंकवासिनी पंकजावती वनेदवते ॥ केदारं देहि सिद्धिं च कुरु द्विः कामबीजकम् ॥ रमा

बीजं वह्निजाया चैकत्रिंशाक्षरो मनुः ॥ ३६१ ॥ वैशाखे पञ्चसरासि स्वल्पोदे जलवर्जिते ॥ सप्तरात्रं जपेन्मन्त्रं दिवसे लक्षसङ्ख्यया ॥ होमस्तत्पत्रपुष्पैश्च देव्या ध्यानं निरूप्यते ॥ ३६२ ॥ पंकजाक्षि निशि वै शिवदूति स्मेरवक्त्र-नयनाम्बुजलीले।।मानसे मम वस स्मरदेवि प्रत्यहं कमलकाननसंस्थे॥ ३६३॥ सदा देवी समागत्य त्रिजगद्वशकारकम् ॥ ददाति केशरं चैकं कल्पपुष्पाति-गन्धवत् ॥ ३६४ ॥ घर्षयित्वास्य तिलके कृते स्यादखिलं जगत् ॥ वश्यं राजस्त्रियो भूपाः पण्डिता देवता अपि ॥ ३६५ ॥ अथातः सम्प्रवक्ष्यामि पूर्वदिक्स्थान्विनायकान् ॥ महाश्मशानमावृत्य स्थितानभ-यदायकान् ॥ ३६६ ॥ प्रथमं मनवश्चैषां स्वबीजहृदयादिकम् ॥ चतु-र्थ्यन्तं भवेन्नाम योगिनी वसुविक्रमा ॥ ३६७ ॥ चेष्टां वातुलवत्कुर्य्यात्पा-रिजातसरस्वती ॥ अस्य शक्तिस्तु तन्मन्त्रः प्रोक्त एकादशाक्षरः ॥ ३६८ ॥ ॐ ह्रीं हंसवर्णाश्च सैकारा बिन्दुसंयुताः ॥ पुनर्ह्रीं माँ सरस्वत्यै हृदयान्तो मनुर्मतः ॥ ३६९ ॥ ऋषिध्यानन्यासजपं हंसवागीश्वरीमतम् ॥ प्रयोगाश्चापि सिद्ध्यन्ति पूर्वोक्ताः सर्व एव हि ॥ ३७० ॥ वरानना चेटिकास्य तस्याः साधनमुच्यते ॥ वरानने पदं चोक्त्वा वामलोचन इत्यपि ॥ ३७१ ॥ परस्य मारिणी चोक्त्वा मालिनीद्वितयं ततः ॥ धुंधुंधीं वह्निजायान्तो मनुः षट्त्रिं-शदर्णकः॥ ३७२॥सौन्दर्य्यामृतसन्दोहसारभूतामिमां पराम् ॥ विवर्धितां स्थिरां देवीं सम्भजे तां वराननाम् ॥ ३७३ ॥ रथ्याद्वारे कुजे कृष्णसप्तम्यां तु शुचिर्यजेत् ॥ सहस्रत्रितयं होमः शङ्खैश्चापि कपर्दकैः ॥ ३७४ ॥ ततः स्त्रीरूपिणी दद्यात्कपर्दकं वरानना ॥ कपर्दं स्थापयेद्यत्र कणादीनां कुशूलके ॥ ३७५ ॥ त्रिदिनावधि तद्धान्यं विक्रीतं नैव हीयते ॥ ततो धान्यान्तरं स्थाप्यं वृद्धिस्तत्रापि जायते ॥ ३७६ ॥ सिंहतुण्डो गणाध्यक्षो वेणुप्रा चास्य योगिनी ॥ पृथिव्यावेष्टनकरी सप्तकोटेश्वरी मता ॥ ३७७ ॥ शक्ति-श्चेटी विधुश्रेष्ठा ततः साधनमुच्यते ॥ कः स उक्त्वा चाण्डिकां च सः कः सप्ताक्षरो मनुः ॥ ३७८ ॥ ऋषिर्ब्रह्मा च गायत्री छन्दः प्रोक्तं च देवता ॥

सप्तकोटेश्वरी देवी वागैश्वर्य्यकरी मता ॥ ३७९ ॥ षडूदीर्घयुक्चकारेण[1] षडङ्गं सम्प्रकीर्तितम् ॥ अस्याः पूजादिकं सर्वं त्रिपुरावत्प्रकीर्तितम् ॥ ३८० ॥ विधुश्रेष्ठामनुं वक्ष्ये विधुश्रेष्ठे[2] विपद्गते ॥ मानं पूरय कर्णान्ते ताटङ्कं देहि युग्मकम् ॥ थं लक्ष्मीर्वह्निजायान्तः सप्तविंशाक्षरो मनुः ॥ ३८१ ॥ चित्रायां सोमवारे च यदा सोमग्रहो भवेत् ॥ यावद्विधुविमोक्षः स्यात्तावन्मन्त्रञ्जपे-ज्जले ॥ ३८२ ॥ तदा देवी तु ताटङ्कं दद्यात्सव्यश्रुतिस्थितम् ॥ पूर्णचन्द्र-प्रभाभन्तदमाम्पूर्णां करोति च ॥ ३८३ ॥ साधको लोकमान्यश्च ध्यान-मस्या निरूप्यते ॥ चन्द्रमण्डलसंस्थान्तां विधुश्रेष्ठां वियद्गताम् ॥ काश्मी-रचारुताटङ्कां ध्यायामि शिववल्लभाम् ॥ ३८४ ॥ अथातः सम्प्रवक्ष्यामि कुपिताक्षङ्कजाननम् ॥ पापहन्त्री योगिनी तु पुत्रदारूपधारिणी ॥ ३८५ ॥ कुपिताक्षस्य शक्तिस्तु बाला स्याद्वामलोचना ॥ अस्य चेटी समाख्याता तस्याः साधनमुच्यते ॥ ३८६ ॥ ऐंक्लींसौरिति बालायास्त्र्यक्षरो मन्त्र उच्यते ॠषिस्तु[3] दक्षिणामूर्तिः पंक्तिश्छन्दोस्य देवता ॥ ३८७ ॥ बालाबीजं वाङ्मयं स्यात्तार्त्तीयं शक्तिरुच्यते ॥ कीलकं कामराजः स्याद्द्विरावृत्त्या षडङ्ग-कम्[4] ॥ ३८८ ॥ यथा त्रिपुरभैरव्यास्त्र्यर्णन्यासाः पुरोदिताः ॥ एतद्बीजेन ते सर्वे कर्त्तव्यास्तत्फलाप्तये ॥ ३८९ ॥ अभयं पुस्तकं मालां वरं च दध-तीङ्करैः ॥ अरुणामरुणाब्जस्थां रक्तवस्त्रां द्विजेशकाम्[5] ॥ ३९० ॥ यन्त्रो-द्धारञ्च पूजायाम्पूजयेत्सकलन्तथा ॥ ज्ञेयं त्रिपुरभैरव्यास्त्र्यक्षरायाश्च तत्समम् ॥ ॥ ३९१ ॥ जपो लक्षत्रयं होमे द्रव्याद्यं तद्वदेव हि ॥ कुमारीपूजनं नित्यं काम्यसिद्ध्यर्थमुच्यते ॥ ३९२ ॥ मालतीजातिकामल्लीकुसुमैर्मधुमिश्रितैः ॥

---

१ चां हृदयाय नमः, चीं शिरसे स्वाहा, चूं शिखायै वषट्, चैं कवचाय हुम्, चौं नेत्रत्रयाय वौषट्, चः अस्त्राय फट् । २ ॐ विधुश्रेष्ठे विपद्गते मानं पूरय कर्णताटङ्कं देहिदेहि थं श्रीं स्वाहा ३ अस्य श्रीबालामन्त्रस्य दक्षिणामूर्तिर्ॠषिः पंक्तिश्छन्दः बाला देवता ऐं बीजम् सौः शक्तिः । क्लीं कीलकं बालादेवताप्रीतये चेष्टसाधने विनियोगः ॥ ४ ऐं क्लीं सौः ऐं क्लीं सौः एभिः षड्बीजैः षडङ्गन्यासं कुर्य्यात् यथा ऐं हृदयाय नमः, क्लीं शिरसे स्वाहा, सौः शिखायै वषट्, ऐं कवचाय हुं, क्लीं नेत्रत्रयाय वौषट्, सौः अस्त्राय फट् । ५ द्विजेशः के यस्या इति विग्रहः ॥

घृतचूर्णैश्च जुहुयाद्वागीशत्वं प्रजायते ॥ मूकस्यापि हि मूढस्य शिलारूपस्य नान्यथा ॥ ३९३ ॥ जपापुष्पैराज्ययुतै रक्तक्षीरैर्यथाविधि ॥ हवनान्मोहयेन्मन्त्री लोकत्रयनिवासिनः ॥ ३९४ ॥ कस्तूरीकुंकुमेन्दूनां हवनात्कामवद्भवेत् ॥ चम्पकैः पाटलैर्होमान्महतीं श्रियमाप्नुयात् ॥ ३९५ ॥ गुग्गुल्वगुरुकर्पूरचन्दनानां च होमतः ॥ राजनागेन्द्रदेवानां पुरन्ध्रीर्वशमानयेत् ॥ ॥ ३९६ ॥ लाक्षाहोमाल्लभेद्राज्यं पक्वान्नमधुहोमतः ॥ उपसर्गनिवृत्तिः स्यात्कह्लारहवनाद्धनम् ॥ ३९७ ॥ दुग्धेनायुर्धनं दध्ना मेधारोग्यं घृतेन तु ॥ समिद्भिर्जायते क्षीरं मधुना मृत्युनाशनम् ॥३९८॥दधिमाक्षिकहोमेन सौभाग्यं धनमाप्नुयात् ॥ कह्लारहवनाद्भाग्यं मधुरत्रयरक्तयुक् ॥ ३९९ ॥ छागमांसं हुनेत्सर्वं परराष्ट्रं वशं नयेत् ॥ वैरिस्तम्भः सिताहोमाल्लाक्षाक्षीरपयोदधि ॥ हुतं तदल्पमृत्योश्च रोगाणां चापि नाशनम्॥ ४०० ॥ कमलैररुणैर्होमःसम्यक्सम्पत्तिदायकः ॥ रक्तोत्पलैर्जगद्वश्यं लक्ष्मीर्भाग्यं सितोत्पलैः ॥ ४०१ ॥ दाडिमं मातुलुङ्गं च नारङ्गं सकलं क्रमात् ॥ कूष्माण्डं जुहुयाद्विप्रादिका वश्या न संशयः ॥ ४०२ ॥ खर्ज्जूरीफललक्षस्य होमात्सर्वे नृपा वशाः ॥ द्राक्षा लाक्षासिद्धयष्टीकदलीफलहोमतः ॥ ४०३ ॥ लक्षाद्विंशतिराजानो वश्या स्तस्य महीपतेः ॥ नालिकेरेण लक्षं चेद्धुतोग्निर्नृपवद्भवेत् ॥ ४०४ ॥ पक्वाम्रलक्षहोमेन सम्पूर्णा धरणी वशा ॥ पनसस्य फलैर्लक्षहोमाद्वश्याः शतं नृपाः ॥ ४०५ ॥ गुग्गुलूनां तु होमेन सर्वदुःखानि नाशयेत् ॥ वश्याः सर्वे तिलाज्याभ्यां चन्दनेन तु शत्रवः ॥ ४०६ ॥ रक्तचन्दनहोमेन वश्याः स्युः पुरुषाः स्त्रियः ॥ खर्ज्जूरस्य तु होमेन वाग्वश्यं जायते नृणाम्॥ ॥ ४०७ ॥ कस्तूरीहोमतो भूपा मन्त्रिणः परिचारकाः ॥ नीलतण्डुलहोमेन शान्तिर्भवति मन्दिरे ॥ ४०८ ॥ शर्कराघृतहोमेन सर्वकार्य्याणि साधयेत् ॥ घृतपायसहोमेन धान्यसिद्धिर्भवेद्ध्रुवम्॥४०९॥तत्तदन्नस्य होमेन

१ मृगमदकाश्मीरकर्पूराणाम् । २ महामारीशान्तिः । ३ मधु । ४ अजपललम् । परंत्विदं ब्राह्मणादिवर्ज्यम् शूद्रोऽपि विशुद्धचित्तो नैतदधिकारी भवितुं शक्नोति । कुतः—'अहिंसा परमो धर्मश्चाहिंसा परमं तपः' इति भाषणात् ॥ ५ इदमुत्तरान्वयि ॥ ६ बीजपूरकप्रभेदः ॥

तत्तत्सिद्धिः प्रजायते ॥ सोपस्करैश्च वटकैरुपसर्गान्विनाशयेत् ॥ ४१० ॥ बन्धूककुसुमैर्होमात्सर्वसत्त्वं वशं नयेत् ॥ जपापुष्पैर्जगद्वश्यं बाणपुष्पैश्च मोहनम् ॥ ४११ ॥ बहुलस्य द्रुनेत्पुष्पैः सौभाग्यं जायते महत् ॥ दशाङ्गधूपहोमाच्च सौभाग्यमतुलं भवेत् ॥ ४१२ ॥ जम्बूफलैः स्त्रियो वश्याः कूष्माण्डैर्दैत्यकन्यकाः ॥ श्रीफलैरतुला लक्ष्मीरिक्षुदण्डैः सुखं भवेत् ॥ ४१३ ॥ रसादिक्षो राजकन्या नालिकेरफलेन वा ॥ केवलं घृतहोमेन वरदाः सर्वशक्तयः ॥ ४१४ ॥ वामी तु संगमात्पूर्वं प्रजपेद्वामचक्षुषः ॥ शतमात्रं पौर्णमास्यां विशाखादित्यसंगमे ॥ ४१५ ॥ सद्यः प्रसन्ना देवी स्याद्वीर्य्यस्तम्भं ददाति सा ॥ अपि कांताशतासंगे नासौ स्खलति मानवः ॥ ४१६ ॥ रतिदेवीं रतिप्रीतिं कामकीर्तिं मनोरमाम्॥ मम कामप्रदां सद्यः सम्भजे वामलोचनाम् ॥ ४१७ ॥ ईं लीं भीं रं समुच्चार्य वमुक्त्वा वामलोचने॥वीर्य्यं स्तम्भय द्वि श्चोक्त्वा नादे माकुरु चोच्यते ॥ ४१८ ॥ पञ्चविंशतिवर्णोयं स्वाहांतो मंत्र ईरितः ॥ मदनांधो लक्षजपात्सिध्येद्वा वामलोचना ॥ ४१९ ॥ प्रागुक्तो यस्तु विघ्नेशो नाम्ना क्षिप्रप्रसादनः ॥ काली च योगिनी तस्य शक्तिर्वागीश भैरवी ॥ चित्राक्षी चेटिका चास्य पुरे वसति योगिनी ॥ ४२० ॥ स्थैं ह्रीं चैव समुच्चार्य्य नित्यक्लिन्नेपदं वदेत् ॥ मदद्रवे च सहरा औकारेण समन्विताः ॥ ४२१ ॥ एकादशाक्षरो मंत्रो न्यासध्यानादिकं तथा ॥ चैतन्यभैरवीतुल्यं विशेषोयं च पूजने ॥ ४२२ ॥ अग्रकोणे च चैतन्यनित्यक्लिन्नां मदद्रवाम् ॥ षडंगावरणं पश्चादन्यत्सर्वं यथोक्तवत् ॥ ४२३ ॥ तुल्यश्चैतन्यभैरव्याः प्रयोगादिः प्रकीर्तितः ॥ चित्राक्ष्याः साधनं वच्मि तदेकांते नदीतटे ॥ ॥ ४२४ ॥ षट्कोणं मण्डलं कृत्वा तोयपूर्णान्घटान्न्यसेत् ॥ कोणषट्के तत्र सुराञ्छक्रादींस्तु प्रपूजयेत्॥इन्द्रं विधिं यमं कालं विष्णुमीशं क्रमेण च ॥४२५॥ अक्षय्यमावृतोयोथमारम्भस्य प्रकीर्तितः ॥ तदूर्ध्वमासनं कृत्वा मध्याह्ने प्रजपेन्मनुम् ॥ नित्यं शतत्रयं होमस्त्विरेलायाः फलैर्भवेत् ॥४२६॥

१ स्थैं ह्रीं नित्याक्लिन्ने मदद्रवे स्होम् इति मन्त्रः ॥ २ चित्राक्षि चित्ररूपेण रुद्रादिप्रेतसंस्थे प्रसीद श्रीश्रींस्वाहा ॥

कुर्य्यादेवं प्रत्यहन्तु तृतीया त्वाष्ट्रसंयुता ॥ सोमेन रविणा वापि यदा युक्ता भवेत्तदा ॥ ४२७ ॥ प्रातः कालाज्जपः कार्य्यो घटाद्देवी वदेत्स्फुटम् ॥ येषु कुम्भेषु यद्द्रव्यं स्थापनीयं तथा तु तत् ॥ भविष्यति तदक्षय्यं ध्यानमस्या निरूप्यते ॥४२८॥ रुद्रादिप्रेतमौलिस्थां कलशांकुरमालिनीम् ॥ चित्राक्षीं चित्रवेषां तां सम्भजे परमेश्वरीम् ॥ ४२९ ॥ चित्राक्षि चित्ररूपेण रुद्रादि प्रेतसं वदेत् ॥ स्थे प्रसीदेति युगलं श्रीं स्वाहा त्रिद्विवर्णकः ॥ ४३० ॥ अथातः सम्प्रवक्ष्यामि चिन्तामणिविनायकम् ॥ योगिनी लक्षणज्ञास्य नाम्ना रुधिरवाहिनी ॥ ४३१ ॥ षट्कूटभैरवी शक्तिश्चित्रकण्ठचस्य चेटिका ॥ हसकलरकारांश्च डकारैकारसंयुतान् ॥४३२॥ बिन्दुयुक्तान्कूटरूपो मनुरस्याः प्रकीर्तितः ॥ सम्पत्प्रदा भैरवीवत्सर्वं न्यासादिकं मतम् ॥ ४३३ ॥ समस्तं चिंतितं दद्याद्रिपुभारविनाशिनी ॥ सेनाविनायकः काश्यां स्थापितस्त्वनया-पुरा ॥ ४३४ ॥ अथातः साधनं वक्ष्ये चित्रकन्यां समासतः ॥ चैत्रशुक्ल-चतुर्दश्यां वसन्ते निशि सञ्जपेत् ॥ ४३५ ॥ सहस्रत्रितयो होमो मधूककु-सुमैर्भवेत् ॥ त्रिंशत्सहस्रं सा देवी तदा दद्याच्च मंत्रिणे ॥ ४३६ ॥ कोकिलास्वरमत्यन्तमोहनं जगतामपि ॥ अपि पक्षिमृगादीनामुरगाणा च मोहनम् ॥ ४३७ ॥ चूतांकुरावतंसा सा वीणानादनिनादिनी ॥ शुक्ला म्बरा शिवाङ्कस्था रक्तकञ्चुकधारणी ॥ ४३८ ॥ चित्रकण्ठि चित्रनादस्वरं देहियुगं तथा ॥ भरिंस्विाहेति मन्त्रोयं मैन्वर्णः[1] परिकीर्तितः॥४३९॥अथातः सम्प्रवक्ष्यामि दन्तिहस्तं विनायकम् ॥४४०॥वसाधया योगिनी च चित्ररेखा-स्वरूपिणी॥पञ्चबाणेश्वरी शक्तिश्चिह्नगम्या च चेटिका ॥४४१ ॥ द्रां ह्रीं क्लीं क्लूं स इत्येष बाणेश्वर्य्या मनुर्मतः॥ऋषिः कामस्तु गायत्री छन्दो बाणेश्वरी सुरी ॥४४२॥ एकाक्षरेण सर्वैश्च मनोर्वर्णैः षडङ्गकम्॥४४३॥रक्तवस्त्रामिक्षुधनु-ष्पुष्पकोदण्डधारिणीम्॥सालङ्कारां च सूर्य्याभां बाणेशीं सुन्दरीं भजे॥४४४॥ त्रिपुरेशीं च संपूज्य मोहयेत्सकलं जगत् ॥ पञ्चलक्षं जपेद्धोमो बन्धूककुसु-मैर्मतः ॥ ४४५ ॥ कृष्णपक्षे चतुर्थ्यां तु चित्रायां सोमवासरे ॥ ध्यात्वायुतं

---

१ चतुर्दशाक्षरः ॥

जपेद्रात्रौ तदा सा वरदा भवेत् ॥ प्रयोगाद्यं सर्वमस्यास्त्रिपुरावत्प्रकीर्त्तितम् ॥ ४४६ ॥ तत्र रात्रौ गृहे सम्याग्दिव्यान्नं यावदीप्सितम्॥तावद्ददाति हेम-न्त्रिन्दिव्यभोगानपि ध्रुवम् ॥ ४४७ ॥ मन्त्रस्तु दिव्यकमले चिह्नाङ्के मे प्रसीद च ॥ श्रींस्वाहा तिथिवर्णोयं ध्यायेत्कण्ठेब्जकस्रजाम् ॥ ४४८ ॥ हस्ते चामृतकुम्भं च सालंकारां मनोहराम् ॥ अथातः सम्प्रवक्ष्यामि पिचिण्डिलवि-नायकम् ॥ ४४९ ॥ सिद्धिप्रदं राक्षसानां गर्भहस्तास्य योगिनी ॥ मनोहरा कर्म्मकरी चेटी चास्य त्रिलोचना ॥ ४५० ॥ नारी रम्याभिधा मन्त्रस्त्रयो-विंशतिवर्णकः ॥ आदौ तारं ततो नारीं रम्य। कमलवासिनीम् ॥ ४५१ ॥ त्वं नारीं मोहयद्वन्द्वं क्लीं स्वाहा ध्यानमुच्यते ॥ लग्नां कल्याणमूर्त्तिं च मोह-रूपां स्थितां वने ॥ पद्मानां प्रार्थितां शम्भुविष्णुब्रह्मादिकैः सुरैः ॥ ४५२ ॥ मार्गकृष्णचतुर्दश्यां भौमरात्रौ सरस्तटे॥त्रिसहस्रं जपेत्पश्चान्नारङ्गैर्होममाचरेत्॥ ॥४५३॥ चिह्निता स्त्री भवेद्वश्या प्राणैरपि धनैरपि॥ यदा चेच्छा भवेत्स्त्रीणां नारीं रम्यां तदा जपेत् ॥ ४५४ ॥ उद्दण्डमुण्डहेरम्बमथ वक्ष्ये समासतः ॥ योगिनी शरहस्तास्य रूपतः सा वशंकरा ॥ निधिप्रान्ता चेटिकास्य मन्त्रोऽ-स्यास्तिथिवर्णकः ॥ ४५५ ॥ वदेत्तारं निधिप्रान्ते निधिं देहिद्वयं रमा ॥ स्फ्रींस्वाहेति च मन्त्रोयं ध्यायेद्देवीं त्रिमालिनीम् ॥ ४५६ ॥ रसायननिधि प्रीतां भवलक्ष्मीनिधिप्रदाम् ॥ आषाढशुक्लसप्तम्यां चतुर्थ्यां वा समाहितः ॥४५७॥ जपेत्सप्तशतं मन्त्रं पलाशतरुसन्निधौ ॥ पलाशमूलैरत्यन्तैः कोम-लेर्होममाचरेत् ॥४५८॥ततो देवी निधिप्रान्ता मन्त्रिणे तोषमागता ॥ ददाति निधिमेकं हि त्रैलोक्येपि सुदुर्लभम्॥ ४५९ ॥एतासामष्टचेटीनां द्वात्रिंशच्च सहस्र-कम् ॥ निर्जने च वटाधस्ताद्वा गणेशसमीपतः ॥ जपः कार्य्यस्तदा सिद्धिर-र्चयित्वा गणेश्वरम् ॥४६०॥ अथातः सम्प्रवक्ष्यामि नगरावरणे स्थितान् ॥ स्थूलदन्तादिकानष्टौ गणेशान् योगिनीयुतान् ॥ शक्तिभिश्चेटिकाभिश्च युक्ता-न्गम्बीजपूर्वकान् ॥ ४६१ ॥ तद्बीजं च पठेन्नाम ङेन्तं भगवते पदम्॥हृदया-

१ ॐनारि रम्ये कमलवासिनि त्वं नारीं मोहयमोहय क्लीं स्वाहा इति मन्त्रः ॥ २ ओंनिधिप्रान्ते निधिं देहिदेहि श्रीं स्फ्रीं स्वाहा ॥

न्तस्तथाष्टानां मन्त्रोयं परिकीर्त्तितः॥ ४६२ ॥ पञ्चकामेश्वरी चास्य शक्ति-स्तन्मन्त्र उच्यते ॥ ह्रीं क्लीं ऐं ब्लूमिति प्रोच्य श्रीं मन्त्रः पञ्चवर्णकः॥४६३॥ ऋषिः सम्मोहनश्छन्दो गायत्रं देवता मता ॥ कामेशी च षडङ्गानि पृथग्वर्णै-[1]स्ततोखिलैः ॥ ४६४ ॥ रक्तां रक्तदुकूलाङ्गलेपनां रक्तभूषणाम् ॥ पाशांकु-शशरानक्षमालिकामभयं धनुः ॥ ४६५ ॥ पुस्तकं च वरं हस्तैर्बिभ्राणां वश-कारिणीम् ॥ पञ्चकामैः परिवृतामस्याः पूजादिकं भवेत् ॥ ४६६ ॥ वाणे-श्वरीसमानं तु वामे कामौ तथार्चयेत् ॥ उदग्दक्षिणयोर्देव्याः स्थलेषु त्रिषु यो-गिनीः ॥ अञ्जनानां सिद्धिकरी नष्टवेषास्य चेटिका॥ ४६७ ॥तारं च नष्ट-वेषे च भ्रामिणीं ह्रींद्वयं वदेत्॥स्त्रींस्त्रीं स्वाहा विश्ववर्णो मन्त्रो ध्यानं निरूप्यते ॥ ४६८ ॥ मांसं च रुधिरं सद्यश्चर्वयन्तीं सुभीषणाम् ॥ प्रेतासनां महादेवीं नष्टवेषां भजाम्यहम् ॥ ४६९ ॥ जपेत्सहस्रत्रितयं कृष्णाष्टम्यां महानिशि ॥ होमश्च गजदन्तेन दशांशस्तुष्यति त्वियम् ॥ ४७० ॥ ददाति मन्त्रिणे चार्द्र-मस्थि तेन तु साधकः॥ भूतप्रेतपिशाचादीन्खेलन्संवशयेदपि॥४७१॥ अथातः सम्प्रवक्ष्यामि कलिप्रियगजाननम्॥योगिन्यस्य बृहत्कक्षी गुटी सिद्धिप्रदा मता ॥ त्रिवर्णेशी शक्तिरस्य क्लीं ऐं सौश्च मनुर्मतः ॥४७२॥ द्विरावृत्त्या षडङ्गानि पञ्चबाणान्प्रविन्यसेत्॥ पञ्चकामांश्च विन्यस्य मूलेन व्यापकं चरेत्॥४७३॥ उद्यत्सूर्य्यसहस्राभां माणिक्यवरभूषणाम् ॥ स्फुरद्रत्नदुकूलाढ्यां नानालङ्कार भूषिताम् ॥ ४७४ ॥ इक्षुकोदण्डबाणांश्च ह्यक्षमालां च पुस्तकम् ॥ दधतीं पूजयेत्पश्चात्षडङ्गानि प्रपूजयेत् ॥ ४७५॥ पञ्चबाणास्ततः पूज्या रत्यादि-त्रितयं ततः ॥ कामाष्टकं ततो भैरवाष्टकञ्चापि मातरः ॥ ४७६ ॥ पीठाष्टकं

---

१ ह्रीं अंगुष्ठाभ्यां नमः, क्लीं तर्जनीभ्यां नमः, ऐं मध्यमाभ्यां नमः, ब्लूं अनामिकाभ्यां नमः, श्रीं कनिष्ठिकाभ्यां नमः ॥ ह्रीं क्लीं ऐं ब्लूं श्रीं करतलकरपृष्ठाभ्यां नमः, अनयैव रीत्याहृदयादिन्यासमपि कुर्यात् ॥२ एतस्योत्तरत्र सम्बन्धः॥३ ॐ नष्टवेषे भ्रामिणि ह्रींह्रींस्त्रींस्त्रीं स्वाहा ॥ अयं चतुर्दशाक्षरो मन्त्रः क्लीं ऐं सौः क्लीं ऐं सौः द्विरावृत्तैः षड्भिरेभिर्बीजैः षडङ्गन्यासः । यथा क्लीं हृदयाय नमः, ऐं शिरसे स्वाहा, सौः शिखायै वषट्,क्लीं कवचाय हुम्, ऐं नेत्रत्रयाय वौषट्, सौः अस्त्रायफट् ॥ ४ पञ्चबाणानां पञ्चकामानां च नामानि पूर्वं लिखितानि ॥

च लोकेशान्मध्ये देवान्समर्चयेत् ॥ पुरश्चरणकृत्यादि काम्यकर्म्म तथाखिलम् ॥ ४७७ ॥ एतस्यास्त्रिपुरेशी च चेटिकास्यनिनादिनी ॥ निनादिनि[1] च गुटिकां देहि स्त्रीं वह्निगेहिनीम् ॥ ४७८ ॥ द्वादशार्णो मनुर्ध्यानमूर्ध्वकेशीं त्रिलोचनाम् ॥ खेचरीं तां चञ्चलाक्षीं महानादां भजाम्यहम् ॥ ४७९ ॥ अमायां च नरः सायं नद्यां स्नायाद्विशेषतः ॥ कृष्णायां निशि कुर्वीत तत्तीरे चायुतं जपम् ॥ ४८० ॥ कस्तूरीकमलैर्होमो दशांशस्तत्र देवता ॥ महाशब्दं प्रकुरुते भीतिदं ध्यानतत्परः ॥ न बिभेति यदा मन्त्री तदा देवी प्रसीदति ॥ ४८१ ॥ ददाति गुटिकामेकां सिद्धिदां च मनोहराम् ॥ तामादाय भवेन्मन्त्री त्रिलोकीगमनक्षमः ॥ ४८२ ॥ अथातः सम्प्रवक्ष्यामि चतुर्दन्तं गजाननम् ॥ सर्प्पास्या योगिनी चास्य धातुवादक्रियाकरी ॥ ॥ ४८३ ॥ एककामेश्वरी शक्तिः कामबीजं मनुर्मतः ॥ ऋषिः सम्मोहनश्छन्दो गायत्री देवता मता ॥ ४८४ ॥ एककामेश्वरी बीजं कः शक्तिर्बिन्दुरुच्यते ॥ लः कीलकं षडङ्गानि षड्दीर्घान्वितमूलतः ॥ ३८५ ॥ पूर्वोक्तपञ्चबाणांश्च न्यसेद्ध्यानं समाचरेत् ॥ ४८६ ॥ जपाकुसुमसङ्काशां धनुर्बाणकरां स्मरेत् ॥ नानालङ्कारशुभगां मोहयन्तीं जगत्त्रयम् ॥ ४८७ ॥ त्रिकोणं चाष्टपत्रं च ततो भूबिम्बमालिखेत् ॥ मोहिनीं क्षोभिणीं चैव शशिनीं स्तम्भिनीं तथा ॥ ४८८ ॥ आकर्षिणीं द्राविणीं च तथैवाह्लादिनीं मताम् ॥ क्लिन्नां च क्लेदिनीं चापि ततः सिंहासनं यजेत् ॥ ततो देवीं समावाह्यार्चयेन्मुद्राश्च दर्शयेत् ॥ ४८९ ॥ अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ॥ त्रिपुरायास्ततश्चाङ्गान्यर्चयेच्च दलाष्टके ॥ अनङ्गपदमुच्चार्य्य रूपिणी[2] मदना तथा ॥ ४९० ॥ मन्मथा कुसुमा चेति तदग्रे मदनातुरा ॥ शिरा मेषवला तद्वद्दीपिकाष्टौ समीरिताः ॥ ४९१ ॥ दिगीश्वरास्ततः पूज्य। जपेदर्कसहस्रकम् ॥ हुनेद्बन्धूककुसुमैस्तर्प्पणादि ततश्चरेत् ॥ काम्यप्रयोगा विज्ञेयास्त्रिपुरेश्या यथा तथा ॥ ४९२ ॥ अथातः संप्रवक्ष्यामि चक्रविंशतिसङ्ख्यकान् ॥ गणेशा-

---

१ निनादिनि गुटिकां देहिदेहि स्त्रीं स्वाहा इति मन्त्रः ॥ २ श्लोकोक्तरूपिण्यादिनाम्नाम्पुरीनङ्गपदं युञ्ज्यात यथा अनङ्गरूपिणी । अनङ्गमदना इत्यादि ॥

न्त्राजमातङ्ग्या संबद्धान्योगिनीयुतान् ॥४९३॥ बीजषट्कं गणेशस्य ङेन्तं तन्नाम चोच्चरेत् ॥ नमोन्ता मनवस्तेषां क्रमान्नामानि वच्म्यहम्॥३९४॥अग्रे पृष्ठे द्विदन्तादिद्वितुण्डाक्षो विनायकः ॥ ज्येष्ठो विनायकश्चैव तथा गजविनायकः॥४९५॥विनायकः कालसंज्ञो नागेशाख्यो विनायकः॥अथान्तर्गृहमावृत्य स्थिताञ्छृणु विनायकान् ॥ ४९६॥ तथा सृष्टिगणेशश्च यक्षविघ्नेश एव च॥गजकर्णश्चित्रघण्टः स्यान्मङ्गलविनायकः ॥४९७॥ विनायकश्च मित्रादिरथ वानन्दकानने ॥ व्यवस्थिता गणेशा ये ते वक्ष्यन्ते मयाधुना॥४९८॥ मोदः प्रमोदः सुमुखो दुर्मुखो गणनायकः॥विनायको ज्ञानपूर्वो द्वारविघ्नेश एव च ॥ ४९९ ॥ अविमुक्तेशनिकटे त्वविमुक्ताविनायकः ॥ योगिन्यश्च क्रमादेषां कीर्त्यन्ते प्रेतवाहनाः ॥ ५०० ॥ दन्दशूककरा रौद्री मृगशीर्षा वृषानना ॥ व्यालास्या धूर्त्तविश्वासा व्योमैकचरणार्धदृक् ॥ ५०१ ॥ तापिनी तुष्टिपूर्वा च शोषिणी कोटरी तथा ॥ विद्युत्प्रभा स्थूलनासा मार्जारी कंठपूरणा ॥ ५०२ ॥ कामाक्ष्यट्टाट्टहासा च बलाका नतिपुण्यदा ॥ मूकास्या चेति योगिन्यो ङेन्तं नाम नमोन्तकम् ॥ ५०३ ॥ स्वबीजाद्यं भवेन्मन्त्रो यथानामार्थकारकः॥ अथातः सम्प्रवक्ष्यामि शक्तिमेषां [1]सिद्धिदाम्॥५०४॥ विख्यातां राजमातङ्गीं सद्यः प्रत्ययकारिकाम् ॥ ऐं ह्रीं श्रीं मनवः प्रोक्ता भगवतीपदं वदेत् ॥ ५०५ ॥ श्रीमातङ्गे वदेदेतच्छूरि सर्वजनेति च ॥ मनोहारि सर्वमुखराजि सर्वमुखेति च ॥ ५०६ ॥ रजनीं सर्वराजेति वशंकारि वदेत्ततः॥ सर्वस्त्रीपुरुषेत्युक्त्वा वशंकारि पदं वदेत् ॥ ५०७ ॥ सर्वदुष्टमृगवशंकरि सर्वपदं ततः॥ सत्त्ववशंकरि सर्वलोकमुखामुकं वदेत् ॥ ५०८ ॥ मे वशमानय स्वाहेत्यष्टाशीत्यक्षरो मनुः ॥ एकविंशाद्विश्वधृतिधृतिविश्वकरैर्मनोः ॥ ५०९ ॥ ओं नमो मुखमंत्राणैः ऐंह्रींश्रींबीजपूर्वकैः ॥ षडङ्गन्यास उदितः पदन्यासं ब्रवीम्यहम् ॥ ५१० ॥ शिरोललाटभ्रूमध्यतालुकण्ठमनोगले ॥ हृदयेऽनाहते बाह्वोर्जठरे नाभिमण्डले॥५११॥स्वाधिष्ठाने व्यञ्जने च पादयोर्दक्षिणान्ययोः॥ मूलाधारे गुदे न्यस्य पदान्यष्टादश क्रमात् ॥ ५१२ ॥ त्र्येकाद्विचतुर्वसु

१ इदं परान्वयि ॥

च लोकेशान्मध्ये देवान्समर्चयेत् ॥ पुरश्चरणकृत्यादि काम्यकर्म्म तथाखिलम् ॥ ४७७ ॥ एतस्यास्त्रिपुरेशी च चेटिकास्यनिनादिनी ॥ निनादिनि च गुटिकां देहि स्त्रीं वह्निगेहिनीम् ॥ ४७८ ॥ द्वादशार्णो मनुर्ध्यानमूर्ध्वकेशीं त्रिलोचनाम् ॥ खेचरीं तां चञ्चलाक्षीं महानादां भजाम्यहम् ॥ ४७९ ॥ अमायां च नरः सायं नद्यां स्नायाद्विशेषतः ॥ कृष्णायां निशि कुर्वीत तत्तीरे चायुतं जपम् ॥ ४८० ॥ कस्तूरीकमलैर्होमो दशांशस्तत्र देवता ॥ महाशब्दं प्रकुरुते भीतिदं ध्यानतत्परः ॥ न बिभेति यदा मन्त्री तदा देवी प्रसीदति ॥ ४८१ ॥ ददाति गुटिकामेकां सिद्धिदां च मनोहराम् ॥ तामादाय भवेन्मत्री त्रिलोकीगमनक्षमः ॥ ४८२ ॥ अथातः सम्प्रवक्ष्यामि चतुर्दन्तं गजाननम् ॥ सर्प्पास्या योगिनी चास्य धातुवादक्रियाकरी ॥ ॥ ४८३ ॥ एककामेश्वरी शक्तिः कामबीजं मनुर्मतः ॥ ऋषिः सम्मोहनश्छन्दो गायत्री देवता मता ॥ ४८४ ॥ एककामेश्वरी बीजं कः शक्तिर्बिन्दुरुच्यते ॥ लः कीलकं षडङ्गानि षड्दीर्घान्वितमूलतः ॥ ३८५ ॥ पूर्वोक्तपञ्चबाणांश्च न्यसेद्ध्यानं समाचरेत् ॥ ४८६ ॥ जपाकुसुमसङ्काशां धनुर्बाणकरां स्मरेत् ॥ नानालङ्कारशुभगां मोहयन्तीं जगत्त्रयम् ॥ ४८७ ॥ त्रिकोणं चाष्टपत्रं च ततो भूबिम्बमालिखेत् ॥ मोहिनीं क्षोभिणीं चैव शशिनीं स्तम्भिनीं तथा ॥ ४८८ ॥ आकर्षिणीं द्राविणीं च तथैवाह्लादिनीं मताम् ॥ क्लिन्नां च क्लेदिनीं चापि ततः सिंहासनं यजेत् ॥ ततो देवीं समावाह्यार्चयेन्मुद्राश्च दर्शयेत् ॥ ४८९ ॥ अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ॥ त्रिपुरायास्ततश्चाङ्गान्यर्चयेच्च दलाष्टके ॥ अनङ्गपदमुच्चार्य्य रूपिणी मदना तथा ॥ ४९० ॥ मन्मथा कुसुमा चेति तदग्रे मदनातुरा ॥ शिरा मेषबला तद्वद्दीपिकाष्टौ समीरिताः ॥ ४९१ ॥ दिगीश्वरास्ततः पूज्या जपेदर्कसहस्रकम् ॥ जुहुयाद्बन्धूककुसुमैस्तर्प्पणादि ततश्चरेत् ॥ काम्यप्रयोगा विज्ञेयास्त्रिपुरेश्या यथा तथा ॥ ४९२ ॥ अथातः संप्रवक्ष्यामि चैकविंशतिसङ्ख्यकान् ॥ गणेशा-

१ निनादिनि गुटिकां देहिदेहि स्त्रीं स्वाहा इति मन्त्रः ॥ २ श्लोकोक्तरूपिण्यादिनाम्नाम्पुरीनङ्गपदं युञ्ज्यात यथा अनङ्गरूपिणी । अनङ्गमदना इत्यादि ॥

न्त्राजमातङ्ग्या संबद्धान्योगिनीयुतान् ॥४९३॥ बीजषट्कं गणेशस्य ङेन्तं तन्नाम चोच्चरेत् ॥ नमोन्ता मनवस्तेषां क्रमान्नामानि वच्म्यहम्॥४९४॥अग्रे पृष्ठे द्विदन्तादिद्वितुण्डाख्यो विनायकः ॥ ज्येष्ठो विनायकश्चैव तथा गजविनायकः॥४९५॥विनायकः कालसंज्ञो नागेशाख्यो विनायकः॥अथान्तर्गृहमावृत्य स्थिताञ्छृणु विनायकान् ॥ ४९६ ॥ तथा सृष्टिगणेशश्च यक्षविघ्नेश एव च॥गजकर्णश्चित्रघण्टः स्यान्मङ्गलविनायकः ॥४९७॥ विनायकश्च मित्रादिरथ वानन्दकानने ॥ व्यवस्थिता गणेशा ये ते वक्ष्यन्ते मयाधुना॥४९८॥ मोदः प्रमोदः सुमुखो दुर्मुखो गणनायकः॥विनायको ज्ञानपूर्वो द्वारविघ्नेश एव च ॥ ४९९ ॥ अविमुक्तेशनिकटे त्वाविमुक्तविनायकः ॥ योगिन्यश्च क्रमादेषां कीर्त्यन्ते प्रेतवाहनाः ॥ ५०० ॥ दन्दशूककरा रौद्री मृगशीर्षा वृषानना ॥ व्यालास्या वृत्तविश्वासा व्योमैकचरणार्धदृक् ॥ ५०१ ॥ तापिनी तुष्टिपूर्वा च शोषिणी कोटरी तथा ॥ विद्युत्प्रभा स्थूलनासा मार्जारी कंठपूरणा ॥ ५०२ ॥ कामाक्ष्यट्टाट्टहासा च बलाका गतिपुष्पदा ॥ मूकास्या चेति योगिन्यो ङेन्तं नाम नमोन्तकम् ॥ ५०३ ॥ स्वबीजाद्यं भवेन्मन्त्रो यथानामार्थकारकः॥ अथातः सम्प्रवक्ष्यामि शक्तिमेषां सुसिद्धिदाम्॥५०४॥ विख्यातां राजमातङ्गीं सद्यः प्रत्ययकारिकाम् ॥ ऐं ह्रीं श्रीं मनवः प्रोक्ता भगवतीपदं वदेत् ॥ ५०५ ॥ श्रीमातङ्गे वदेदेतच्छ्वरि सर्वजनेति च ॥ मनोहारि सर्वमुखराजि सर्वमुखेति च ॥ ५०६ ॥ रजनीं सर्वराजेति वशंकारि वदेत्ततः॥ सर्वस्त्रीपुरुषेत्युक्त्वा वशंकारि पदं वदेत् ॥ ५०७ ॥ सर्वदुष्टमृगवशंकरि सर्वपदं ततः॥ सत्त्ववशंकारि सर्वलोकमुक्तामुकं वदेत् ॥ ५०८ ॥ मे वशमानय स्वाहेत्यष्टाशीत्यक्षरो मनुः ॥ एकविंशद्विश्वधृतिधृतिविश्वकरैर्मनोः ॥ ५०९ ॥ ओं नमो मुखमंत्रार्णैः ऐंह्रींश्रींबीजपूर्वकैः ॥ षडङ्गन्यास उदितः पदन्यासं ब्रवीम्यहम् ॥ ५१० ॥ शिरोललाटभ्रूमध्यतालुकण्ठमनोगले ॥ हृदयेऽनाहते बाह्योर्जठरे नाभिमण्डले॥५११॥स्वाधिष्ठाने व्यञ्जने च पादयोर्दक्षिणान्ययोः॥ मूलाधारे गुदे न्यस्य पदान्यष्टादश क्रमात् ॥ ५१२ ॥ त्र्येकाद्विचतुर्वसुवह्नि

१ इदं परान्वयि ॥

नगाष्टदशदिग्गजैः ।। वेदाग्नीन्दुद्वित्रिनेत्रैर्वर्णैर्मन्त्रपदानि तु ॥ ५१३ ॥ ऐंह्रींश्रींराजमातङ्ग्यै नम उक्त्वा न्यसेत्ततः ॥ मूलाधारे पूर्वबीजत्रयं प्रीत्यै पदं वदेत् ॥५१४॥मातङ्ग्यै नम इत्युक्त्वा हृदये विन्यसेत्पुनः॥बीजत्रयं ततो मनोभवायै च नमो वदेत् ॥५१५॥ भ्रूमध्ये विन्यसेत्पश्चाद्देवीन्यासं समाचरेत् ॥ शिरोवदनहृद्गुह्यपादेषु क्रमतो न्यसेत् ॥ ५१६ ॥ हृल्लेखां गगनां रक्तां ततश्चापि कपालिकाम् ॥ महोच्छुष्मां स्वनामादिवर्णबीजपुरस्सराम् ॥ ॥ ५१७ ॥ मातंग्यन्तां प्राग्विन्यस्य बाणशक्तिं तथा न्यसेत् ॥ मूर्धपादास्यगुह्ये हृदये द्राविणीं क्रमात् ॥ ५१८ ॥ शोषिणीं बंधिनीं मोहिनीं चैवाकर्षिणीन्तथा॥मातंग्यन्तां स्वबीजाद्यां ततः कामाष्टकं न्यसेत् ॥ बीजत्रयाद्यां मातंगीं पदांते मन्मथं मुखे ॥ ५१९ ॥ मकरध्वजं वामांसे मदनं वामपार्श्वके ॥ वामकट्यां पुष्पचापं नाभौ च कुसुमायुधम् ॥ कन्दर्प्पं दक्षकट्यां च दक्षपार्श्वे मनोभवम् ॥ ५२० ॥ रतिप्रियं च दक्षांसे तच्छक्तिन्यास उच्यते ॥ मातंग्यंता अनंगाद्याः स्थानेष्वेष्वेव विन्यसेत् ॥५२१॥ कुसुमा मेखला प्रोक्ता मदना मदनातुरा॥मदनोद्वेगिताग्रे सम्भवा भुवनपालिनी ॥ ५२२ ॥ शशिरेखा ततः कुर्य्यान्न्यासं लक्ष्म्यादिकं यथा ॥ ङेमातंगीनमोन्तांश्च लक्ष्मीं चापि सरस्वतीम् ॥ रतिं प्रीतिं कीर्तिशांत्यौ पुष्टिं तुष्टिं क्रमेण च ॥ ५२३ ॥ मूलाधारे तथा मूले मणिपूरे तथा हृदि ॥ कण्ठे मुखे भ्रुवोर्मध्ये शिरस्येवं च विन्यसेत् ॥ ५२४ ॥ ब्राह्मयाद्याः पूर्वमुद्दिष्टा मातंगीपदपश्चिमाः ॥ मूलाधारे त्वधिष्ठाने नाभौ हृदि गले मुखे ॥५२५॥ भ्रूमध्ये मस्तके चैवमसितांगादिभैरवान्॥मातंग्यन्तान्न्यसेत्पश्चान्मातंग्यंता इमा अपि ॥ ५२६ ॥ आधारे विन्यसेद्वामां ज्येष्ठां लिंगस्य मूलके ॥ नाभौ रौद्रीं तथा शांतिं हृदये सिद्धिदां गले ॥ ५२७ ॥ वागीश्वरीं च भ्रूमध्ये क्रियाशक्तिं च बिंदुके ॥ लक्ष्मीं कलापदे सृष्टिं रोधिकायां तथा न्यसेत् ॥ ॥ ५२८ ॥ अर्धेन्दौ मोहिनीं न्यस्य नादे तु प्रथमां न्यसेत् ॥ भाविनीं चापि नादांते ततो मान्यां तडिल्लताम् ॥ विष्णुं वक्त्रे विष्णुशक्तिं ध्रुवमण्डलके न्यसेत् ॥ ५२९ ॥ ऐंह्रींश्रींपूर्विकाश्चैता ङेमातंगीनमोन्तकाः॥चतस्रः शक्त-

यो न्यस्या मातंगीं शिरसि न्यसेत॥५३०॥ललाटे महामातंगीं महालक्ष्मीं तथा हृदि॥सिद्धलक्ष्मीं तथा मूले मूलाधारे प्रविन्यसेत॥५३१॥ मूलमंत्रं समुच्चार्य्य सर्वांगे व्यापकं चरेत्॥एवं न्यस्तशरीरोसौ चिन्तयेन्मन्त्रदेवताम् ॥ ५३२ ॥ अमृतोदधिमध्यस्थे रत्नद्वीपे मनोहरे ॥ स्वर्णप्राकारसंवीते मण्डपे रत्ननिर्मिते ॥५३३॥ कदम्बबिल्वकह्लारकल्पवृक्षोपशोभिते ॥ वेदीमध्ये सुखास्तीर्णे रत्नसिंहासने शुभे॥५३४॥अष्टपत्रं महापद्मं केशराढ्यं सकर्णिकम् ॥ तन्मध्ये तु त्रिकोणं स्यादष्टपदं ततो बहिः॥५३५॥पुनः षोडशपत्रं स्यात्तद्बाह्ये स्याच्चतुर्दलम् ॥ वेदास्रं सचतुर्द्वारं मण्डलं प्रोक्तमुत्तमम् ॥ ५३६ ॥ तस्य मध्ये सुखासीनां श्यामवर्णां शुचिस्मिताम् ॥ कदम्बमालाभरणां पूजितां च सुरासुरैः ॥ ५३७ ॥ प्रलम्बालकसंयुक्तां चन्द्ररेखावतंसिकाम् ॥ ललाटे तिलकोपेतामीषत्प्रहसिताननाम् ॥ ५३८ ॥ किंचित्स्वेदाम्बुमधुरललाटफलकोज्वलाम् ॥ वलीतरंगमध्याभां रोमराजीविराजिताम् ॥ ५३९ ॥ सर्वाभरणसंयुक्तां मुक्ताहारविभूषिताम्॥नानामणिगणोन्नद्धकटिसूत्रैरलंकृताम् ॥५४०॥ वलयै रत्नखचितैः केयूरैर्मणिभूषितैः॥भूषितां द्विभुजां बालां मदाघूर्णितलोचनाम् ॥ ५४१ ॥ आपीनमण्डलाभोगसमुन्नतपयोधराम् ॥ प्रलम्बकर्णाभरणां स्वर्णोत्तंसविराजताम् ॥ ५४२ ॥ तमालनीलां तरुणीं मधुमत्तां मतङ्गिनीम् ॥ चतुष्षष्टिकलारूपां पार्श्वस्थशुकसारिकाम् ॥ ५४३ ॥ कोटिबालार्कसङ्काशां जपाकुसुमसन्निभाम् ॥ एवं वा पीतवर्णां वा ध्यायेन्मातंगिनीं पराम् ॥ ५४४ ॥ धर्म्मादिक्लृप्तपूर्वोक्ते पीठेच्चर्याः शक्तयो नव ॥ ऐंह्रींश्रींबीजपूर्वाश्च ङेमातंगिनमोन्तकाः ॥ ५४५ ॥ विभूतिरुन्नतिः कांतिः कीर्तिः सृष्टिश्च सम्मतिः ॥ पुष्टिरुत्कृष्टिर्ऋद्धिश्च मातङ्ग्या नव शक्तयः ॥ ॥ ५४६ ॥ वाङ्माये कमलां सर्वशक्त्यन्ते कमलापदम् ॥ सनाय नम इत्युक्त्वा मातंग्याः पीठमर्चयेत् ॥ ५४७ ॥ देव्यामूर्तिं च मूलेन कल्पयित्वा यथाविधि ॥ तस्यामावाह्य देवीमर्चयेत्तदनन्तरम् ॥ ५४८ ॥ पाशांकुशवरा-

---

१ ऐं ह्रीं श्रीं सर्वशक्तिकमलासनाय नमः इति मन्त्रः ॥

भीतिखड्गचर्म्मधनुःशरान् ॥ मौसलीं दुर्गबाणाख्यां योनिमुद्रां प्रदर्श- येत् ॥ ५४९ ॥ त्रिकोणे पूर्वरक्षोदिक्कोणे रत्यादिका यजेत् ॥ पाशांकुशा च श्वेताभा प्रथमायान्तु साञ्जलिः ॥ ५५० ॥ अन्त्यारुणेक्षुकोदण्डपञ्च- बाणलसत्करा ॥ त्रिकोणकाष्टदलयोरन्तराले तु पूजयेत् ॥ ५५१ ॥ मध्ये दिक्षु क्रमात्पञ्चहल्लेखादिकशक्तयः ॥ गुणं सृण्यभयेष्टानि वहन्त्यो भूतसन्निभाः ॥ ५५२ ॥ अग्नीशरक्षःपवनकोणेष्वग्रेदिशासु च ॥ यजेदंगानि मन्त्रज्ञः पंचबाणांस्ततोर्चयेत् ॥ ५५३ ॥ दिक्ष्वग्रे क्रमतो मुक्तास्वर्णविद्रुमहीर- कान् ॥ अमलारुणभायुक्तान्धनुर्बाणायुधांस्तथा ॥ ५५४ ॥ दलेष्वग्रे पूजनीया अनङ्गकुसुमादिकाः ॥ गुणसृण्यभयेष्टानि धारयन्त्योरुणप्रभाः ॥ ॥ ५५५ ॥ अग्रे दलानां सम्पूज्या लक्ष्म्याद्याश्चारुभूषणाः ॥ लक्ष्मी हे- मप्रदा पद्माकरा कौसुम्भकाम्बरा ॥ ५५६ ॥ सरस्वती शङ्खनिभा चिन्मुद्रा पुस्तकेरतिः ॥ श्वेताभा पुष्पबाणेक्षुहस्ता चामललोचना ॥ ५५७ ॥ धनु- र्बाणकरा प्रीतिर्मेचकाभा सिताम्बरा ॥ कीर्त्तिः कुण्डसमा पद्माचिन्मुद्राकरशा- लिनी ॥ ५५८ ॥ चिन्मुद्राभययुक्छान्तिर्ध्यानास्तिमितलोचना ॥ बालाभय- ङ्करा पुष्टिः पीताङ्गा चारुभूषणा॥ ४५९ ॥ तुष्टिर्वराभयकरा प्रसन्नमुखपङ्कजा॥ द्वितीयाष्टदले पूज्या मन्मथाद्या मदोद्धताः ॥ ५६० ॥ पुरआकृष्टचापेज्याः पृष्ठदेशनिषङ्गकाः ॥ पत्रसंस्था मातरस्तु तदग्रे चाष्ट भैरवाः ॥ ५६१ ॥ कपालशूलडमरुवेतालासक्तपाणयः ॥ दीर्घस्वराद्या ब्राह्म्याद्या ह्रस्वाद्या भैरवा अपि ॥ ५६२ ॥ ततः षोडशपत्रस्था वामाद्याः श्यामविग्रहाः ॥ आदर्श- रत्नदीपं च व्यजनं च ततः परम् ॥ ५६३ ॥ नागवल्लीदलं चैव चामरं ज्ञान- कोशकम् ॥ वासोमाल्यातपत्राणाभरणाशुकशालिकैः ॥ ५६४ ॥ चामरं रत्नकलशं तालवृन्तं प्रदीपकम् ॥ बिभ्राणा वामहस्तैश्च देवेशाः खड्गपा- णयः ॥ ५६५ ॥ रक्तवर्णाः सुविमला भावयेदर्चयेदिमाः ॥ वादयन्तीः सदा वीणाञ्चतुःपत्रे ततोर्चयेत ॥ ५६६ ॥ मातङ्ग्याद्यास्तत्र पूज्याः

१ योनिमुद्रालक्षणं बहुस्थलेष्वलेखिषम् ॥ २ इक्षुकोदण्डादिलसत्करा या तां पूजयेदिति अर्थः ॥ ३ पूज्या इति शेषः ॥ ४ वराऽभयेति पा० ॥

पाशाकुशवराभयैः ॥ अलंकृतभुजा रक्ता द्वितीया चेन्दुसन्निभा ॥ ५६७ ॥ असिखेटकशूलाह्वमुण्डहस्ता तथापरा ॥ पाशांकुशसरोजानि योनिमुद्राञ्च बिभ्रती ॥ ५६८ ॥ अरुणा चान्तिमा हेमरत्नपात्रे वराभये ॥ दधाना श्यामवर्णा च ध्यातव्या मन्त्रिसत्तमैः ॥ ५६९ ॥ अग्निनैर्ऋत्यवायव्यरुद्रको- णेषु संयजेत् ॥ गणेशदुर्गावटुकक्षेत्रपालान्बहिर्यजेत् ॥ ५७० ॥ चतुरस्रे लोकपालांस्तदस्त्राणि च तद्बहिः ॥ प्रजपेदयुतम्मन्त्री मन्त्रम्पश्चाद्दशांशतः ॥ ५७१ ॥ त्रिस्वादुयुक्तैर्जुहुयाद्बन्धूककुसुमैर्वशी ॥ तर्पणम्मार्जनं कृत्वा ब्राह्मणाराधनन्तथा ॥ ५७२ ॥ एवं सिद्धमनुर्मन्त्री साधयेन्निजवाञ्छि- तम् ॥ भाग्यार्थी जुहुयाज्जातीमल्लिकानागकेशरैः ॥ ५७३ ॥ श्रीफलै- श्चापि तत्पत्रैर्होमाद्राज्यश्रियं व्रजेत् ॥ राजपुत्रः पङ्कजैः स्त्रीं श्रियमाप्नोत्य- नुत्तमाम् ॥५७४॥ लक्ष्मीपुष्पोत्पलैश्चैव वशयेत्सकलं जगत् ॥ जपाबन्धूकब- कुलैर्वञ्जवृक्षसमुद्भवैः ॥ ५७५ ॥ सुमनोभिश्च जुहुयाद्वश्यायैव हि मन्त्र- वित् ॥ मधुना जुहुयात्तस्य सर्वसिद्धिर्भवत्यलम् ॥५७६॥ त्रिस्वादुसंयुतैः सम्यग्वेतसोत्थसमिद्वरैः ॥ जुहुयाद्वृष्टिकामस्तु गुडूचीभिर्ज्वरं हरेत् ॥ ॥ ५७७ ॥ कदम्बकुसुमैर्हुत्वा वशयेत्प्रमदाजनान् ॥ आयुष्कामः प्रजुहुयाद्दूर्वाभिर्नात्र संशयः ॥ अन्नं प्रजुहुयान्मन्त्री चान्नवाञ्जायतेचिरात् ॥ ॥ ५७८ ॥ शालितण्डुलहोमेन धनाकुलगृहो भवेत् ॥ होमद्रव्यन्तु यत्प्रोक्तं त्रिस्वाद्वक्तं तु तद्भवेत् ॥ ५७९ ॥ नन्द्यावर्त्तप्रसूनैः स्याद्धोमो वाक्सिद्धिदः परः ॥ निम्बप्रसूनहोमाच्च कमलां वाञ्छितां लभेत् ॥ ५८० ॥ हुनेत्किं- शुकंहोमैर्यः स भवेत्तेजसां निधिः ॥ चन्दनागुरुकर्पूररोचनाकुंकुमैरपि ॥ ॥ ५८१ ॥ होमात्तु विश्वं सकलं वशयेन्नात्र संशयः ॥ अष्टाभिर्जपितैरेतैस्ति- लकं जनमोहनम् ॥ ५८२ ॥ सिन्धुवारस्य मूलानि होमयेद्बन्धमुक्तये ॥ उग्रगन्धस्य तैलेन संसिक्तैर्लवणैर्हुनेत् ॥ अचिराच्छत्रुसङ्घं स नाशयेन्नात्र संशयः ॥ ५८३ ॥ संचूर्णितनिशामिश्रैर्लवणैः स्तम्भयेद्रिपुम् ॥ परिपक्वैर- तिरसैः फलैः पुष्पैः सुगन्धिभिः ॥ होमाद्वाञ्छितमाप्नोति नात्र कार्य्या विचा-

१ पदद्वयमुत्तरान्वयि ॥

रणा ॥ ५८४ ॥ अथ मन्त्रान्तरं वक्ष्ये मातङ्ग्या अतिसिद्धिदम् ॥ ऐंक्लीं-सौः‌ऐं समुच्चार्य्य ह्रींश्रीं तारं समुच्चरेत् ॥ ५८५ ॥ नमो भगवतीत्यादिश्चतुर्विंशतिवर्णकः ॥ उच्चरेत्सर्प्पमन्त्रस्य रञ्जनीं क्लीं ततो वदेत् ॥ ५८६ ॥ तथा श्रीबीजमुच्चार्य्य सर्वराजादिकान्वदेत् ॥ पूर्वमन्त्रस्य वर्णास्तु चत्वारिंशत्क्रमात्ततः॥५८७॥वशंकारिपदं प्रोच्य प्राङ्मन्त्रस्यामुकादिकान् ॥ एकादशार्णान्प्रवदेच्छ्रींह्रींऐंसौस्ततो वदेत् ॥ क्लीमवेति द्व्यूनशतं मन्त्रे वर्णाः प्रकीर्तिताः ॥ ५८८ ॥ अयं मन्त्रस्त्रिभुवनवशीकारकरः परः ॥ आचार्य्यानुग्रहात्प्राप्यो महापुण्यतमैर्जनैः ॥ दुष्प्राप्योऽकृतपुण्यैश्च मुनीन्द्राद्यैश्च सेवितः ॥ ५८९ ॥ वाञ्छावितरणे कल्पपादपः पारिकीर्त्तितः ॥ ऋष्याद्याः पूर्वमुदिता मन्त्रस्यास्य भवन्ति हि ॥ ५९० ॥ ततस्तु मातृका न्यस्य देवताभावसिद्धये ॥ पञ्चबाणानंगुलीषु तलयोर्मकरध्वजम् ॥ ५९१ ॥ न्यसेन्मन्त्रं दशार्णं सौर्वाग्भवं ङेन्तमुच्चरेत् ॥ मकरध्वज इत्येतत्क्लीं नमोन्तः प्रकीर्तितः ॥५९२ ॥ शिखाशिरोललाटेषु भ्रूमध्ये नेत्रयुग्मके ॥ श्रोत्रयोर्घ्राणयोर्वक्त्रे गण्डयोः ककुदि क्रमात् ॥ ५९३ ॥ असयोरुरसि न्यस्य स्तनयोर्हृदयाम्बुजे ॥ नाभिमण्डलके गुह्ये मूलाधारे पदोरपि ॥ ५९४ ॥ त्रयोविंशतिसङ्ख्यानि त्रिव्येकद्व्यङ्घ्रिभिस्तथा ॥ षडष्टैकैकचन्द्राष्टनवाष्टादशपत्रिभिः ॥ ५९५ ॥ वस्वष्टवह्निचन्द्राक्षित्रिद्वित्रीन्क्रमान्न्यसेत् ॥ एकोनविंशतियुतान्मन्त्रार्णानादितः क्रमात् ॥ ५९६ ॥ पदैः षड्भिः षडङ्गानि ऐंह्रीं श्रींपूर्वकैश्चरेत् ॥ कामशक्तींदिराबीजान्युक्तानि च शिखा मनोः ॥ ५९७ ॥ षड्दीर्घकामयुक्तेन षडङ्गानि प्रकल्पयेत् ॥ द्राविण्याद्याः पुनः पञ्च कुक्षौ पार्श्वद्वये हृदि ॥ ५९८ ॥ मणिपूरे न्यसेदत्र ब्राह्मयाद्याश्चात्र विन्यसेत् ॥ दक्षपादांगुलीमूले गुल्फसन्धौ च जानुनि ॥ ५९९ ॥ दक्षोरुमूले वामोरुमूले जानुनि गुल्फके ॥ वामपादांगुलीमूले ततो लक्ष्म्यादिका न्यसेत् ॥ ६०० ॥ वामदोर्मूलके मध्ये सन्धौ च मणिबन्धके ॥ वामहस्तांगुलीमूले दक्षहस्तांगुलीतटे ॥ ६०१ ॥ मणिबन्धे मध्यसन्धौ कक्षयोर्मूलके क्रमात्॥मस्तके च भ्रुवोर्मध्ये नेत्रयोः श्रोत्रयोर्गुदे६०२॥

नासायुग्मे मुखे गण्डद्वन्द्वे जिह्वाग्रदेशके ॥ मूलाधारे त्वधिष्ठाने तालौ वामादिका न्यसेत ॥ ६०३ ॥ लक्ष्म्यादिकस्थले न्यस्या असिताङ्गादिभैरवाः ॥ मातङ्ग्यादिचतुष्कं च हृदि नाभौ शिरोगुदे ॥ ६०४ ॥गणेशदुर्गावटुकक्षेत्रपालांस्ततो न्यसेत् ॥ कंभ्रूकण्ठेषु मूले च मन्त्रेण व्यापकं चरेत् ॥ ६०५ ॥ सरस्वतीं महालक्ष्मीं निधियुग्मं प्रविन्यसेत् ॥ आनने च भ्रुवोर्मध्ये दक्षपादे तथोत्तरे ॥ ६०६ ॥ एवं न्यस्य मनुं मन्त्री ध्यायेद्देवीमनन्यधीः ॥ अमृतस्य समुद्रे तु रत्नद्वीपे महावने ॥ ६०७ ॥ पञ्चानां कल्पवृक्षाणां मण्डपे मणिसंयुक्ते ॥ मणिसिंहासनस्योर्ध्वमुपविष्टां विचिन्तयेत ॥ ६०८ ॥ मधुपानेन मुदितां पूर्णमाननिरीक्षणाम् ॥ शुभांशुवदनां नीपपुष्पगुम्फितवेणिकाम् ॥ ॥ ६०९ ॥ वीणालसत्करां रक्तवस्त्रां बिम्बाधरा शुभाम् ॥ कस्तूरीतिलकां चन्द्रमुकुटामुन्नतस्तनीम्॥६१०॥शंखपत्रश्रुतिं मध्यां नम्रां संमेचकच्छविम् ॥ वलयाङ्गदहारादिमञ्जीररशनान्विताम् ॥ ६११ ॥ हास्यैर्भक्तांस्तोषयन्तीं पार्श्वसंस्थालकांशुकाम् ॥ पूर्वोक्ते च शुभे पीठे यन्त्रमेतत्प्रकल्पयेत् ॥६१२॥ त्रिकोणं पञ्चकोणं वाप्यष्टपत्रं कलाछदम् ॥ अष्टपत्रं वेदतलं चतुरस्रं मनोहरम्॥ ॥ ६१३ ॥ चतुर्द्वारसमायुक्तं सर्वदृष्टिमनोहरम् ॥ अत्रावाहाद्य यजेद्देवीं मन्त्री शृङ्गारवेषतः ॥ ६१४ ॥ मूलेन मूर्तिं संकल्प्य कृत्वार्घ्यस्थापनादिकम् ॥ मातङ्गीपीठमभ्यर्च्य कृत्वा मूलप्रकल्पनम् ॥ ६१५ ॥ ततः पुष्पोपचारान्ते लयाङ्गं सम्यगर्चयेत ॥ त्रिकोणेभ्यन्तरे प्राग्वत्षडंगानि प्रपूजयेत् ॥ ॥ ३१६ ॥ मातङ्ग्याद्याश्चतुष्पत्रे चतुरस्रे त्रिकोणतः ॥ गणेशादिचतुष्कं च चतुर्द्वारेषु चार्चयेत् ॥ ६१७ ॥ सरस्वत्यादिकन्यासप्रोक्तांश्चाग्रे दिगीश्वरान् ॥ तदस्त्राणि च तद्बाह्ये न्यासपूर्वं जपेन्मनुम् ॥६१८॥ पुनरभ्यर्च्याङ्गषट्कं सुमिष्टान्नैश्च खाद्यकैः ॥ सदुग्धैश्च निवेद्याथ देवीं नत्वा ततो बलिम्॥ ॥६१९॥ दद्याद्भक्तेन मन्त्रज्ञस्तेनेष्टं लभतेचिरात् ॥ नमो भगवतीत्युक्त्का मातङ्गेश्वरि तत्परम ॥६२०॥ इमं बलिं गृह्णयुग्मं स्वाहान्तः सिद्धवर्णकः॥ ततो देव्या उत्तरतो वायव्यादिसकोणके ॥ ५२१ ॥ पंक्तिक्रमेण ऐंह्रींक्लीं

१ कं शिरः ॥

गुरुभ्यो नम उच्चरेत् ॥ परमेष्ठिगुरुभ्यश्च परमाचार्य्यगुरुभ्यः ॥ ५२२ ॥ आदिसिद्धगुरुभ्यः सद्गुरुभ्यो नम उच्चरेत्॥ सर्वत्र पञ्चस्थानेषु गुरून्सम्पूजये-दिति ॥ ६२३ ॥ पूर्वमेव जपेल्लक्षं पुरश्चरणसिद्धये॥ पलाशपुष्पैर्बिल्वाद्युक्तै-रन्तेऽयुतं हुनेत् ॥ ६२४ ॥ तर्प्पणं मार्ज्जनं कुर्य्याद्भोजयेद्भूसुरानपि ॥ कुमारीर्भोजयेच्चापि वशयेत्क्षोभयेज्जगत् ॥ ६२५ ॥ मातङ्ग्यनुग्रहीभूय सर्व-कर्म्माणि साधयेत्॥कुण्डे वा स्थण्डिले वापि विधेयं काम्यकर्म्मकम्॥६२६॥ रक्तवस्त्रपरीताङ्गो रक्तमाल्यानुलेपनः॥घृताक्तगुग्गुलोहोमाद्राज्ञश्च वशयेत्सुधीः॥ ॥ ६२७॥ मल्लिकाजातिपुन्नागैर्जुहुयाद्भाग्यवान्भवेत् ॥ राज्यार्थी बिल्वपत्रैश्च हुनेत्पद्मैर्विशेषतः ॥ ६२८ ॥ श्रीकामः श्वेतपद्मैश्च रक्तैर्वा जुहुयात्पुनः ॥ उत्पलैर्धनकामस्तु लक्ष्मीपुष्पैश्च होमयेत् ॥ ६२९ ॥ [1]बन्धूकैश्चैव वागर्थी किंशुकैर्[2]बकुलैर्हुनेत् ॥ आकर्षणे तु लवणैस्तिलैर्मधुरसंयुतैः॥६३०॥वञ्जुलै-र्वृष्टिमाप्नोति गुडूचीभिर्हरेज्ज्वरम् ॥ अन्नार्थी जुहुयादन्नैर्धान्यार्थी शालि-तण्डुलैः ॥ ६३१ ॥ गन्धद्रव्येण होमस्तु सर्वसौभाग्यदायकः ॥ [4]कुंकुमैरो-चनाभिर्वा होमो वश्यार्थिनो मतः ॥ नन्द्यावर्त्तप्रसूनैश्च वागर्थी जुहुयादथ ॥ ॥ ६३२ ॥ पलाशपुष्पैस्तेजोर्थी कपिलाज्येन वा हुनेत् ॥ शत्रो-रुन्मादकृद्धोम उन्मत्तकुसुमैरपि ॥ ६३३ ॥ विषमे[5]र्वाह[6]निम्बाक्ष[7]श्लेष्मा-न्तक[8]बिभीतकैः ॥ उलूककाकगृध्रोत्थपक्षैस्तैलपरिप्लुतैः ॥६३४॥ त्र्यस्रकुण्डे च [9]शर्वर्य्यां रिपुनाशाय होमयेत् ॥ पायसैर्गुडसम्मिश्रैः खण्डैरिक्षुदलै-स्तथा ॥६३५॥ उन्मादनाशनो होमः पायसैर्वा घृतप्लुतैः ॥ मरिचं तिलतै-लाक्तं काशश्वासज्वरापहम्॥६३६॥निर्गुण्डीमूलहोमेन निगडस्य विमोचनम्॥ ॥ ६३७ ॥ अथातः सम्प्रवक्ष्यामि जीवस्याकर्षणं परम् ॥ साध्यस्य [10]प्रति-कृतीः कुर्य्याच्चतस्रो मन्त्रवित्तमः ॥ ६३८ ॥ एकां [11]साध्यर्क्षवृक्षोत्थां मधूच्छिष्टेन चापराम् ॥ परां कुलालमृद्भूतां शालिपिष्टेन चापराम्॥६३९॥

---

१ कश्चिद्देशविशेषे प्राकृतवाचा छीगूरनामास्य प्रसिद्धम्॥ २ बन्धुजीवकैः॥ ३ केसरैः॥ ४ काश्मीरैः॥ ५ वारिवाहैः ॥ ६ पिचुमन्दैः ॥ ७ दाडिमैः ॥ ८ बिभीतकैः ॥ ९ रात्रौ ॥ १० प्रतिमाः ॥ ११ साध्यस्य नाम्नो यदृक्षं तदृक्षस्य समिधा द्वितीया प्रतिमा निर्मेया ॥

लिखेत्तासा तु हृदयेमुकं मे वशमानय ॥ साध्यनामामुकस्थाने साध्ये प्राणांश्च तत्र च ॥ ६४० ॥ संस्थाप्य तास्ततः स्पृष्ट्वा मूलमष्टोत्तरं शतम् ॥ जपेन्मूलेमुकस्थाने साध्यनाम तु योजयेत् ॥ ६४१ ॥ अमुकं पदरूपं यद्यन्त्रमन्त्रेषु दृश्यते ॥ साध्याभिधानं तद्रूपं तत्र स्थाने निवेशयेत् ॥ ६४२ ॥ कुण्डमध्ये द्व्यंगुलाधः पुत्तलीं दारुजां खनेत् ॥ उत्तानामथ पिष्टोत्थां स्वासनाधस्तथा खनेत् ॥ ६४३ ॥ पादन्यासस्य संस्थाने मृण्मयीं भुवि पूरयेत् ॥ लवणेन सहैतास्तु तिस्रः पूज्यास्ततः परम् ॥ ६४४ ॥ ततो मधूच्छिष्टमयीमूर्ध्वपादामधोमुखीम् ॥ ६४५ ॥ अर्कतूलकदोरेण[1] बद्धपादां प्रलम्बयेत् ॥ कुण्डोपरि च धूमेन तथा सा व्याकुला भवेत् ॥ ६४६ ॥ ततस्तु लवणं ग्राह्यं कुडवैकं[2] घृतं मधु ॥ गुडं च पेषयेच्छ्लक्ष्णं पुत्तलीन्तेन कारयेत् ॥ ६४७ ॥ स्पष्टाङ्गीं साध्यरूपेण तुल्यां श्लक्ष्णां मनोहराम् ॥ ॥ ६४८ ॥ रक्तमाल्याम्बरालेपः कृतन्यासविधिः स्वयम् ॥ प्रतिमायां तु संहारभागेन न्यासमाचरेत् ॥ ६४९ ॥ नामप्रतिष्ठितप्राणा साध्यानां सप्तधाभजेत[3] ॥ दक्षोरुमूलात्पादांतः प्रथमो भाग ईरितः ॥ ६५० ॥ बस्तितः कण्ठपर्यंतो दक्षभागो द्वितीयकः ॥ भुजो दक्षस्तृतीयः स्याच्चतुर्थो मस्तकम्मतम् ॥ ६५१ ॥ भुजो वामः पञ्चमः स्यात्षष्ठो वामोदरादिकम् ॥ स्यात्सप्तमस्तथोर्वादिपादांतः सव्यदेहतः ॥ ६५२ ॥ स्त्रीणां विभाग उद्दिष्टः कृच्छ्रसाध्योथ वक्ष्यते ॥ गुल्फद्वयं तथा जानुद्वयं जंघाद्वयं तथा ॥६५३॥ मध्यद्वयं च भुजयोर्द्वयं मौलिं तथा भजेत् ॥ शरीरमेकादशधा ह्यसाध्यस्याथ वक्ष्यते ॥ ६५४ ॥ प्राकृतानां तु सप्तानां चैकैकस्य तु सप्तधा ॥ एकैकं जुहुयाद्भागं स्मरञ्छत्रुं निशामुखे ॥६५५॥ दक्षपादाच्च पुरुषान्वामपादात्तथा स्त्रियः ॥एवं सप्ताहतो नार्य्यः संक्षुब्धा मदनातुराः ॥६५६॥ स्विद्यदङ्ग्यो वेपमानाःसाधकं तुष्टमानसम्॥त्राहित्राहि क्षमस्वेति पश्य माम्मा परित्यज्य ॥६५७॥एवं सर्वा व्याहरन्त्यः करुणायुक्तमानसाः ॥ पतन्ति साधकस्याग्रे मदनानलपीडिताः ॥ तिष्ठंति दासवच्चास्य मन्त्रिणो योषितः सदा ॥ ६५८ ॥ लवणन्तिलतैलाक्तं

१ आदित्यफलकार्पासदोरकेण ॥ २ तुलायां चतुष्पलैः कुडवो भवति ॥ ३ भागं कुर्वीतेत्यर्थः ॥

होमयेच्छत्रुनाशनम् ॥ हरिद्राचूर्णसंयुक्तं लवणं स्तम्भने मतम् ॥ ६५९ ॥ मातंगी प्रीयते नित्यम्भौमवारे प्रपूजयेत् ॥ कन्यामेकां तथा तिस्रः पञ्च सप्ताथ वा पुनः ॥ ६६० ॥ स्वादुभिर्भक्ष्यभोज्यैश्च स्वादपानैर्मनोहरैः ॥ अर्चनीयाश्च मन्त्रज्ञैः कन्यकाश्चैव सर्वदा ॥ ६६१ ॥ सर्वा नार्य्यो भावनीयाः श्यामा एवात्र मन्त्रिणा ॥ भौमवारे तथा पिष्टमयान्दीपांश्च कल्पयेत् ॥ ॥ ६६२ ॥ प्रज्वालयेद्घृतैनैतान्मातङ्गीप्रीतये बुधः ॥ मातंगीप्रीतये मंत्री योगिन्यष्टकमायजेत् ॥ ६६३ ॥ दिव्यां च महतीं सिद्धां गणेशीं प्रेतखादिनीम् ॥ डाकिनीं कालिकां कालरात्रिञ्चेशानगोचराम् ॥ ६६४ ॥ निशाचरीं चोर्ध्वकेशीं शुष्कांगीं भोजिनीं तथा ॥ वीरभद्रां विरूपाक्षीं धूम्रां प्राच्याञ्जटाधराम् ॥ ६६५ ॥ कलहां घोररक्ताक्षीं विश्वरूपां भयंकरीम् ॥ प्रियां च राक्षसीं वीरकुमारीं वह्निकोणगाम् ॥ ६६६ ॥ मुण्डरारी रुद्रकार्य्यां भीषणां च भयातुराम् ॥ त्रिपुरांता क्रोधिनीं च दुर्मदां ध्वंसिनीं यमे ॥ ६६७ ॥ दीर्घां लम्बोष्ठिकां हंसीं तापिनीं मन्त्रयोगिनीम् ॥ आदित्यां चापि खट्वांगीं कालाग्निमिति नैर्ऋते ॥ ६६८ ॥ ग्राहिणीं चक्रिणीं पश्चात्कंकालीं भुवनेश्वरीम् ॥ हंकालीं यमदूतीं च कौमारीं च कपालिनीम् ॥ ६६९ ॥ केशिनीं मदिरायां च चारिणीं लोमजङ्घिकाम् ॥ नामकीं कामुकीं वायौ लोमकाधोमुखीं तथा ॥ ६७० ॥ व्याघ्रजटीं सर्पजटीं कुण्डामरिविनाशिनीम् ॥ घोरोग्ररूपविकटां चोदग्दिशि कपालिनीम् ॥ ६७१ ॥ लक्षाद्वि प्रजपेन्मन्त्रं क्षोभयेत्सर्वयोषितः ॥ पृथ्वीश्वरांस्तदर्द्धेन वशयेन्नात्र संशयः ॥ ६७२ ॥ तदर्द्धेन च सत्त्वानि वशगानि भवन्ति हि ॥ दूरस्था योषितः सर्वा आयान्त्ययुतजापतः ॥ ६७३ ॥ स्वदेशयास्तदर्द्धेन समायान्त्येव निश्चितम् ॥ सहस्रत्रितयात्सर्ववाञ्छिताप्तिर्भवेद्ध्रुवम् ॥ ६७४ ॥ अथातः सम्प्रवक्ष्यामि मन्त्रभेदम्महाफलम् ॥ अष्टाशीत्यक्षरे मन्त्रे सर्वसत्त्ववशङ्करि ॥ ६७५॥ एतस्याग्रे वदेत्सौख्य राजलक्ष्मीप्रदे तथा॥ सप्ताक्षराणीति पुनः सर्वलोकादिकं वदेत्॥ ६७६॥ पञ्चोनशतसंख्याकवर्णोयं मन्त्र ईरितः ॥ ऋष्यादिकम्पूर्वमुक्तं षड्बीजैश्च षडङ्गकम्॥ ६७७॥ ध्यानपूजादिकं सर्वमष्टाशीति-

मनोमितम् ॥ ६७८॥ प्रयोगाश्च त एवात्र पुरश्चर्यादिकन्तथा॥ अथान्यत्सम्प्रवक्ष्यामि चतुःपञ्चाशदक्षरम् ॥ ६७९ ॥ ॐ ह्रीं नमश्च पद्मे श्रीं राजिते राजपूजिते ॥ जये विजये गौर्य्येवं गान्धारीति पदं वदेत् ॥६८०॥ त्रिभुवनवशङ्करि सर्वस्त्रीपुरुषेति च॥वशङ्करि सुखदुघे घेघे वा वाग्गिगेहिनी ॥६८१॥ अजो मुनिस्तथा छन्दो निवृद्गायत्रमीरितम् ॥ देवता राजमातङ्गी षडङ्गानि तु मायया ॥ ६८२ ॥ सर्वमेवात्र पूर्वोक्तं ध्यानपूजादिकन्तथा ॥ अथास्य प्रोच्यते भेद एकषष्टिकवर्णकः ॥६८३॥ त्रिभुवनवशङ्करि एतदन्ते वदेत्पुनः॥ भवेत्प्रणवहीनोयम्मन्त्रः सर्वत्र पूर्ववत् ॥ ६८४ ॥ किञ्चिद्वर्णविभेदेनायं प्रोक्तः पार्वतीमनुः ॥ सतारोयं समाख्यातो विजयस्य पदं वदेत् ॥ ६८५ ॥ गौरि गान्धारीति पुनः प्राग्वदेव समापयेत् ॥ एकषष्ट्यक्षरो मन्त्रो निवृच्छन्दो ह्यजो मुनिः ॥ ६८६ ॥ गौरी देवी षडङ्गानि शक्राशेभेभदिग्भवैः ॥ मन्त्राक्षरैः षडङ्गानि ध्यानमस्या निरूप्यते ॥ ६८७ ॥ पाशांकुशकरां रत्नयुक्ताभरणवेणिकाम् ॥ बन्धूकाभां त्रिनयनां स्वर्णलेखां भजाम्यहम् ॥ ६८८ ॥ प्राग्वत्षडङ्गं पीठे तु भुवनेश्या यजेदिमान् ॥ आदावङ्गानि षट्कोणे ब्राह्मयाद्यास्त्वष्टपत्रके ॥ ६८९ ॥ आशाधिपांस्तदस्त्राणि भूपुरादौ समर्चयेत् ॥अयुतं प्रजपेन्मन्त्रं जुहुयात्पायसैर्घृतैः ॥ ६९० ॥ तर्पणादि ततः कुर्य्यादेवं सिद्धो भवेन्मनुः ॥ प्रयोगांश्चान्नपूर्णाया मातङ्ग्या वा समाचरेत् ॥६९१॥ अथातः सम्प्रवक्ष्यामि वश्यमातङ्गिकामनुम् ॥ ॐराजमुखी राजाभिमुखी वश्यमुखि ति च ॥ ६९२ ॥ मायां ह्रीं क्लीं देवदेवि महादेवि ततो वदेत् ॥ देवाधिदेवि सर्वेति जनस्य मुखमुच्चरेत् ॥ ६९३ ॥ मम वश्यं कुरुद्वन्द्वं स्वाहान्तोगकृतार्णकः ॥ दिक्सप्तकतुवेदेषुमैत्रार्णैरङ्गकल्पनम् ॥ ६९४ ॥ विज्ञेयं राजमातङ्गीतुल्यं पूजाजपादिकम्॥प्रयोगांश्चापि जानीयाद्विशेषाद्वश्यकृत्त्वयम्॥६९५॥ माया नमो हिलिहिलि चण्डमातङ्गिनीति च ॥स्वाहेति तिथिवर्णोस्य न्यासपूजादिकं भवेत् ॥ ६९६ ॥ राजमातङ्गिकातुल्यं जपश्चायुतसङ्ख्यया ॥ घृत-

---

१ चतुर्दशभिः, दशभिः,अष्टाभिः, अष्टभिः, दशभिः, एकाधिकदशभिः॥ २ श्रीं॥

पायसहोमश्च प्रयोगाद्यं च पूर्ववत् ॥ ६९७ ॥ अथातः सम्प्रवक्ष्यामि कर्णमा-
तङ्गिकामनुम् ॥ वाग्भवं हृदयं चाथ श्रीमातङ्गीपदं वदेत् ॥ ६९८ ॥अमोघे
सत्यवादिनि मम कर्णे पदं ततः ॥ अवतारपदं द्वेधा सत्यं कथय युग्मकम् ॥
॥ ६९९ ॥ एह्येहि श्रीश्च मातङ्ग्यै नमस्त्र्यब्ध्यर्णको मनुः॥ अङ्गानि वाग्भ-
वेनात्र पूजाद्यं च कृताकृतम् ॥ ७०० ॥ लक्षं जपः पायसाज्यैर्होमः सिद्धो
भवेन्मनुः ॥ कर्णे तु कथयेद्देवी पृच्छकस्य शुभाशुभम् ॥ ७०१ ॥ अथातः
सम्प्रवक्ष्यामि सर्वमन्त्रोत्तमोत्तमम्॥ऐंह्रींश्रींमां समुच्चार्य्य ह्रींक्रोंक्लीं चरमां वदेत्॥
॥७०२॥श्रीमातङ्गेश्वरि सर्ववशंकर्य्यग्निगेहिनि॥त्रयोविंशाक्षरो मन्त्रः सर्वका-
र्य्यप्रसाधकः॥७०३॥निवृद्गायत्रिका छन्दो दक्षिणामूर्त्तिको मुनिः॥कर्णमात-
ङ्गिका चास्य देवता परिकीर्त्तिता॥७०४॥ऐंह्रींश्रींआं समुच्चार्य्य ह्रींक्रोंबीजै-
स्तथा भवेत् ॥ द्विरुक्तैश्च षडङ्गस्य विधिः पूजाजपादिकम्॥७०५॥लक्षत्रयं
जपेन्मन्त्रं मधुरत्रयलोलितैः॥बन्धूकपुष्पैर्होमःस्यात्सितया पायसेन च॥७०६॥
हुनेत्कदल्याश्च फलैर्मन्त्रसिद्धिः प्रजायते ॥ समस्तमन्त्रदानादौ सिद्धः स्या-
त्साधकोत्तमः ॥ ७०७ ॥ अथान्यत्सम्प्रवक्ष्यामि मातङ्गीमन्त्रमुत्तमम् ॥
कामिनी रञ्जिनी स्वाहाष्टाक्षरोयमुदीरितः ॥७०८॥ ऋषिस्सम्मोहनश्छन्दो
निवृत्प्रोक्तास्य देवता ॥ सर्वसम्मोहनी चाङ्गं द्विरावृत्तिपदैर्भवेत् ॥ ७०९ ॥
श्यामाङ्गीं वल्लकीं दोर्भ्यां वादयन्तीं सुभूषणाम् ॥ चन्द्रावतंसां विविधैर्गायनै-
र्विश्वमोहिनीम् ॥ ७१० ॥ पूजामातङ्गिनीपीठे रत्याद्यास्तु त्रिकोणके ॥
पञ्चावरणतः पूज्याः केशरेष्वङ्गपूजनम् ॥ ७११ ॥ अनङ्गकुसुमाद्यास्तु पत्रे-
ष्वग्रेषु मातरः॥लोकपालैश्च वज्राद्यैस्सप्तावृत्तिरियं मता॥७१२॥प्रजपेदयुत-
द्वन्द्वं दशांशं जुहुयात्ततः॥मधूकजैस्त्रिमध्वक्तैः सर्वं सम्मोहयेज्जगत् ॥७१३॥
अथोच्छिष्टां प्रवक्ष्यामि मातङ्गीं गोब्जवर्णिकाम् ॥ ७१४ ॥ नम उ-
च्छिष्टचाण्डालि मातङ्गीति पदं वदेत् ॥ सर्ववशंकारि स्वाहा मन्त्रोयं मोहये-
ज्जगत् ॥ ७१५॥ छन्दो निवृच्च गायत्री मुनी नारदतुम्बुरू ॥ देवता चात्र
मातङ्गी चोच्छिष्टा गोब्जवर्णिका ॥ ७१६ ॥ नेत्ररामकृशानुत्रिरसनेत्रमितैः

क्रमात् ॥ अङ्गानि स्युर्मन्त्रवर्णैस्ततो ध्यायेद्धृदम्बुजे ॥ ७१७ ॥ कृष्णाम्बरां यावकार्द्रचरणामुन्नतस्तनीम् ॥ मुक्ताप्रवालमालाढ्या शङ्खकुण्डलधारिणीम् ॥ ७१८ ॥ त्र्यस्रे रत्यादिकाः पूज्याः कर्णिकायान्तु तद्बहिः ॥ पञ्चबाणास्तथाङ्गानि ब्राह्मयाद्याश्चाष्टपत्रके ॥ ७१९ ॥ द्वितीयेऽष्टदले पूज्या अनङ्गकुसुमादिकाः ॥ चतुरस्रे लोकपालास्तदस्त्राणि ततो बहिः ॥ ७२० ॥ अथास्य भेदा वक्ष्यन्ते क्लींह्रींश्रींपूर्वकं जपेत् ॥ क्लींपूर्वं वा जपेन्मन्त्रावेतयोर्मदनो मुनिः ॥ ७२१ ॥ पूजाजपादिकं प्राग्वद्भेदांश्चास्यापराञ्छृणु ॥ ७२२ ॥ आं क्लीं ह्रीमादिकं मन्त्रं क्लींह्रींमैंमन्तकं जपेत् ॥ वाग्मित्वं च कवित्वं च गानशक्तिं करोति च ॥ ७२३ ॥ मुनिः स्याद्दक्षिणामूर्तिरन्यत्सर्वं पुरोक्तवत् ॥ आंह्रींक्रोंमिद्धिरावृत्या षडङ्गानि समाचरेत् ॥ ७२४ ॥ अंसे तु वेशीकुसुमां मुक्ताभूषोन्नतस्तनीम् ॥ चूलिकां नीलचूडां च वादयन्तीं च वल्लकीम् ॥ ७२५ ॥ माध्वीमत्तां मधुवशां श्यामलाङ्गीं सुकोमलाम् ॥ त्रिकोणं पञ्चकोणञ्च बहिरष्टदलद्वयम् ॥ ७२६ ॥ षोडशारं चाष्टदलं भूपुरान्वितयं लिखेत् ॥ पूज्यबीजं तथा नाम वदेदुच्छिष्टपादुकाम् ॥ ७२७ ॥ पूजयामीति चोच्चार्य देवतापूजनं मतम् ॥ त्रिकोणेषु च रत्याद्याः कोणान्ते तु त्रिशक्तयः ॥ ७२८ ॥ इच्छाज्ञानक्रियाख्याश्च पूज्याश्चाङ्गानि बाह्यतः ॥ द्राविण्याद्याः पञ्चकोणे सम्पूज्याः कामशक्तयः ॥ ७२९ ॥ तद्बाह्याष्टदले पूज्याश्चाष्टदीर्घस्वरान्विताः ॥ ब्राह्मयाद्याः कन्यकानाम्न्यो द्वितीयेऽष्टदले तथा ॥ ७३० ॥ अनङ्गकुसुमाद्याश्च कन्याख्यास्ताः प्रपूजयेत् ॥ उर्वश्याद्याः षोडशारे कन्यकाख्याः प्रपूजयेत् ॥ ७३१ ॥ उर्वशी मेनका रम्भा घृताची मञ्जुकेशिका ॥ काश्यपी च सुकेशी मञ्जुघोषा नागकन्यका ॥ ७३२ ॥ यक्षकन्या च गन्धर्वकन्या वै सिद्धकन्यका ॥ परकायप्रवेशिन्याः कन्यकां दूरदर्शनाम् ॥ ७३३ ॥ गुटिकां सिद्धकन्यां च पादुकासिद्धकन्यकाम् ॥ ततश्चतुर्षु द्वारेषु पूजयेद्द्वारदेवताः ॥ ॥ ७३४ ॥ ततं च विततं चैव घनं च सुषिरं तथा ॥ बटुकं च गणेशं च क्षेत्रपालं च योगिनीम् ॥ ७३५ ॥ उच्छिष्टशब्दपुरतः पादुकां पूजयाम्यथ ॥ स्वनामाद्यक्षरं बीजं कृत्वाग्नेयादिके यजेत् ॥ ७३६ ॥ पुनः सर्वो-

पचारैश्च मध्ये भगवतीं यजेत् ॥ स्वराःसर्वे श्रुतियुता वामभागे ततः परम् ॥
॥ ७३७ ॥ रतिश्च रागिणीयुक्ता पूज्या पार्श्वे च दक्षिणे ॥ अभ्यर्चेत्पर-
मेश्वर्य्याः पाश्वर्योः शुकसारिके ॥७३८॥ पुरतो गुरुपंक्तिं च स्वगुरुं पूजये-
त्ततः ॥ बीजत्रयन्तु बालायाः साधकस्य शुभं भवेत् ॥ ७३९ ॥ यत्किञ्चि-
द्वाथ वामायाः कामो वाग्वा रमापि वा॥मनोरुच्छिष्टमातङ्ग्या दत्वादौ पूज-
येन्मनुम् ॥ ७४० ॥ तेनानेके मन्त्रभेदाः पूजाद्यं च यथेच्छया ॥ गौर-
वाल्लाघवाद्वापि कर्त्तव्यन्तु यथोचितम् ॥ ७४१ ॥ शुचिः स्रग्वी सुवस्त्रश्च
जपेल्लक्षमतन्द्रितः ॥ उच्छिष्टभक्तेन बलिं निशि नित्यं निवेदयेत् ॥ ७४२ ॥
नित्यं जपं च काम्यं च उच्छिष्टेनैव चाचरेत ॥ पलाशकुसुमैः स्वादुयुक्तैर्होमं
तथात्र तु ॥ ७४३ ॥ एतावता न सिद्धिश्चेद्वर्णलक्षं जपेन्मनुम् ॥ कुमारी
पूजनं प्रोक्तं कुर्य्यात्तदपि साधकः ॥ ७४४ ॥ योगिन्यष्टाष्टकस्यापि पूजा-
कार्यात्र मन्त्रिणा ॥ उच्छिष्टभक्तशेषेण रात्रौ तस्यै बलिं हरेत् ॥ ७४५ ॥
पूर्वोदितेन मनुना मन्त्रोयं तेन सिध्यति ॥जपेच्चतुर्दशावृत्तिं पूजनानन्तरं मनुम्
भूपतीनां पूजनयिा नारीणां च विशेषतः ॥ ७४६॥ अष्टोत्तरसहस्रेण ताम्बूलं
मनुनामुना॥जपितं भक्षयेद्या स्त्री याचितानङ्गभोगिका॥७४७॥ मन्त्रिणश्च
वशे तिष्ठेद्यावदायुर्न संशयः॥सहदेवी तथा दूर्वा मुसली मधुयष्टिका ॥७४८॥
भद्रा च विष्णुदयिता लक्ष्मीवल्लन्द्रिवल्यपि ॥ अञ्जलिन्यपि सम्प्रोक्ता पृथगेताः
स्पृशञ्जपेत्॥७४९॥अष्टोत्तरशतं मन्त्री ततस्तन्मूर्ध्नि धारयेत्॥नरो नारी नृपो
वाथ धत्ते हर्षसमूहकम् ॥७५०॥ इन्द्राग्निविष्णुयुग्माङ्कमन्वष्टवसुदिग्गताः ॥
पृथग्जप्ताः शतशतमेताः संयोज्य पेषयेत्॥ ७५१ ॥ शुष्कास्तु गुटिका मन्त्र-
जप्ताश्चाथ सहस्रशः ॥ ललाटे च धृताः सम्यक्सर्वस्त्रीजनरञ्जिकाः ॥७५२॥
भवन्ति सर्वलोकस्य दक्षारञ्जनकर्म्मणि ॥ ७५३ ॥ कुर्य्याच्च गुटिकां रेणुसं-
मितां मन्त्रवित्तमः ॥ तूलवर्त्त्या च कृष्णाज्ययुक्तया कज्जलं धृतम् ॥७५४ ॥
सहस्रमनुना जप्तं मन्त्रितं नेत्रयोः शुभम् ॥ प्रत्यहं च जगद्वश्यं नारीसंक्षोभ-
कारकम् ॥ ७५५ ॥ प्रेतग्रहगणादींश्च नाशयेदचिरादपि ॥ पूर्वोक्तैर्दशभिर्द्र-
व्यैः पञ्चगव्यैश्च कापिलैः॥७५६॥ युक्तं च भसितं जप्तं सहस्रं मनुनामुना ॥

घृतं ललाटे भुवनं वशयेच्चैव नान्यथा॥७५७॥क्षौमे पटे प्रविन्यस्य वर्त्तिका रचिताशुभा॥विष्णवाह्वाकुमुदश्यामपद्मरेणुसुगर्भिता॥७५८॥कृष्णगोसर्पिषादीप्ता तदुत्पन्ना च या मषी॥मातङ्गीमनुना जप्ता नेत्राक्ता रञ्जनी नृणाम्॥७५९॥ तद्वन्नमस्कारिणी संगदिता नात्र संशयः ॥ सविष्णुदयितालक्ष्मीभृङ्गराजोद्भवं रजः॥७६०॥एतद्भावितवर्त्तिः सा कपिलाज्यप्रदीपिता॥तज्जातापि मषी पूर्वं फलदा नात्र संशयः॥७६१॥कर्पूरं चन्दनं पद्मयुगं बकुलरोचने॥त्रैलोक्यं वशयत्येषा मषी तत्सम्भवा भृशम् ॥ ७६२ ॥ विजयं चेन्द्रियाणां च फलं क्रमुकसम्भवम् ॥ मूलैर्निर्वास्य नीरैश्च तन्तुभिर्वेष्टयेत्फलम् ॥ ७६३ ॥ भुवः सूनोर्दिने भूमौ स्थापयेत्तत्फलं ततः ॥ आभौमवारसंजप्तं कर्पूरं तत्फलं ततः॥ ७६४ ॥ पिष्ट्वा चैवाम्बुना जप्त्वा गुटिकाः कारयेद्बुधः ॥ ससूरकमिता एताः खादिता वश्यदाः परम् ॥ ७६५ ॥ हेमपश्चाङ्गकं चात्ममलपञ्चकसंयुतम् ॥ सहस्रवारसंजप्तं भक्षयेत्पानकेषु च ॥ यस्मै दत्तं नरेशाय स वश्यो नात्र संशयः ॥ ५६६ ॥ पूर्वमन्त्रोदितान्सर्वान्प्रयोगान्मन्त्रवांश्चरेत् ॥ अथातः सम्प्रवक्ष्यामि द्वात्रिंशद्वर्णकं मनुम् ॥ ७६७ ॥ तारो माया वाग्रमा च नमो भगवतीति च॥उच्छिष्टचाण्डालि पदं श्रीमातङ्गि तथेश्वरि ॥७६८॥ सर्वजनवशंकरि स्वाहान्तोयं मनुः स्मृतः ॥ मांतगो मुनिरस्योक्तोनुष्टुप्छन्दश्च देवता ॥ ७६९ ॥ मातङ्ग्याः स्यादंगषट्कं मन्त्रार्णैर्वेदषड्रसैः ॥ षडस्रबाहुभिश्चेति ध्यायेच्छ्यामां सुलोचनाम् ॥ ७७० ॥ शुकोदितं च शृण्वन्तीं रत्नपीठोपरि स्थिताम् ॥ रक्ताम्बरां सुरापानमत्तां पद्मस्थसत्पदाम् ॥ वल्लकीं वादयन्तीं तां मातङ्गीं हृदि भावयेत् ॥ ७७१ ॥ जपोयुतसहस्रन्तु होमः पुष्पैर्मधूकजैः ॥ मध्वक्तैश्च यजेत्पीठे वक्ष्यमाणविधानतः ॥ ७७२ ॥ त्रिकोणाष्टदलद्वन्द्वं कलारं चतुरस्रकम् ॥ पीठं कृत्वा यजेत्तस्मिन्पीठशक्तीर्निवेष्टदाः ॥७७३॥ विभूतिरुन्नतिः कान्तिः सृष्टिः कीर्त्तिश्च सन्नतिः ॥ व्यूढिरुत्कृष्टि-

---

१ ॐ ह्रीं ऐं श्रीं नमो भगवति उच्छिष्टचाण्डालि श्रीमातंगीश्वरि सर्वजनवशंकारि स्वाहा । इति मन्त्रः॥२ ॐ ह्रीं ऐं श्रीं हृदयाय नमः, नमो भगवति शिरसे स्वाहा, उच्छिष्टचाण्डालि शिखायै वषट्, श्रीमातङ्गीश्वरि कवचाय हुम्, सर्वजनवशंकारि नेत्रत्रयायवौषद, स्वाहास्त्राय फट् ।

क्लीन्द्विश्च मातंग्यन्ता इमाः स्मृताः ॥ ७७४ ॥ सर्वशक्तिकमन्त्रान्ते चासनाय हृदन्तकः॥तारमायावाग्रमाद्यः पीठमन्त्रः कलार्णकः ॥७७५॥ विष्टरासनमेतेन शय्यादीनि प्रकल्पयेत् ॥ मूलेन पीठपूजान्ते कुर्य्यादावरणार्चनम् ॥ ७७६ ॥ त्रिकोणेष्वर्चयेत्तिस्रो रतिप्रीतिमनोभवाः॥केशरेषु षडंगानि मातृश्च दलमध्यगाः ॥७७७॥ द्वितीयेष्टदले पूज्या असितांगादिभैरवाः ॥ षोडशारे तु वामाख्या ज्येष्ठा रौद्री प्रशान्तिका ॥ ७७८ ॥ श्रद्धा माहेश्वरी चापि क्रियाशक्तिश्च सप्तमी ॥ सुलक्ष्मीः सृष्टिमोहिन्यौ प्रथमाचारिणी तथा॥७७९॥विद्युल्लता च चिच्छक्तिः सुरापा नन्दया सह॥ नन्दबुद्धिः षोडशी तु पूजनीयाः प्रयत्नतः ॥ ७८०॥ चतुरस्रचतुर्दिक्षु मातंगी सा महादिका ॥ लक्ष्मीस्तथा महालक्ष्मीः पुनर्वह्न्यादिकोणतः ॥ ७८१ ॥ ध्रुवादिकं यजेदादौ मातंगीं परमं ततः ॥ सर्वावरणशक्तीनां ङेन्तं नाम हृदंतकम् ॥ ७८२ ॥ विघ्नेशदुर्गाबटुकक्षेत्रेशा-दिक्सुरास्तथा ॥ वज्राद्याः पूजनीयास्स्युरित्थं सिद्धिर्मनोर्भवेत् ॥ ७८३ ॥ रम्भादण्डैः शुभैर्होमाद्रोगो राज्यन्तु बिल्वकैः ॥ पत्रैः फलैर्वा वश्या स्याज्ज-नता ब्रह्मवृक्षजैः ॥ ७८४ ॥ रोगनाशोऽमृताखण्डैर्निम्बैः श्रीस्तण्डुलैरपि ॥ अवृष्टिं लवणैर्विद्यात्तगरैर्वेतसैर्जलम् ॥ ७८५ ॥ लवणैर्निम्बतैलाक्तैः शत्रुनाशोधिकाशनम् ॥ निशाचूर्णयुतैः काशैर्होमात्स्यात्स्तम्भनं द्विषाम्॥ ॥ ७८६ ॥ रक्तचन्दनकर्पूरमांसीकुंकुमरोचनाः ॥ चन्दनागुरुकर्पूरं गन्धाष्टकमुदीरितम् ॥ ७८७ ॥ एतद्धोमाज्जगद्वश्यं जायते मन्त्रिणो ध्रुवम् ॥ एतत्पिष्टायुतं जप्त्वा तिलकेन जगत्प्रियः ॥ ७८८ ॥ कदलीफलहोमेन सर्वेष्टं समवाप्नुयात् ॥ किं बहूक्तेन मातङ्गी पूजिता कामदा नृणाम्॥७८९॥मध्वष्टलोलरचितां पुत्तलीं दक्षिणार्धतः ॥ हूयादष्टो-त्तरशतं खादिराग्नौ नरो निशि ॥ ७९० ॥ शालिपिष्टमयीं तां तु भक्षयेत्स्त्री वशीकृते ॥ कृष्णभूतनिशि ध्वांक्षोदरे क्षिप्त्वा शुभप्रभाम् ॥ ७९१ ॥ नीलसूत्रेण संवेष्ट्य चिताग्नौ प्रजपेदमुम् ॥ सहस्रजप्तं तद्वह्निं यस्मै दद्यात्स दासवत् ॥ ७९२ ॥ एवं गणेश्वराः प्रोक्ताः पश्चिमाम्नायसंस्थिताः ॥

१ ॐ ह्रीं ऐं श्रीं सर्वशक्तिकमलासनाय नमः ॥

मुनिदेव्यादिसेव्यानां कार्श्या सङ्ख्या न विद्यते ॥ ७९३ ॥ प्रणवादिच्च-तुर्थ्यन्तैर्नमसापि समन्वितैः ॥ स्वबीजाख्यैर्वर्णलक्षजपस्तेषामुदाहृतः ॥ ॥ ७९४ ॥ इक्षुखण्डैस्तिलैर्वापि कमलाद्यैः प्रमोदकैः ॥ तेषां होमः प्रकर्तव्यो मधुरत्रयसंयुतैः ॥७९५॥ भवन्ति फलदास्ते तु बिन्द्वादिकविनायकाः॥ आकर्षाद्याश्च बटुका देवतास्ताः फलप्रदाः ॥ ७९६ ॥

इति श्रीमहामायामहाकालानुमते मेरुतन्त्रे शिवप्रणीते पश्चिमाम्नाय गणपतिमन्त्रकथनेमकोनविंशः प्रकाशः ॥ १९ ॥

---

श्रीशिव उवाच ॥ अथातः सम्प्रवक्ष्यामि उत्तराम्नायसिद्धिदान् ॥ वदेद्ध-स्तिपिशाचीति लिःलिःस्वाहा नवाक्षरः ॥ १ ॥ कंकालोस्य मुनिश्छन्दो विराडुच्छिष्टनामकः ॥ गणेशो देवता प्रोक्तस्सर्वसम्पत्प्रदायकः ॥ २ ॥ द्वित्रीन्द्विन्दुद्विभिश्चापि पञ्चाङ्गविधिरीरितः ॥ ध्यानं पूजापुरश्चर्य्यादिकं स्याद्वक्रतुण्डवत् ॥ नवलक्षोः जपः प्रोक्तः काम्यकर्म्माण्यथ ब्रुवे ॥ ३ ॥ प्रतिमां कारयेद्धीमान्निम्बकाष्ठमयीं शुभाम् ॥ साध्यांगुष्ठप्रमाणां च गणेशस्य महात्मनः ॥ ४ ॥ स्पृष्ट्वा तां प्रजपेन्मन्त्रं काम्यासिद्धिस्ततो भवेत् ॥ षष्ठ्यां चैव चतुर्दश्यां कृष्णपक्षे च मन्त्रवित् ॥ ५ ॥ उच्छिष्टो रात्रिमध्ये तु जपेन्मन्त्रमिमं शुभम् ॥ वाञ्छितं वशमायाति साधकस्य न संशयः ॥ ६ ॥ भूर्ज्जपत्रे समालिख्य साध्यनाम यथाविधि ॥ मन्त्रेण वेष्टितं कृत्वा जपेन्मन्त्रमनन्यधीः ॥ पादेनाक्रम्य तत्पत्रं हस्तकाष्टीरियं मता ॥ ७ ॥ लिखित्वा पूर्ववत्पत्रं पूजयित्वा विधानतः ॥ साध्यं स्मृत्वा जपेन्मन्त्रं सर्वलोकं वशं नयेत् ॥ ८ ॥ धारयेन्मस्तके यन्त्रं जपन्मन्त्रमनन्यधीः ॥ राजानं राजपत्नीं वा कर्षयेत्तत्क्षणात्सुधीः ॥ ९ ॥ ताम्बूलपत्रपुष्पाणि वस्त्राण्याभरणानि च ॥ फलमूलादिवस्तूनि समादाय जपेन्मनुम् ॥ एकविंशतिवारान्हि दद्यादिष्टाय नान्यथा ॥ १० ॥ वशकृत्सर्वलोकानां प्रयोगोयं प्रकीर्तितः ॥ श्रीखण्डधूपदानेन राजानं वशमानयेत् ॥ ११ ॥ समिधो निम्बकाष्ठस्य कटुतैलसमन्विताः ॥ काकपक्षसमायुक्ता हुत्वा मन्त्री यथाविधि ॥ चिताग्नौ भूरि शत्रुं स उच्चाटयति नान्यथा ॥ १२ ॥ उलूककाकयोः पक्षांस्तद्वत्तारक्तसंयुतान् ॥

श्मशानाग्नौ तु जुहुयाद्विद्वेषः स्निग्धयोर्भवेत् ॥ १३ ॥ शत्रुपादरजोयुक्ता चक्रि-
हस्तमृदं बुधः ॥ श्मशानभस्मसंयुक्तामुद्वर्त्तनसमन्विताम् ॥ शत्रोस्तत्पुत्तलीं
कुर्य्यात्सर्वावयवशोभिताम् ॥ १४ ॥ तस्या हृदि लिखेन्नाम मूलमन्त्रेण
वेष्टयेत् ॥ कृत्वा प्राणप्रतिष्ठान्तु विषरक्ताढ्यपात्रके ॥ १५ ॥ स्थापयित्वा
जपेन्मन्त्रं सम्यगेकाग्रमानसः ॥ म्रियतोरर्न्नि सन्देहो देवताभिः सुरक्षितः ॥
॥ १६ ॥ चितायां दग्धदम्पत्योर्भस्मादाय यथाविधि ॥ रोचनाकुंकुमाभं च
भूर्ज्जे नाम समालिखेत् ॥ १७ ॥ वेष्टितं मूलमन्त्रेण प्राणस्थापनमाचरेत् ॥
साध्यं स्मृत्वा जपेन्मन्त्रं सम्यगष्टोत्तरं शतम् ॥ द्विष्टयोर्जनयोः सम्यक्स्नेहो
भवति तत्क्षणात् ॥ १८ ॥ अथ मन्त्रान्तरं वक्ष्ये चोच्छिष्टस्य गणेशितुः ॥
ॐ ह्रीं क्लींह्रीं समुच्चार्य ह्रींह्रीं घेंघें तथा च फट् ॥ १९ ॥ स्वाहान्तो भवव-
र्णोयं प्राग्वद्ध्यानादिकं मतम् ॥ मुन्यादयः प्रयोगाश्च वर्णलक्षमितो जपः
॥ २० ॥ अथान्यत्सम्प्रवक्ष्येहं चोच्छिष्टस्य महामनुम् ॥ ॐ ह्रींक्रीं च
समुच्चार्य ह्रींहुंघेंघें तथा च फट् ॥ २१ ॥ [1]एकदंष्ट्रायेति हस्तिमुखलम्बोदराय च ॥
उच्छिष्टात्मने क्रांक्रूंह्रींह्रींघेंघेंस्वाहेति ॥ २२ ॥ सप्तविंशतिवर्णोयं वक्र-
तुण्डषडर्णवत् ॥ [2]चतुर्थ्यन्तं हस्तिमुखदद्यात्रं यदोच्चरेत् ॥ २३ ॥ त्रयोविंशतिवर्ण
स्तु तस्य मंत्रः प्रकीर्त्तितः ॥ मुन्यादिदेवतोच्छिष्टगणनाथः प्रकीर्त्तितः ॥ २४ ॥
प्राग्वज्ज्ञेयं प्रयोगादि सिद्धिः कलियुगे द्रुतम् ॥ अथान्यत्सम्प्रवक्ष्यामि
मन्त्रं षड्विंशवर्णकम् ॥ २५ ॥ [3]तारो नमो भगवते एकदंष्ट्राय हस्तिं च ॥
मुखलम्बोदरायेति तथोच्छिष्टमहात्मने ॥ २६ ॥ क्रौंक्लौंह्रींहुं ततो घेंघें स्वा-
हान्तोयम्मनुर्मतः ॥ ऋष्यादिकं पुरा प्रोक्तं [4]क्रौंक्लूंहुं च घेद्वयम् ॥ एतैः षडङ्गं कुर्वीत
प्राग्वद्ध्यानं च पूजनम् ॥ २७ ॥ अथान्यमस्य वक्ष्यामि द्वादशार्णं महाम-
नुम् ॥ ह्रींगं हस्तिपिशाचि लिखेत्स्वाहेति मन्त्रकः ॥ २८ ॥ नवार्णमन्त्रव-
त्सर्वं ध्यानपूजादिकं मतम् ॥ पुरश्चर्य्यार्कलक्षास्यात्प्रयोगादि च पूर्ववत् ॥ २९ ॥

---

१ एकदंष्ट्राय हस्तिमुखलम्बोराय उच्छिष्टात्मने क्रांक्रूं ह्रींह्रींघेंघें स्वाहा ॥ २ पूर्वोक्त उच्छिष्टात्मने एतत्पदस्याग्रे हस्तिमुखाय योजनेन त्रिनेत्रामितमनुर्भवति ॥ ३ ॐ नमो भगवते एकदंष्ट्राय हस्तिमुखलम्बोदराय उच्छिष्टमहात्मने क्रौंक्लूंह्रींहुंघेघे स्वाहा ॥ ४ क्रौं हृदयाय नमः, क्लूं शिरसे स्वाहा, हुं शिखायै वषट्, घें कवचाय हुम्, घें नेत्रत्रयाय वौषट्, क्रौंक्लूं ह्रौं हूं घेघे अस्त्राय फट् ॥

तारो[1] नमोच्छिष्टगणेशाय दशाक्षरो मनुः ॥ ध्यानपूजाप्रयोगादि सर्वमस्य दशार्णवत् ॥ ३० ॥ दशाक्षरस्यास्य चान्ते कथितश्चेन्नवाक्षरः ॥ एकोनविंशवर्णः स्यात्तदा मन्त्रः सुसिद्धिकृत् ॥ ३१ ॥ ध्यानपूजादिकं सर्वं विज्ञेयं तु नवार्णवत् ॥ द्व्यंगद्वित्रिद्विद्विभिश्च मन्त्रार्णैः स्यात्षडङ्गकम् ॥ ३२ ॥ अथान्यत्सम्प्रवक्ष्यामि द्वात्रिंशद्वर्णकं मनुम्॥तारं[2] हस्तिमुखेति च ङेन्तं लम्बोदरं वदेत् ॥ ३३ ॥ उच्छिष्टेति महात्मेति ने आंक्रोंह्रीं समुच्चरेत् ॥ क्लींह्रीं हुं वेद्वयं चापि उच्छिष्टायाग्निगेहिनी ॥ ३४ ॥ रसेषुसतषट्पङ्क्तनेत्रार्णैरङ्गकल्पनम् ॥ उच्छिष्टगणनाथस्य मन्त्रेष्वेषु न शोधनम् ॥ ३५ ॥ सिद्धयादि चक्रमायादौ प्राप्तास्ते सिद्धिदा गुरोः ॥ मनवोमी सदा गोप्या न प्रकाश्या इतस्ततः ॥ ३६ ॥ वाममार्गाराधनं तु विनानेन न सिध्यति ॥ जातिभ्रंशो निर्धनत्वं वंशच्छेदोन्यथा भवेत् ॥ ३७ ॥ अथातः सम्प्रवक्ष्यामि कृतयुक्तास्तु शक्तयः ॥ ब्राह्मणेभ्यः सदा गोप्या विशेषाद्वेदकर्म्मणः ॥ ३८ ॥उच्छिष्टचाण्डलिनीति सुमुखी च महापिशा ॥ चिनि ह्रीं वत्रयं बिन्दुविसर्गाभ्यां च संयुतम् ॥ ३९ ॥ विंशत्यर्णो[3] मनुः प्रोक्तो भजतामिष्टसिद्धिकृतम् ॥ यस्य तिष्ठति मन्त्रोयं न स विघ्नैस्तु बाध्यते ॥ ४० ॥ शवोपरि समासीनां रक्ताम्बरपरिच्छदाम् ॥ रक्तालङ्कारसंयुक्तां गुणहारविराजिताम्॥ ४१ ॥रक्तां षोडशवर्षां च पीनोन्नतवनस्तनीम्॥ उच्छिष्टेन बलिं दत्त्वा जपेत्तद्गतमानसः॥ ४२॥ उच्छिष्टेन प्रकर्त्तव्यो जपोस्याः सिद्धिमिच्छता॥उच्छिष्टं जपतो ह्यस्य जायन्ते सर्वसिद्धयः ॥ ४३ ॥ स्थण्डिलं मण्डलं कृत्वा चतुरस्रं समाहितः ॥ पूजयेन्मण्डले देव्या मूलमन्त्रेण मन्त्रवित् ॥४४॥ तत्र चाग्निं समाधाय वह्निरूप व्यवस्थिताम् ॥ देवीं ध्यात्वा चरेद्धोमं दधिसिद्धार्थतण्डुलैः ॥ सहस्रैकं विधानेन राजा भवति वश्यगः ॥४५॥ माज्जीरस्य तु मांसेन यो देव्यै होममाचरेत् ॥ स प्राप्नोति परां विद्यां शस्त्रशास्त्रवशीकृताम् ॥४६॥ कुर्य्याच्छागस्य मांसेन होमं मधुसमन्वितम् ॥ सहस्रैकं विधानेन भवन्ति धनसिद्धयः ॥४७॥

---

१ ॐनमः उच्छिष्टगणेशाय ॥ २ ॐहस्तिमुखाय लम्बोदराय उच्छिष्टमहात्मने आंक्रोंह्रींक्लीं ह्रींहुंघेघेउच्छिष्टाय स्वाहा ॥ ३ उच्छिष्टचाण्डालिनि सुमुखि महापिशाचिनि ह्रींवंवंवः ॥

विद्याकामश्चरेद्धोमं शर्कराघृतपायसैः ॥ मासात्तस्य भवन्त्येव सिद्धा विद्याश्चतुर्दश ॥४८॥ रजस्वलाया वस्त्रेण मधुना पायसेन च ॥ होमं कृत्वा महादेवि त्रैलोक्यं वशमानयेत् ॥४९॥ नागवल्या चरेद्धोमं मधुना सहसर्पिषा ॥ अयुतैकं विधानेन सिद्धयोऽष्टौ भवन्ति च ॥ ५० ॥नरमार्जारमांसेन घृतेन मधुना सह ॥ चाण्डालकेशयुक्तेन भवदाकर्षणं ध्रुवम् ॥५१॥ तथा बकस्य मांसेन मधुना लोलितेन च॥कृत्वा होममवाप्नोति विद्यावित्तवराननाः ॥५२ ॥ मधुराकस्य होमेन चितावह्नौ तु मन्त्रवित् ॥ कोकिलाकाकपक्षैश्च होमाच्छत्रून्विनाशयेत् ॥ ५३ ॥ उच्चाटनाय शत्रूणां होमं कुर्य्याच्च मन्त्रवित् ॥ पूर्वोक्तेन विधानेन चिताकाष्ठहुताशने॥५४॥उलूककाकपक्षाभ्यां कृत्वा होमं निरन्तरम्॥ शत्रून्विद्वेषयेद्द्वेष्टा चान्योन्यकलहाकुलान् ॥५५ ॥ उलूकपक्षहोमेन गर्भपातो भवेत्स्त्रियाः ॥ सहस्रैकं विधानेन कुर्य्याद्धोमं समाहितः ॥ ५६ ॥ बिल्वपत्रैः समध्वाज्यैर्मासमेकं निरन्तरम् ॥ वन्ध्यापि लभते पुत्रं चिरञ्जीविनमुत्तमम् ॥ ॥ ५७ ॥ प्रातरुत्थाय यः कश्चित्कुर्य्याद्धोमं दिनेदिने ॥ जपापुष्पैराज्ययुतैरष्टोत्तरशतं प्रिये ॥ षण्मासस्य प्रयोगेण भवेदाकर्षणं ध्रुवम् ॥ ५८ ॥ देवगन्धर्वकन्याश्च तथा नागादिकन्यकाः ॥ हठाच्चागत्य कामार्त्ता बलादालिङ्गयन्ति तम् ॥ ५९ ॥ विद्यायै क्रियते होमस्तिलैः पायसमिश्रितैः ॥ स प्राप्नोति महाविद्यां शास्त्रौघदशशालिनीम् ॥ ६० ॥ मधुना रुरुमांसेन होमं कुर्य्यात्प्रयत्नतः॥विद्यावान्धनवान्वापि सर्वशास्त्रवशंकरः ॥६१॥ भोजनानन्तरं चास्या बलिं कृत्वा दिनेदिने॥शतमष्टोत्तरं मन्त्रमुच्छिष्टेन जपेत्सदा ॥६२॥ उत्कटे वा श्मशाने वा शून्यागारे चतुष्पथे ॥ बलिप्रदानतो देवी प्रत्यक्षा भवति ध्रुवम् ॥ ६३ ॥ गोपनीयं प्रयत्नेन कथनीयं न कस्यचित् ॥ गुरुभक्तिश्च कर्त्तव्या कायेन च धनेन च॥६४॥ अथातः सम्प्रवक्ष्यामि वामदक्षिण निर्णयम् ॥ कलौ विष्णुप्रार्थनया सर्वतन्त्रेषु गोपितम् ॥६५॥ मनुष्याः पशवो ज्ञेयाः पशवोपि नराः सुराः ॥ पशवोप्यसुराश्चापि भक्ष्यं पानं च मैथुनम् ॥ ॥ ६६ ॥ जानन्ति तुल्यं भेदेन शीतोष्णाद्याः षडूर्मयः ॥ सर्वानेव हि बाधन्ते ममानन्दवनेमुतः ॥ ६७ ॥ द्वयोस्तुल्या गतिः प्रोक्ता कामक्रोधादिकामतः॥

तत्कथं मनुजाः श्रेष्ठास्तत्र त्वां प्रब्रवीमि च ॥ ६८ ॥ पशुदेहादन्यलोकसाधनं नैव जायते ॥ नृदेहात्तद्भवेद्यस्मात्तस्माच्छ्रेष्ठा नरा मताः ॥ ६९ ॥ यो यस्य धर्म्मो विहितस्तेन धर्मेण यो व्रजेत् ॥ तस्यैव परलोकोऽस्ति यावत्पुण्यं वसेद्दिवि ॥ ७० ॥ पुनराढ्यगृहे जन्म सत्संगश्चोपजायते ॥ सावधानस्तत्र यदा शास्त्रश्रवणतो भवेत ॥ तदायं जायते विप्रः श्रोत्रियाणां कुले सुराः ॥ ॥ ७१ ॥ तत्रापि सावधानश्चेद्ब्राह्मधर्म्मपरो यदा ॥ तदा समानन्दवने दीक्ष्यते स समान्तरे ॥ ७२ ॥ पुनः कोपि स्वधर्म्मस्थो ज्ञानाभावाद्वियोनिषु ॥ जायते धर्म्मसाहाय्यान्मया काश्यां विमोच्यते॥ कालस्यांशोऽधिकस्तत्र जपेच्च बहु जीवति ॥ ७३ ॥ उपासना द्विधा प्रोक्ता सकामा कामविच्युता ॥ मोक्षबीजं तु निष्कामा सकामा भवबीजकम् ॥ ७४ ॥ पन्थास्तु दक्षिणः श्रेष्ठो वामः श्रेष्ठतरो मतः ॥ यस्तु वामं विजानाति स एव परमो गुरुः ॥ ॥ ७५ ॥ अहं जानामि सम्पूर्णं पादोनं सनकादयः ॥ अर्धं चापि वशिष्ठाद्याः शक्राद्याः पादसम्मितम् ॥ ७६ ॥ जानन्ति नाथाः षष्ठांशं कोट्यंशमितरे जनाः॥ जानंति कोटयश्चात्र जायंते कृमियोनिषु ॥७७॥ यः करोति सुरापानं जीवन्मुक्तः स जायते ॥ सुरतं यः प्रकुरुते त्रैलोक्यकरणक्षमः ॥ ॥७८॥यो भक्षयति मत्स्यांश्च स शिवो नात्र संशयः॥ मुद्रां भक्षयते यस्तु स सिद्धीनां पतिर्भवेत् ॥ ७९ ॥ मांसं खादति यो मर्त्यस्तस्य मृत्युभयं कुतः ॥ एतस्य चार्थत्रितयं सात्त्विको राजसस्तथा ॥ ८० ॥ तामसश्चेति तत्राद्यो वाममार्गो निरूप्यते ॥ तं मार्गं ये विजानन्ति ते मुक्ता नात्र संशयः ॥ ८१ ॥ श्रीकृष्णो वाममार्गन्तु फाल्गुनायोपदिष्टवान् ॥ मया चिन्तयता दृष्टस्समुनिश्च निरूपितः॥८२॥चाण्डालो वा तुरुष्को वा ब्रह्महा वाथ मत्सरी॥ श्रोत्रियो वा वाममार्गी भुक्तिमुक्त्योः स भाजनम् ॥ ८३ ॥ ज्ञातोयं शुकदेवेन गर्भस्तंभेन धीमता ॥ तं निन्दयति यः पापी विष्ठायां जायते कृमिः ॥ ८४ ॥ वाममार्गे च तन्त्राणि मया त्रीणि कृतानि तु ॥ दत्तात्रेयायचैकन्तु श्रीकृष्णाय तथा परम् ॥ ८५ ॥ देव्यै दत्तं तृतीयन्तु दत्तेन तु युगद्वये ॥ बहवो वृष्णिकाद्याश्च वाममार्गेण मोचिताः ॥ ८६ ॥ श्रीकृष्णाय तु

यद्दत्तं तेन च द्वापरे युगे ॥ इह लोकेषु सन्दाय देवलोके प्रवेशिताः ॥८७॥ यत्तन्त्रं तु मया देव्यै दत्तं तेन विमोहिताः॥पण्डिता अपि संसारे चान्येषां तु कथास्ति का ॥ ८८ ॥ तत्सारं सम्प्रवक्ष्यामि सर्वतन्त्रेषु गोपितम् ॥ कुण्डली शक्तिमुत्थाप्य हठयोगेन भोः सुराः ॥ कृत्वा बुभुक्षितां तान्तु जीवं तस्यै- प्रदर्शयेत्॥८९॥साजीवभक्षणार्थन्तु मुखं व्याकुरुते यदा॥शिरश्चन्द्रामृतं तस्या मुखं यात्येतदीरितम् ॥ ९० ॥ जरामृत्युहरं देवाः सुरापानन्तु वामिनाम् ॥ पीत्वापीत्वा पुनः पीत्वा देहो भवति काष्ठवत् ॥ ९१ ॥ प्राक्कर्म्मवेगतो देहे नाना कर्म्माणि भान्ति च ॥ जीवः प्राप्यात्मसाम्यत्वं नित्यानन्दमयो भवेत् ॥ देहाभिमाने गलिते साधकः स्यान्महेश्वरः ॥ ९२ ॥ भ्रामितन्तु कुलालेन चक्रं चरति वेगतः ॥ तथास्य देहश्चरति व्यहङ्कारस्तु कर्म्मतः ॥ ९३ ॥ यथा केशनखादीनां निर्गतानां तु कर्त्तने ॥ तद्वन्न दुःखं भवति ज्ञानिनां देहताडने ॥ ९४ ॥ जीवः सर्वगतः केशनखादीनां यथा भवेत् ॥ वृद्धिस्तथास्य देहस्य व्यापारः सम्प्रवर्त्तते ॥ ९५ ॥ यथा वृक्षः सजीवोपि पीडया नानुभूयते ॥ तथा चन्द्रसुरामत्तः कामाद्यैर्नानुभूयते ॥ ९६ ॥ इडापिङ्गलयोः प्राणान्सुषुम्णायां प्रवर्त्तयेत् ॥ सुषुम्णा शक्तिरुद्दिष्टा जीवोयन्तु परः शिवः॥तयोस्तु सङ्गमो देवाः सुरतं नाम कीर्तितम् ॥९७॥ वीर्य्यपातस्य समये सुषुम्णासन्नमारुते ॥ उत्पद्यते तु यत्सौख्यं तस्मात्कोटिगुणं तु तत् ॥ ९८ ॥ समाधिस्थास्तु योगीन्द्रास्तेन सौख्येन निर्वृताः॥सहस्रयुगकालन्तु मन्यन्ते ते निमेषवत् ॥ एतदेव रतं प्रोक्तमन्यत्स्याद्रासभं रतम् ॥ ९९ ॥ पञ्चक्लेशास्तु मत्स्याः स्युर्विवेकेनैव ताञ्जयेत् ॥ मत्स्यभक्षणमित्युक्तं मुक्ति- मार्गनिदर्शकैः ॥ १०० ॥ क्लेशकर्म्मविपाकैश्च ह्याशयैः स्यादसङ्गतिः ॥ तदानीं ह्यानन्दमय आत्मत्वं प्रतिपद्यते ॥ १०१ ॥ आत्मनो जायते मोदस्ता मुद्राः परिकीर्त्तिताः ॥ ता ज्ञेया धारणाध्यानसमाध्या- ख्यास्तु मोक्षदाः ॥ १०२ ॥ देहबन्धकरं यत्तु तन्मांसं परिकीर्त्तितम् ॥ अज्ञानेन यतो जीवो देहपाशेन बध्यते ॥ १०३ ॥ अज्ञानभक्षणं प्रोक्तं तन्मांसस्य च भक्षणम्॥ अज्ञाननाशाज्ज्ञानस्योदयान्मोक्षः प्रजायते॥१०४॥

दत्तात्रेयाय यत्प्रोक्तं सात्त्विकं तन्निरूपितम् ॥ अनेन वाममार्गेण मोक्षो भवति सर्वथा ॥ १०५ ॥ श्रीकृष्णार्पितसारार्थं तन्त्रराजस्य गृह्यताम् ॥ ददाति यत्तल्लभते हीति शास्त्रेषु निश्चयः ॥ १०६ ॥ न मांसभक्षणे दोषो न मद्ये न च मैथुने ॥ प्रवृत्तिरेषा भूतानां निवृत्तिश्च महाफला ॥ ॥ १०७ ॥ व्यामोहकारकं मद्यं निषिद्धं नरकप्रदम् ॥ ब्राह्मणो न स्पृशेन्मद्यं वैदिके वर्त्मनि स्थितः ॥ १०८ ॥ यावद्वेदश्च वेदी च कलौ भूमौ प्रवर्त्तते॥ तावन्न ब्राह्मणो मद्यं कलौ सेवेत कर्हिचित् ॥ यथामृतन्तथा मद्यम्प्रोक्तं काले निषेवितम् ॥ १०९ ॥ अमृतेन सहोत्पन्नं स्थाने मद्यं सुधायते ॥ विषेणापि समुत्पन्नं तेन मद्यं विषायते ॥ ११०॥ अग्निर्नाम च गायत्री सा प्राप्ताचेद्गुरोर्मुखात् ॥ कुलद्वयविशुद्धेन वैदिकेनैव वर्त्मना ॥ १११ ॥ अज्ञाते तन्मुखाग्नौ तु सद्यो बिन्दुः पतेद्यदि ॥ प्रतारको वचोभिर्वा धनबुद्ध्या तथा परम् ॥ इह लोके स दुःखी स्यात्प्रेत्य राक्षसतां व्रजेत् ॥११२॥ यदि तन्त्रक्रियायुक्तो गुरुणा संस्कृतो भवेत् ॥ तदा किञ्चित्सुखं प्राप्य प्रेत्य लक्षाधिपो भवेत् ॥ ११३ ॥ विष्णोरप्यर्च्चनं कुर्य्यात्तर्प्पणं सुरया पुनः ॥ अविप्रः सौख्यमाप्नोति प्रेत्य ब्रह्मणि लीयते ॥ गौडी पैष्टी च माध्वी च सुरा इत्यभिधीयते ॥ ॥ ११४ ॥ राजन्यवैश्ययोर्नेष्टा ब्राह्मणस्य तु का कथा ॥ मन्त्रेण संस्कृतं कृत्वा शक्त्युच्छिष्टं तु यः पिबेत् ॥ मद्यं पुनः पुनः स्तन्यं न पिबेत्स पयो नरः ॥ ११५ ॥ दैवात्कदाचिद्विप्रोपि धूर्त्तमन्त्रैः प्रतारितः ॥ दैवेन मद्यपो जातस्तस्योद्धारो मयोच्यते ॥ ११६ ॥ त्यजेत्स वैदिकं कर्म्म तुलसीं नैव संस्पृशेत् ॥ चाण्डालो वा तुरुष्को वा यः कश्चित्कौलमास्थितः ॥ तस्यैव सङ्गः कर्त्तव्यो नान्यविप्रस्य कुत्रचित् ॥ ११७ ॥ प्रत्यहम्पूजयेद्देवीं शाक्तैः सङ्गस्तथान्वहम् ॥ देवताश्चिन्तयेच्छाक्तिं तां पुमान्स्वयमेव हि ॥ ११८ ॥ एवम्भावनया युक्तः शाक्तैः सङ्गं समाचरेत् ॥ प्राणस्यायमनाद्वापि भेषजान्मन्त्रतस्तथा ॥११९॥ संस्तभ्य शुक्रम्प्रजपेद्यावत्स्खलति चाङ्गना ॥ शक्त्यग्नौ तद्दशांशेन स्खलनं होम एव तत् ॥१२०॥ पुनारतं समारभ्य स्खलिताभ्यां च तर्प्पणम् ॥ पुना रतान्मार्ज्जनञ्च एतदष्टदिनैश्चरेत् ॥ १२१ ॥ सम्भोज्याः

शक्तयः पञ्च नवमे तु दिने तथा ॥ एवं कृते विधाने च देवता वरदा भवेत् ॥ ॥ १२२ ॥ रौहितकैस्तु तृप्तिः स्याद्वर्षं मासं च माद्गुरेः ॥ त्रिरात्रन्तिमिभिस्तृप्तिः शृंग्या वापि दिनद्वयम् ॥ १२३ ॥ भागाष्टकं माषपिष्टं षड्भागोजपलस्य च ॥ सुरस्य च सुपक्वस्य शाल्यं भागचतुष्टयम् ॥ १२४ ॥ भागद्वयं तण्डुलानां मेथिकाहिंगुजीरकम् ॥ लवणं च तथा योग्यं सुरया मर्दितं दृढम् ॥ १२५ ॥ चक्रीकृतं नागवल्लीदलैश्च परिवेष्टितम् ॥ जलयन्त्रे विपक्वं तच्छक्तिमुद्रेयमीरिता ॥ १२६ ॥ कालखण्डं कर्करस्य चव्यं यन्त्रविपाचितम् ॥ माषाढकीमसूरैश्च चणकान्नैः समान्वितम् ॥ १२७ ॥ समभागेन चूर्णेन तच्च हिंग्वादिभिर्युतम् ॥ वटकाः कटुतैलेन पक्वाः स्यान्मुद्रिका परा ॥ ॥ १२८ ॥ सर्वासामेव मुद्राणां करणं तु जले स्थले ॥ सुरा देयाथ वा मद्यमासवं वा न चेतरत् ॥ १२९ ॥ गोधूमचूर्णं मांसं च पक्वं सम्मेलयेद्दृढम् ॥ दिनत्रयं जले स्थाप्यं यावदम्लं प्रजायते ॥ १३० ॥ सूक्ष्मं मत्स्यं माषपिष्टं मसूराणां च चूर्णकम् ॥ गोधूमशष्कुलीमध्ये दत्त्वाज्ये परिपाचयेत् ॥ इयं तु परमा मुद्रा शक्तीनामतितृप्तिदा ॥ १३१ ॥ धारिका पूरिकाचैव वेष्टनी पूर्णपूरिका ॥ दक्षमार्गस्थशक्तीनां मुद्रिकाः परिकीर्तिताः ॥ १३२ ॥ सम्यक्सुपक्वं मांसं च तथा मत्स्यभवं पलम् ॥ स्विन्नेन हारिमन्थानं द्विदलेन च मेलयेत् ॥ १३३ ॥ सम्यक्पिष्ट्वा कटाहे तद्घृतेन परिपाचयेत् ॥ समं च सामितं दत्त्वा मारिचानि च पत्रजम् ॥ १३४ ॥ लवङ्गं चापि क्षुद्रैलां जातीं कंकोलकं विधुम् ॥ यथोचितं तत्र दत्त्वा मोदकान्कारयेद्दृढान् ॥ वाममार्गगणेशानां मुद्रा परमतोषकृत् ॥ १३५ ॥ माषान्मकुष्ठांश्चणकान्मुद्गाढकपरं समम् ॥ सम्यक्पिष्ट्वा निबद्धं च दधि दत्त्वा विलोडितम् ॥ १३६ ॥ सूक्ष्मास्य तु वटी बद्धा पङ्क्तिसितया तथा ॥ एलादिकसुगन्धैश्चोद्धूलिका मुद्रिका मता ॥ १३७ ॥ सम्यक्स्विन्नस्य मांसस्य राजिकावत्कृतस्य च ॥ शुष्कस्य भानुकिरणैराज्ये पक्वस्य षड्गुणे ॥ १३८ ॥ दुग्धं दत्त्वा पचेत्सम्यग्यावद्द्रवति पिण्डितम् ॥ समिता च समां दत्त्वा कर्पूरादि यथारुचि ॥ मुद्रेयं गणनाथस्य प्रिया तोषकरी सदा ॥ १३९ ॥ सम्यक्तित्तिरिमांसं च जलयन्त्रेण पाचयेत् ॥

घृतसम्भर्जितं तेन तुल्यं चणकचूर्णकम् ॥ १४० ॥ संमेल्य भर्ज्जयित्वा च घृते सम्यग्विपाचयेत् ॥ सितया मुद्रिका चेयं गणेशानां प्रियंकरा ॥ १४१ ॥ हरिमत्स्यकबिन्दूनां मुद्गानां चूर्णकस्य च ॥ तथा गोधूमचूर्णानां मुद्गचूर्णस्य लड्डुकाः॥दक्षिणानां गणेशस्य प्रीतिदा मुद्रिका मता ॥१४२॥ अब्राह्मणनराणान्तु मांसं सर्वोत्तमं मतम् ॥ मृगाणां च तथा प्रोक्तं तित्तिरादिकपक्षिणाम् ॥ मांसं तृप्तिकरं ज्ञेयं त्र्यहं कालीयकस्य तु ॥ १४३॥ दिनाष्टकं यथान्यायं यस्मिन्देशे तु यद्भवेत् ॥ खाद्यमांसं दैवतायै सम्यक्तच्च निवेदयेत् ॥ १४४ ॥ पूजायन्त्रं दक्षमार्गे प्रोक्तं गन्धाष्टकेन तत् ॥ लिखेद्वा केशरहिमरोचनाभिः समालिखेत् ॥ १४५ ॥ वाममार्गी लिखेदाद्यपुष्पेण यदि यन्त्रकम् ॥ षण्मासपूजनात्तस्य त्वरितं सिद्धिमाप्नुयात् ॥१४६॥ युवत्याश्च प्रसूताया अभावे गृह्यते रजः ॥ तदभावे तरुण्यास्तु नीरोगाया रजो मतम्॥ ॥ १४७ ॥ तदभावे च कुसुमं ग्राह्यञ्चैवापराजितम् ॥ तस्योर्ध्वभागे निक्षिप्य घर्षितं रक्तचन्दनम् ॥ १४८ ॥ तदा गणं मूलमार्गोत्तेन यन्त्रं समालिखेत् ॥ तदभावे तु सुरया घृतरक्तकचन्दनैः ॥ १४९ ॥ यथोक्तं सलिखेयन्त्रं तुष्टा भवति देवता ॥ नवमेत्र प्रकाशोस्ति वाममार्गे सुरोत्तमाः ॥ १५० ॥ वाममार्गे प्रवृत्तस्तु पूजालोपं करोति चेत् ॥ नित्यं न कुरुते तस्य देवतातिबुभुक्षिता ॥ सन्ततिश्चापि सम्पत्तिं भक्षयेन्नात्र संशयः॥ १५१ ॥ प्रतिवर्षं पूजनं तु यन्त्रद्रव्योक्तवर्त्मना॥ वर्षार्धार्धार्धमासेन देवतातृप्तिकारकम् ॥ निर्धनेनैव कर्तव्यो वाममार्गः क्षयावहः ॥ १५२ ॥ रतिमात्रे वामिनात्र कर्तव्या बुद्धिरीदृशी ॥ लिंगं शिवो भगः शक्तिर्गांगं वारि जलं मतम् ॥ ॥ १५३ ॥ इति भावनया वामी रतिं कुर्वन्विमुच्यते ॥ अन्यथा स्त्रीगमनेन नरके परिपच्यते ॥ १५४ ॥ जीवस्य हननेन पापं वामिनां तन्न विद्यते ॥ यदीदृशी तदा बुद्धिर्नोचेन्निरयमाप्नुयात् ॥ १५५ ॥ अवश्यमेव कर्तव्यं मृत्युरोगागतेन च ॥ तस्मादस्य पशोः पापक्षयार्थं गमनाय च ॥ १५६ ॥ सुरलोके घातयामि तत्सुखस्यापि सिद्धये ॥ देवतापरलाभेन तमो हन हनाम्यहम् ॥ १५७ ॥ इत्थं विचार्य्य यो हन्यात्तस्य तुष्यति

देवता ॥ पूर्वजन्मनि यैर्वामिभिः कृतं यदुपासनम् ॥ १५८ ॥ सिद्ध्यन्ति ते तु पशवो बलियोग्या भवन्ति हि॥देवतासन्निधौ त्यक्त्वा प्राणान्यांति सुरालयम् ॥ १५९ ॥ वामिना तु सदा कार्य्या: सर्वासु प्रमदास्वपि ॥ देवीबुद्धिः कठोरं वाप्रियं नैव सुसंवदेत् ॥ १६० ॥ आत्मजाया तथा नार्य्यो यक्षिणीप्रमुखाः पराः ॥ वामिना ताश्च भोक्तव्या एष धर्म्मः सनातनः ॥ १६१ ॥ उत्तरायां नैव कोपि पातं वीर्य्यस्य कारयेत् ॥ चाण्डालीनामपि स्त्रीणां स्पर्शदोषं न मानयेत् ॥ १६२ ॥ रजस्वलाभगं दृष्ट्वा कुर्य्यादेकां पुरस्क्रियाम् ॥ केवलं सुरया होमस्तत्प्रत्यक्षं समाचरेत् ॥ १६३ ॥ उत्तिष्ठति तदा कुण्डाद्देवतार्धांगदर्शनी ॥ ब्रूयाद्वरं गृहाणेति मनोभीष्टन्तु योर्चयेत् ॥ १६४ ॥ स्मशाने वा शून्यगेहे चैत्याधस्ताच्छवोपरि ॥ मुण्डोपर्य्यथ वा शौचस्थाने वा शून्यमन्दिरे ॥ सुरास्थाने प्रकर्त्तव्यं तत्र तिष्ठन्ति देवताः ॥ १६५ ॥ शालग्रामो नार्चनीयस्तुलसीं नैव संस्पृशेत् ॥ तीर्थयात्रां न कुर्वीत गङ्गास्नानं न चाचरेत् ॥ १६६ ॥ स्नानाभावे जपं कुर्य्यात्प्रथमर्त्तुसमन्वितम् ॥ आसनाधोम्बरं कृत्वा जपन्सिद्धिमवाप्नुयात् ॥ १६७ ॥ प्रायशो वाममार्गे तु सिद्धमन्त्रो यदा गुरुः ॥ तदैव जायते सिद्धिरन्यथा प्रेतवद्भवेत् ॥ १६८ ॥ वाममार्गे द्रुतं सिद्धिः कर्म्मणा येन जायते ॥ तदहं ते प्रवक्ष्यामि सूक्ष्मसाधनमद्भुतम् ॥ १६९ ॥ अष्टम्यां वा चतुर्दश्यां कृष्णायाम्भौमवासरे ॥ गृहीत्वा नृकपालन्तु मद्यम्मांसं तथौदनम् ॥ कुल्माषोन्मिश्रितं कृत्वा गच्छेदश्वत्थभूमिकाम् ॥ १७० ॥ एकान्ते निर्जने तस्य तले संलिप्य भूमिकाम् ॥ [१]दण्डमात्रानष्टदिक्षु कीलान्मूलेन पूरयेत् ॥ १७१ ॥ अष्टोत्तरसहस्रेण सप्ततन्तुकदोरकम् ॥ निबध्नीयात्तत्र पूजां देवतायाः समाचरेत् ॥ १७२ ॥ देवीं तु हृदि संस्थाप्य तस्मिन्स्थाने तु दीपकम्॥कुर्य्याच्चैरण्डतैलेनाभावे कापिलहव्यकैः ॥ १७३ ॥ तदभावे तु तैलेन कुडवप्रमितेन च ॥ दीपं कुर्य्यादष्टशतसूत्राणां वर्त्तिका मता ॥ १७४ ॥ तस्योपरि कपालं तत्कज्जलार्थं निवे-

१ दण्डलक्षणं चोक्तं श्रीभास्कराचार्य्येण ॥ " यवोदरैरंगुलमष्टसंख्यैर्हस्तोंगुलैः षड्गुणितैश्चतुर्भिः ॥ हस्तैश्चतुर्भिर्भवतीह दण्डः क्रोशः सहस्रद्वितयेन तेषाम् " इति ॥

शयेत् ॥ दीपं दृष्ट्वा जपेन्मन्त्रं नान्यतस्तु विलोकयेत् ॥ १७५ ॥ अर्धे प्रज्वलिते तैले भूतप्रेतपिशाचकाः ॥ नानारूपा भिन्नशब्दाः साधकं भीषयन्ति ते ॥ १७६ ॥ न भेतव्यं तदन्नं तुं वामहस्तेन निःक्षिपेत ॥ तेषामग्रे नान्यदृष्टिः प्रपश्येद्दीपमेव हि ॥ १७७ ॥ किञ्चिच्छेषे दीपतैले देवी सा वरदा भवेत ॥ तस्यै तं च बलिन्दत्त्वा स्तुत्वा संयाचयेद्वरम् ॥ ॥ १७८ ॥ पूर्वकर्म्मविपाकेन यदि नायाति देवता ॥ दीपान्ते कज्जलं ग्राह्यं तत्र देवीं प्रपूज्य च ॥१७९॥ आनयेत्तद्गृहे सिद्धं दत्त्वाक्ष्णोः स्याज्जगद्वशम् ॥ दत्त्वाक्ष्णोः कज्जलं तच्च प्रयोगानाचरेत्ततः ॥ १८० ॥ सर्वे एव प्रसिद्ध्यन्ति लोलुपेतिगुरौ सति ॥ रक्षयेदञ्जनं सम्यङ्नोचेद्भवति भैरवः ॥ ॥ १८१ ॥ इत्येतद्वो निगदितं गणेशरचितं महत् ॥ तद्ब्रुवन्तु सुराः सर्वे वक्तव्यं किमतः परम् ॥ १८२ ॥

इति श्रीमहामायामहाकालानुमते मेरुतन्त्रे शिवप्रणीते उत्तराम्नायगणपति-मन्त्रकथनं नाम विंशतितमः प्रकाशः ॥ २० ॥

---

श्रीदेव्युवाच ॥ भगवन्देवदेवेश गणेशस्य मया श्रुताः ॥ सरहस्या महामन्त्राः कलौ सिद्धिप्रदायकाः॥ १ ॥अतः परं देववरः कथं पूज्यो दिवाकरः॥ ब्रूहि तस्य च के मन्त्राः केष्वाम्नायेषु कीर्त्तिताः ॥ २ ॥ श्रीशिव उवाच ॥ एक एवास्य चाम्नायो दक्षिणः परिकीर्त्तितः ॥ सथायं पावनं विप्रं स्वयमेव करैः स्पृशेत ॥ ३ ॥ उपासना तथैतस्य स्वधर्म्माचारपूर्विका ॥ चतुर्युगेषु प्रत्यक्षो देवोयं सर्वसम्मतः ॥ ४ ॥ सर्वेषामेव देवानां नेत्रभूतो जगत्पतिः ॥ तस्य मन्त्रान्प्रवक्ष्यामि सावधाना भवाम्बिके ॥ ५ ॥ ॐ घृणिः सूर्य्य आदित्यो मन्त्रश्चाष्टाक्षरो मतः ॥ देवभागो मुनिश्छन्दो गायत्री देवता रविः ॥ ६ ॥ तेजोज्वालामणे हुंफट् स्वाहेति च दशाक्षरः ॥ हृन्मन्त्रः सत्यपूर्वोयं ब्रह्मपूर्वः शिरोमनुः ॥ ७ ॥ विष्णुपूर्वः शिखामन्त्रो वर्म्माणूं रुद्रपूर्वकः ॥

---

१ सत्यतेजोज्वालामणे हुं फट् स्वाहा हृदयाय नमः ॥ २ ब्रह्मतेजोज्वालामणे हुंफट् स्वाहा शिरसे स्वाहा ॥ ३ विष्णुतेजोज्वालामणे हुंफट् स्वाहा शिखायै वषट् ॥४ रुद्रतेजोज्वालामणे हुंफट् स्वाहा कवचाय हुम् ॥

अग्निपूर्वो नेत्रमनुरस्त्रं सर्वपदैर्भवेत् ॥ ८ ॥ विधायैवं षडङ्गानि न्यसेन्मूर्तीर्यथाक्रमम् ॥ मस्तकाननहृद्गुह्यपाददेशेषु देशिकः ॥ ९ ॥ पञ्चह्रस्वैः सहादित्यो रविर्भानुश्च भास्करः ॥ सूर्य्यस्ततश्च मन्त्रार्णान्प्रणवाद्यान्न्यसेद्बुधः ॥ १० ॥ ध्यायेत्ततः कुण्डलिनं शतपत्रलसत्करम् ॥पद्मे चैव समासीनं वरकेयूरभूषणम्॥ ॥ ११ ॥ त्रिनेत्रं रक्तवर्णञ्च सुप्रसन्नं दिवाकरम् ॥ पूजयित्वा योगपीठन्तत्पीठे चार्चयेद्रविम् ॥ १२ ॥ धर्म्मादीनां स्थले तत्र यजेत्कोणचतुष्टये ॥ ईशानान्मध्यपर्य्यन्तं समाराध्यं प्रभूतकम् ॥ १३ ॥ विमलञ्च तथा सारं परमं सुखमेव च ॥ तद्बाह्येष्टदलं कृत्वा दलमूलेषु चार्चयेत् ॥ १४ ॥ पूर्वादिषु तथा मध्ये दीप्ता सूक्ष्मा जया तथा ॥ भद्रा विभूतिर्विमला ह्यमोघा विद्युता तथा ॥ १५ ॥ सर्वतोमुखिका चैता अग्निवर्णाः सुभूषिताः ॥ आसां बीजानि रांरींरूंरेंरैंरोंरौंतु क्रमेण च ॥ १६ ॥ रंरश्च नवपीठाणुर्ब्रह्मविष्णुशिवात्मने ॥ सौराय योगपीठाय हृदन्तोष्टादशाक्षरः ॥ १७ ॥ अनेन पीठं सम्पूज्य खखोल्कायाग्निगेहिनीम् ॥ मूर्त्तिं च कल्पयामीति चोक्त्वा मूर्तिं प्रकल्पयेत् ॥ १८॥ तस्यामावाह्य देवेशं तत्र सूर्य्यं समर्चयेत् ॥ तद्बाह्येष्टदलं कृत्वा दिग्दलेषु यजेद्दिमान् ॥ १९ ॥ आदित्यञ्च रविं भानुं भास्करं सूर्य्यमेव च ॥ आद्यार्णबीजा हन्ङेन्ता विदिक्पत्रे यजेदिमाः ॥ २० ॥ उषां प्रज्ञां प्रभां सन्ध्यां ब्राह्मयादींश्च दलाग्रतः ॥ सूर्य्यस्याग्रेरुणः पूज्योप्यथ विध्वादयो ग्रहाः ॥ २१ ॥ तद्बाह्ये भूपुरे पूज्या लोकपालास्तदग्रतः ॥ तदस्त्राणि च तद्बाह्ये भास्करार्चनमीरितम् ॥ २२ ॥ अष्टलक्षं जपित्वान्ते दुग्धवृक्षसमिद्वरैः ॥ जुहुयात्तत्सहस्राणि दुग्धाक्तैः साधकोत्तमः ॥ २३ ॥ तर्प्पयेच्छुद्धसलिलैश्चन्द्रचन्दनवासितैः ॥ स्वाभिषेकं ततः कृत्वा ब्राह्मणान्भोजये-

१ अग्नितेजोज्वालामणे हुंफट् नेत्रत्रयाय वौषट् ॥ २ सर्वतेजोज्वालामणे हुंफट्स्वाहा अस्त्राय फट् । इति षडङ्गं विधाय मूर्तिन्यासं विदधीत स यथा ॥ ३ ॐ आदित्याय नमः मस्तके । एं रवये नमः मुखे । उं भानवे नमः हृदये । इं भास्कराय नमः लिङ्गे । ॐ अंसूर्य्याय नमः पादयोः ॥ इति श्रीसूर्य्यस्य मूर्त्तिन्यासविधिः ॥ ४ अथ मन्त्राक्षरन्यासः ॐ घृ शीर्षणि, ॐ णिः मुखे, ॐ सू कण्ठे, ॐ र्य्यः हृदये, ॐ आ कुक्षौ, ॐ दि लिङ्गे, ॐ त्यः पादयोः, इत्थं न्यासान्कृत्वा ध्यायेत् ॥ ५ कर्पूर ॥

ततः ॥ २४ ॥ एवं सिद्धे मनौ मन्त्री प्रयोगान्कर्तुमर्हति ॥ रक्ताम्बरधरो रक्तमाल्यो रक्तानुलेपनः ॥ २५ ॥ घृतक्षीरसमायुक्तगुडभक्ताशनो निशि ॥ भिक्षाहारस्तथा वीतसङ्गः सन्तोषवान्सदा ॥ २६ ॥ मन्त्रमावर्त्तयेन्नित्यमाराधनपरायणः ॥ रथमभ्यर्च्य भास्वन्तश्चार्घ्यं तस्मै निवेदयेत् ॥ २७ ॥ प्रत्यहं रविवारे वा तद्विधानमुदीर्य्यते ॥ अग्रे मण्डलमालिख्य यजेत्पीठं यथाविधि ॥ ॥ २८ ॥ तत्र संस्थापयेत्पात्रं शुद्धन्ताम्रसमुद्भवम् ॥ रम्यं प्रस्थजलग्राहि मूलमन्त्रं समुच्चरेत् ॥ २९ ॥ शुद्धोदकेन सम्पूर्य्य प्रक्षिपेत्तत्र कुंकुमम् ॥ रोचनां राजिकां रक्तचन्दनं वंशतण्डुलान् ॥ ३० ॥ श्यामाकतण्डुलाच्छालीन्करवीरजपाभवान् ॥ सञ्चिन्त्य देवतात्मैक्यं भास्करं सम्यगर्चयेत् ॥ ३१ ॥ उपचारैर्निवेद्यान्तैस्तत्पिधाय जपेन्मनुम् ॥ सम्यगष्टोत्तरशतं भूयः पुष्पादिभिर्यजेत् ॥ ३२ ॥ उद्धृत्यामस्तकं पात्रं जानुस्पृष्टमहीतलः ॥ दृष्टिं निधाय व्योम्न्यर्के साङ्गं सावरणं स्मरेत् ॥ ॥ ३३ ॥ ततो जपन्मूलमनुं धिया दद्याच्च भानवे ॥ अर्घ्यं प्रसन्नचेताः सन्दद्याच्च सुमनोञ्जलिम् ॥ ३४ ॥ पुनर्नियतधीस्तावद्यावद्भानुर्निजैः करैः ॥ अर्घादिकं समादत्ते जपेदष्टोत्तरं शतम् ॥ ३५ ॥ ततः प्रसन्नो भगवान्प्रयच्छेदिष्टमात्मनः ॥ अनेन तु प्रयोगेण भवेदायुर्निरुग्णता ॥ ३६ ॥ वृद्धिः पुत्रकलत्राणान्तेजो वीर्य्यं धनं यशः ॥ तन्मन्त्रसहिताम्भोभिः सतधाञ्जलिसेचनम् ॥ ॥ ३७ ॥ पापान्धकारदारिद्यनाशनं श्रीकरं परम् ॥ स्थण्डिले स्थापयेत्कुम्भं तीर्थोदकसुपूरितम् ॥ ३८ ॥ हिरण्यरत्नगन्धादि तत्र निक्षिप्य पूरयेत् ॥ देवं सपरिवारन्तु प्रागुक्तविधिना ततः ॥ ३९ ॥ स्थण्डिलेग्निं समारोप्य कपिलापयसा चरुम् ॥ पचेत्तेनैव जुहुयाद्द्व्याज्यसहितेन च ॥ ४० ॥ सहस्रं कृतसम्पातं शुद्धपात्रे तु कारयेत् ॥ ऋतुस्नातां सुनियतां पूर्वाङ्गसमुपोषिताम् ॥ ४१ ॥ अष्टमे दिवसे तान्तु सहस्रमभिमन्त्रितैः ॥ अभिषिञ्चेत्कुम्भजलैर्दद्यात्तस्यै तु मन्त्रवित् ॥ ४२ ॥ सहस्रमन्त्रितं होमसम्पातांतं ततो निशि ॥ नरोपि सूर्य्य एवाहमिति ध्यात्वा तया सह ॥ ४३ ॥ सम्भोगमाच-

रेतेन सुपुत्री गुणवान्भवेत् ॥ अथ मन्त्रान्तरं वक्ष्ये दिनेशस्य षडक्षरम् ॥ ४४ ॥ हंखंखः खोल्कायेति तथान्ते चाग्निगेहिनी ॥ मुनिर्ब्रह्मा च गायत्रं छन्दः सवितृर्दैवतम् ॥ ४५ ॥ सूक्ष्मरूपायाग्निवधूर्मन्त्रेण हृदयं मतम् ॥ सूक्ष्माकारायाग्निवधूरिति मन्त्रेण शीर्षकम् ॥ ४६ ॥ सूक्ष्मबालाय स्वाहेति कवचञ्च सनेत्रकम् ॥ सूक्ष्माकाराय हुंफडित्येवं शस्त्रं प्रकीर्त्तितम् ॥ ४७ ॥ मन्त्रवर्णैः षडङ्गं स्याद्ध्यानमस्योच्यतेधुना ॥ रक्तपद्मद्वयं हस्तैर्बिभ्रतश्च वराभये ॥ ॥ ४८ ॥ बन्धूकामन्त्रिनेत्रश्च रविन्ध्यायेत्सुभूषितम् ॥ पूर्वोक्ते पूजयेत्पीठे देवमावाह्य मन्त्रवित् ॥ ४९ ॥ लक्षमेकं जपेन्मन्त्रं नियतात्मा जितेन्द्रियः ॥ जुहुयात्तद्दशांशेन बिल्वैरथ पलाशजैः ॥ ५० ॥ उदुम्बरसमुद्भूतैस्त्रिमध्वक्तैः समिद्वरैः ॥ ५१ ॥ तर्प्पणादि ततः कुर्य्यात्प्राक्प्रोक्तविधिना सुधीः ॥ अर्घादिकं च कुर्वीत पूर्ववद्वाञ्छितात्तये ॥ ५२ ॥ एतत्संसेवनान्नृणां खेचरीसिद्धिरीरिता ॥ न भास्करसमः कश्चिद्भुक्तिमुक्तिप्रदायकः ॥ ५३ ॥ प्रणवश्च खखोल्काय मन्त्रः पञ्चाक्षरोस्य च ॥ न्यासो ध्यानं च पूजा च प्राग्वदेव समीरिता ॥ ५४ ॥ खंबीजादिक एषोस्ति षडर्णः सप्तवर्णकः ॥ भवेत्तन्न्यासपूजादि ध्यानाद्यङ्गं षडर्णवत् ॥ ५५ ॥ सप्ततुरङ्गाय विद्महे सहस्रकिरणाय धीमहि ॥ तन्नो रविः प्रचोदयात् ॥ ५६ ॥ इयन्तु सूर्य्यगायत्री जपतामिष्टदायिनी ॥ भग्नत्रानां राजपुत्राणां क्षत्रतेजोविधायिनी ॥ ५७ ॥ यत्पृष्ठं नारिभिर्दृष्टं स्पृष्टं नैव कदाचन ॥ परस्त्रीभिर्यच्छरीरं पुरश्चर्य्याचतुष्टयम् ॥ ५८ ॥ जातिमात्रं राजपुत्रः पुरश्चर्य्याप्रभावतः ॥ सार्वभौमत्वमाप्नोति ब्राह्मणान्प्रतिपालयेत् ॥ ॥ ५९ ॥ ॐ ह्रींहंसश्चतुर्वर्णो मन्त्रः प्रोक्तो दिनेशितुः ॥ ऋषिर्ब्रह्मा च गायत्री छन्दः सूर्य्यश्च देवता ॥ ६० ॥ ताराद्यया षडंगानि षड्दीर्घान्वितमायया ॥ देदीप्यमानरत्नौघमुकुटेन विराजितम् ॥ ६१ ॥ पाशांकुशवराभीतिकरं रक्तं भजे रविम् ॥ नवशक्तिसमायुक्ते पीठे पूर्वोदिते यजेत् ॥ ६२ ॥ प्रकल्प्य मूर्तिं मूलेन तत्रावाह्य दिवाकरम् ॥ सम्पूज्य तस्याव

---

१ हं खं खःखोल्काय अयं षडक्षरो मन्त्रः स्वाहान्तः स्याद्गजाक्षरः॥ तथातारयुतोष्टार्णो नवार्णोपि प्रजायते ॥

रणान्यर्चयेत्क्रमतः सुधीः ॥ ६३ ॥ हृल्लेखा गगना रक्ता कराली च चतुर्थिका ॥ महोच्छुष्मा पञ्चमी च मध्यात्पूर्वादिके यजेत् ॥ ६४ ॥ अङ्गे द्वितीयावरणं मातृकाभिस्तृतीयकम् ॥ सोमङ्गगुरुशुक्राश्च दिक्ष्वारशनिराहवः ॥ केतुर्विदिक्षु पूज्याश्च चतुर्थावरणं रवेः ॥ ६५ ॥ स्वनामाद्यक्षरं बिन्दुभूषितं प्रथमं वदेत् ॥ ङेन्तं हृदन्तं खेटस्य नामपूजामनुर्मतः ॥६६ ॥ पञ्चमी लोकपालैः स्यात्षष्ठी चापि तदायुधैः ॥चतुर्लक्षं जपेन्मन्त्रं जुहुयात्तद्दशांशतः ॥ ब्रह्मवृक्षसमद्भूतैः पुष्पैस्त्रिमधुरप्लुतैः ॥ ६७ ॥ सरोजैर्वा तदा देवं तर्प्पयेदभिषेचयेत् ॥ ब्राह्मणाराधनं कुर्य्यात्ततः सिद्धो भवेन्मनुः ॥ एवं साधितमन्त्रस्तु काम्यकर्म्माणि साधयेत् ॥ ६८ ॥ जपेदेवं प्रतिदिनं रविवारेथवा सुधीः ॥ दद्यादर्घद्वयमपि भवेत्तस्योदितं फलम् ॥ ६९ ॥ अथ श्रेयो [1]जनानां तु येनासौ वक्ष्यते मनुः ॥ त्र्यक्षरोस्य तु ह्रांह्रींसः प्रोक्तः सर्वार्थदायकः ॥ ७० ॥ अजोस्य मुनिरुद्दिष्टो गायत्री छन्द उच्यते ॥ देवतास्य मनोः प्रोक्तः सविता सुरपूजितः ॥ ७१ ॥ गुह्यात्पादतले यावद्गलादेर्गुह्यकं ततः ॥ मूर्धादिकण्ठपर्य्यन्तं मन्त्रार्णान्विन्यसेत्सुधीः ॥ ७२ ॥ मायाबीजेन षड्दीर्घभाजाङ्गानि प्रविन्यसेत् ॥ स्थितः पद्मेरुणे त्र्यक्षोरुणवर्णसुभूषणः ॥ ७३ ॥ पद्मद्वयवराभीतिहस्तश्चारुणसेवितः ॥ पूर्वोदिते यजेत्पीठे नवशक्तिसमन्विते ॥ ७४ ॥ षडङ्गावरणं चाद्यं प्राग्वच्चैव द्वितीयकम् ॥ दिक्पालैश्च तृतीयं स्याच्चतुर्थन्तु तदायुधैः ॥ ७५॥ ततश्च तेजश्चण्डाय निर्माल्यं विनिवेदयेत् ॥ जपेद्द्वादशलक्षं च तत्सहस्रं हुनेत्तिलैः॥ घृताक्तमधुराक्तैश्च यवान्नैश्चैव तादृशैः ॥ ७६ ॥ तर्प्पणादि ततः कुर्य्यात्प्रयोगान्साधयेदथ ॥ दद्यात्पूर्वोदितं चार्घ्यं दिनेशाय सुसाधकः ॥ ७७ ॥ सोप्यस्य धनधान्यादिपुत्रपौत्रविवर्धनम् ॥ करोति रत्नवस्त्रादिभूषणानि विवर्धयेत् ॥ ७८ ॥ अष्टपत्राम्बुजं कुर्य्यात्तत्र कुम्भान्नव न्यसेत् ॥ पत्रमध्ये कर्णिकायां तांश्च तोयेन पूरयेत् ॥ ७९ ॥ नवग्रहान्समावाह्य तेषु कुम्भेषु मन्त्रवित् ॥ कर्णिकाकलशं मूलमन्त्रेणैव सहस्रकम् ॥ प्रजप्यान्येषु तन्मन्त्राञ्छतकृत्वो जपेत्सुधीः ॥ ८० ॥ तज्जलै-

१ येन जनानां श्रेयो जायते स मनुर्वेदिष्यते ॥ २ घृतमध्वक्तैर्यवैः ॥

रभिषिञ्चेत्तु साधको मन्त्रवित्तमः॥मुच्यते नात्र सन्देहः साधको ग्रहदोषतः ॥ ॥८१॥रोगा नश्यन्ति सततं लक्ष्मीश्चापि स्थिरा भवेत् ॥ ग्रहहोमः प्रकर्त्तव्यो ग्रहाणां वै कृते तथा ॥८२॥ चन्द्रभान्वोश्चोपरागे निजर्क्षे वाथ मन्त्रवित् ॥ विग्रहादौ भये चापि घोररूपे महागदे ॥ ८३ ॥ पूर्वं मण्डलकं कृत्वा ग्रहान्सम्पूज्य तत्र च ॥ स्वदिक्षु चाग्नीन्संस्थाप्य जुहुयाच्च समिद्वरैः ॥ ८४ ॥ अर्कद्विजद्रुमापूराश्वत्थोदुम्बरखादिरैः ॥ शमीदूर्वाकुशोद्भूतैः क्रमाद्धोमः समीरितः ॥८५॥ अष्टाधिकं सहस्रञ्च हुत्वा सूर्य्यस्य चाहुतीः ॥ अन्ते चान्यव्याहृतिभिर्हुत्वा होमं समापयेत् ॥ ८६ ॥ गुरुं सन्तोष्य ऋत्विग्भ्यो यथा शक्त्या च दक्षिणाम् ॥ दद्याच्च भोजयेद्विप्रान्संग्रामे विजयी भवेत् ॥ ८७ ॥ रोगाः शान्तिं व्रजन्त्याशु दीर्घमायुश्च विन्दति ॥ कृत्याद्रोहारिकाणाञ्च शान्तिरेवाशु जायते ॥ ८८॥ सर्वेषाञ्च ग्रहाणाञ्च होममेकत्र भावयेत ॥ धनधान्यैश्वर्य्यपूर्ण आयुर्दीर्घं स विन्दति ॥ अथान्यत्सम्प्रवक्ष्यामि संग्रामविजयाभिधम् ॥ ८९ ॥ मन्त्रं सूर्य्यस्य रां हुं च द्व्यक्षरोयं महामनुः ॥ ऋषिश्छन्दो देवताश्च ह्यजगायत्रभानवः ॥ सर्वं पूजादिकञ्चास्य श्रेयोजनकमन्त्रवत् ॥ ९० ॥ अथातः सम्प्रवक्ष्यामि हंसोयं द्व्यक्षरो मनुः ॥ ब्रह्मा मुनिः समुद्दिष्टो गायत्रं छन्द उच्यते ॥ ९१ ॥ देवी पूर्वन्देवतास्य परमात्मा समीरितः ॥ षड्दीर्घेण सकारेण हंपूर्वेण षडङ्गकम् ॥९२॥ रक्ताब्जकाञ्चननिभं गुणं टङ्कवराभयम् ॥ करैर्दधानं पद्मस्थं हरं गौर्य्यङ्कगम्भजे ॥ ९३ ॥ पूर्वोदिते यजेत्पीठे दिक्कालादिप्रकल्पिते ॥ तत्र देवं यजेन्मूर्तिं मूलेनाकल्प्य मन्त्रवित् ॥ ९४ ॥ पूर्वमंगैर्यजेन्मन्त्री दलेषु च प्रपूजयेत् ॥ ऋतुं वसुं नरश्चापि परञ्च विदिशासु च ॥ ९५ ॥ अब्जां गोजाञ्च ऋतजामद्रिजाञ्च प्रपूजयेत् ॥ ततो लोकेश्वरांश्चापि तदग्रे चायुधान्यपि ॥ ९६ ॥ जपेद्द्वादशलक्षञ्च तद्दशांशं तथा हुनेत ॥ सर्पिरक्तेन हविषा तप्पर्णादि ततश्चरेत् ॥ पूर्वोदितेन विधिना सूर्य्यायार्घं निवेदयेत ॥ ९७ ॥ गोमयेनोपलिप्तायाम्भूमावष्टदलं लिखेत् ॥ सूर्य्याष्टगन्धैरथ वा चन्दनाभ्यां मनुन्त्विमम् ॥ ९८ ॥ लिखेत्तत्कर्णिकायान्तु तस्योर्ध्वं स्थापयेद्घटम् ॥ तीर्थादिजलसम्पूर्णन्तस्योर्ध्वं

स्थापयेत्करम् ॥ ९९ ॥ दक्षिणं वामहस्तेन मूलमष्टोत्तरं शतम् ॥ जपेत्सुधामयन्तञ्च कलशं हृदि भावयेत ॥ १०० ॥ तेनाभिषिञ्चेत्साध्यन्तु जायते गतभीस्त्वसौ ॥ गतरोगो दीर्घजीवी विपद्बाधापरिच्युतः ॥ १०१ ॥ चेत्स्त्री वै नित्यसौभाग्या मन्त्रयेद्दक्षिणङ्करम् ॥ आदौ तेन विधातव्यः करेण करकः शुभः ॥ १०२ ॥ अष्टोत्तरसहस्रञ्च मन्त्रयेत्करकं पुनः ॥ भावयित्वा जलन्तच्चामृतन्तेनाभिषेचयेत् ॥ विषिणं निर्विषो भूयात्स्थावराज्जङ्गमादपि ॥ १०३ ॥ महासर्पेण दष्टश्चेन्मनुना मन्त्रयेत्करम् ॥ विन्यस्येद्दंशिनो मूर्ध्नि मन्त्रयित्वा विषं हरेत् ॥ १०४ ॥ मन्त्रं सुधाकरकरशुद्धधाराप्लुतं स्मरेत् ॥ प्लुतश्चामृतधाराभिर्भावयित्वा मनुञ्जपेत ॥१०५॥ गदिनं मार्ज्जयेत्पश्चात्क्षुद्रामयविनाशनम्॥अपस्मृतिन्त्रिदोषोत्थात्रोगान्हन्यान्न संशयः १०६ शीर्षस्थचन्द्रबिम्बं च स्मरेद्धंसमुरूपकम् ॥ सञ्चिन्त्य प्रजपेन्नित्यं क्षेपयेत्पलितञ्जराम् ॥ १०७ ॥ ध्यायेन्मत्रादिमं वर्णं सुधाधारापरिप्लुतम् ।। द्वितीयश्चन्द्रधाराभिर्मार्ज्जयेत्तेन मन्त्रवित ॥ १०८ ॥ मार्त्तण्डभैरवस्याथ मन्त्रं वक्ष्यामि सिद्धिदम् ॥ हकारो रेफसंयुक्तः पकारेण समन्वितः ॥ १०९ ॥ औकारस्वरसंयुक्तस्तलेऽजाकारसंयुतः ॥ बिन्दुयुक्तं कूटमुक्तं मार्तण्डस्य त्रिवर्णकम् ॥ ११० ॥ पुटितं बिम्बबीजेन सर्वकामफलप्रदम् ॥ बिम्बबीजं दक्षमार्गे भजतां सिद्धिदायकम् ॥ वाममार्गेण भजतामादेश्यं किमिदं बुधैः ॥ ॥ १११ ॥ ब्रह्मामुनिर्निवृच्छंदो मार्त्तण्डाख्यस्तु भैरवः ॥ देवतोक्तोथ हंबीजं बिन्दुः शक्तिः प्रकीर्त्तिता ॥ ११२॥ मूर्त्तयः पञ्च चोद्दिष्टाः सूर्य्यभास्करभानवः ॥ रविर्दिवाकरश्चापि न्यस्तव्या ह्यंगुलीषु ताः॥ ११३ ॥ पञ्चह्रस्वाद्यबीजेन पञ्चदीर्घान्वितेन च ॥ शिरोवदनहृद्गुह्यपाददेशेषु ता न्यसेत् ॥ ॥ ११४ ॥ ततः षडङ्गनेत्रान्तं कुर्य्याद्दीर्घयुताणुना ॥ अङ्गन्यासानन्तरन्तु नेत्रन्यासः प्रकीर्त्तितः ॥ व्यापकं मूलबीजेन कुर्वीत तदनन्तरम् ॥ ११५ ॥ जपाकुसुमसङ्काशमष्टबाहुं चतुर्मुखम्॥मुखेमुखे त्रिनयनं मणिवन्मुकुटान्वितम्॥ ॥ ११६ ॥ खट्वांगपद्मचक्राणि शंखं पाशं तथा सृणिम् ॥ अक्षमालां

---

१ "अकारो वासुदेवः स्यादुकारः शंकरः स्मृतः" ॥ एतत्कोशप्रमाणेन शिवरूपं बुध्येत ॥

कपालं च दधतं करपंकजैः ॥ ११७ ॥ अर्धांगस्थितया शक्त्यालिंगितं हारशोभितम् ॥ पद्मस्थितं हास्यमुखं मार्तण्डं द्युमणिं भजे ॥ ११८ ॥ पीठे दीप्तादिभिर्युक्ते प्राग्वद्देवं प्रपूजयेत् ॥ आदावंगानि सम्पूज्य कर्णिकाया-मुषादिकाः ॥ ११९ ॥ पूर्वादिदिक्षु सूर्य्यादीन्विदिक्षु परिपूजयेत् ॥ नेत्र-मीशानकोणे च तद्बाह्ये खेचरानपि ॥ १२० ॥ दिगीशानायुधानीत्थं मार्त्त-ण्डार्चनमीरितम् ॥ लक्षाणां त्रितयं मन्त्री जपेद्बीजं च बिम्बयोः ॥ दशांशं कमलैः फुल्लैर्जुहुयान्मधुरोक्षितैः ॥ १२१ ॥ प्राग्वत्कुर्य्यादर्घ्यदानं प्रयोगाना-चरेत्ततः ॥ चतुरंगुलसंभूतैः सुमनोभिः श्रियं लभेत् ॥ १२२ ॥ लक्षं हुत्वा च शाल्याज्यतिलबिल्वैर्विधानतः ॥ राजानं वशयेच्छीघ्रं जपाकुसुम-होमतः ॥ जुहुयान्मातुलुंगैश्च लभतेर्थं सुवांछितम् ॥ १२३ ॥ एवं यः साधये-न्मन्त्री तस्य विद्या यशो बलम् ॥ पुत्रो लक्ष्मीश्च सौभाग्यं सर्वदा विजयो भवेत् ॥ १२४ ॥ पूर्वोक्ताष्टाक्षरे तारादग्रे ह्रींबीजमुच्चरेत् ॥ श्रीं मन्त्रोयं दशार्णस्तुपश्चाम्नायेषु कीर्त्तितः ॥ १२५ ॥ ओं ह्रीं ह्रीं ह्रौं सबिन्दुः ससूर्य्या-येत्याग्निगेहिनी ॥ दशाक्षरस्तु जप्तोयं द्वादशायुतसंख्यया ॥ दुष्टग्रहास्तु सौम्याः स्यू राजमान्यः सजायते ॥ १२६ ॥ उपास्यस्तु कृते विष्णुस्त्रेतायां तु महेश्वरः ॥ इन्द्रयज्ञौ द्वापरे तु कलौ चण्डीविनायकौ ॥ भास्करः सर्वतुल्यस्तु सर्वेषां फलदायकः ॥ १२७ ॥ यद्यत्तेजोमयं तत्तज्ज्ञेयं सूर्य्यस्वरूपकम् ॥ इत्येतत्तु-भ्यमाख्यातं किं वाच्यमथ तद्वद ॥ १२८ ॥

इति श्रीमहामायामहाकालानुमते मेरुतन्त्रे शिवप्रणीते सूर्य्यमन्त्रप्रकाश एकविंशः २१

---

श्रीदेव्युवाच ॥ सूर्य्यमन्त्राः श्रुता देव तदंशानां खचारिणाम् ॥ श्रोतु-मिच्छामि च मनून्सप्रयोगांश्च तान्वद ॥ १ ॥ श्रीशिव उवाच ॥ साधुपृष्टं त्वया देवि त्रैलोक्यस्योपकारकम् ॥ कालेन कथितं मह्यं तन्मया कीर्त्यतेधुना ॥ २ ॥ मायया मम रूपं च ब्रह्मविष्णुमहेश्वराः ॥ तत्त्वतो नैव जानन्ति किम्पुनः शक्तितो जनाः ॥ ३ ॥ अप्रत्यक्षं महाविष्णोस्तद्ब्रह्माह्वयमुच्यते ॥ तथा मम ग्रहा रूपं तव मायेति कीर्त्तितम् ॥ ४ ॥ ग्रहास्तुष्टास्तदा देवा भूपाला

श्चाखिलं जगत् ॥ तुष्टं भवति रुष्टेषु शत्रुत्वमुपजायते ॥ ५ ॥ कदाचिद्ब्रह्मलिखितं मिथ्या दैवाद्भविष्यति ॥ न तु ग्रहकृतं दुःखं सौख्यं मिथ्याप्रजायते ॥ ६ ॥ सौमित्येकाक्षरं बीजं चन्द्रस्य परिकीर्त्तितम् ॥ पंक्तिश्छन्दो देवता च चन्द्रमा भार्गवो मुनिः ॥ सैदीर्घैनिजबीजेन षडंगानि समाचरेत् ॥ ७ ॥ श्वेताब्जसंस्थं रजतकान्तिहारविराजितम् ॥ नीलकेशं च कुमुदं वामे दक्षकरे वरम् ॥ दधानं भावयेदेवं मृगांकं मणिमौलिकम् ॥ ८ ॥ पीठे धर्म्मादिसंयुक्ते गगनं परिपूज्य च ॥ चन्द्रमण्डलपर्य्यंतं ततः सम्पूजयेद्विधुम् ॥ ९ ॥ राज्ञी कुमुद्वती भद्रा सुधा संजीविनी क्षमा ॥ आप्यायिनी चन्द्रिका च ह्लादिनी नव शक्तयः ॥ १० ॥ पूर्वादिक्रमतो मन्त्री मध्यान्ताः पूजयेदिमाः ॥ अमृता तारका ज्योत्स्ना विमला व्यापिनी तथा ॥ चित्रा च कृत्तिका कान्तिः श्रवणा पीठशक्तयः ॥ ११ ॥ अमृतान्ते कलात्मने संवित्पीठाय वै नमः ॥ अनेन पीठं सम्पूज्य नाममन्त्रैश्च शक्तयः ॥ १२ ॥ किञ्जल्केषु षडंगानि तच्छक्तीः पत्रगा यजेत् ॥ रोहिणी कृत्तिका चैव रेवती भरणी तथा ॥ रात्रिरार्द्रा तथा ज्योत्स्ना कला ध्यानमथोच्यते ॥ १३ ॥ सुसिताः श्वेतवसनाः श्वेतमाल्यानुलेपनाः ॥ मुक्ताहारालंकृतांग्यः पाण्यञ्जलिपुटाः शुभाः ॥ १४ ॥ आपीनोन्नतवक्षोजहाराक्रांतावलग्नकाः ॥ मंदं मदनगामिन्यः प्राणनाथाक्तमानसाः ॥ प्रसन्नचन्द्रवदनाः फुल्लेन्दीवरलोचनाः ॥ १५ ॥ ग्रहानष्टौ कलाग्रेषु लोकेशाश्च ततो यजेत् ॥ वज्रादीनि ततो बाह्येप्येवं पूजा समीरिता ॥ १६ ॥ वर्णलक्षं जपेन्मन्त्रं जुहुयात्तत्सहस्रकम् ॥ हविषा घृतसिक्तेन तर्प्पणादि ततश्चरेत् ॥ ततः सिद्धो भवेन्मन्त्रः प्रयोगानाचरेत्ततः ॥ १७ ॥ चन्द्रं शिरसि सञ्चिंत्य

---

१ आंसौं हृदयाय नमः, ईंसौं शिरसे स्वाहा, ऊंसौं शिखायै वषट्, ऐंसौं कवचायहुम् औं सौं नेत्रत्रयाय वौषट्, अः सौं अस्त्राय फट्। इमं न्यासं कृत्वा चां चीं चूं चैं चौं चः एभिः षडक्षरैरङ्गुष्ठादि न्यासं हृदयादिन्यासं च विदधीत स यथा—चां अंगुष्ठाभ्यां नमः, चीं तर्जनीभ्यां नमः, चूं मध्यमाभ्यां नमः, चैं अनामिकाभ्यां नमः, चौं कनिष्ठिकाभ्यां नमः, चः करतलकरपृष्ठाभ्यां नमः । चां हृदयाय नमः, चीं शिरसे स्वाहा, इत्यादि ॥

जपेन्मन्त्रमनन्यधीः ॥ त्रिसहस्रं तेन लभते राज्यैश्वर्य्यमकिञ्चनः ॥ १८ ॥ लघुमिष्टहविष्याशी जलस्थो विजितेंद्रियः ॥ वेदलक्षमितं मन्त्रं प्रजपेद्यतमानसः ॥ धरागतं निधानं स ध्रुवं प्राप्नोति तत्क्षणात् ॥ १९ ॥ घोरे ज्वरे महाक्लेशे शिरोरोगे च दारुणे ॥ शत्रूत्पादितकृत्यासु कामलाद्यामयेषु च ॥ अयुतं प्रजपेन्मन्त्रं यच्छांतिरचिराद्भवेत् ॥ २० ॥ पूर्णिमायां जपेन्मत्रं यथाशक्ति जितेंद्रियः ॥ सौभाग्यारोग्यसम्पत्तिभाजनं मनुजो भवेत् ॥२१॥ मैत्रवारुणविस्तीर्णमण्डलानां त्रयं बुधः ॥ लिप्ते भूमण्डले कृत्वा निषीदेत्पश्चिमे ततः ॥ २२ ॥ मध्यस्थे मण्डले न्यस्य पूजोपकरणानि च ॥ अग्रस्थमण्डले पद्मसंयुते पूर्ववद्यजेत् ॥ २३ ॥ विधुं ततो रौप्यजातं पात्रं संस्थाप्य पूरयेत् ॥ शुद्धगोपयसा मन्त्री स्पृशन्पात्रं मनुं जपेत् ॥ २४ ॥ अष्टाधिकशतं पश्चाद्राकायामुदये विधोः ॥ चन्द्राय विद्यामनुना दद्यादर्घं यथाविधि ॥ कान्ति यथेप्सितां कन्यां सत्कीर्तिं लभते ध्रुवम् ॥ २५ ॥ विद्ये विद्यामालिनीयुक् चन्द्रिन्यन्ते च चन्द्रयुक् ॥ मुखि शिरोन्तस्ताराद्यो विद्यामनुरयं स्मृतः ॥ २६ ॥ वंसंवमिति चन्द्रस्य त्र्यर्णो मन्त्रोऽस्य देवता ॥ सोमः श्रीश्छन्द उद्दिष्टमेकतत्त्वो मुनिर्मतः ॥ २७ ॥ आकारः शक्तिरुद्दिष्टो रुं बीजं परिकीर्त्तितम् ॥ बीजेनैव षडङ्गानि ध्यानपूजादिपूर्ववत् ॥ २८ ॥ चन्द्रस्य मण्डलास्यान्तु ह्युकारं पुटितं स्मरेत् ॥ अमृतं निस्सृतं तेन प्लावितं सकलं वपुः ॥ २९ ॥ एवं भावनया तोयं मन्त्रयेत्तिथिवारकम् ॥ समस्तविषरोगाद्यकालमृत्युविनाशनम् ॥ ३० ॥ इत्थं सूर्य्योदयात्पूर्वं जलपानं तु यश्चरेत् ॥ पापक्षयायुर्वृद्धी च वलीपलितनाशनम् ॥ ॥ ३१ ॥ ओंश्रींश्रींश्रूं सबिन्दुः स सो सोमायेत्यग्निगेहिनी ॥ दशाक्षरश्चन्द्रमन्त्रो जप्यश्चाग्रे दयायुतैः ॥ ३२ ॥ होमादिकप्रयोगांश्च सर्वं पूर्ववदाचरेत् ॥ एते प्रोक्ताश्चन्द्रमन्त्रा सर्वकल्याणदायकाः ॥ ३३ ॥ अथ भौममनुं वक्ष्ये सर्वरोगनिवारणम् ॥ अं च अङ्गारको ङेन्तो हृदन्तश्चाष्टवर्णकः॥ ३४॥

---

१ विद्याशब्देन श्रीविद्या गृह्यते तन्मन्त्रेणेति भावः ॥

ऋष्याद्या [1] ब्रह्मगायत्रीभूमिपुत्राः प्रकीर्त्तिताः ॥ अङ्गषट्कन्त्वस्य मनोरादि[2] बीजेन सम्मतम्॥ ३५॥ नमाम्यङ्गारकं रक्तं रक्ताम्बरविभूषणम्॥ जानुस्थवामहस्ताढ्यंभाजनेतरपाणिकम् ॥ ३६ ॥ लक्षाष्टको जपः प्रोक्तः खादिरैरिन्धनैर्हुनेत्॥ ३७॥ साज्यैस्सन्तर्प्पणं रक्तचन्दनाद्यैः समाचरेत्॥ एवं कृते प्रयोगेस्य समरे न पराजयः ॥ अनुग्रहात्तस्य लोकस्त्वनृणी व्याधिविच्युतः ॥ ३८ ॥ ओंश्रींक्रीं मनुमुच्चार्य्य ङेंतो भौमो हृदन्तकः ॥ दशाक्षरो मनुः प्रोक्तो विरूपाक्षो मुनिर्मतः ॥ ३९ ॥ गायत्री छन्द उद्दिष्टं देवता मङ्गलो भवेत् ॥ ह्रींबीजं श्रीश्च शक्तिः स्यात्कीलकं क्रीं प्रकीर्त्तितम्॥ ४०॥ कालादिकं समुच्चार्य्य नियोगो ऋणनाशने ॥ षड्दीर्घयुक्तबीजेन अंगुल्यादिषडङ्गकम् ॥ ४१ ॥ ब्रह्मरन्ध्रे कर्णयोश्च अक्ष्णोर्नासिकयोर्मुखे ॥ लिंगे गुदे च मन्त्रस्य दशवर्णान्क्रमान्न्यसेत् ॥ ४२ ॥ मंगलो भूमिपुत्रश्च ऋणहर्त्ता धनप्रदः स्थिरासनो महाकायः सर्वकर्म्मावरोधकः ॥ ४३ ॥ लोहितो लोहिताक्षश्च सामगानां कृपाकरः ॥ धरात्मजः कुजो भौमो भूमिदो भूमिनन्दनः॥ ४४॥ अंगारको यमश्चैव सर्वरोगापहारकः ॥ वृष्टिकर्त्तापहर्ता च सर्वकर्म्मफलप्रदः ॥ ४५ ॥ शिखायां मूर्ध्नि भाले च नेत्रयोः कर्णयोर्नसोः ॥ मुखे च चिबुके कण्ठे स्कन्धयोर्भुजयोस्तथा ॥ ४६ ॥ पाण्योर्हृद्युदरे नाभौ कट्यां लिङ्गे स्फिचोस्तथा ॥ जान्वोश्च जङ्घयोरंघ्योः क्रमान्नामानि विन्यसेत् ॥ ४७ ॥ चतुर्थ्यन्तहृदन्तानि संविद्यादक्षराणि च ॥ ततो ध्यायेद्रक्तवर्णं रक्तमाल्यांशुकावृतम्॥ ४८॥ कण्ठे कमलमालाढ्यङ्करयोः शक्तिशूलके॥ मंगलानां मंगलञ्च सर्वकामफलप्रदम् ॥ ४९॥ एवन्ध्यात्वा जपेल्लक्षं जुहुयात्करवीरजैः ॥ जपाप्रसूनैः पुरुभिर्मधुरत्रितयान्वितैः ॥ ५० ॥ रक्तचन्दनगन्धाद्यैर्यजेदरुणभूषणम् ॥ विधिना भूमितनयं सर्वाभीष्टफलप्रदम् ॥ ५१ ॥ अंगान्यभ्यर्च्य पूर्वन्तु मंगलाद्यांस्ततोर्चयेत् ॥ एकविंशतिकोष्ठेषु ततो चाष्टौ ग्रहान्न्यसेत् ॥ ५२ ॥ भैरव्यष्टकमर्च्यन्तु ब्राह्मी नारायणी तथा ॥ माहेश्वरी च चामुण्डा कौमारी चापराजिता ॥ ५३ ॥ वाराही नारसिंही च ततोष्टौ भैरवा अपि॥ पूज्या विधानतः

---

१ ब्रह्मा ऋषिः गायत्रीछन्दः भूमिपुत्रो देवता ॥ २ श्रमिति बीजेन षडङ्गन्यासः ॥

सर्वैं मन्त्रिणैर्भिमनूत्तमैः ॥ ५४ ॥ असितागं रुरुं चण्डं क्रोधमुन्मत्तसञ्ज्ञकम् ॥ कपालिनं भीषणं च तथा संहारभैरवम् ॥ ५५ ॥ इन्द्रादिलोकपालांश्च तद्वाह्ये चायुधानि च॥पूजयेद्भैरवानेतान्क्रमात्पूर्वोक्तवर्त्मना॥एवं सिद्धमनुर्मन्त्री प्रयोगान्कर्तुमर्हति ॥ ५६ ॥ पूजोत्तरं भौमवारेंगारकेण त्रिरेखिकाम् ॥ स्वागतो वामपादेन प्रव्रज्याष्टोत्तरं शतम् ॥ ५७ ॥ जपेद्दशांशं होमस्य तर्प्पणं पयसा चरेत् ॥ ब्राह्मणं भोजयेदेकं गुडप्रचुरवस्तुभिः ॥ ५८ ॥ स्तुत्वा नत्वार्चयेद्देवं साधकः स्थिरमानसः ॥ अनेन क्रमयोगेन निहत्य ऋणमादरात् लभते महतीं लक्ष्मीं वत्सरेण न संशयः ॥ ५९ ॥ विशेषान्मंगले वारे देवमेनं समर्चयेत् ॥ जुहुयात्तर्प्पयेन्मन्त्री प्राप्नुयान्निजवाञ्छितम् ॥ ६० ॥ त्रिकोणं पूर्वमुद्धृत्य पञ्चधा विभजेत्ततः ॥ ततस्तृतीयरेखान्तु चिह्नाभ्यां लाञ्छयेत्ततः ॥ ६१ ॥ आद्यरेखां तु युगलं तृतीयांचिह्नयोर्न्यसेत् ॥ द्वितीयाग्रे समाकृष्य तृतीयांचिह्नयोर्न्यसेत् ॥ ६२ ॥ युता रेखा तृतीया तु समभाज्या समन्ततः ॥ तुर्य्यां चिह्नद्वयेनाथ त्रिभिश्चिह्नैश्च पञ्चमी ॥ ६३ ॥ तृतीयाग्रे प्रकुर्वीत पञ्चम्या मध्यचिह्नजे ॥ तुर्य्याग्रे योजयेत्सम्यक्पञ्चम्याश्चिह्नयोर्द्वयोः ॥६४॥ अथ मीनद्वये दद्यात्सूत्रयुग्मं विचक्षणः॥ एवमेकाधिका सम्यक्कोष्ठानां विंशतिर्भवेत् ॥ ६५ ॥ तृतीयातूर्य्ययोर्मध्ये स्थितं वह्निगृहेर्चयेत्॥ देवं तदग्रतो मन्त्री त्रिकोणे दक्षिणे क्रमात् ॥ मङ्गलाद्यांस्तारपूर्वान्नमोन्तानेकविंशतिम् ॥ ६६॥ भौमभक्तस्यैकविंशत्पौरुषी नास्ति निस्स्वता ॥ अथ मन्त्रान्तरंवक्ष्ये भामजस्य महाद्भुतम् ॥ ६७ ॥ तारं मायां रमां म्लां च मं मङ्गलपदं वहेत् ॥ ङेन्तं हृदन्तं रुद्रार्णैः प्रोक्तो भौमप्रियो मनुः ॥ ६८॥ प्राग्वत्पूजादिकं सर्वं चावाहनमनुस्त्वयम् ॥ भगवन्देवदेवेश एह्येहि त्वंमहाप्रभो॥ ६९ ॥ ऐश्वर्य्यं वशमायातु भूतलेषु समाश्रितम् ॥ एकविंशतिभिः पुष्पैरक्तैः प्रत्येकमर्चयेत् ॥ रक्तगन्धादिवस्त्रैश्च नैवेद्यं च गुडोदनम् ॥ ७० ॥ कृत्वा तु त्रिगुणं भूमावेकविंशतिरोटिकाः ॥ गोधूमचूर्णजास्तत्र स्थापयित्वा प्रभक्षयेत् ॥ ७१ ॥ सगुडाः प्रत्यहं जप्यमष्टोत्तरसहस्रकम् ॥ भौमस्तोत्रपुराणादिचर्चया तु दिनं नयेत् ॥ ७२ ॥ एकविंशद्दिनं प्रोक्तं यस्य कस्यापि चाग्रतः ॥ याचनीयं

योग्यवस्तु सत्वरञ्च प्रयच्छति ॥ ७३ ॥ अथ मन्त्रान्तरं वक्ष्ये भूमिपुत्रस्य सिद्धिदम् ॥ ॐहांहंसः खंख इति मन्त्रः प्रोक्तः षडक्षरः ॥ ७४ ॥ मुनि-र्विरूपो गायत्री छन्दो देवो धरात्मजः ॥ षड्भिर्वर्णैः षडङ्गानि मनोः कुर्वीत साधकः॥ ७५ ॥ जपाकुसुमसङ्काशं शक्तिशूलगदाधरम् ॥ मेषसंस्थं रक्तवस्त्रं तं वन्देहं धरात्मजम् ॥ ७६ ॥ रसलक्षं जपेद्धोमः समिद्भिः खदिरस्य च ॥ शैवपीठे यजेद्भौमं प्रागङ्गानि तु पूजयेत् ॥ ७७ ॥ एकविंशतिकोष्ठेषु मंगला-दीन्प्रपूजयेत् ॥ तद्बहिः ककुभां नाथान्कुलिशादींस्ततोर्चयेत् ॥ इत्थं सुसिद्धं मन्त्रेशं स्वेष्टसिद्ध्यै प्रयोजयेत्॥ ७८॥ नारी पुत्रमभीप्सन्ती मङ्गलव्रतमाचरेत्॥ मार्गशीर्षेथ वैशाखे तस्यारम्भः प्रशस्यते ॥ लभते नात्र सन्देहः पुत्रं सर्वगुणा-न्वितम् ॥ ७९ ॥ अरुणोदयवेलायामुत्थाय शुचिविग्रहा ॥ दन्तान्धावेद्धेद-मार्गसमिधा मौनसेविता ॥ ८० ॥ नद्यादिसलिले स्नात्वा धारयेद्रक्तवाससी ॥ नैवेद्यकुसुमालेपादिकान्सम्पाद्य संयता ॥ विधिज्ञं विप्रमाहूय भौममर्चेत्तदाज्ञया ॥ ८१ ॥ रक्तगोगोमयालिप्तदेशे पीठं निवेशयेत्॥ मङ्गलादीनि नामानि स्वप्रतीके-षु विन्यसेत् ॥ ८२ ॥ अंघ्र्योश्च जानुनोरूर्वोः कटौ गुह्ये तथोरसि ॥ वामबाहौ दक्षबाहौ गले च वदने नसोः॥ ८३ ॥ अक्ष्णोर्भाले भ्रुवोर्मध्ये के शिखायां कले-वरे॥ बाहुद्वयेथ मूर्द्धादिपादपर्य्यन्तविग्रहे॥ ८४ ॥ पादतो मूर्द्धपर्य्यन्तं तथा दिक्षु प्रविन्यसेत् ॥ आरं वक्रं भूमिजं च नाभौ वक्षसि मूर्द्धनि ॥ एवं न्यस्तशरीरोसौ ध्यायेद्धरणिनन्दनम् ॥ ८५ ॥ अर्घ्यं संस्थाप्य विधिवत्पूजयेदुपचारकैः ॥ एकविंशतिकोष्ठाढ्ये त्रिकोणे ताम्रपात्रके ॥ ८६ ॥ आवाह्य धरणीपुत्रं स्वर्णपुष्पैश्च चन्दनैः ॥ अङ्गानि पूजयेत्प्राग्वदेकविंशतिकोष्ठतः ॥ ८७॥ मङ्गलादींस्त्रिकोणेषु वक्रमारं च भूमिजम् ॥ ब्राह्म्याद्या मातृका बाह्ये शक्रादीनायुधान्यपि ॥ ॥ ८८ ॥ धूपदीपौ निधायाथ गोधूमान्नं निवेदयेत् ॥ जलपूर्णे ताम्रपात्रे धूपदीपाक्षतान्विते ॥ फलं निधाय मन्त्राभ्यां भौमायार्घ्यं निवेदयेत् ॥ ८९॥ भूमिपुत्र महातेजः स्वेदोद्भव पिनाकिनः ॥ सुतार्थिनी त्वां प्रपन्ना गृहाणार्घ्यं नमोस्तु ते ॥ ९० ॥ एकविंशतिकृत्वोथ प्रणमेत्पूर्वनामभिः ॥ प्रदक्षिणा

---

शिरसि ॥

विधातव्या तावद्भिर्नगपात्मजे ॥ ९१ ॥ खादिराङ्गारकेणाथ कुर्य्याद्रेखा-त्रयं समम् ॥ वामपादेन मन्त्राभ्यामेताभ्यां तत्प्रमार्जयेत् ॥ ९२ ॥ दुःख-दौर्भाग्यनाशाय पुत्रसन्तानहेतवे ॥ कृतरेखात्रयं वामपादेनैव प्रमार्ज्म्यहम् ॥ ॥ ९३ ॥ ऋणदुःखविनाशाय मनोभीष्टार्थसिद्धये ॥ मार्जयाम्यसिता रेखा-स्तिस्रो जन्मत्रयोद्भवाः ॥ ९४ ॥ ततः पुष्पाञ्जलिं कृत्वा स्तुवीत धरणीसु-तम् ॥ ध्यायन्ती चरणाम्भोजं पूजासाङ्गत्वसिद्धये ॥ ९५ ॥ धरणीगर्भसं-भूतं विद्युत्तेजःसमप्रभम् ॥ कुमारं शक्तिहस्तं च मङ्गलं प्रणमाम्यहम् ॥ ॥ ९६ ॥ ऋणहन्त्रे नमस्तुभ्यं दुःखदारिद्र्यनाशिने ॥ नमो विद्योतमानाय सर्वकल्याणकारिणे ॥ ९७ ॥ देवदानवगन्धर्वयक्षराक्षसपन्नगाः ॥ सुखं यान्ति यतस्तस्मै नमो धरणिसूनवे ॥ ९८ ॥ यो वक्रगतिमापन्नो नृणां दुःखं प्रयच्छति ॥ पूजितः सुखसौभाग्ये तस्मै क्ष्मासूनवे नमः ॥ ९९ ॥ प्रसादं कुरु मे नाथ मङ्गलप्रद मङ्गल ॥ मेषवाहन रुद्रात्मन्पुत्रं देहि धनं यशः ॥ १०० ॥ एवं सम्पूज्य सम्भूय गृह्णीयाद्ब्राह्मणाशिषः ॥ गुरवे दक्षिणान्दत्त्वा भुञ्जीतान्नं निवेदितम् ॥ १०१ ॥ प्रतिभौमदिनं कुर्य्यादेवं संवत्सरावधि ॥ तिलैर्विधाय होमं च शतार्धं भोजयेद्द्विजान् ॥ १०२ ॥ माहेयमूर्त्तिं सौवर्णीमाचार्य्याय निवेदयेत्[1] ॥ मण्डलस्थे घटेऽभ्यर्च्य सुतसौ-भाग्यसिद्धये ॥ १०३ ॥ अङ्गारकाय विद्महे शक्तिहस्ताय धीमहि ॥ तन्नो भौमः प्रचोदयात् ॥ १०४ ॥ एषाङ्गारकगायत्री जपिताभीष्ट-दायिनी ॥ एतस्यास्तु जपादेव प्रसीदति धरासुतः ॥ १०५ ॥ ॐक्रांक्रींक्रौं सबिन्दुः सकुजायेत्यग्निगेहिनी ॥ दशाक्षरो भौममन्त्रो जप्यश्चायं नवायुतम् ॥ ॥ १०६ ॥ अथातः संप्रवक्ष्यामि बुधमन्त्रं महाद्भुतम् ॥ बुं ङेन्तो बुधशब्द-श्च हृदयान्तः षडर्णकः ॥ १०७ ॥ बुधमन्त्रोऽस्य मुन्याद्या ब्रह्मपंक्तिबुधा मताः ॥ षडङ्गानि स्वबीजेन विन्यस्यैवं विचिन्तयेत् ॥ १०८ ॥ वन्दे बुधं सदा देवं पीताम्बरसुभूषणम् ॥ जानुस्थवामहस्ताब्जं साभयेतरपाणि-कम् ॥ १०९ ॥ प्रजपेद्वर्णसाहस्रं दशांशं जुहुयाद्घृतैः ॥ अर्चनं त्वङ्गखे-

१ मह्यपत्यप्रतिमाम् ॥

टाशापतिभिश्चयावृतं स्मृतम् ॥ ११० ॥ ॐ ब्रांब्रींब्रूं सबिन्दुः स बुधायेत्य-ग्निगेहिनी ॥ दशाक्षरः सौम्यमन्त्रो जपो लक्षैकसङ्ख्यया ॥ १११ ॥ ॐ-जांजींजूं सबिन्दुः स चतुर्थ्यन्तो बृहस्पतिः ॥ वह्निस्त्रीविश्ववर्णोयं जप्यः पञ्च-दशायुतम् ॥ ११२ ॥ अथातः संप्रवक्ष्यामि गुरुमन्त्रं गुरुत्वकृत् ॥ बृं बृह-स्पतये हृच मन्त्रश्चाष्टाक्षरो मतः ॥ छन्दोनुष्टुम्मुनिर्ब्रह्मा देवः प्रोक्तो बृह-स्पतिः ॥ ११३ ॥ बृंबीजं तेन कुर्वीत बीजेनैवाङ्गकल्पनम् ॥ सुवर्णाभं पीतवस्त्रं रत्नस्वर्णाम्बरादिकम् ॥ ११४ ॥ किरन्तं दक्षहस्तेन रत्नादीन्वा-मपाणिना ॥ स्पृशन्तं सम्यगपरं वृषणौ कनकादिकम् ॥ ११५ ॥ नानाल-ङ्कारशोभाढ्यं विद्यासागरपारगम् ॥ जपित्वाशीतिसाहस्रं हुत्वा तेन घृतेन वा ॥ ११६ ॥ धर्म्मी धर्मादिपीठे तं पूजयेदङ्गदिक्सुरैः ॥ सिद्धे मनौ प्रकु-र्वीत प्रयोगानिष्टसिद्धये ॥ ११७ ॥ हारिद्राकुंकुमैर्हुत्वा घृताक्तैर्दिवसत्रयम् ॥ सप्तविंशच्छतान्मन्त्री वासांसि लभते मणीन् ॥ ११८ ॥ शत्रुरोगादिपी-डासु कलहे स्वजनोद्भवे ॥ जुहुयात्पिप्पलोत्थाभिस्समिद्भिस्तन्निवृत्तये ॥ ॥ ११९ ॥ गुरोरुपासकानां तु जायन्ते सर्वसम्पदः ॥ वस्त्रं मे देहि शुक्राय हृदयान्तः शुभादिकः ॥ १२० ॥ एकादशाक्षरो मन्त्रो विराट् छन्द उदा-हृतम् ॥ ब्रह्मा मुनिर्देवता तु शुक्रो दैत्यादिपूजितः ॥ १२१ ॥ पंङ्क्तिः पदैः षडङ्गानि ततो देवं विचिन्तयेत् ॥ शुक्रं नमाम्यासनस्थं मुक्ताभरण-भूषितम् ॥ १२२ ॥ स्वर्णवासोरत्नधाराचिन्मुद्राजकरद्वयम् ॥ अयुतं प्रजपेमन्त्रं सहस्रं जुहुयाद्घृतैः ॥ अङ्ग्रहाशेशहेतिचतुरावरणं मनोः ॥ १२३ ॥ शुक्रस्यो पासको यस्तु तस्य म्लेच्छादयो वशाः ॥ भवन्ति मन्त्रमाहात्म्यान्नश्यन्ते च क्ष यादयः ॥ १२४ ॥ मन्त्रान्तरं तु ताराद्यं स्वाहान्तं स्याद्भवार्णकः ॥ बीजं तारोग्निभार्य्या तु शक्तिर्मुन्यादि पूर्ववत् ॥ अङ्गेन्द्राद्यायुधैः पूजा त्रिरावृत्यास्य कीर्त्तिता ॥ १२५ ॥ सुगन्धैः श्वेतकुसुमैर्जुहुयाच्छुक्रवासरे ॥ एकविंशति-

---

१ वस्त्रं मे देहि शुं शुक्राय नमः । इति एकादशाक्षरो मन्त्रः । २ वस्त्रं हृदयाय नमः, मे शिरसे स्वाहा, देहि शिखायै वषट्, शुं कवचाय हुम्, शुक्राय नैत्रत्रयाय वौषट्, नमः अस्त्राय फट् ३ अङ्गग्रहदिक्पालतदायुधैर्मन्त्रस्य चतुरावरणपूजनम् ।

वारान्यो लभते सांशुकं मणिम् ॥ एतन्मन्त्रोपासकाना प्रभुत्वमुपजायते ॥ १२६ ॥ ॐ ह्रां ह्रीं ह्रौं सबिन्दुस्सशुक्रायेत्यग्निगेहिनी ॥ दशाक्षरः शुक्रमन्त्रो जप्योयं द्वादशायुतम् ॥ १२७ ॥ उदुम्बरसमिद्भिश्च जुहुयात्स-कलापदः ॥ भूपैः कृता विनश्यन्ति स्त्रीसौख्यमुपजायते ॥ १२८ ॥ शनै-श्चराय[2] हृदयं समाद्यश्चाष्टवर्णकः ॥ मुन्याद्या[3] ब्रह्मगायत्रीशनैश्चरसमाह्वयाः ॥ षड्दीर्घयुक्तबीजेन षडङ्गानि समाचरेत् ॥ १२९ ॥ वन्दे शनैश्चरं वक्र-दंष्ट्रं नीलविभूषणम् ॥ वामजानुस्थितं वामकरं दक्षे वरं दधत् ॥ १३० ॥ जपेदक्षरसाहस्रं तद्दशांशं हुनेद्घृतैः ॥ षडंगग्रहदिक्पालसायुधैः परिपूजनम् ॥ शनैश्चरस्य भक्तानामापदो न दारिद्रता॥ १३१॥ ॐप्रांप्रींप्रौंस इत्युक्त्वा शनै-श्चरपदं वदेत्॥ङेन्तं स्वाहा द्वादशार्णो जपः प्रयुतसम्मितः॥ १३२॥हुनेच्छमी-समिद्भिश्च क्लीबाः सर्वेस्य वश्यगाः॥ क्लीबानत्रानयेत्युक्तं साधकोस्य प्रभावतः॥ ॥१३३॥अपरं तु मनुं वक्ष्ये राहवे नम उच्चरेत् ॥ एंपूर्वकः षडर्णोयं वर्णैरेवा-ङ्गकल्पनम् ॥ मुन्याद्या ब्रह्मगायत्रीराहवः परिकीर्तिताः ॥१३४ ॥ वन्दे राहुं धूम्रवर्णं सर्पकायं कृताञ्जलिम् ॥ विकृतास्यं रक्तनेत्रं धूम्रालङ्कारमन्वहम् ॥ ॥१३५॥जपेद्वर्णसहस्रं तु होमयेद्गोघृतेन च॥ग्रहाशाधिपशस्त्रैश्च पूजावृत्तिरुदी-रिता॥राहोरुपासको भूपः संग्रामे विजयी भवेत्॥१३६॥ॐसांसींसौं सबिन्दुः सराहवे चाग्निगेहिनी ॥ दशाक्षरो राहुमन्त्रो जप्यश्चायं दशायुतम् ॥१३७॥ दूर्वाभिर्होमयित्वा च द्विजान्सन्तर्प्य सिद्ध्यति ॥ यात्रासिद्धिश्च संग्रामे नियतं विजयो भवेत् ॥ कं केतवे हदित्येवं केतुमन्त्रः षडर्णकः ॥ १३८ ॥ ब्रह्मा-मुनिर्मतश्छन्दः पांक्तिः केतुश्च देवता॥कं बीजं केतुशक्तिश्च बीजैनैव षडंगकम्॥ ॥ १३९ ॥ वन्दे केतुं कृष्णवर्णं कृष्णवस्त्रविभूषितम् ॥ वामोरुन्यस्तसद्धस्तं साभयेतरपाणिकम् ॥ १४० ॥ अंगैर्ग्रहैश्च दिक्पालैः पूजावृत्तित्रयात्मिका॥ अत्र तु ग्रहपूजायां पूज्यं मध्ये निवेशयेत् ॥ १४१ ॥ तदग्निमं चोत्तरस्या-मीशानादि तदग्रतः ॥ ॐ प्रांप्रींप्रौं सबिन्दुः सकेतवे वह्निगेहिनी ॥ १४२ ॥

१ ॐ ह्रां ह्रीं ह्रौंसः शुक्राय स्वाहा इति दशाक्षरमन्त्रः॥ २ शं शनैश्चराय नमः॥ ३ ब्रह्मामुनिर्गा-यत्रीछन्दः शनैश्चरो देवता अभीष्टसिद्धये शनिप्रीतये विनियोगः ॥

दशाक्षरः केतुमन्त्रो जपोयं द्वादशायुतम् ॥ १४३ ॥ होमः कुशैः प्रकर्त्तव्यो घृताक्तैस्तर्प्पणादि च ॥ उपासकानामेतस्य केतवोग्रे चलन्ति हि ॥१४४॥ अथातः सम्प्रवक्ष्यामि ग्रहमातृसुसाधनम् ॥ ग्रहमातरि तुष्टायां किं ग्रहैर्दुस्स्थितैरपि ॥ ग्रहमातरि रुष्टायां सुग्रहैः किं प्रयोजनम् ॥ १४५ ॥ मंगला पिंगला धान्या भ्रामरी भद्रिका तथा ॥ उल्का सिद्धा संकटा च विकटागर्भपालिका ॥ १४६ ॥ रुद्रनेत्रान्विताश्चाष्टौ जन्मर्क्षाच्च क्रमाद्दशाः ॥ फलं नामनि रूपं स्यादेकोपचयता द्वयोः ॥ १४७ ॥ पिंगला सूर्य्यजननी महाधिव्याधिकारिका ॥ तुष्टा चेच्छत्रुवर्गस्य रुष्टा कुर्य्यात्तु साधके॥ १४८॥ क्षें बीजन्तु समुच्चार्य्य पिंगले वैरिवारणि ॥ प्रसीद फडिति प्रोच्याणुस्त्रयोदशवर्णकः ॥ दीर्घषट्कयुजा पूर्वबीजेनैव षडंगकम् ॥ १४९ ॥ पिंगवर्णां पिंगकेशीं पिंगनेत्रां धनुः शरान् ॥ हस्ताभ्यां दधतीं पद्मयुगलं तां भजाम्यहम् ॥ १५० ॥ अथ पूजाविधिं वक्ष्ये सर्वासामेव तन्त्रतः ॥ जपापुष्पाणि शस्तानि धूपो गुग्गुलसम्भवः ॥ १५१ ॥ घृतप्रदीपोमधुरा नैवेद्याः पायसादयः॥अलंकारस्तथा रक्तास्तथा वस्त्राणि चन्दनम् ॥ १५२ ॥ स्वर्णालंकरणैश्चापि सद्रव्यैर्बहुचम्पकैः ॥ तर्प्पयेत्परमेशानीं तत्तन्मन्त्रैः सहस्रधा ॥१५३॥ सुवर्णपात्रे निश्छिद्रे हस्तायामे मनोरमे ॥ कृत्वा यन्त्रं यथोक्तन्तु योगिनीं तत्र पूजयेत् ॥ १५४ ॥ तत्तन्मन्त्रं जपित्वा तु विघ्नशान्त्यै सहस्रशः ॥ सप्ताहेन प्रजायेत त्रिविधोत्पातवारणम् ॥ १५५ ॥ ततश्च कुण्डं विधिवत्कृत्वा च चतुरस्रकम् ॥ अथ वा स्थण्डिले शुद्धे सुलिप्ते गोमयाम्बुभिः ॥ १५६ ॥ चतुर्हस्तप्रमाणेन योजयेत्स्थिरमानसः ॥ योगिन्यग्निन्तु संस्थाप्य कृत्वा पूर्वोदिताः क्रियाः ॥ अन्यासां दशवारांस्तु विरुद्धायाः सहस्रधा ॥ १५७ ॥ बिल्वपत्रैस्तत्फलैश्च कमलैर्नागकेशरैः जुहुयात्पायसान्नेन तथैव कुलवस्तुना ॥ सहस्रमयुतं वापि लक्षं वा कामनाक्रमात् ॥ १५८ ॥ अथ पूजां प्रवक्ष्यामि मध्ये देवीं प्रपूजयेत् ॥ इच्छां ज्ञानं क्रियाशक्तिं त्रिषु कोणेषु पूजयेत् ॥ १५९ ॥

१ क्षां क्षीं क्षूं क्षैं क्षौं क्षः । एभिरक्षरैः षडंगन्यासं चरेत्॥

मन्मथान्पञ्च तदधः पञ्चकोणेषु पूजयेत् ॥ षडङ्गं पूजयेत्पश्चादष्टपत्रेन्ययोगिनीः ॥ तद्बाह्ये भूपुरे लोकपालानस्त्राणि पूजयेत् ॥ १६० ॥ पूजाप्रकारो होमश्च सर्वासामयमेव हि ॥ विशेषः पुनरत्रास्ति शत्रूच्छेदाभिचारकैः ॥ १६१ ॥ खड्गचर्मधरामुग्रां ध्यायेत्षड्भुजधारिणीम् ॥ गरुडासनमासीनां वैरिनिग्रहकारिणीम् ॥ १६२॥ लक्षमेकं प्रजप्यादौ जपेल्लक्षं हि तर्प्पयेत् ॥ सर्वशत्रुविनाशः स्याद्दुःखं नाप्नोति कुत्रचित् ॥ १६३ ॥ अथातः सम्प्रवक्ष्यामि चन्द्रमातुश्च साधनम् ॥ मायाद्यो[1] वह्निजायान्तो मङ्गले मङ्गलालये ॥ १६४ ॥ एकादशाक्षरो मन्त्रो मङ्गलायाः प्रकीर्तितः ॥ कृत्वाद्येन षडङ्गानि दीर्घषट्कयुजा तथा ॥ १६५ ॥ ध्यायेदेनां त्रिनयनामुद्यदादित्यसन्निभाम् ॥ दरस्मेरमुखाम्भोजां सिन्दूरसुन्दराधराम् ॥ १६६ ॥ पद्मद्वये धनुर्बाणान्दधतीं भुजपल्लवैः ॥ सुगुञ्जन्मञ्जुमञ्जीरां काञ्चीगुणविराजिताम् ॥ ॥ १६७ ॥ एवं ध्यात्वा महेशानीं पूर्ववत्परिपूजयेत् ॥ ततो लक्षं मनुं जप्त्वा तारमायापुरःसरम् ॥ १६८ ॥ योगिनीक्षेत्रबटुकगणाधिपबलिं हरेत् ॥ सर्वासामेव पूजान्ते मङ्गलैवं प्रसीदति ॥ १६९ ॥ योगिन्यास्तु प्रसादार्थं वर्णलक्षं मनुं जपेत्॥ दुर्योगिन्यनुकूलार्थं जपेत्तत्सङ्ख्यकायुतम्॥ १७० ॥ अदृष्टप्रतिबद्धस्तु शुभायाश्च फलस्य च॥ प्राप्तये प्रजपेत्तावत्सहस्रन्तु मनुं सुधीः॥ १७१ ॥ [2]प्रकर्तव्यो वर्णशतं यावत्तुष्टास्ति योगिनी ॥ तुष्टाया वर्णशतकै रोगिणं चाभिमन्त्रयेत ॥ १७२॥ वर्णतुल्येन मन्त्रेण यस्याः सेवापरो भवेत्॥ तस्याः पीडानिवृत्तिः स्याद्वर्णाभ्यन्तर्गतैर्जपैः ॥ १७३ ॥ एवंविधिर्नवानां तु विज्ञेयः सुरसत्तमाः॥ योगिनी तुल्यफलदा वामे मार्गे च दक्षिणे॥ १७४ ॥ अथातःसम्प्रवक्ष्यामि भ्रामरीं भौममातरम्॥ क्ष्रीं भ्रामरीपदं चोक्त्वा सपत्नान्मे अधीश्वरि ॥ भ्रामय क्ष्रीं षड्दशार्णो मन्त्रोऽस्याः परिकीर्तितः॥ १७५॥ पिङ्गलावत्सर्वमस्याः सिद्धये शर्करा दश ॥ मन्त्रयित्वा तथा मार्गे दशदिक्षु च सन्त्यजेत ॥ १७६॥ प्रातस्ततो व्रजेन्मार्गे मार्गस्थास्सर्व एव हि॥ सर्वे मोहं समायान्ति व्याघ्राःसर्प्पाश्च तस्कराः ॥ शुल्किनो दुष्टभूपाश्च नित्यमेवं समाचरेत् ॥ १७७ ॥ उपानत्क-

---

१ ह्रीं मंगले मंगलालयै स्वाहा ॥ २ जपः प्रकर्तव्य इति शेषः ॥

तले यस्य लिखित्वा नाम च व्रजेत ॥ योजनैकं जपन्मन्त्रं स भ्रमेच्च वसुन्धराम् ॥ १७८॥ अथातः सम्प्रवक्ष्यामि भद्रिकां बुधमातरम्॥ ब्लं बीजं तोयभूयोगाज्जातमादौ समुच्चरेत् ॥ १७९ ॥ भद्रिके मे मम भद्रं देहीत्येवं पदं वदेत् ॥ पुनश्च परभद्राणि नाशयद्वितयं ततः ॥ १८० ॥ स्वाहान्तो जिनवर्णोयं भद्रिकाया मनुर्मतः ॥ [1]षड्दीर्घयुक्तबीजेन षडङ्गविधिरीरितः॥ १८१ ॥ मङ्गलावच्छुभानां स्याद्ध्यानन्तु फलदायिनाम् ॥ पिङ्गलावत्समुद्दिष्टं जपाद्यं प्रोक्तवर्त्मना ॥ १८२॥ अथातः सम्प्रवक्ष्यामि धान्याख्यां गुरुमातरम् ॥[2]श्रीं धनदे समुच्चार्य्य धान्ये स्वाहाष्टवर्णकः ॥ १८३ ॥ षड्दीर्घाढ्याद्यबीजेन षडङ्गविधिरीरितः ॥ नास्ति धान्यासमाकाचिदिह लोके धनप्रदा ॥ १८४ ॥ पुरश्चर्य्यात्रयं कृत्वा प्राग्जन्मार्ज्जितपातकम् ॥ दहेत्तु धान्या ददते धन्यत्वं साधकाय च ॥ १८५ ॥ बृहस्पतीश्वरात्पश्चात्काश्यां धान्यां विलोकयेत् ॥ पुरश्चर्य्यां तत्र कृत्वा यशोधन्यः प्रजायते ॥ १८६ ॥ अथातः सम्प्रवक्ष्यामि सिद्धां शुक्रस्य मातरम् ॥ [3]ह्रीं सिद्धिदे सर्वं मम समुक्ता साधयद्वयम्॥ १८७॥ हृदन्तोयं षोडशार्णः सिद्धःसिद्धामनुर्मतः॥ बीजेनैव षडङ्गानि जपाद्यं पूर्ववच्चरेत्॥ नास्ति सिद्धोपासकानां कर्म्मासिद्धिस्तु कुत्रचित ॥ १८८ ॥ उपासकाय सिद्धाय येनाम्नायेन जायते ॥ तेनाम्नायेन देवानां पाके स्यात्सर्वमेव हि ॥ सिध्येत् षट्कर्म्म मर्त्यस्य मनोराराधनं विना ॥१८९॥ अथातः सम्प्रवक्ष्यामि चोल्कां मन्दस्य मातरम् ॥ ऐं [4]ह्रींमुल्कापदं पश्चाद्देव्यै हृच्चाष्टवर्णकः॥ मन्त्रः प्रोक्तः प्रजतोयं धनारोग्यप्रदो मतः ॥ १९० ॥ ॐ मम सर्वरोगान्नाशय भञ्जयैकादशाक्षरः ॥ सर्वरोगापहो मन्त्रो मार्जनात्संप्रपद्यते ॥ १९१ ॥ उल्कामन्त्रो यस्य सिद्धो न गदास्तस्य मन्दिरे ॥ शीतलाया महामाया महिषं ल-

---

१ ब्लां, ब्लीं, ब्लूं, ब्लैं, ब्लौं, ब्लः, एभिः षडक्षरैः षडंगन्यासं चरेत् । यथा ब्लां हृदयाय नमः, ब्लीं, शिरसे स्वाहा इत्यादि ॥ २ श्रीं धनदे धान्ये स्वाहा इति मन्त्रः ॥ ३ ह्रीं सिद्धिदे सर्वं मम साधयसाधय नमः ॥ ४ ऐं ह्रीं उल्कादेव्यै नमः इति अष्टाक्षरमन्त्रः । ऐं ह्रीं बीजाभ्यां षडंगकल्पना भवति । यथा ऐं ह्रीं हृदयाय नमः, ऐं ह्रीं शिरसे स्वाहा, ऐं ह्रीं शिखायै वषट्, ऐं ह्रीं कवचाय हुम्, ऐं ह्रीं नेत्रत्रयाय वौषट्, ऐं ह्रीं अस्त्राय फट् ॥

क्षणान्वितम् ॥१९२॥ उल्काप्रीत्यै समुत्सृज्य नगरे भ्रामयेत्पुनः ॥ नाना-वाद्यैः परिवृतं वस्त्रादिभिरलङ्कृतम् ॥ उत्सृजेत्तं यमाशायामुपद्रवशमो भवेत् ॥ ॥ १९३ ॥ अथातः सम्प्रवक्ष्यामि सङ्कटां राहुमातरम् ॥ ह्रीं सङ्कटे च रोगं मे परमं नाशयद्वयम् ॥ १९४ ॥ षोडशार्णस्तु मन्त्रोयं सर्वदुः-खापहो मतः ॥ कारागृहे जपेल्लक्षं बन्धमोक्षः प्रजायते ॥ १९५ ॥ वीरे श्वरादुदक्काश्यां सङ्कटा यत्र संस्थिता ॥ तत्र षोडशलक्षाणि जप्त्वा होमस्तु दूर्वया ॥ १९६ ॥ तस्य सिद्धो भवेन्मन्त्रस्तन्मुखाद्यदि निस्स रेत् ॥ अमुकस्यामुकं कष्टं गतं तद्गतमेव हि॥१९७॥ अथातः सम्प्रवक्ष्यामि विकटां केतु मातरम् ॥ तारो[१] नमो भगवति विकटे वीरपालिके ॥ १९८ ॥ प्रसीदयुगलं मन्त्रः प्रकृत्यर्णः प्रकीर्त्तितः ॥ काश्यां वीरेश्वरासन्ना पश्चिमे विकटा स्थिता ॥ १९९ ॥ तत्र मन्त्रमिमं जप्त्वा ग्रहतप्ताश्च बालकाः ॥ उदरं चापि वन्ध्यायाः प्रजावत्यास्तथा शिरः ॥ २०० ॥ पित्रादित्यक्त-बालाश्च तथा मातृविवर्ज्जिताः ॥ साधकस्य करस्पृष्टा नीरोगाश्चिर जीविनः ॥ २०१ ॥

इति श्रीमहामायामहाकालानुमते मेरुतन्त्रे शिवप्रणीते
नवग्रहप्रकाशो द्वाविंशः ॥ २२ ॥

---

मुनय ऊचुः ॥ देवदेव महादेव भक्तानुग्रहकारक ॥ ब्राह्मयाद्यष्टौ भास्करस्य तटे तिष्ठन्ति शक्तयः ॥ १ ॥ रणे मृतानां योगेन मृतानां सहगामिनाम् ॥ स्वर्णं याश्च प्रयच्छन्ति तन्मनून्ब्रूहि शङ्कर ॥ २ ॥ श्रीशिव उवाच ॥ ब्रह्म-शक्तिस्तु शक्तीनां नायिका परिकीर्त्तिता ॥ योगिनां मुक्तिदात्री सा भोगि-नां भोगदा मता ॥ ३ ॥ ब्रामित्येकाक्षरं बीजं मुनिर्वाचस्पतिर्मतः ॥ गाय-त्री छन्द उद्दिष्टं वः शक्तिः कीलकं चरः ॥ ४ ॥ ध्यायेद्ब्राह्मीं पद्मसंस्थां हंसारूढां चतुर्मुखाम् ॥ अक्षमालावराभीतिकमण्डलुकरारुणाम् ॥ ५ ॥[२]बीजे

---

१ ॐ नमो भगवति विकटे वीरपालिके प्रसीदप्रसीद ॥ २ ब्रां हृदयाय नमः, ब्रां शिरसे स्वाहा ब्रां शिखायै वषट्, ब्रां कवचाय हुम्, ब्रां नेत्रत्रयाय वौषट्, ब्रां अस्त्राय फट्, ॥

नैव षडङ्गानि मध्ये देवीं प्रपूजयेत् ॥ षट्कोणेषु षडङ्गानि शक्तयोऽर्च्याः कलादले ॥ ६ ॥ चिन्तामणिज्ञाननीलघटाकिन्यन्तारिक्षतः[1] ॥ महत्पूर्वाश्च सप्तैतास्सरस्वत्यः प्रकीर्त्तिताः ॥ ७ ॥ लोकेश्वरीं शिवान्ते च त्रिपुराद्वितयं भवेत् ॥ वागीश्वरीरुद्रविष्णुमुखान्ते चाक्षया मता ॥ ८ ॥ पद्मावत्येव रूढा च षोडशी कीर्त्तिनायिका ॥ तत्तन्मन्त्रैः पूजनीया बाह्ये दिक्पाःसहेतयः ॥ ॥ ९ ॥ लक्षमेकं जपेन्मन्त्रं पलाशकुसुमैर्हुनेत् ॥ तत्पुष्पयुक्तसलिलैस्तर्प्पयेन्मार्ज्जयेत्कुशैः ॥ १० ॥ ऐश्वर्य्यार्थं तु सिध्यर्थं गायत्री प्रथमांघ्रियुक् ॥ संरक्षणार्थं पुष्ट्यर्थं द्वितीयचरणान्वितम् ॥ मारणोच्चाटनाद्यर्थं तृतीयेन समन्वितम् ॥ लक्षमात्रं जपेन्मन्त्रं कार्य्यसिद्धिः प्रजायते ॥ ११ ॥ अथादौ सम्प्रवक्ष्यामि चिन्तामणिसरस्वतीम् ॥ तारं मायां च हस्रानैकाराढ्यान्सबिन्दुकान् ॥ ॥ १२ ॥ पुनर्मायां च तारं च वदेन्ङेन्तां सरस्वतीम् ॥ १३ ॥ हृदयान्तो भवार्णोयं मन्त्रस्तु परिकीर्त्तितः[2] ॥ त्रिष्टुप्छन्दो मुनिः कंठश्चिन्तामणि सरस्वती ॥ १४ ॥ देवताद्यं च बीजं स्याद्भ्रीं शक्तिस्त्वङ्गकल्पनम्[3] ॥ स्वरसम्पुटितैः कादिवर्गैः स्यादंगकल्पनम् ॥ १५ ॥ पुनश्च तारहल्लेखापुटितं दीर्घषट्कयुक् ॥ स्वकूठं तेन चांगानि मन्त्रार्णान्विन्यसेत्तनौ[4] ॥ मूर्द्धभ्रूमध्यकर्णाक्षिनासिकास्यगुदांघ्रिषु ॥ १६ ॥ हंसारूढां मौक्तिकाभां मन्दहासेन्दुशेखराम् ॥ वीणामृतवटाक्षस्रग्दीप्तहस्ताम्बुजास्थिताम् ॥ १७ ॥ ध्यात्वैवं मनसापूज्य कुर्य्याद्बाह्यार्चनं ततः ॥ वाग्देव्यौ पार्श्वयोः पूज्ये संस्कृतप्राकृताह्वये ॥ १८ ॥ ततः षडंगावरणं ततश्चाष्टदलेर्चयेत्[5] ॥ प्रज्ञां मेधां श्रुतिं चैव स्मृतिं शक्तिं ततोर्चयेत् ॥ १९ ॥ वागीश्वरीं वसुमतीं स्व-

---

१ चिन्तामणिसरस्वती, ज्ञानसरस्वती, नीलसरस्वती, घटसरस्वती, किनिसरस्वती, अन्तारिक्षसरस्वती ॥ २ ॐ ह्रीं हैं ह्रीं ॐ सरस्वत्यै नमः इति एकादशाक्षरमन्त्रः ॥ ३ अं कं खं गं घं ङं आं हृदयाय नमः, इं चं छं जं झं यं ईं शिरसे स्वाहा इत्थं न्यासकल्पनम् । पुनः ऐंह्रींबीजाभ्यांसंपुटितैः स्हां, स्हीं, स्हूं, स्हैं, स्हौं, स्हः, एभिः कूटाक्षरैर्न्यासीन्कुर्य्यात् यथा ॐ ह्रीं स्हां ॐ ह्रीं हृदयाय नमः इत्यादि ॥ ४ ॐ मूर्ध्नि ह्रीं भ्रूमध्ये, स्हैं दक्षकर्णे, ह्रीं वामकर्णे, ॐ दक्षनेत्रे, स वामनेत्रे, रनासिकायाम् स्वमुखे, त्यै गुदे, न दक्षपादे, मः वामपादे, इत्यक्षरन्यासः ॥ ५ ततोर्चयेदित्यनयोरुत्तरत्रान्वयः ॥

क्षरो मन्त्रराजो जपध्यानादि पूर्ववत् ॥ ११५७ ॥ अथाष्टवेदतुल्ये तु कृष्णा-
येति पदं वदेत् ॥ गोविन्दायेति सप्तार्णः प्राग्वन्मुन्यादिकं मतम् ॥ ११५८ ॥
अथ गोवेदतुल्ये तु श्रीमायाकामबीजतः ॥ कृष्णाय कामबीजं च प्राग्वत्सप्ता-
क्षरो मनुः ॥११५९॥ अथातः सम्प्रवक्ष्यामि पंचाशत्प्रमिते दधि ॥ भक्षणाय
द्विठान्तोयमष्टवर्णः प्रकीर्त्तितः ॥ ११६० ॥ अथैकपंचप्रमिते सुप्रसन्नात्मने
नमः ॥ अष्टवर्णः समाख्यातो मुन्याद्यं पूर्ववन्मतम् ॥ ११६१ ॥ अथ द्विपं-
चप्रमिते कामं कृष्णाय संवदेत् ॥ गोविन्दाय पुनः कामो नवार्णः परिकीर्त्तितः
॥ ११६२ ॥ अथ त्रिपंचप्रमिते कृष्णो गोविन्द एव च ॥ङेन्तश्च हृदयान्तश्च
मनुः प्रोक्तो नवाक्षरः॥ ११६३॥अथ वेदेषु युक्तेषु कामं ग्लौं काममुच्चरेत् ॥
श्यामलाङ्गाय हृदयं दशार्णः परिकीर्त्तितः॥ ११६४॥अथ पंचेषु संयुक्ते बालान्ते
वपुषे वदेत्॥कृष्णाय वह्निजायान्तो मन्त्रः प्रोक्तो दशाक्षरः ॥११६५॥ अथ
षड्बाणयुक्ते तु क्लीं कृष्णा य परेति च॥नन्देति बालवपुषे स्वाहा पंचदशाक्षरः
॥११६६॥अथातः सम्प्रवक्ष्यामि सप्तबाणमिते कलौ॥कामबीजद्वयं कृष्णपदं
वेदार्ण उच्यते॥११६७॥मुन्यादयः षडङ्गानि चकार्णोक्तेन वर्त्मना॥तद्ध्यानं
विशेषोत्र कल्पवृक्षतले स्थितम् ॥ ११६८ ॥ अङ्गैरावरणं पूर्वं निधिभि-
स्तदनन्तरम् ॥ महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ ॥ ११६९ ॥ मुकु-
न्दकुन्दनीलाश्च खर्वश्च निधयो नव॥लोकपालैश्च वज्राद्यैः पश्चादावरणद्वयम्॥
॥११७०॥ एवं ध्यात्वा जपेन्मन्त्रं वेदलक्षं जितेन्द्रियः ॥ दशांशं जुहुयादग्नौ
श्रीफलैर्मधुरप्लुतैः॥ ११७१ ॥ तर्प्पणादि ततः कुर्य्यात्पूर्वोक्तं मन्त्रसिद्धये॥
मधुरत्रयसद्बुद्ध्या शुद्धतोयैर्दिनागमे ॥ ११७२ ॥ दशपूर्णप्रयोगाश्च कर्त्त-
व्याः साधकेन तु ॥ भुक्तिप्रदो मुक्तिदश्च सर्वकामप्रदस्त्विति ॥ ११७३ ॥
अथातः सम्प्रवक्ष्यामि वसुबाणमिते कलौ ॥ कृष्णस्यादौ द्वयोः कामबीजयो-
रंकयोजनात्॥ ११७४॥मन्त्रान्तरो युगे वृत्तो नारदाद्यैरुपासितः॥षड्दीर्घभाजा
बीजेन तादृशेनाङ्गकल्पनम्॥११७५॥ततो ध्यायेत्कल्पवृक्षमूले चान्दोलिका-
स्थितम् ॥ किंङ्किणीसंवृतकटिं नीलकुञ्चितमूर्द्धजम् ॥ ११७६ ॥ चित्रन्यासं
सरोजाक्षं तिलकाभूषणान्वितम् ॥ आरक्तवर्णं गोपीभ्यां दशायां कलितं

मुहुः ॥ प्राग्वत्पूजादिकं सर्वं पुरश्चर्य्या तथेरिता ॥ ११७७ ॥ रक्तपद्मैर्हुने-न्मन्त्री रक्तपद्मैर्दशांशतः ॥ तर्प्पणादि ततः कृत्वा गुरुं यत्नेन तोषयेत् ॥ ॥११७८॥ मधुरत्रयसंसिक्तामारक्तां शालिमञ्जरीम् ॥ जुहुयान्नित्यशः सार्धं शतमेकेन मन्त्रतः ॥ मण्डलात्सर्वसस्यादि वस्तुजातं तदा भवेत् ॥ ११७९ ॥ अथातः सम्प्रवक्ष्यामि नवबाणमिते कलौ ॥ वाग्लज्जाक्लींरमाह्रींग्रींज्रींत्रीं-जयजयेति च ॥ ११८० ॥ कृष्णकृष्णेति चाभाष्य निरन्तरपदं वदेत् ॥ क्रीं त्रीं नित्यप्रमुदितरेतसे पदमुच्चरेत् ॥ ११८१ ॥ नित्यक्रियाय कृष्णाय क्लीं गोपीजनवल्लभा ॥ य स्वाहा ग्रीं च ह्रीं चेति द्विपञ्चाशल्लिपिर्मनुः ॥ ११८२ ॥ आनन्दनारदमुनिर्विराट् छन्दोस्य देवता ॥ सम्मोहनहरिः प्रोक्तो मन्त्रवर्णैः षडङ्गकम् ॥ ११८३ ॥ आद्यन्तैश्च त्रिभिर्बीजैः संयुक्तैश्च क्रमेण च ॥ अष्टभी रविभिर्नेत्रैर्नवभिश्च नखेन्दुभिः ॥ ११८४ ॥ न्यासादिकं ततः कृत्वा देहे पीठं प्रकल्प्य च ॥ हस्तद्वये दशार्णोक्तविधिना न्यासमाचरेत् ॥ ११८५ ॥ षडङ्गान्यस्य कामानां पञ्चपञ्च प्रविन्यसेत् ॥ त्रिवारं मूलमन्त्रेण व्यापकं च ततश्चरेत् ॥ ११८६ ॥ कामसम्पुटिता-न्न्यस्य मातृकार्णान्यथा पुरा ॥ दशतत्त्वादिकं न्यस्य तदन्ते मूर्तिपञ्जरम् ॥ ११८७ ॥ सृष्टिस्थितिषडङ्गानि वर्णान्न्यस्येच्च पूर्ववत् ॥ सर्वमन्य-त्पुरोक्तेन विधानेन विधाय वै ॥ ११८८ ॥ साधकः सर्वलोकेशं ध्याये-त्सम्मोहनं हरिम् ॥ पुरे च मणिजे रम्ये पर्वताम्बुधिमध्यगे ॥ ११८९ ॥ नानाशोभाविचित्रेण मणिभिर्दीपितान्तरे ॥ उद्यानवापिकावाटीनानाजनमनो-हरे ॥ ११९० ॥ तत्रातिरम्ये विपुले विश्वकर्म्मविनिर्मिते ॥ नानारत्नग-णाकीर्णे गेहे सञ्चिन्तयेद्धरिम् ॥ ११९१ ॥ नानालङ्कारशोभाढ्यं श्री-वत्साङ्कितवक्षसम् ॥ नानासुगन्धरुचिरमङ्कन्यस्तकराम्बुजम् ॥ ११९२ ॥ विहिताम्भोजयुग्माभ्यां विस्तृताभ्यां च कामतः ॥ आलिंग्य तां च बाहुभ्यां श्वेतमुक्ताविभूषितम् ॥ ११९३ ॥ स्वदक्षस्थितयाश्लिष्टं श्यामया सत्य-

१ ॐ ऐं ह्रीं श्रीं क्लीं ह्रीं ग्रीं ज्रीं त्रीं जयजय कृष्ण कृष्ण निरन्तरं क्रीं त्रीं नित्यप्रमुदितरेतसे नित्यक्रियाय कृष्णाय क्लीं गोपीजनवल्लभाय स्वाहा ग्रीं ह्रीं ॥

भामया ॥ चक्रवज्जाम्बवत्या च श्लिष्टं वामस्थया तथा ॥ ११९४ ॥ कालिन्द्या च परिश्लिष्टमग्रदेशस्थया विभुम् ॥ पद्मं गदां शंखचक्रे चतुर्भिर्दधतं करैः ॥ ११९५ ॥ करद्वयलसद्वंशविभावितमुखाम्बुजम् ॥ चतुर्दिक्षु बहिर्देवैर्मुनिभिः सेवकैर्वृतम् ॥ ११९६ ॥ एवं ध्यात्वा तु पूर्वोक्ते पीठे देवं समर्चयेत् ॥ विंशार्णोदितयन्त्रं च सम्यगत्र सुलेखयेत् ॥ ११९७ ॥ मध्यस्थपीठपरितः पूर्वादिषु लिखेत्क्रमात् ॥ ह्रींत्रींह्रींत्रीं च बीजानि शिष्टैर्वर्णैः प्रवेष्टयेत् ॥ ११९८ ॥ दशबीजैर्विरहितैर्द्विचत्वारिंशसम्मितैः ॥ षट्कोणेथ क्रमाल्लेख्यं ऐंह्रींश्रीमीशकोणतः ॥ ११९९ ॥ पुनस्तान्येव नैर्ऋत्याच्छेषं प्राग्वत्समाचरेत् ॥ अर्घ्यपात्रादि संस्थाप्य मध्यबीजे हरिं यजेत् ॥१२००॥ यथाध्यानं च तत्पूर्वादिष्वर्च्या रुक्मिणीमुखाः ॥अङ्गानि षट्सु कोणेषु वामांके सर्वगां यजेत् ॥१२०१॥दलमध्ये तु लक्ष्म्याद्यास्तदग्रे धनुरादिकाः॥यजेत्कृष्णाग्रमध्ये तु पृष्ठगं चांजनं धनुः ॥ १२०२ ॥ शङ्खपद्मौ निधी पूज्यौ शुक्लवर्णौ तु पार्श्वयोः ॥ सर्वदा चापि वर्षन्तौ धाराभिर्वस्तुसञ्चयम् ॥ १२०३ ॥ हेरम्बं साम्बनामानं दुर्गां च तदनन्तरम्॥विष्वक्सेनं च कोणेषु वर्णगान्पक्षिणो यजेत् ॥ १२०४ ॥ रक्तमारक्तसुप्रख्यदूर्वाकनकवर्णकान् ॥ तद्बहिर्वासवादीनां वज्रादीनां च पूजनम् ॥१२०५ ॥दीक्षितो विधिना मन्त्रं प्राप्यामुं सद्गुरोः कृती ॥ दर्शनं भाषणं स्पर्शवचनश्रवणादिकम् ॥ वर्जयेत्प्रजपेल्लक्षं स्त्रीमात्रस्य गुरोरपि ॥१२०६॥ सिताब्जमधुमिश्रैश्च दशांशं पायसैर्हुनेत् ॥ तर्प्पणं मार्ज्जनं कृत्वा ब्राह्मणान्भोजयेत्ततः॥१२०७॥ मन्त्रमेनं जपेद्यस्तु प्रत्यहं विधिनामुना ॥ समर्चयति गीर्वाणाँल्लोकानन्दकरश्च सः ॥ १२०८ ॥ दिवादौ कृष्णचन्द्रं च दुग्धबुद्ध्या जलैः शुभैः ॥ अन्वहं तर्प्पयेद्यस्तु शतं साग्रं भवेद्ध्रुवम् ॥ १२०९ ॥ इन्दुश्रीजलबिन्द्वाभस्तद्विभूतिमहार्णवः ॥ चन्द्रचन्दनपंकाक्तमालतीकुसुमैर्यवैः ॥ १२१० ॥ अयुतं मन्त्रवर्णेन यो जुहोति विभावसौ ॥ त्रैलोक्यं तद्वशे तिष्ठेत्ख्यातः कविवरो भवेत् ॥ १२११ ॥ मन्त्रिणो ध्यानमात्रेण मन्त्रस्यास्य यथाविधि ॥ वश्या भवंति सततं स्मरार्ताः सुरयोषितः ॥ १२१२ ॥ जपादिकर्म्मभिर्नून-

यस्मात्किंकिं न लभ्यते ॥ स्पर्द्धां स्वाभाविकीं त्यक्त्वा चित्रमेतत्सुमंत्रिणः ॥ ग्रहेन्दिरा सदस्या स्यात्सेवने भक्तितत्परा ॥ १२१३ ॥ व्याधिदारिद्र्यपापौघक्रूरग्रहविषादिभिः ॥ विपत्तिदुःखदौर्भाग्यमृत्य्वादिरहितः सदा ॥ १२१४ ॥ पुत्रपौत्रधनारोग्यवरस्रग्गन्धवाहिभिः ॥ सम्पन्नः सर्वसम्पत्या यशस्वी दीर्घजीवनः ॥ १२१५ ॥ अथातः सम्प्रवक्ष्यामि कलौ षष्टिमिते मनुम् ॥ यज्जपादेव पुत्रादेरुत्पत्तिर्भवति ध्रुवम् ॥ ॥ १२१६ ॥ देवकीसुत गोविन्द वासुदेव जगत्पते ॥ देहि मे तनयं कृष्ण त्वामहं शरणं गतः ॥ १२१७ ॥ द्वात्रिंशदक्षरो मन्त्रो नारदोस्य मनोर्मुनिः॥ छन्दोनुष्टुब्देवता च कृष्णः सन्तानदायकः ॥ १२१८ ॥ पादैश्चतुर्भिः सर्वैश्च पञ्चाङ्गानि मनोर्विदुः ॥ शङ्खचक्रधरं देवं श्यामवर्णं चतुर्भुजम् ॥ ॥ १२१९॥ सर्वाभरणसन्दीप्तं पीतवाससमच्युतम्॥मयूरपिच्छसंयुक्तं विष्णुतेजोपबृंहितम् ॥ समर्प्पयन्तं विप्राय नष्टानानीय बालकान् ॥१२२०॥ध्यात्वा ततोर्चनादीनि कुर्य्याद्भक्तिपरायणः॥अर्चना चेन्द्रवज्राद्यैरुदितास्य महात्मनः ॥ ॥ १२२१ ॥ लक्षं जप्त्वा तद्दशांशं जुहुयाद्गोघृतेन च ॥ तर्प्पणादि ततः कुर्य्यान्मन्त्रः सिद्ध्यति मन्त्रिणः ॥१२२२॥ दशम्यामर्धरात्रे तु शुक्लपक्षस्य मन्त्रवित् ॥ पुत्रार्थं शान्तिकं कृत्वा तत्रस्थो विष्णुमर्च्चयेत् ॥ १२२३ ॥ य एवं भजते मन्त्री साधकः पुत्रकाम्यया ॥ स वर्षाल्लभते पुत्रं विनीतं चिरजीविनम् ॥ १२२४ ॥ अथातः सम्प्रवक्ष्यामि ह्येकषष्टितमे कलौ ॥ वासुदेवाय निगडच्छेदन ङेन्तमुच्चरेत्॥वासुदेवाय हुंफट् च स्वाहा विंशार्णको मनुः॥ ॥१२२५॥नारदोस्य मुनिः प्रोक्तो गायत्री छन्द उच्यते ॥ श्रीकृष्णो देवता प्रोक्तो निगडच्छेदकारकः॥न्यासध्यानजपार्चादि दशवर्णोक्तवद्भवेत्॥ १२२६॥

---

१ देवकीसुत गोविन्द हृदयाय नमः,वासुदेव जगत्पते शिरसे स्वाहा,देहि मे तनयं कृष्ण शिखायै वषट्, त्वामहं शरणं गतः कवचाय हुम् ॥ देवकीसुत गोविन्द वासुदेव जगत्पते ॥ देहि मे तनयं कृष्ण त्वामहं शरणं गतः नेत्राभ्यां वौषट् ॥ तन्त्रांतरेषु तु पूर्वमन्त्रार्द्धेन नेत्रयोरुत्तरमन्त्रार्द्धेनास्त्रस्य न्यासः । किञ्चास्य मन्त्रस्य प्रथमे क्लींबीजयुक्तस्य जपाच्छीघ्रमेव तनयप्राप्तिर्जायते । तथा ह्रींमोमाद्यस्याऽपि जपोन्यत्र ॥

अथातः सम्प्रवक्ष्यामि नेत्रषष्टिमिते कलौ ॥ कामबीजात्मको मन्त्रो मुनिर्मोहननारदः ॥ १२२७ ॥ छन्दो गायत्रकं देवः कृष्णः सम्मोहनो मतः ॥ षड्दीर्घभाजा बीजेन षडंगानि प्रकल्पयेत् ॥ १२२८ ॥ आसनं न्यासपर्य्यन्तं चोक्तरीत्या विधाय तु ॥ अंगुलीषु न्यसेदंगं हस्तयोस्तलयोरपि ॥ १२२९ ॥ पञ्चांगुलीषु बाणांश्च पूर्वोक्तान्क्रमतो न्यसेत ॥ बीजसम्पुटितान्न्यस्य मातृकार्णाननन्तरम् ॥ १२३० ॥ षडङ्गानि पुनर्न्यस्य यथास्थाने शरान्न्यसेत् ॥ १२३१ ॥ शिरोवदनहृल्लिङ्गपादेषु क्रमतः सुधीः ॥ शेषतत्त्वमुखानेतान्पञ्चबीजप्रपूर्वकान् ॥ १२३२ ॥ जगत्सम्मोहनं कृष्णं ध्यायेत्पश्चात्समाहितः ॥ वृन्दारकद्रुमौघेन विलसत्कल्पशाखिनः ॥ मूले लसत्स्थलीराजद्रत्नसिंहासनोपरि ॥ ११३३ ॥ वामस्कन्धे पाक्षिपत्रे स्थितं बन्धूकसन्निभम् ॥ अरिशङ्खसृणीन्पाशं पुष्पबाणेक्षुकार्मुकम् ॥ ॥ १२३४ ॥ पद्मं गदां च हस्ताब्जैरष्टभिर्दधतं निजैः॥ घूर्णनेत्रं कुण्डलिनं हारिणं सुकिरीटिनम् ॥ १२३५॥ किङ्किणीनूपुराद्यैश्च मुद्रिकारत्नमाल्यकैः ॥ पीताम्बरै रक्तलेपैर्युक्तं वामोरुगां रमाम् ॥ आलिङ्गन्तं वामबाहुधृतपद्मावलिं विभुम् ॥ १२३६ ॥ विंशाक्षरोदिते पीठे भूषणाद्यैर्यजेद्धरिम् ॥ पश्चादङ्गानि बाणांश्च न्यासमार्गेण पूजयेत ॥ १२३७ ॥ किरीटं मस्तके श्रोत्रद्वये कुण्डलयुग्मकम् ॥ चक्राद्यं त्रिषु हस्तेषु श्रीवत्सं कौस्तुभं तथा ॥ ॥ १२३८ ॥ वक्षोहृदि तथा कण्ठे वनमालां नितम्बके ॥ पीताम्बरं महालक्ष्मीं वामांके बीजपूर्विकाम् ॥ १२३९ ॥ अभ्यर्च्य कर्णिकामध्ये दिग्विदिक्ष्वङ्गदेवताः ॥ ततो बहिश्वरान्बाणान्दिक्षु कोणेषु पूजयेत् ॥ ॥ १२४० ॥ यजेदष्टाग्रपत्रेषु लक्ष्म्याद्याः प्रोक्तलक्षणाः ॥ इन्द्रादीन्पूजयेद्बाह्ये वज्रादीन्यायुधान्यपि ॥ १२४१ ॥ प्रजपेद्दशलक्षाणि पलाशकुसुमैर्हुनेत् ॥ त्रिस्वाद्वक्तैस्तर्प्पयेच्च सहस्रद्वादशावधि ॥ १२४२ ॥ आत्माभिषेकं कृत्वाथ विप्रानभ्यर्च्य तोषयेत ॥ अनेन मनुना तोयैर्मोहिनीपुष्पसंयुतैः ॥ १२४३ ॥ दिनादारभ्य मन्त्री तु तर्प्पयेच्च फलप्रदम् ॥ त्रैलोक्यं मोहयेद्यस्तु जपेन्मन्त्रं समाहितः ॥ १२४४ ॥ सर्वान्कामानवाप्नोति वा-

ञ्छितानत्र वर्णितान् ॥ अयुतं सर्पिषा हुत्वा ससम्पातं हुताशने ॥ १२४५॥ तावज्जले जपित्वा च तद्घृतं भोजयेत्स्त्रियम् ॥ यस्तु तद्वशगा सा स्यात्सापि तं वशमानयेत् ॥ १२४६ ॥ अष्टादशलिपिप्रोक्ते वश्यं चानेन साधयेत् ॥ एवं यो भजते मन्त्रं भोगान्भुक्त्वा हरिं व्रजेत् ॥ अथातः सम्प्रवक्ष्यामि रामषष्टिमिते कलौ ॥ १२४७ ॥ त्रैलोक्यमोहनाय विद्महे ॥ स्मराय धीमहि ॥ तन्नो विष्णुः प्रचोदयात् ॥ १२४८ ॥ जपेदस्यैव गायत्रीं चतुर्वर्गफलप्रदाम् ॥ मुन्यादि सकलं प्राग्वद्गायत्री सपुरस्क्रिया ॥ नाशयेत्सर्वपापानि सिद्धेयं कल्पवल्लिका ॥ १२४९ ॥ यद्यदिष्टं भवेत्कार्य्यं सहस्रादयुतादपि ॥ यथायोग्यं जपेत्साध्यमसाध्यं च प्रसिद्ध्यति ॥१२५०॥ अथातः सम्प्रवक्ष्यामि वेदषष्टिमिते कलौ ॥ ग्लौमित्येकाक्षरो मन्त्रो जगती छन्द ईरितम् ॥ १२५१ ॥ ऋषिस्तु नारदः प्रोक्तः श्रीकृष्णो देवता मतः ॥ बीजं गकार ॐ कारः शक्तिः प्रोक्तं षडङ्गकम् ॥ १२५२ ॥ षड्दीर्घान्वितबीजेन गकारं मूर्ध्नि विन्यसेत्॥ग्लौं नाभौ तु तथौं गुल्फे बिन्दुं पादद्वये न्यसेत् ॥ १२५३ ॥ कदम्बमूले क्रीडन्तं वृदावननिवासिनम् ॥ पद्मोपरि स्थितं वन्दे वेणुं गायन्तमीश्वरम् ॥ १२५४ ॥ पीताम्बरधरं देवं वनमालाविभूषितम् ॥ गोपीभिर्गोपवृन्दैश्च सेवितं कृष्णमर्च्चयेत् ॥१२५५॥ दशार्णवच्च पूजा स्यात्पिङ्गगोपालसम्मता ॥ लक्षायुतसहस्राणि चत्वार्य्यस्य जपो मनोः ॥ १२५६ ॥ घृतहोमदशांशेन तर्प्पणादि ततश्चरेत् ॥ एवं संसिद्धमन्त्रस्तु दशार्णोक्तप्रयोगकान्॥ १२५७॥ कुर्य्यादिह तु सौभाग्यमन्ते याति हरेः पुरम् ॥ १२५८ ॥ अथातः सम्प्रवक्ष्यामि पञ्चषष्टिमिते कलौ ॥ कामबीजान्तरे कृष्णमन्त्रोयं त्र्यक्षरो मतः ॥ १२५९ ॥ नारदोस्य मुनिश्छन्दो गायत्री देवता मता ॥ कृष्णः ककारो बीजं स्यादीकारः शक्तिरुच्यते ॥ १२६० ॥ षड्दीर्घस्वरयुक्तेन मूलेनापि षडङ्गकम् ॥ ध्यानपूजाप्रयोगादि पिङ्गगोपालवन्मतम् ॥ १२६१ ॥ अथातः सम्प्रवक्ष्यामि रसषष्टिमिते कलौ ॥ तारो नमश्च कृष्णाय मन्त्रो रसमितार्णकः १२६२ ॥ नारदोस्य मुनिश्छन्दो गायत्री देवता मताः ॥ श्रीकृष्णः प्रणवो बीजं माया

शक्तिश्च पूर्ववत् ॥ अथातः सम्प्रवक्ष्यामि वसुषष्टिमिते कलौ ॥ १२६३ ॥ उत्तिष्ठ श्रीकृष्ण स्वाहा मनुरष्टाक्षरो मतः वामदेवो मुनिः पंक्तिश्छन्दो विष्णुश्च देवता ॥ हुंभीषयद्वयं हृच्च हुमन्तं त्रासयद्वयम् ॥ १२६४ ॥ शिरः शिखा च वर्मोक्तं प्रमर्दययुगं मतम् ॥ वर्म प्रध्वंसययुगं वर्मान्तं रक्षयद्वयम् ॥ १२६५॥ हुमन्तमंत्रं सम्प्रोच्य षडङ्गानि समाचरेत् ॥ अष्टाङ्गानि न्यसेन्मन्त्री मन्त्रवर्णैर्यथाविधि ॥ १२६६ ॥ पचाङ्गनेत्रजठरपृष्ठेषु क्रमतो न्यसेत् ॥ विदध्यात्करयोर्न्यासं मन्त्रार्णैरष्टभिः सुधीः ॥ १२६७ ॥ दक्षतर्ज्जनिकायाश्च यावत्स्याद्वामतर्जनी ॥ सृष्टिरेतद्वैपरीत्यं संहारो गदितः स्थितिः ॥ १२६८ ॥ दक्षान्यतर्जनीपूर्वां कनिष्ठायुग्मकान्तकाम् ॥ द्रावण्याद्यबीजयुतामंगुष्ठादिषु विन्यसेत् ॥ १२६९॥ सबीजपूर्वकान्कामानंगुष्ठादिषु विन्यसेत्॥ तातो बाणार्णपुटितां मातृकां च प्रविन्यसेत् ॥ १२७० ॥ प्रकृतिश्च महत्तत्त्वमहङ्कारखवायवः ॥ तेज आपो धरा चेति तत्त्वाष्टकमुदीरितम् ॥ १२७१ ॥ व्यस्तमन्त्रार्णसंयुक्तं पादे लिङ्गे तथा हृदि ॥ मुखे शीर्षे हृदि पुनर्हृदये सकलाङ्गके ॥ १२७२ ॥ न्यसेत्संहार उक्तोयं सर्गस्तद्विपरीतकः ॥ तारसम्पुटमूलेन त्रिशो न्यस्येत्तनौ पुनः ॥ कट्यास्यहृन्नाभिगुल्फजानुपादेषु विन्यसेत् ॥ एषा सृष्टिश्च नाभ्याद्या हृदन्ता स्थितिरीरिता ॥ १२७३॥ सर्गत्यक्तमतिश्चापि संहारो मन्त्रिभिर्मतः ॥ मन्त्रार्णानामयं प्रोक्तस्त्रिधा न्यासो धनप्रदः ॥ १२७४ ॥ मूलाधारे हृदि मुखे बाहुद्वन्द्वोरुनाभिषु ॥ मन्त्रार्णान्विन्यसेन्मत्री न्यासोयं दार्ढ्यकारकः ॥ १२७५ ॥ गले च जठरे हस्ते स्तनयोः पार्श्वयोस्तथा ॥ पृष्ठे च विन्यसेद्वर्णान्न्यासोयं शुभकारकः॥ १२७६ ॥ मूर्द्धनेत्रश्रोत्रमुखहस्ताग्रे मणिबन्धयोः ॥ कूर्परे चांसके न्यस्य मनोर्वर्णान्धनप्रदान्॥ ॥ १२७७ ॥ पादाग्रयोर्गुल्फयोश्च जानुनोश्च नितम्बयोः ॥ मन्त्रस्य विन्यसेद्वर्णान्न्यासोयं काम्यकः स्मृतः ॥ १२७८ ॥ दक्षबाहौ तथा मूले मध्ये च मणिबन्धके ॥ अंगुष्ठादौ न्यसेद्वर्णान्पञ्चमो धर्मवृद्धिकृत ॥ १२७९ ॥ एवं न्यासो वामहस्ते षष्ठः पापनिवर्तकः ॥ दक्षोरुमूले जानौ च गुल्फे पञ्चांगुलीषु

---

१ उपलब्धयोः पुस्तकयोर्मध्ये सप्तषष्टिमितकल्पावतीर्णकृष्णमन्त्रवर्णनाविषयकः पाठः स्खलितः ॥

च ॥ १२८० ॥ अयन्तु सप्तमो न्यासो वामगस्त्वष्टमो मतः ॥ दक्षांगुष्ठं समारभ्य वाममध्याच्च विन्यसेत् ॥ १२८१ ॥ क्रमेण मन्त्रवर्णांश्च न्यासोयं नवमः स्मृतः ॥ एवन्तु पादयोर्न्यस्येन्न्यासोयं दशमो भवेत् ॥ १२८२ ॥ मूर्द्धाक्षिकण्ठहृदये जठरे चोरुजानुनोः ॥ पादयोश्च न्यसेद्वर्णान्न्यास एकादशः स्मृतः ॥ १२८३ ॥ त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रमरुत्सु च ॥ कर्मणा विन्यसेद्वर्णान्न्यासोयं द्वादशः स्मृतः ॥ १२८४ ॥ दक्षगण्डे च दक्षांसे तत्स्तने दक्षपार्श्वके ॥ दक्षस्फिचि च जंघायां पादेयन्तु त्रयोदशः ॥ १२८५ ॥ एवं प्रविन्यसेद्वामगुल्फादौ स चतुर्दशः ॥ प्रथमार्णं पादतले पदपादाग्रजानुषु ॥ १२८६ ॥ गुदगुह्ये तृतीयन्तु पार्श्वनाभौ चतुर्थकम् ॥ वक्षःपृष्ठहृदयेषु कण्ठे वक्त्रे नसोस्तले ॥ १२८७ ॥ श्रोत्रनेत्रद्वये चान्यं ललाटे चाष्टमं न्यसेत् ॥ सर्वोपद्रवहन्तायं न्यासः पञ्चदशः स्मृतः ॥ १२८८ ॥ शिरोक्षिमुखहृन्नाभिगुह्यजान्वंघ्रिषु न्यसेत् ॥ षोडशोयमिति प्रोक्तस्तत्त्वपञ्जरसञ्ज्ञकः ॥ १२८९ ॥ ततस्तनौ मूलमन्त्रं व्यापकत्वेन विन्यसेत् ॥ नृसिंहं पञ्चमे प्रोक्तमाचरेन्मूर्तिपञ्जरम् ॥ १२९० ॥ मुखे ब्राह्मणवर्णं च हस्तयोः क्षत्रियं न्यसेत ॥ ऊर्वोर्वैश्यं शूद्रवर्णं पादयोरिति विन्यसेत ॥ १२९१ ॥ न्यसेत्किरीटं शिरसि श्रुत्योर्मकरकुण्डले ॥ ग्रैवेयं कौस्तुभं कण्ठे हृदि श्रीवत्सहारकम् ॥ १२९२ ॥ अङ्गदे भुजयोर्न्यस्य केयूरान्सर्वबाहुषु ॥ कङ्कणे हस्तयोर्न्यस्य मेखलां च कटौ न्यसेत् ॥ १२९३ ॥ न्यस्यांगुलीषु मुद्राश्च न्यसेत्पीताम्बरद्वयम् ॥ परिधाने चोत्तरीयं पादयोर्नूपुरं तथा ॥ ॥ १२९४ ॥ न्यसेच्छङ्खं च चक्रं च वामदक्षोर्ध्वहस्तयोः ॥ अधःपाण्योर्गदापद्मे ततो ध्यानं समाचरेत् ॥ १२९५ ॥ दुग्धाम्भोधौ सितद्वीपं नानामणिगणैर्युतम् ॥ वनं सञ्चिन्तयेत्तत्र सकलर्तुसमन्वितम् ॥ १२९६ ॥ न्यासोक्ताभरणैः शस्त्रैरुपेतं दीप्ततेजसम् ॥ सुरासुरर्षिप्रमुखैः सेवितं चाप्सरोगणैः ॥ १२९७ ॥ प्रसन्नवदनं ध्यात्वा तत्त्वदेवं प्रपूजयेत ॥ पूर्वोक्तपीठे मूलेन मूर्तिं सङ्कल्प्य चाह्वयेत ॥ १२९८ ॥ अङ्गानि कर्णिकायाञ्च दिक्पत्रेषु चतुर्ष्वपि ॥ श्रियं पीताम्बराक्तां च धृतिं कान्तिं सितासिते ॥ १२९९ ॥

इन्द्रादींश्चापि दिक्पत्रे वज्रादींस्तद्बहिर्यजेत् ॥ अष्टलक्षं जपेन्मन्त्रं नियमस्थो जितेन्द्रियः ॥ १३०० ॥ दुग्धाक्तबिल्वसमिधां होमः प्रोक्तो दशांशतः ॥ जलैः सघृतदुग्धान्नैस्तर्प्पणादि समाचरेत् ॥ १३०१ ॥ गुरुं सन्तोष्य यत्नेन सिद्धमन्त्रो भवेद् ध्रुवम् ॥ ततः कुर्वीत मन्त्रज्ञः प्रयोगांश्च प्रसिद्धये ॥ १३०२ ॥ दुग्धपूतैः सरसिजैरयुतं जुहुयाच्छ्रिये ॥ मधुरत्रयसंयुक्तैः पलाशकुसुमैर्हुनेत् ॥ १३०३ ॥ कान्त्यर्थं केवलाज्येन जुहुयाद्दुग्धमायुषे॥त्रिस्वादुयुक्तं लवणं हुनेन्निशि सहस्रकम्॥१३०४॥अष्टाधिकं च मासेन सोमरस्त्रीवृतो भवेत्॥का कथा सर्वयोषासु चान्यासु वशगासु च ॥ अयुतं जुहुयादाज्यं दूर्वाभक्तैश्च शोधितम् ॥ १३०५ ॥ भुञ्जीत प्रत्यहं भक्तं गुरुं सन्तोषयेद्धनैः ॥ वस्त्रालङ्करणाद्यैश्च ब्राह्मणानपि भोजयेत् ॥ ॥१३०६॥यो जपेन्मृत्युरोगादौ न्यसेच्चायुश्च विन्दति ॥सूर्य्यबिम्बे न्यस्तदृष्टिरब्देन सततं जपेत्॥१३०७॥उत्क्षिप्तबाहुःषण्मासाद्धनाढ्यः सुमहान् भवेत्॥ दुग्धमध्ये प्रातरमुं रमेशं तर्प्पयेद्बुधः ॥ अष्टाधिकं सहस्रं तु स भवेद्गोरमान्वितः॥१३०८॥ सुमिष्टमन्नं लभते वने वै भृत्यवर्गयुक् ॥ षट्कर्माणि च सिद्धयन्ति याति विष्णोः परम्पदम् ॥ १३०९ ॥ अथो गोषट्कलौ मन्त्रस्तारादिरयमेव हि ॥ यज्जपेनावतारोत्र सर्वकालफलप्रदः ॥१३१०॥ अथ सप्ततिके चायं लक्ष्म्यादिर्जप्यते जनैः ॥ नावतारः स एवात्र देवः प्रत्यक्षतां गतः ॥ १३११ ॥ अथातः सम्प्रवक्ष्यामि चैकसप्तमिते कलौ ॥ अवतारोत्र मन्त्रस्तु श्रीकृष्णः शरणं मम ॥ १३१२ ॥ चतुष्पदैः समस्तेन पञ्चाङ्गविधिरीरितः ॥ ध्यानपूजाप्रयोगादि दशाक्षरवदीरितम् ॥ १३१३ ॥ अथातः संप्रवक्ष्यामि बौद्धमन्त्रं महाफलम् ॥ सभ्यत्वान्न द्विजातीनामधिकारोस्ति कर्हिचित् ॥ १३१४ ॥ वाममार्गरता विप्राः कुण्डका जातिविच्युताः॥ हीना वैदिकसंस्कारैः प्रमादान्म्लेच्छतां गताः ॥ गोलकाश्च तथा जात्या कायस्थादय एव च ॥ १३१५ ॥ बौद्धं विष्णुं समाराध्य भुक्तिं मुक्तिं प्रयान्ति ते ॥पतितानामयं मन्त्रः सम्प्रोक्तः शरणप्रदः॥१३१६॥नमो भगवते

१ ॐ उत्तिष्ठ कृष्णाय स्वाहा ॥

बुद्धसंसारार्णवतारक॥कलिकालादहं भीतः शरण्यं शरणंगतः॥ १३१७॥ आद्यैः पदैश्चतुर्भिश्च चरणद्वितयेन च ॥ षडङ्गविधिराख्यातः सर्वेण व्यापकं चरेत् ॥ ॥ १३१८ ॥ पद्मे पद्मासनस्थं च ऊर्वोर्न्यस्तकरद्वयम् ॥ गौरं मुण्डितसर्वाङ्गं ध्यानस्तिमितलोचनम् ॥ १३१९॥ पुस्तकासक्तहस्तैश्च नानाशिष्यैश्च शोभितम् ॥ इन्द्रादिलोकपालैश्च ताम्रवर्णाम्बरावृतम् ॥ १३२० ॥ एवं ध्यात्वा यजेत्पद्मे द्वात्रिंशद्दलसम्मिते ॥ कर्णिकायां षडङ्गानि दले शिष्यान्यजेत्क्रमात् ॥ १३२१ ॥ मीनांकं ललितां वीरं योगिनीं ज्ञानदायिनीम् ॥ सर्वज्ञं सुगतं बुद्धं पार्श्वनाथं तथागतम् ॥ १३२२ ॥ चार्वाकं धर्मराजं च जिनं पद्मावतीं तथा ॥ कामिनीं च महामायां श्रीकृष्णं च विनायकम् ॥ १३२३ ॥ समन्तभद्रं वर्त्मार्षिं निविचन्द्रं मनोहरम् ॥ षडभिज्ञं दशबलं शास्तारं श्रीघनं क्षयम् ॥ १३२४ ॥ दण्डिनं मुण्डिनं क्रान्तं श्रावकं लोकपोषणम् ॥ तद्बाह्ये भूपुरे दिक्पांस्तदस्त्राणि च पूजयेत् ॥ ॥ १३२५ ॥ वर्णलक्षं जपेन्मन्त्री होमयेच्च घृतौदनम् ॥ तुलसीमिश्रतोयैश्च भगवन्तं प्रतर्प्पयेत् ॥ १३२६ ॥ परस्य दुःखकरणं मनसापि न चाचरेत्॥ एवं तु वर्तमानस्य वाक्सिद्ध्यादि प्रजायते ॥ १३२७ ॥ राजानो वशगास्तस्य नाशं यान्ति ह्युपद्रवाः ॥ भूतप्रेतादिपीडायां महागदभये तथा ॥ १३२८ ॥ अनेन मन्त्रितं भस्म दत्त्वा दुःखात्प्रमुच्यते ॥ अथातः सम्प्रवक्ष्यामि कल्किमन्त्रं महाफलम् ॥ कंकल्किने हृदन्तोयं मन्त्रः प्रोक्तः षडक्षरः ॥ १३२९ ॥ मन्त्रार्णैश्च षडङ्गानि पूर्णेन व्यापकं चरेत् ॥ मन्त्रोयमतिगोप्यस्तु स्तुत्यश्च नृपनाशकः ॥ १३३० ॥ ध्यानं नीलहयारूढं श्वेतोष्णीषविराजितम् ॥ महामुद्राढ्यहस्तं च कौस्तुभोद्दामकण्ठकम् ॥ १३३१ ॥ मर्दयन्तं म्लेच्छगणं क्रोधपूरितलोचनम् ॥ अन्तर्हितैर्देवमुनिगन्धर्वैः संस्तुतं हरिम् ॥ १३३२ ॥ वैष्णवे तु यजेत्पीठे पद्मे तं केशरेषु च ॥ षडङ्गानि च पत्रेषु पूजयेत्तस्य सेवकान् ॥ १३३३॥ उद्दामं काञ्चनं दीर्घं भीमं घोरं भयानकम् ॥ कालं नीलं लोकपालान्भूपुरे हेतयस्त-

१ पूज्या इति शेषः ॥

था ॥ १३३४ ॥ षड्लक्षं च जपेन्मन्त्रं ससितैः पायसैर्हुनेत् ॥ तर्पयेत्सलिलैः शुद्धैः प्रीणयेद्भूसुरानपि ॥ १३३५ ॥ एवमाराधितो मन्त्रः संग्रामे विजयप्रदः ॥एतत्साधकमालोक्य दूरतो दुःक्षितीश्वराः ॥ १३३६ ॥ प्रणमन्ति तथा म्लेच्छाः शत्रवो यान्ति संक्षयम् ॥ दिनेदिने वर्धते श्रीर्मृतो वैकुण्ठमाप्नुयात् ॥ १३३७ ॥ एते तु मनवः प्रोक्ताः श्रीविष्णोः परमात्मनः ॥ दशावतारूपस्य किमन्यच्छ्रोतुमिच्छसि ॥ १३३८ ॥

इति श्रीमहामायामहाकालानुमते मेरुतन्त्रे शिवप्रणीते दशावतार-मन्त्रप्रकाशः षड्विंशः ॥ २६ ॥

---

श्रीदेव्युवाच ॥ देवदेव महादेव भक्तानुग्रहकारक ॥ चतुर्विंशतिमूर्त्तीनां मन्त्रांश्च मेधुना वद॥ १ ॥ईश्वर उवाच॥शृणु देवि प्रवक्ष्यामि मूर्त्तिमन्त्रानशेषतः ॥ भुक्तिमुक्तिप्रदान् विप्रैराराध्यान्सचतुर्थकैः॥ २ ॥को ब्रह्मा तु समुद्दिष्ट ईशः शो वो हरिः स्मृतः ॥ वर्णत्रयात्मको मन्त्रः केशवः परिकीर्त्तितः ॥ ३॥ पृथक्ताभ्यां षडङ्गानि पूर्णेन व्यापकं चरेत् ॥ आनाभिपादपर्य्यन्तं मङ्गलं मधुसम्मितम् ॥ ४॥ शंखचक्रे हि शूले च त्वक्षमालां कमण्डलुम् ॥ भुजैष्षड्भिर्दधानं च रक्तवर्णं च सत्कटिम् ॥ ५ ॥ अन्तर्बाह्योत्तरीयं च नागयज्ञोपवीति नम् ॥ मयूरमुकुटं रम्यं मकराकृतिकुण्डलम् ॥ ६ ॥ एवं ध्यात्वा यजेत्पीठे पद्मे चापि चतुर्दले ॥ सनकादीन्कर्णिकायां गणेशं नन्दिकेश्वरम् ॥ ७ ॥ कार्त्तिकेयं भृङ्गिणं च दलमध्ये समर्चयेत् ॥ दलाग्रेषु क्रमाच्चापि प्रह्लादं नारदं बलिम् ॥ ८ ॥ पार्श्वयोः पृष्ठतश्चापि रमोमे वेदमातरम् ॥ अग्रदक्षक्रमाद्गां च हंसं पक्षीश्वरं तथा ॥ ९ ॥ भूपुरे लोकपालांश्च तद्धेतीश्च समर्चयेत् ॥ जपे ल्लक्षत्रयं मन्त्रं मधुरत्रितयैर्हुनेत् ॥ १० ॥ सन्तोष्य विप्रान्सिद्धिः स्यात्कर्त्ता हर्ता तथात्मवान् ॥ इह लोके सुखं प्राप्य मृतो मोक्षमवाप्नुयात् ॥ ११ ॥ अथातः सम्प्रवक्ष्यामि नारायणमहामनुम् ॥ नमो नारायणायेति ताराद्यष्टाक्षरो मनुः ॥ १२॥ छन्दश्च देवीगायत्री साध्यनारायणो मुनिः ॥ देवता परमात्मास्य पञ्चाङ्गविधिरुच्यते ॥ १३ ॥ कुब्जोल्कश्च महोल्कश्च

अविरक्तोल्क एव च ॥ सहस्रोल्कश्चतुर्थोक्तः स्वाहोल्को हेतिसंयुतः ॥ पञ्चाङ्गमन्त्राः सम्प्रोक्ता अंगुष्ठादावपि न्यसेत ॥ १४ ॥ अष्टाक्षरेण व्यस्तेन कुर्यादष्टाङ्गकेषु च ॥ सृष्टिन्यासोयमुद्दिष्टस्संहारश्चारणादिकः ॥ १५ ॥ नाभौ च गुह्यदेशे च जान्वोः पादयोस्तथा ॥ मूर्ध्नि नेत्रद्वये चैव सुमुखान्ते तथा हृदि ॥ ॥ १६ ॥ स्थितिन्यासस्त्वयं प्रोक्तो विभूतेः पञ्जरं शृणु ॥ सर्वन्यासेषु तारेण पुटितार्णान्प्रविन्यसेत् ॥ १७ ॥ मूलाधारे हृदि मुखे भुजयोश्चोरुमूलयोः ॥ नाभिदेशे प्रथमको न्यासोयं परिकीर्त्तितः ॥ १८ ॥ गले नाभौ हृदि कुचद्वये पार्श्वद्वये तथा ॥ पृष्ठे चेति द्वितीयोयं न्यासस्तु परिकीर्त्तितः ॥ १९ ॥ शीर्षे मुखे नेत्रयुगे कर्णयोर्नासिकाद्वये ॥ क्रमेण विन्यसेद्वर्णान्न्यासोयं स्यात्तृतीयकः ॥२०॥ बाहुमूले बाहुमध्ये मणिबन्धेंगुलीषु च ॥ दशहस्ते चतुर्थः स्याद्वामबाहौ च पञ्चमः ॥ २१ ॥ दक्षोरुमूलजान्वोश्च गुल्फे चांगुलिषु न्यसेत्॥ न्यासः षष्ठोयमुदितो वामांघ्रौ सप्तमः स्मृतः॥ २२ ॥त्वगसृङ्मांसमेदोस्थिमज्ञा शुक्रानिलेषु च ॥ हृदि ध्यात्वा न्यसेद्वर्णान्न्यासोयं चाष्टमः स्मृतः॥ ॥ २३ ॥ शीर्षदेशे मुखे हृत्कजठरोरुषु जंघयोः ॥ पादयोश्च न्यसेद्वर्णान्न्यासोयं नवमः स्मृतः ॥२४॥ गण्डयोरंसयोरूर्वोः पादयोश्च ततः परम् ॥ वामोर्ध्वकरगं चक्रं दक्षेधः करशंखकम्॥२५॥ गदां वै वामोर्ध्वकरे पङ्कजं दक्ष हस्तके ॥ विभूतिपञ्जराख्योयं न्यासो दशविधः स्मृतः ॥ २६ ॥ क्षित्यप्तेजोमरुद्व्योमाहंमहत्प्रकृतिस्तथा॥ तत्त्वाष्टकमिदं बिन्दुयुग्वर्णाद्यं तथोक्तवत् ॥ ॥ २७ ॥ ङेयुतं हृदयान्तं च स्थानेष्वेतेषु विन्यसेत् ॥ पल्लिङ्गहृन्मुखे शीर्षे नेत्रहृद्व्यापकेषु च ॥ २८ ॥ संहारनामा तत्त्वानां न्यासः सृष्टिस्तथा क्रमात् ॥ बिन्दुनादशक्तिशान्तिरूपमात्मचतुष्टयम् ॥ २९ ॥ न्यसेत्पूर्वं तनौ मन्त्री देवताभावसिद्धये ॥ मूर्त्तिपञ्जरविन्यासं प्रणवाद्यं समाचरेत ॥ ३० ॥ नारायणाय चार्यम्णे अं हृन्मध्ये च नाभिगमम् ॥ ईं माधवाय मित्राय नमः प्रोच्य हृदि न्यसेत ॥ ३१ ॥ ईं गोविन्दाय वरुणाय नमश्चैव गले न्यसेत् ॥ उं विष्णवे चांशुमते नमो दक्षिणपार्श्वके ॥ ॥ ३२ ॥ ऊं मधुसूदनाय च भगाय दक्षिणांसके ॥ एं त्रिविक्रमाय वि-

वस्वते हृद्दक्षगण्डके ॥ ३३ ॥ ऐं वामनाय चेन्द्राय हृदन्तं वामपार्श्वके ॥ ॐ श्रीधराय पूष्णे च नमो वामांसके न्यसेत् ॥ ३४ ॥ हृषीकेशाय पर्ज्जन्यायौं हृदा वामगण्डके ॥ अं पद्मनाभाय त्वष्ट्रे नमो ह्यश्च प्रविन्यसेत् ॥ दमोदराय ककुदि सर्गान्तो विष्णवे नमः ॥ ३५ ॥ किरीटहारकेयूरमकराकृतिकुण्डलम् ॥ शंखचक्रगदापद्महस्तं पीताम्बरावृतम् ॥ ३६ ॥ श्रीवत्साङ्कं लसद्वक्षस्स्थलं श्रीभूमिसंयुतम् ॥ आत्मज्योतिःसम्प्रदीप्तसहस्रादित्यतेजसम् ॥ ३७ ॥ सम्बुद्ध्योक्त्वा च सर्वाणि तदन्ते च वदेन्नमः॥ द्विसप्तत्यक्षरो मन्त्रो व्यापकत्वेन चोदितः ॥ ३८ ॥ अतः परं प्रवक्ष्यामि तत्त्वानाञ्च मनूत्तमम् ॥ तारोक्त्यां खादिकान् वर्णान् सबिन्दून् हृदयान्तकान् ॥ ३९ ॥ परायेति पदस्यान्तेमुकतत्त्वात्मनेनमः ॥ उक्त्वा ह्यमुं न्यसेत्पश्चात्तत्त्वनामस्थलानि तु ॥ जीवं प्राणं सर्वतनौ न्यसेदेवं द्वयं बुधः ॥ ४० ॥ बुद्ध्यहङ्कारमनसां हृदि तत्त्वत्रयं न्यसेत् ॥ मस्तकाननहृद्गुह्यपादांसेषु च वैक्रमात् ॥ ४१ ॥ शब्दस्पर्शरूपरसगन्धतत्त्वानि विन्यसेत् ॥ श्रोत्रत्वगक्षिजिह्वाख्यघ्राणानां तत्त्वपञ्चकम् ॥ ४२ ॥ कर्णयोः सकलाङ्गाक्षिजिह्वाघ्राणेषु विन्यसेत्॥ वाक्पाणिपायुपादाख्योपस्थानां तत्त्वपञ्चकम् ॥ ४३ ॥ मुखे पाण्योः पादयोश्च गुदे लिङ्गे न्यसेत्क्रमात् ॥ आकाशवायुतेजांसि जलक्ष्मातत्त्वपञ्चकम् ॥ ४४ ॥ मूर्ध्नि वक्त्रे च हृदये न्यसेल्लिङ्गे च पादयोः ॥ ततस्तु हृदये न्यस्येन्मण्डलत्रितयं पुनः ॥ ४५ ॥ सूर्य्यसोमकृशानूनामर्कषोडशदिक्कलम् ॥ हंसरं वर्णपूर्वं च योजयित्वा च पूर्ववत् ॥ ४६ ॥ ततः कुर्य्याद्वासुदेवादिकं न्यासं स उच्यते ॥ न्यसेदोंखांनमः प्रोक्त्वा पराय परमेष्ठिने॥ ४७॥ वासुदेवेति तत्त्वात्मने नमो मस्तके मतम्॥ तारोयं नम इत्युक्त्वा पुरुषायपदं वदेत्॥ ४८॥ सङ्कर्षणेति तत्त्वात्मने नमश्चमुखेन्यसेत्॥ ओंरं नमःपरायेति निवृत्तिं ङेन्तनामनि ॥४९॥ रुद्धतत्त्वात्मने प्रोच्य नमोन्तं व्यञ्जने न्यसेत् ॥ ओंलं नमः परायेति शर्वायेति पदं वदेत्॥ ५०॥ नारायणाय तत्त्वात्मने नमः पादयोर्न्यसेत् ॥ ओंक्ष्रौं नमः परायेति नृसिंहाय पदं वदेत्॥ ॥ ५१ ॥ कोपतत्त्वात्मने हृच सर्वाङ्गे व्यापकं चरेत् ॥ एवं विन्यस्य विधिव-

त्साक्षान्नारायाणो भवेत् ॥ ५२ ॥ ज्वररोगाभिचाराद्या भूताद्या यान्ति सङ्क्षयम् ॥ वैष्णवीर्दर्शयेन्मुद्राः पूर्वोक्ताश्च ततः परम् ॥ ५३ ॥ किरीटमनुना दद्यात्स्वके पुष्पाञ्जलित्रयम् ॥ ऊर्ध्वं चाधो दक्षभेदाद् घण्टां च कमलं गदाम् ॥ ५४ ॥ शंखं चक्रं सूर्य्यकान्तिं पार्श्वयोर्धरणीं रमाम् ॥ क्रेयूरहारमुकुटं संपीताम्बरकुण्डलम् ॥ ५५ ॥ कौस्तुभोद्भिन्नहृदयं श्रीवत्साङ्कितवक्षसम् ॥ नवशक्तिसमायुक्ते पीठे देवं यजेत्ततः ॥ ५६ ॥ विमलोत्कर्षिणी ज्ञाना क्रियायोगा तथैव च ॥ प्रभा सत्या तथेशानानुग्रहा नव शक्तयः ॥ ५७ ॥ तारो नमो भगवते विष्णवे पदमुच्चरेत् ॥ सर्वात्मने वासुदेवाय साक्षिणे पदमुच्चरेत ॥ ५८ ॥ सर्वात्मने योगपीठ-पद्मपीठात्मने नमः ॥ पीठमन्त्रः समाख्यातः सप्तत्रिंशद्भिरक्षरैः ॥ ५९ ॥ अनेन पीठं सम्पूज्य देवमावाहयेत्ततः ॥ तुभ्यं तमभिधास्यामि मन्त्रमावाहनस्य च ॥ ६० ॥ एह्येहि भगवन्देव लोकानुग्रहकारक ॥ यज्ञभागं गृहाण त्वं वासुदेव नमोस्तु ते ॥ ६१ ॥ आवाह्य तत्र विधिवदुपचारैर्यथोदितैः ॥ कर्णिकायां यथास्थानं यजेदङ्गानि पूर्ववत् ॥ ६२ ॥ केशरेषु यजेत्पश्चान्मन्त्रवर्णान्यथोदितान् ॥ दिक्पत्रेष्वर्चयेद्वासुदेवं सङ्कर्षणं तथा ॥ ६३ ॥ प्रद्युम्नमनिरुद्धं च कम्ब्वब्जारिगदाधरान् ॥ गौरहारिद्र-कृष्णाख्यशुक्लनीलनिभान्क्रमात ॥ ६४ ॥ शान्तिं क्षिप्रां भारतीं च शक्तिं कोणेषु पूजयेत ॥ शुक्लस्वर्णपयःश्यामसङ्काशाश्चारुभूषणाः ॥ ६५ ॥ अब्जं चक्रं दरं चैव गदां पीताम्बरं तथा ॥ अर्चेन्मुसलखड्गौ च वनमालां दलाग्रतः ॥ ६६ ॥ भूपुरे प्रागिमे पूज्याः खगः कृष्णोरुणो विराट् ॥ अतः शङ्खनिधिः पद्मनिधी रक्तोथ रक्तभाक् ॥ ६७ ॥ ईच्छयामो बाण-दुर्गो विष्वक्सेनो निशानिभः ॥ आग्नेयादिदलेष्वेते पूज्याश्चाग्रे दिगीश्वराः ॥ ६८ ॥ तदग्रे हेतयश्चेति षडावरणपूजनम् ॥ नारायणस्य गायत्रीं ब्रवीम्येकमनाः श्रुणु ॥ ६९ ॥ नारायणाय विद्महे वासुदेवाय धीमहि ॥ तन्नो विष्णुः प्रचोदयात् ॥ ७० ॥ क्षत्रियादेस्तु संस्कारं प्रवत्कुर्य्यात्तथा-नया ॥ योग्यः स्याद्विष्णुदीक्षायां द्विजवत्पापवर्जितः ॥ ७१ ॥ दन्तलक्षं

जपेन्मन्त्रं त्रिमध्वक्तैः सरोरुहैः ॥ जुहुयात्तर्पयेत्कृष्णचन्द्रं च केशराम्बुभिः ॥ ७२ ॥ मार्ज्जनान्ते सदाचारान्भोजयेद्वैष्णवान्द्विजान् ॥ एवं सिद्धमनुर्मन्त्री प्रयोगन्तु समाचरेत् ॥७३॥ सायुधाष्टभुजं सौम्यं सर्वाङ्गधवलद्युतिम् ॥ सम्मुखीकरणे ध्यायेद्विष्णुं गरुडगामिनम् ॥ ७४ ॥ एवमेव हरिं ध्यायेद्रोगः संसारकर्मभिः ॥ दधिमध्वाज्ययुक्ताश्च चतुरंगुलसम्मिताः ॥ गुडूचीरयुतं हुत्वा मृत्युमेवातितर्ज्जयेत् ॥ ७५ ॥ शनैश्चरदिनेश्वत्थं सम्यगालभ्य पाणिना ॥ जपेदष्टोत्तरशतं स भवेदपमृत्युजित् ॥ ७६ ॥ पञ्चविंशमितं जप्त्वा मन्त्री शुद्धाः पिबेदपः ॥ निरस्तपातको भूत्वा नीरोगो ज्ञानवान्भवेत् ॥ ॥ ७७ ॥ जप्त्वायुतं च कुम्भाद्भिः सेचनं सर्वरोगनुत् ॥ जपित्वा यस्तु भुञ्जानो धीमानारोग्यवान्भवेत् ॥ ७८ ॥ चन्द्रसूर्य्योपरागे तु त्रिदिनं दिनमेव च ॥ उपोष्याष्टसहस्रन्तु स्पृष्ट्वा शालीन्घृतं जपेत् ॥ यः पिबेल्लभते मेधां कविताबोधनं च सः ॥ ७९ ॥ बिल्वैरयुतहोमेन सद्यो धनपतिर्भवेत् ॥ पद्मतन्तुमयं सूत्रमयुतेनाभिमन्त्रितम् ॥ धारयेद्दक्षिणे हस्ते सर्वतः स्यात्सुरक्षितः ॥ ८० ॥ एवं सङ्क्षेपतः प्रोक्तमन्ते मन्त्राष्टकं शृणु ॥ एते ह्यष्टौ मन्त्रवर्णा मन्त्राष्टकमुदीर्य्यते ॥८१॥ छन्दर्षिदेवताश्चैषां ध्यानाद्यं च वदामि ते ॥ गौतमोथ भरद्वाजो विश्वामित्रः क्रमेण च ॥ जमदग्निर्वशिष्ठश्च कश्यपोत्रिर्वटोद्भवः ॥ ८२ ॥ गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥ त्रिष्टुप् च जगती चैव विराट् छन्दांस्यनुक्रमात् ॥ ८३ ॥ धरा ध्रुवस्तथा सोम आपोग्निर्वायुरेव च ॥ प्रत्यूषश्च प्रभासश्च विज्ञेया देवताः क्रमात् ॥ ८४ ॥ अग्निर्भूर्वायुराकाश आदित्यो द्यौर्विधुश्च ते ॥ तत्त्वानि सप्तलोकास्तु क्षेत्राणि खचरात्मकाः ॥ ८५ ॥ शुक्लं हिरण्मयं कृष्णं रक्तं कुंकुमसन्निभम् ॥ पद्मकिञ्जल्कनीलाभं रक्तवर्णाष्टको मतः ॥ ८६ ॥ षडाद्ययोरुदात्तः स्यात्स्वरितस्तु द्वितीययोः ॥ प्रचयस्त्रिचतुर्वर्णैर्निहतं पञ्चमाक्षरम् ॥ ८७ ॥ उदात्तं सतमं चेति ज्ञात्वा वेदं जपेन्मनुम् ॥ दधच्चक्रं गदां पद्मं दरं दक्षिणवामयोः ॥ सान्तराः स्युः शंखचक्रगदापद्मकराः क्रमात् ॥ ८८ ॥ यां मूर्तिं पूजयेत्पूर्वमन्यास्तस्या भवन्ति हि ॥ अङ्गान्यन्तिमपत्रे तु

मध्यस्थं पुनरर्चयेत् ॥ ८९ ॥ तत्र प्रणवपूजायां चाङ्गावृत्तिस्तथादिमा ॥ द्वितीयावरणं प्रोक्तमन्त्रवर्णाष्टमूर्त्तिभिः ॥ ९० ॥ वासुदेवादिकैः शान्त्यादिसंयुक्तैस्तृतीयकम् ॥ तृतीयेष्टदले प्रोक्ता रतिश्चापि धृतिस्तथा ॥ ९१ ॥ कान्तिस्तुष्टिश्च पुष्टिश्च स्मृतिर्दीप्त्याख्यकीर्त्तयः ॥ वज्रादिभिश्चतुर्थी स्यात्प्राग्वत्षष्ठी सपञ्चमी ॥ ९२ ॥ मोकारावृत्तिपूजायां तृष्णावृत्तिचतुष्टयम् ॥ नाकारावृत्तिपूजायामावृत्तित्रयपूजने ॥ ९३ ॥ राकारावृत्तिपूजायां तुल्यमेवावृतिद्वयम् ॥ तृतीयावरणे पूज्या श्रीर्माया च मनोन्मनी ॥ ९४ ॥ ह्रीर्मोहिनी महामाया रमाद्या आवृतित्रयम् ॥ यवर्णमूर्तिपूजायान्तुल्यमेवावृतिद्वयम् ॥ ९५ ॥ तृतीयावरणे चक्रं शंखश्चापि गदा हलः ॥ शार्ङ्गं च मुसलं खड्गस्त्रिशूलमिति पूजनम् ॥ शोकारमूर्त्तिपूजायां प्राग्वदावरणद्वयम् ॥ ॥ ९६ ॥ तृतीयेष्टदलेऽनन्तो वासुकिस्तक्षकस्तथा ॥ कर्कोटकस्तथा पद्मो महापद्मस्ततः परम् ॥ शंखपालश्च कुलिकः प्रोक्तमत्रावृतिद्वयम् ॥ ९७ ॥ यकारमूर्तिपूजायामङ्गैस्स्यात्प्रथमावृतिः ॥ वासुदेवादिभिः शान्त्यादियुक्तैरमया मता ॥ ९८ ॥ तृतीयार्कदले कोणे वाद्यांश्चैव प्रपूजयेत् ॥ चतुर्थ्यामष्टपत्रे तु वज्रादीनां समर्चनम् ॥ ९९ ॥ पञ्चम्यां दिग्दलेष्वर्च्या मत्स्याद्या ह्यवतारकाः ॥ षष्ठ्यामिन्द्रादिकाश्चाग्रे तदस्त्राणीति पूजनम् ॥ १०० ॥ जपेत्षोडशलक्षाणि हुनेदत्र तु पूर्ववत् ॥ इह लोके सुखं प्राप्य विष्णुसायुज्यमाप्नुयात् ॥ १०१ ॥ अथान्यं मुक्तिदं वक्ष्ये नारायणमनुं परम् ॥ नारायणस्य चरणौ शरणं च ततो वदेत्॥ १०२॥ प्रपद्ये तारमुच्चार्य्य श्रीमन्नारायणाय च ॥ नमो जिनार्णको मन्त्रो मुन्याद्यं पूर्ववन्मतम्॥ १०३॥ षड्दीर्घयुक्तकामेन षडङ्गविधिरस्य तु ॥ ध्यानपूजाप्रयोगादि पूर्ववत्परिकीर्त्तितम् ॥ १०४॥ अथातः सम्प्रवक्ष्यामि माधवस्य महामनुम् ॥ क्षिप्रसिद्धिकरः काश्यां यद्वासौ ध्रुवपूर्वकः ॥ १०५ ॥ रमां बिन्दुपदं चोक्त्वा माधवाय नमो नमः ॥ द्वादशार्णो महामन्त्रः पञ्चाङ्गानि क्रमात्पदैः ॥ १०६ ॥ शंखचक्रगदापद्मधरं पीताम्बरावृतम् ॥ बद्धाञ्जली रमा वामे वादयन्ती च वल्लकीम्॥ ॥ १०७ ॥ नारदस्तुम्बुरुर्दक्षभागे तैरपि संयुतम् ॥ प्रसन्नवदनं ध्यायेद्वर-

दानसमुद्यतम् ॥१०८॥ पूर्वोक्ते पूजयेत्पीठे मध्ये लक्ष्म्या समावृतम् ॥पञ्चाङ्गपूर्वमभ्यर्च्य यजेदष्टदले क्रमात् ॥ १०९ ॥ किरणां धूतपापां च यमुनां च सरस्वतीम् ॥ गङ्गामसीं च वरुणां गण्डकीं च दलाष्टके ॥ ११० ॥ विदुरं नारदं भीष्मं दिवोदासार्जुनौ बलिम् ॥ विभीषणं च प्रह्लादं बाह्ये षोडशपत्रके ॥ १११ ॥ मोदं प्रमोदं सुमुखं दुर्मुखं गणनायकम् ॥ ढुण्ढिराजं विशालाक्षं ढुण्ढिभैरवमीश्वरम् ॥११२॥ साम्बादित्यं योगिनीं च दण्डपाणिं विनायकम् ॥ जैनेन्द्रं च महामायं भूपुरे दिक्पतीनपि ॥ ११३ ॥ दन्तलक्षं जपेन्मन्त्रं होमं प्राग्वत्समाचरेत ॥ शान्त्यादिगुणसम्पन्नो ध्यवनान्मुक्तिभाग्भवेत् ॥ ११४ ॥ अथातः सम्प्रवक्ष्यामि गोविन्दस्य परं मनुम् ॥ गोविन्दाय नमश्चेति षडर्णो मनुरीरितः ॥ ११५ ॥ शौनकोस्य मुनिश्छन्दो विराड्गोविन्द ईश्वरः ॥ षडङ्गं मन्त्रवर्णैः स्यात्सर्वेण व्यापकं चरेत् ॥ ११६ ॥ शंखचक्रगदापद्मधरं ध्यायेत्किरीटिनम् ॥ गरुडोपरि संस्थं च सनकाद्यैरुपासितम् ॥ ११७ ॥ लक्ष्मीधराभ्यां सहितमुद्यदादित्यकुण्डलम् ॥ लोकरक्षाकरं दिव्यं दिव्यमाल्यानुलेपनम् ॥ ११८ ॥ पूर्वोदिते यजेत्पीठे वैष्णवेनोक्तवर्त्मना ॥ देवमावाह्य मन्त्राङ्गैः प्रथमावृतिरीरिता ॥ ११९ ॥ चक्राद्यैश्च द्वितीया स्यात्तृतीया सनकादिभिः ॥ सनकः स्यात्ततोप्यग्रे सनन्दनसनातनौ ॥ १२० ॥ सनत्कुमारश्च पराशरो व्यासश्च नारदः ॥ शौनकोष्टम एव स्याच्चतुर्थी लोकपालकैः ॥ १२१ ॥ तदायुधैः पञ्चमी स्यादेवं पूजा समीरिता ॥ लक्षमेकं जपेन्मन्त्रं तद्दशांशं हुनेद् घृतैः ॥ १२२ ॥ तर्पणं मार्जनं कुर्याद्ब्राह्मणानपि भोजयेत् ॥ एवं कृतप्रयोगस्य रोगनाशो भविष्यति ॥ १२३॥ कन्यार्थी लाजहोमेन लक्ष्म्यर्थी बिल्वहोमतः॥वस्त्रार्थी पुष्पहोमेन आरोग्यार्थी तिलैर्हुनेत्॥१२४॥रविवारे जले स्थित्वा नाभिमात्रे जपेद्बुधः ॥ अष्टोत्तरसहस्राणि ज्वरनाशो भवेद्ध्रुवम् ॥१२५॥ विवाहार्थं जपेन्मासं शशिमण्डलसन्निभम् ॥ ध्यायेल्लभेद्रमां[1] कन्यां कुलीनां च कुटुम्बिनीम् ॥१२६॥ अथातः सम्प्रवक्ष्यामि विष्णुमन्त्रं महाद्भुतम् ॥ विष्णवे नम इत्येष मन्त्रः पंचाक्षरो मतः ॥ १२७ ॥ नारदोस्य मुनिश्छन्दो गायत्री विष्णुरीश्वरः ॥

१ रमयतीति रमा ताम् सुन्दरीमिति यावत् ॥

पञ्चवर्णैः समस्तेन षडङ्गविधिरीरितः ॥ १२८ ॥ शंखचक्रगदापद्मधरं लक्ष्मीसमावृतम् ॥ पीताम्बरं घनश्यामं ध्यायेत्तं भूषणान्वितम् ॥ १२९ ॥ पूर्वोक्ते च यजेत्पीठे षट्कोणाष्टदलान्विते॥बलिं विभीषणं भीष्मं प्रह्लादं नारदार्जुनौ ॥ १३० ॥ षड्दले चाष्टपत्रे तु विदिक्षु सनकादिकान् ॥ एवं शीलं सुशीलं च जयं च विजयं दिशि ॥ भूपुरे दिक्पतीनिष्ट्वा तदस्त्राणि ततो बहिः ॥ १३१ ॥ पंचलक्षं जपेन्मन्त्रं त्रिमध्वक्तैस्तिलैर्हुनेत् ॥ तर्प्पणैर्मार्जनैर्विप्रभोजनैराशु सिद्ध्यति ॥ १३२ ॥ अनेन लक्षपद्मानि शान्तिकामः समर्चयेत् ॥ न कदाचिद्दरिद्रः स्याद्दूर्वाभिः स्यादरोगता ॥१३३॥ रक्तैर्हयारिकुसुमै राजानं वशमानयेत् ॥ चम्पकैः श्रियमाप्नोति मालत्यापि सुखी भवेत् ॥१३४॥ तुलसीमञ्जरीभिस्तु सर्वकामानवाप्नुयात् ॥ केतक्या जायते कामो ह्यमरो जायते नरः ॥ पारिजातैस्तु सौन्दर्य्यं नातः परतरो मनुः ॥ १३५ ॥ अथातः सम्प्रवक्ष्यामि मधुसूदनसन्मनुम् ॥ तारो नमो भगवते ङेन्तश्च मधुसूदनः ॥ १३६ ॥ त्रयोदशाक्षरो मन्त्रो मुनिर्ब्रह्मा समीरितः ॥ छन्दोनुष्टुब्देवता तु भगवान्मधुसूदनः ॥ १३७ ॥ पदैर्मन्त्रस्य सर्वेण पञ्चाङ्गविधिरीतः ॥ शेषतल्पप्रसुप्तं तु लक्ष्मीसंवाहितांघ्रिकम् ॥ १३८ ॥ नाभिपद्मस्थितविधिं शंखचक्रगदाधरम् ॥ पीताम्बरं घनश्यामं मधुकैटभमारकम् ॥ १३९ ॥ कर्णिकायां यजेद्विष्णुं बहिरष्टदलेर्चयेत् ॥ योगनिद्रां महामायां कालरात्रिं च कालिकाम् ॥ १४० ॥ महारात्रिं मोहरात्रिं महाविद्यां च मोहिनीम् ॥ एवं सम्पूज्य देवेशं जपेल्लक्षचतुष्टयम् ॥ १४१ ॥ पद्मैर्हुनेत्त्रिमधुराप्लुतैस्तस्य दशांशतः॥तर्प्पणं मार्जनं कुर्यान्मन्त्रसिद्धिः प्रजायते ॥ १४२ ॥ आम्रपुष्पैर्गोघृताक्तैर्हुत्वा भोगमवाप्नुयात्॥पलाशकुसुमैर्हुत्वा शत्रूणां स्तम्भयेद्बलम्॥१४३॥ अथार्कैः शोकनाशः स्यात्सिन्दूरैर्वश्यता भवेत्॥मालत्या चातुला लक्ष्मीरन्यत्पूर्ववदेवतु ॥१४४॥ अथातः सम्प्रवक्ष्यामि मन्त्रं त्रैविक्रमं परम् ॥ तारं नमो भगवते व्याहृतित्रितयं वदेत् ॥ १४५ ॥ व्यापकाय पदं पश्चान्ङेन्तं चापि त्रिविक्रमम् ॥ १४६ ॥ विंशत्यर्णो महामन्त्रो गतराज्यप्रदायकः ॥ पदपञ्चकसर्वेण षडङ्गविधिरीरितः ॥ १४७ ॥ मुनयो वालखिल्याः स्युश्छन्दो

गायत्रमीरितम् ॥ देवता विश्वरूपोस्य त्रिविक्रम उदाहृतः ॥ १४८ ॥ दक्षांघ्रिव्याप्तपातालं वामांघ्रिव्याप्तभूतलम् ॥ दक्षिणं पुनरुत्थाप्य स्वर्गव्याप्तकरं हरिम् ॥१४९॥ बलिदत्तैः कुशतिलैस्तोयैः सम्प्रस्रवत्करम्॥ अभयं वामहस्तेन कुर्वन्तं च सुरेश्वरम् ॥ गङ्गौघधौतपादाब्जं ध्यायेद्ब्रह्मादिकैः स्तुतम् ॥ १५० ॥ वैष्णवे च यजेत्पीठे दलेष्वष्टसु च क्रमात् ॥ बलिं विधिं च प्रह्लादं कश्यपं चादितिं शिवम् ॥ लक्ष्मीं भुवं भूपुरे तु दिगीशानायुधानि च ॥ १५१ ॥ विंशल्लक्षं जपेन्मन्त्रं तिलतण्डुलसर्षपैः ॥ त्रिमध्वक्तैर्हुनेत्पश्चात्तर्प्पणाद्यं च कारयेत् ॥ १५२ ॥ एवं सिद्धमनुर्मन्त्री लभते वाञ्छितं फलम् ॥ १५३ ॥ अथातः सम्प्रवक्ष्यामि वामनस्य मनुं परम् ॥ तारो नमो भगवते बलिसर्वस्वहारिणे ॥ १५४ ॥ अमुकं देहि ममाभीष्टमनेकं च वामन ॥ मायां रमां समुच्चार्य्य मन्त्रो द्वात्रिंशदर्णकः ॥ ॥ १५५ ॥ कामो मुनिरनुष्टुप् च छन्दो देवस्तु वामनः ॥ सप्ताष्टार्कत्रिभूचन्द्रैः षडङ्गविधिरीरितः॥ १५६ ॥प्रगृह्णन्तं बलिं चार्थान्हर्षेण ददतं बलिम्॥ पूर्णकामावुभौ ध्यायेदिति प्रीतिसमन्वितौ ॥ १५७ ॥ पूर्वोक्तमर्चनन्तत्रं कोटिमात्रं जपेन्मनुम् ॥ लक्षं हुनेद्बिल्वफलैर्मधुरत्रयसंयुतैः ॥ १५८ ॥ तर्प्पणं मार्जनं कृत्वा तथा ब्राह्मणभोजनम् ॥ तद्दशांशं च मन्त्रस्य सिद्धिः स्यात्स्थापनाशिका ॥ १५९ ॥ एवं सिद्धमनुर्मन्त्री ध्यायन्देवं जपेन्मनुम् ॥ साध्ये ददतमिष्टार्थं ध्यात्वा वर्णमितं जपेत् ॥ भावयेद्वाञ्छितं स्वार्थं स दद्यान्नात्र संशयः ॥ १६० ॥ अहोरात्रं जपेद्वापि स देवादर्थदा भवेत् ॥ प्रातस्तदा स्वयं मन्त्रं साधकाय प्रयच्छति ॥ १६१ ॥ दद्यादभीष्टं ललिताप्यन्यदेवस्य का कथा ॥ अथातः सम्प्रवक्ष्यामि श्रीधरस्य मनुं परम् ॥ रमां शक्तिं कामबीजं श्रीधराय ततो वदेत् ॥ १६२ ॥ त्रैलोक्यमोहनायेति नमोन्तः षोडशाक्षरः ॥ ऋषिर्ब्रह्मा भवेच्छन्दो गायत्रं श्रीधरस्सुरः ॥ १६३ ॥ श्रीबीजेन षडङ्गानि कुर्य्यात्षड्दीर्घसंयुजा ॥ दुग्धाब्धौ च सिते द्वीपे सर्वर्त्तुफलितद्रुमे ॥ १६४ ॥ तत्र कल्पद्रुमाधस्तात्पक्षीन्द्रराचितासने ॥ शङ्खचक्रगदापद्मपाणिं चामीकरद्युतिम् ॥ १६५ ॥ किरीटिनं कुण्डलिनं श्रीवत्सांकि-

तवक्षसम् ॥ हृदि लक्ष्मीधरं ध्यायेच्छ्रीधरं पुरुषार्थदम् ॥ १६६ ॥ यजेच्च-वैष्णवे पीठे कर्णिकायां सुरेश्वरम् ॥ षडङ्गानि यजेत्तत्र देवाङ्गेषु ततो यजेत् ॥ ॥ १६७ ॥ वक्षस्स्थले दक्षभागे श्रीवत्सायेति पूजयेत् ॥ वामे च कौस्तुभायेति ग्रीवायां पूजयेत्ततः ॥ १६८ ॥ नमोन्तं वनमालायै मुकुटायेति संयजेत् ॥ भाले च कर्णिकायां च पक्षिराजाय वै नमः ॥ १६९ ॥ नमः पंकजनाभाय गरुडायेति पूजयेत् ॥ पुरुषोत्तमकं लक्ष्मीनिवासं तदनन्तरम् ॥ ॥ १७० ॥ सकलश्च जगन्नाथं जगत्क्षोभणमेव च ॥ सर्वस्त्रीहृदयोन्मादं मदोन्मादकमेवच ॥ १७१ ॥ सर्वसौभाग्यदं सर्वकामदं च प्रपूजयेत् ॥ तदुत्सङ्गगतां देवीं पूजयेच्छ्रीं श्रियै नमः ॥ १७२ ॥ लोकेश्वरांश्च वज्रादीन्भूपुरे परिपूजयेत् ॥ लक्षमेकं जपेन्मन्त्रं तद्दशांशं घृतैर्हुनेत् ॥ १७३ ॥ तर्प्पणादि ततः कुर्य्यात्पूर्ववत्साधकोत्तमः ॥ ततः सिद्धमनुर्मन्त्री काम्यकर्म समाचरेत् ॥ ॥ १७४ ॥ गन्धैश्च शतपुष्पैश्च होमो लक्ष्मीकरः परः ॥ वराहोक्तान्प्रयोगांश्च विदध्यादत्र साधकः ॥ भजते श्रीधरं यस्तु स च लोकद्वये सुखी ॥ १७३ ॥ अथातः सम्प्रवक्ष्यामि हृषीकेशस्य सन्मनुम् ॥ कामबीजं हृषीकेशो ङेहृदन्तो गजाक्षरः ॥ १७६ ॥ छन्दोनुष्टुबृषिर्ब्रह्मा हृषीकेशश्च देवता ॥ षड्दीर्घयुक्तकामेन षडङ्गविधिरीरितिः ॥ १७७ ॥ शंखचक्रगदापद्मधारिणं संस्मरेद्विभुम् ॥ गरुडोपरि संविष्टं शुभ्रवर्णं सुभूषणम् ॥ १७८ ॥ श्रीधरोक्ते यजेत्पीठे ह्यङ्गाद्यावरणान्वितम् ॥ अष्टलक्षं जपेन्मन्त्रं तद्दशांशं हुनेत्पुनः ॥ आज्याक्तैः कमलैः पूर्णैस्तर्प्पणादि ततश्चरेत् ॥ १७९ ॥ एवं सिद्धमनुर्मन्त्री प्रयोगान्पूर्ववच्चरेत् ॥ विजयायाः प्रसूनैश्च तर्प्पणं सर्वकामदम् ॥ ॥ १८० ॥ अथ मन्त्रान्तरं वक्ष्ये श्लोकरूपं महाफलम् ॥ यज्जपादेव सिध्यन्ति साधकाभीष्टकोटयः ॥ १८१ ॥ स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च ॥ रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसंघाः ॥ १८२ ॥ अर्ज्जुनोस्य मुनिः प्रोक्तोनुष्टुप् छन्दश्च देवता ॥ हृषीकेशोखिलं सर्वं ज्ञेयं वै पूर्वमन्त्रवत् ॥ १८३ ॥ षड्दीर्घयुक्तबीजेन षडङ्गविधिरीरितः ॥ प्रलयाब्धौ शेषतल्पे लक्ष्मीसंवाहितांघ्रिकम् ॥ १८४ ॥

नाभिपुष्करसंस्थेन धात्रा स्तुतमरिन्दमम् ॥ पद्मं कौमोदकीं हस्तैर्दधतं दीप्तते जसम् ॥ १८५ ॥ पीताम्बरधरं श्याममर्धोन्मीलितलोचनम् ॥ ध्यात्वार्चयेच्छ्रीधरोक्तपीठे तद्वज्जपादिकम् ॥ १८६ ॥ प्रयोगांश्च विजानीयात्पद्मनाभार्चनं त्विति ॥ १८७ ॥ अथातः सम्प्रवक्ष्यामि दामोदरमनुं परम् ॥ राधादामोदरायेति कामबीजेन सम्पुटः ॥ नवाक्षरो महामन्त्रो भोगभाजां सुसिद्धिदः॥ १८८॥ कामदेवो मुनिश्छन्दो गायत्रं देवता मतः॥ राधादामोदरः साक्षाद्भुक्तिमुक्तिफलप्रदः ॥ १८९ ॥ पीताम्बरधरं श्यामं नानालंकारभूषितम् ॥ वामोत्सङ्गगतां राधां चालिङ्गन्तं मुदान्वितम् ॥ १९० ॥ उद्याने संस्मरेद्देवं नानापुष्पलतायुतम् ॥ षडङ्गं कामबीजेन यजेद्देवं सशक्तिकम् ॥ १९१ ॥ कर्णिकायां केशरेषु गौर्य्याद्या मातृका यजेत् ॥ ब्रह्मादिकान्पद्ममध्ये पत्राग्रे तु ह्रियं रतिम् ॥ १९२॥ पञ्चकामान्वसन्तं च तद्बाह्ये भूपुरेऽर्चयेत् ॥ दिगीशांश्चापि वज्रादीनेवं पूजा समीरिता ॥ १९३ ॥ नवलक्षं जपेन्मन्त्रं तण्डुलं सघृतं हुनेत् ॥ तर्पणं मार्जनं कृत्वा दम्पत्योर्भोजनं चरेत् ॥ १९४ ॥ एकलक्षादिपंचान्तं कार्य्यलाघवगौरवात् ॥ पुरश्चरणवत्कुर्याज्जपाद्यं कार्य्यसिद्धये॥ १९५॥ चतुर्ष्वपि युगेष्वेतत्समोद्भुतफलो न हि ॥ अथातः सम्प्रवक्ष्यामि संकर्षणमनुं परम् ॥ १९६॥ कामबीजं समुचार्य्य ङेन्तन्त्रैलोक्यमोहनम्॥ ततश्चाप्रतिरूपाय पराय च वदेत्पदम् ॥ १९७॥ संकर्षणात्मने हृच्च पञ्चविंशाक्षरो मनुः॥ त्रैमुनिस्तु मुनिश्छन्दो मितं संकर्षणः सुरः॥ १९८॥ षड्भिः पदैः षडङ्गानि तथांगुष्ठादिषु न्यसेत् ॥ अंकुशं दक्षिणे हस्ते वामेनाभयमेव च ॥ १९९॥ मेघश्यामं पीतवासो नानाभरणसंयुतम् ॥ नारदादियुतं ध्यायेद्वाणीलक्ष्म्यौ च पार्श्वयोः ॥ २००॥ सुवर्णमध्ये विपिने स्थितं कल्पद्रुमावृतेः ॥ यजेच्च वैष्णवे पीठे नवलक्षं जपेन्मनुम्॥ २०१॥ हुनेत्तिलैस्त्रिमधुराप्लुतैः स्यात्तर्प्पणादिकम् ॥ २०२ ॥ एवं सिद्धमनुर्मन्त्री दूर्वाखण्डायुतं हुनेत्॥ समस्तरोगनाशस्तु लक्ष्मीः पद्माक्षहोमतः॥ २०३॥ आकर्षणं बिल्वफलैस्ताम्बूलैः स्याद्वशीकृतिः॥ दीर्घायुष्यं गोघृतेन महिषेणापि मन्मथः ॥ २०४ ॥ पुत्रजीवकबीजानां घृताक्तानां च होमतः॥ वन्ध्यापि लभते पुत्रं होमसंख्यायुतादिकम्॥ २०५॥

अथातः सम्प्रवक्ष्यामि वासुदेवमनुं परम्॥ तारो नमो भगवते वासुदेवायसंस्मृतः॥ ॥२०६॥ द्वादशार्णस्तु गायत्री छन्दश्चास्य प्रजापतिः ॥ मुनिर्देवो वासुदेवः पञ्चाङ्गविधिरीरितः ॥२०७॥ पदैः समस्तैस्तु तथा द्वादशाङ्गं ततो न्यसेत्॥ स्तनयोर्हृदये पृष्ठे बाह्वोरूर्वोश्च जानुनोः॥पादयोस्तु मनोर्वर्णान्न्यसेद्बिन्दूनमोन्तकान्॥२०८॥ मन्त्रं सम्पूर्णमेवं तु यथास्थाने न्यसेद्बुधः ॥ त्रिशस्तारत्रिपुटितमूलेन व्यापकं चरेत् ॥ २०९ ॥ मन्त्रार्णैस्त्रिविधं न्यासं न्यसेन्मन्त्री ततः परम् ॥ कपोलकर्णदृक्कण्ठदोर्हृज्जठरनाभिषु ॥ २१० ॥ लिङ्गजान्वंघ्रिषु प्रोक्तः सृष्टिन्यासस्तु मन्त्रिभिः ॥ हृदादिकोयं शीर्षान्तः स्थितिन्यास उदाहृतः ॥ २११॥ पादावारभ्य शीर्षान्तो न्यासः संहारसञ्ज्ञकः ॥ एष क्रमो यतीनां तु व्यस्ततो ब्रह्मचारिणाम् ॥ २१२ ॥ संहारसृष्टिस्थितयो ग्रहस्थानां प्रकीर्तिताः॥संहृतां दोषसंहारः सृष्टौ च शुभ सृष्टयः॥स्थितौ च शान्तिविन्यासः स स्यात्कार्यस्त्रिधा बुधैः ॥२१३॥ जीवतत्त्वात्मने प्रोच्य पुरुषाय नमश्च के॥प्राणतत्त्वात्मने भाले सर्वगाय नमो न्यसेत् ॥ बुद्धितत्त्वात्मनेच्युताय नमो नेत्रयोर्न्यसेत् ॥२१४॥ चित्ततत्त्वात्मने वासुदेवाय च नमो मुखे ॥ कर्णे हृत्पद्मतत्त्वाय वदेत्संकर्षणाय च॥२१५॥नमोन्यसेदथो दक्षभुजे सूर्यकलात्मने॥ सूर्यमण्डलतत्त्वाय प्रद्युम्नाय ततो न्यसेत् ॥ ततो न्यसेद्वामबाहौ तत्षोडशकलात्मने ॥ २१६ ॥ चन्द्रमण्डलतत्त्वानिरुद्धाय हृदि न्यसेत् ॥ न्यसेत्ततश्च हृदये मध्यदेशे कलात्मने ॥ अग्निमण्डलतत्त्वाय ङे[illegible] वा नारायणो मतः ॥ २१७ ॥ कुक्षौ न्यस्येद्वासुदेवं तत्त्वश्च ब्रह्मणे न[illegible]ः ॥ संकर्षणाख्यतत्त्वाय लिङ्गे स्याद्विष्णवे नमः ॥ २१८ ॥ ततः [illegible] प्रद्युम्नतत्त्वाय नृसिंहाय नमो न्यसेत्॥दक्षपादे च वामेनिरुद्धतत्त्वात्म[illegible]नेत्॥२१९॥वाराहाय नमश्चेति तत्त्वन्यास उदाहृतः ॥ मूर्त्तिर्ध्यानमुच्यते ॥ दुग्धाम्भोधौ सितद्वीपे दिव्ययोषाविराजिते ॥ २२१ तु पङ्कजम् ॥२२२॥ स्वर्णाभं चिन्तयेत्तत्र वासुदेवं स्मिताननम्॥चन्द्रक

नामानं केशवादिकमाचरेत्॥ ॥ २२० ॥ न्यासं ततो वासुदेवं ध्यायेन् ॥ तत्रास्तेसौ महारम्ये सर्वर्तुद्रुमसंकुले ॥ तत्र कल्पद्रुमाधस्ताद्रत्नमंचे ॥न्ति शंखचक्रगदापद्मलसत्करम्॥२२३॥

श्रीवत्साङ्गदकेयूरमुकुटं चारुकुण्डलम् ॥ सकौस्तुभं पीतवस्त्रं धृतग्रैवेयकंकणम् ॥ २२४ ॥ सनकाद्यैः सिद्धविद्याधरगन्धर्वसेवितम् ॥ यजेन्नारायणे पीठे मूर्त्तिं मूलेन कल्पयेत् ॥ २२५ ॥ पूर्वमङ्गानि सम्पूज्य वासुदेवादिहेतयः ॥ दिग्विदिक्षु च सम्पूज्यास्ततो द्वादशमूर्तयः ॥ केशवाद्याः समभ्यर्च्य लोकेशा आयुधैः सह ॥ एवं सम्पूज्य विधिवज्जपेद्द्वादशलक्षकम् ॥ तत्सहस्रं च कमलैर्जुहुयान्मधुरप्लुतैः ॥ २२६ ॥ तदभावे तिलैः शुद्धैर्जुहुयादाज्यसंप्लुतैः ॥ तर्प्पणादि ततः कृत्वा प्रयोगानाचरेत्तथा ॥ क्षीरवृक्षसमिद्भिश्च होमः स्यात्पापमुक्तये ॥२२७॥ दुग्धकाष्ठैः शमीमिश्रैः सहस्राण्ययुतानिच ॥ आज्येन हविषो होमाच्चित्तशुद्धिः प्रजायते ॥ पायसेन तिलैः शुद्धैः समिदाज्यैः सशालिभिः ॥ पृथगष्टसहस्राणि हुत्वाभीष्टमवाप्नुयात् ॥ नारायणोक्तान्निखिलान्प्रयोगानाचरेत्ततः ॥ २२८ ॥ अथातः सम्प्रवक्ष्यामि वासुदेवमनुं परम् ॥ तारं मायाद्वयं लक्ष्मीद्वयं लक्ष्मीपदं वदेत् ॥ २२९ ॥ वासुदेवाय हृदयं शक्रवर्णः स्मृतो मनुः ॥ ऋषिः प्रजापतिश्छन्दो गायत्री बीजकं ध्रुवः ॥२३०॥ देवो लक्ष्मीर्वासुदेवः शक्तिर्देवी प्रकीर्त्तिता द्विद्विद्वीषुद्विभिर्वर्णैस्ताराद्यैरङ्गकल्पनम् ॥२३१॥ उद्यत्सौदामिनीकान्ति नानाभूषणभूषितम् ॥ लक्ष्म्यालिङ्गनतश्चैकीभूतं चाङ्कगतां हि ताम्[1] ॥ ॥ २३२ ॥ पुस्तकं दर्प्पणं पद्मं रत्नकुंभं रमां करैः ॥ दधतीं शंखचक्राब्जगदाहस्तं गदाधरम् ॥२३३॥ द्वादशाक्षरवत्पूजा शक्रलक्षं जपो मतः ॥ दशांशं पङ्कजैर्होमो मधुरत्रयसंयुतैः ॥ २३४ ॥ पायसेन कृतो होमो लक्ष्मीवश्यप्रदो भवेत् ॥ मधुराक्तैस्तिलैर्हुत्वा सर्वकार्याणि साधयेत् ॥ २३५ ॥ अथातः सम्प्रवक्ष्यामि प्रद्युम्नमनुमद्भुतम् ॥ क्लीं प्रद्युम्नाय हृदयं मनुः सप्ताक्षरो मतः ॥ २३६ ॥ कामो मुनिर्विराट् छन्दः प्रद्युम्नश्चास्य देवता ॥ नियोगः समरे जेतुं कामयुद्धे तथा स्त्रियाः ॥ २३७ ॥ ध्यायेन्मधुवने देवं सर्वर्तुकुसुमावृते ॥ आलिङ्गितं प्रभावत्या नानारूपं सुभूषितम् ॥ २३८ ॥ शरचापधरं कान्तं कान्ताभिरपि वीक्षितम् ॥ गन्धर्वैरभितो गीतं प्रसन्नमुखपंक-

१ पश्यन्तामिति शेषः ॥

जम् ॥ २३९ ॥ यजेत्पूर्वोदिते कामपीठे मन्त्रायुतं जपेत् ॥ शरत्काले वसन्ते वा दिनानामेकविंशतिम् ॥ २४० ॥ आद्यन्तयोः पूजनं स्याद्भोजयेद्दम्पतीयुगम् ॥ एवं सिध्यति मन्त्रोयं सर्वाभीष्टप्रदायकः ॥ २४१ ॥ सहस्रादिक कोटयन्तं होमः कार्य्यो वशो भवेत् ॥ यक्षिण्यो वशगाश्चैव वश्यः स्याद्योगिनीगणः ॥ २४२ ॥ राजिकाभिः स्त्रियो वश्याः सर्प्पाः स्युर्गारुडीदलैः ॥ विप्राः पलाशकुसुमैः सेवन्तीभिर्नृपास्तथा ॥ २४३ ॥ वैश्याश्च चम्पकैः शूद्राः पुष्पैः सहचरोद्भवैः ॥ तुरुष्का यान्ति दासत्वं जयन्त्याः कुसुमैर्हुनेत् ॥ ॥ २४४ ॥ अथातः सम्प्रवक्ष्यामि चानिरुद्धमनुं तथा ॥ बाणरुद्धानिरुद्धाय मनोन्यास्मिन्मनोरथे ॥ उषाहृदयरुद्धाय कामरूपाय ते नमः ॥२४५॥ वात्स्यायनो मुनिश्छन्दोनुष्टुब्देवोनिरुद्धकः ॥ स्मरेदुषागृहे तं च चित्रलेखादिसंयुते ॥ २४६ ॥ पर्यंके सुखमासीनं नानालंकारभूषितम् ॥ आलिङ्गितप्रियोषं च स्त्रीकौतुकरमान्वितम् ॥ २४७ ॥ नमोन्तैः षट्पदैः कामबीजाद्यैः स्यात्षडङ्गकम् ॥ कामपीठे यजेद्देवं वर्णलक्षं जपेन्मनुम् ॥ २४८ ॥ घृताक्तः कामकुसुमैरभावे चूतसम्भवैः ॥ जुहुयान्मन्त्रराजस्य सिद्धितोस्य जगद्वशम् ॥ २४९ ॥ अयं लौकिकमार्गेण साधको निशि होमयेत् ॥ अष्टोत्तरसहस्रं तु तदा कुलवतो नृपाः ॥ दासीभूताः साधकस्य जपेदृतुमतीं यभेत् ॥२५० ॥ अष्टोत्तरसहस्रं त भतप्रेतपिशाचकाः ॥ प्रत्यक्षीभूय कार्याणि कुर्वते द्[illegible]रम् ॥ २५१ ॥ किञ्चिद्भक्ष्यन्त[illegible] दद्यात्ते सर्वकारकाः ॥ अथ वक्ष्ये महामन्त्रं सौख्यदं पौ[illegible]त्तमम् ॥ मायारमातारकामबीजं हृत्पुरुषोत्तम ॥ २५२ ॥ आद्या[illegible]निरुद्धलक्ष्मीति निवाससकलेति च ॥ जगत्क्षोभण सर्व स्त्रीहृदयेति विदारण ॥ २५३ ॥ ङेन्तं मनोन्मादकरं सुरासुरपदं वदेत् ॥ मनुजसुन्दरीत्युक्त्वा मनोन्मथमनांसि च ॥ २५४ ॥ तापयद्वितयं प्रोच्याद्वि द्विंर्दीपय शोषय ॥ द्विर्मारय स्तम्भय द्विर्द्विर्नाशयपदं वदेत् ॥ २५५ ॥ आकर्षयद्वयं प्रोच्य द्विरावेशय संवदेत् ॥ परमोक्का च सुरभे सौभाग्यकर सर्व च ॥ २५६ ॥ कामप्रदेति चोच्चार्य चालक्ष्मीं हनयुग्मकम् ॥ चक्रेण गदया

१ इदम् उत्तरान्वयि ॥

चेति खड्गेनेति समुच्चरेत् ॥ २५७ ॥ सर्व्वबाणैर्भिन्धिभिन्धि पाशेन त्रासयद्व-
यम् ॥ बन्धबन्धेत्यंकुशेन द्विश्वासय कुरुद्वयम् ॥ २५८ ॥ किन्तिष्ठसीति
चोच्चार्य्य तावद्यावत्समीप्सितम् ॥ मे सिद्धं भवति क्लीं हुं फट् नमो ह्रीं रमां
वदेत् ॥ २५९ ॥ कामंकामं कुशुत्रांशुद्विवर्णोयं मनुर्मतः ॥ भेदानस्य प्रवक्ष्या
मि कामनावर्णभेदतः ॥ २६० ॥ आदौ मायां तथान्ते च सप्तबीजानि वर्ज
येत ॥ ज्ञानदीक्षी च सन्न्यासी यस्तु केवलवैष्णवः ॥ २६१ ॥ मोहनार्थ-
न्तु देवानां त्यजेदावरणद्वयम् ॥ स्तम्भयद्वितयं ब्रूयात्तथा सम्मोहयद्वयम् ॥
॥ २६२ ॥ निष्कामो ह्रीं रमादौ तु न ब्रूयात्परमस्य च ॥ पूर्वं समस्तशब्दं
च योजयेद्द्विधरेति च ॥ २६३ ॥ अनिष्टकरणार्थन्तु शत्रोर्नाम प्रयोजयेत् ॥
स्थाने लक्ष्म्या इति प्रोच्य भेदाश्चत्वार एव हि ॥ २६४ ॥ जैमिनिर्मुनिरेते
षां छन्दश्चामितमीरितम् ॥ त्रैलोक्यमोहनो नाम देवता पुरुषोत्तमः
॥ २६५ ॥ ॐल्क्लींपूर्वाणि हुंफट् च नमोन्तानि प्रविन्यसेत् ॥ षडङ्गेषु
पदान्यत्र वदेच्च पुरुषोत्तम ॥ २६६ ॥ त्रिभुवनोन्मादकर हृदये पारिकीर्ति-
तम् ॥ सकलजगत्क्षोभणेति लक्ष्मीदयित शीर्षके ॥ २६७ ॥ शिखायां
स्यान्मन्मथोत्तमाङ्गज कामदीपन ॥ कवचं स्यात्परमसुभगसर्वपदं वदेत ॥
॥ २६८ ॥ सौभाग्यकराप्रतिमरूप केशव संस्मरेत् ॥ अत्रैव
कवचान्ते तु न्यसेदस्त्रं सुरासुर ॥ २६९ ॥ सुन्दरीं मनुजेत्युक्त्वा
हृदयेति विदारण ॥ सर्वप्रहरणेत्युक्त्वा धर सर्वमनांसि वा ॥ २७० ॥
हनद्वयं च हृदयं धनान्याकर्षयद्वयम् ॥ महानन्तेति चास्यान्ते नेत्रे मं
फट् च कीर्त्यते ॥ २७१ ॥ भुवनेश्वर सर्वज्ञ वदेज्जनमनांसि च ॥ हन-
युग्मं दारयद्विर्मे विद्यां वशमानय ॥ २७२ ॥ नेत्रमन्त्रः समाख्यातस्तथां-
गुष्ठादिषु न्यसेत्॥कनिष्ठयोर्नेत्रमनुमस्त्रं तु करपृष्ठयोः॥२७३॥तत्त्वन्यासं ततः
कुर्य्याद्वासुदेवस्य भूतिदम् ॥ न्यसेत्करांगुलिषु च कामबीजानि शक्तिकाः ॥
॥ २७४ ॥ द्रां द्राविणीं तथा कामं क्षोभिणीं द्रीं च मन्मथाम् ॥ वशी-
करां क्लीं कन्दर्पं क्लीं बीजं मकरध्वजम् ॥ २७५ ॥ आकर्षिणीं चाथ मीन
केतुं सम्मोहिनीं च सः ॥ कामबीजसम्पुटितं मातृकान्यासमाचरेत्॥२७६॥

पूर्वोक्तकाममन्त्रार्णैः स्थितिन्यासं समाचरेत् ॥ विन्यसेन्मातृकान्यासं पूर्वोक्तं च ततश्चरेत् ॥ २७७ ॥ ततः श्रीकरविष्णूक्ततत्त्वन्यासं समाचरेत् ॥ संहाराख्यं च सृष्ट्याख्यं स्थानेष्वेतेषु च क्रमात् ॥ २७८ ॥ पार्श्वद्वये नाभिलिङ्गगुदेषूरुद्वये तथा ॥ जानुनोर्गुल्फयोः सर्वाङ्गुलिष्विति ततः क्रमात् ॥ २७९ ॥ ततश्च वासुदेवोक्तमन्त्रन्यासान्समाचरेत् ॥ संहारसृष्टिस्थित्याख्यांस्तथा नारायणोदितम् ॥ २८० ॥ मूर्त्तिपञ्जरविन्यासञ्चायत्रीन्यासमाचरेत् ॥ प्रतिवर्णं प्रकुर्वीत तां गायत्रीमथो शृणु॥ सिद्ध्यन्ति सर्वकार्य्याणि जपाद्विष्णुप्रसादतः ॥ २८१ ॥ त्रैलोक्यमोहनाय विद्महे स्मराय धीमहि ॥ तन्नो विष्णुः प्रचोदयात् ॥ २८२ ॥ शीर्षे भाले नेत्रयोश्च दक्षदोर्मूलमध्ययोः ॥ मणिबन्धांगुलीमूले चांगुल्यग्रे प्रविन्यसेत् ॥ ॥ २८३ ॥ एवं दक्षोरुमूले च जानुगुल्फांगुलीतले ॥ अंगुल्यग्रे तथा वामे भुजमूलादिके न्यसेत् ॥ २८४ ॥ ततः पुनश्च पूर्वोक्तषडङ्गद्वादशाङ्गकान् ॥ न्यासान्कुर्य्यात्तथा कामबाणन्यासमतः परम् ॥ २८५ ॥ श्रीं स्वं श्रिये नमश्चोक्त्वा वामोरौ तु प्रविन्यसेत् ॥ स्वां लक्ष्म्यै च नमः के स्वीं सरस्वत्यै नमो मुखे ॥ २८६ ॥ स्वूं रत्यै च नमः कण्ठे स्वें प्रीत्यै लिङ्गके नमः ॥ ककुदि स्वैं नमः कीर्त्त्यै स्वौं कान्त्यै च नमो हृदि ॥ २८७ ॥ स्वं तुष्टयै च नमो नाभौ स्वः पुष्ट्यै च नमोऽङ्गके ॥ ततश्च मूलम[illegible] प्राग्वद्व्यापकमाचरेत् ॥ २८८ ॥ आयुधानि यथास्थानं तु[illegible] अथ वक्ष्ये सेत् ॥ कामबीजैर्न्यसेत्पश्चाच्छ्रीवत्सं कौस्तुभं तथा ॥[illegible]र्बीजं हृत्पुरुषोत्तम ततः पश्चाद्दृष्ट्यादिन्यासमाचरेत् ॥ ऊर्ध्वांगु[illegible] च ॥ जगत्क्षोभण सर्व योजयेत्॥२९०॥त्रैलोक्यमोहनाख्यायं मन्त्रस्[illegible]न्मादकरं सुरासुरपदं वदेत् ॥ शरीरादौ ध्यायेच्छ्रीपुरुषोत्तमम् ॥ २९[illegible]५४ ॥ तापयद्वितयं प्रोच्यद्वि द्र्विपरि संस्थितम् ॥ सर्वाङ्गसुन्दरं सौम्यं सर्वा[illegible]शयपदं वदेत् ॥ २५५ ॥ आकसुरनुतं शश्वत्स्त्रीभिश्चैव समावृतम्॥चक्रं शंख[illegible]का च सुरभे सौभाग्यकर सर्वं च ॥२९३॥ पाशं च बिभ्रतं दोर्भिर्वामाङ्गस्थि[illegible] हनयुग्मकम् ॥ चक्रेण गदया पद्मकरयालिङ्गितं स्मरेत् ॥२९४॥ पीठमध्[illegible]

पक्षिराजायस्वाहेति तस्य पूजामनुर्मतः॥ २९५॥ ततो देवं समावाह्य दद्यात्पुष्पाञ्ज- लिं ततः ॥ तद्वामोरौ पूजनीया मन्त्रिणा श्रीः श्रिये नमः ॥ २९६ ॥ देवा- ग्रादिचतुर्दिक्षु कोणेषु पुरतस्तथा ॥ क्रमादभ्यर्च्चयेदङ्गषट्कं स्यात्प्रथमावृतिः ॥ ॥ २९७ ॥ अष्टभिश्चापि चक्राद्यैरायुधैरपरावृतिः ॥ तृतीयावरणे लक्ष्मीवाग्र- तिप्रीतिकीर्त्तयः ॥ २९८ ॥ कान्तिस्तुष्टिश्च पुष्टिश्च पूज्या अथ चतुर्थके॥ इन्द्राद्यांश्चापि वज्रादीन्पञ्चमे चेति पूजनम् ॥ २९९ ॥ ततः पुष्पाञ्जलिं दद्यात्तन्यासोक्तनामभिः ॥ आदौ क्लीमत्र त्रैलोक्यमोहनाय ततो वदेत् ॥ ॥ ३०० ॥ ततो लज्जारमाकामबीजाद्यैः पञ्चनामभिः ॥ नमोन्तैः पञ्च पुष्पाणामञ्जलींश्च समर्प्पयेत् ॥ ३०१ ॥ पुरुषोत्तहृषीकेशौ विष्णुश्रीधर रामकाः ॥ पंच नामानीति चात्र पुरुषोत्तपूजने ॥ ३०२ ॥ चतुर्लक्षं जपेन्मन्त्रं हुनेदर्कसहस्रकम् ॥ बिल्वैर्वा कमलैः पश्चात्तर्पणाद्यैर्भवेन्मनुः ॥ ॥ ३०३ ॥ सिद्धः प्रयोगान्कुर्वीतायुतं प्रातर्जपेन्मनुम् ॥ समस्ताधौ प्रजु- हुयादष्टोत्तरसहस्रकम् ॥ ३०४ ॥ सम्यग्ज्योतिष्मतीतैलेनारोगो बुद्धिमा न्भवेत् ॥ समूलकाण्डां शिरसि दद्यादंजलिनीं तु यः ॥ अष्टाधिकशतं जप्त्वा सर्वलोकप्रियो भवेत् ॥ ३०५ ॥ अश्वमारप्रसूनैश्च सम्पूज्य पुरुषो त्तमम् ॥ अष्टाधिकसहस्रं तु कुमुदैर्जुहुयात्ततः ॥ राजानो वशगाः सर्वे मास- [illegible]न्न संशयः ॥ ३०६ ॥ मालतीपुष्पहोमेन तद्वद्वैश्यान्नयेद्वशम् ॥ पला- हृदयेति [illegible] प्राग्वद्विप्राश्च वश्यकाः ॥ ३०७॥ अभिवाञ्छति यां योषां तस्या हनद्वयं च हृदयं जपेत्पक्षं प्रतिदिनं चाष्टाधिकसहस्रकम् ॥ दिनादौ फट् च कीर्त्यते ॥ २७५ न्दिवादिनी ॥ ३०८ ॥ चौरापहृतवित्तस्तु साष्टा- युग्मं दारयद्विर्मे विद्यां वशमानयामिद्धिस्तु हुनेत्पक्षत्रयं यमी ॥ ३०९ ॥ गुष्ठादिषु न्यसेत्॥ कनिष्ठयोर्नेत्रमङ्क्रमाज्जुहुनेत् ॥ अथ वार्णसहस्रं तु प्रजपे- कुर्य्याद्वासुदेवस्य भूतिदम् ॥ न्यसनं दत्त्वा प्रणम्य स्वगृहं प्रति ॥ ३१० ॥ ॥ २७४ ॥ द्रां द्राविणीं तथा कास्थ च ॥ निखातं शत्रुसदने शत्रुमुच्चा करां क्लीं कन्दर्प क्लीं बीजं मकरध्वाष्टशतं जप्ता निखाता शत्रुमन्दिरे ॥ क्रू केतुं सम्मोहिनीं च सः ॥ कामबं

